[1]गुग्गुल[2]वालुकलाक्षा—
मुस्तानख[3]शर्कराः क्रमाद्धूपः ।
अन्यो मांसी[4]वालक-
तुरुष्क[5]नखचन्दनैः पिण्डः ॥ १६ ॥

भागैश्चतुर्भिः सितशैलमुस्ताः
श्रीसर्जभागौ नखगुग्गुलौ च ।
कर्पूरबोधो मधुपिण्डि[6]कोऽयं
कोपच्छदो नाम नरेन्द्रधूपः ॥ १७ ॥

[7]हरीतकीशङ्खघनद्रवाम्बुभि-
र्गुडोत्पलैः शैलकमुस्तकान्वितैः ।
नवान्तपादादिविवर्धितैः क्रमा-
द्भवन्ति धूपा बहवो मनोहराः ॥ १८ ॥

[पटवासचूर्णम्]

त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतैश्चूर्णः ।
पटवासः प्रवरोऽयं मृगकर्पूर[8]प्रचोधेन ॥ १९ ॥

[गन्धार्णवनिर्माणक्रमः]

घनवालुकशैलेयककर्पूरोशीरनागपुष्पाणि ।
व्याघ्रनखस्पृक्काऽगुरु[9]मदनकनखतगरधान्यानि ॥ २० ॥

कर्पूरचोरमलयैः
स्वेच्छापरि[10]कल्पितैश्चतुर्भिरतः ।
एकद्वित्रिचतुर्भि-
र्भागैर्गन्धार्णवो भवति ॥ २१ ॥

---

[1] गुग्गुलु–बृ. सं. [2] वालक–बृ. सं. [3] शर्कराः समाद्धूपः–ग. [4] वालक–बृ. सं.
[5] नखनन्दनैः–ग. [6] तोऽयं–बृ.सं. [7] श्लोकोऽयं बृ. संहितायां भागैरित्यतः पूर्वं वर्तते।
[8] प्रबोधेन–बृ.सं. [9] दमनकः–बृ. सं. [10] वर्तितैः–बृ. सं.

अत्युल्बणगन्धत्वा-
देकांशो नित्यमेव धान्यानाम् ।
कर्पूरस्य तदूनो
नैतौ द्विन्यादिभि[1]र्योज्यौ ॥ २२ ॥

[धूपानां बोधनम् ]

श्रीसर्जगुडनखैस्ते
[2]धूपाः स्युः क्रमान्न पिण्डस्थैः ।
बोधः कस्तूरिकया
देयः कर्पूरसंयुतया ॥ २३ ॥

[गन्धप्रभेदसंख्याद्रव्यभागक्रमात् पञ्चगन्धसम्पत्तिः]

अत्र सहस्रचतुष्टय-
मन्यानि च सप्ततिसहस्राणि ।
लक्षं शतानि सप्त
विंशतियुक्तानि गन्धानाम् ॥ २४ ॥

एकैकमेकभागं
द्वित्रिचतुर्भागिकैर्युतं द्रव्यैः ।
पञ्चगन्धकरं तद्व-
द्वित्रिचतुर्भागिकं कुरुते ॥ २५ ॥

[द्रव्यचतुष्टयविकल्पेन भिद्यमानगन्धासारसङ्ख्यापरिचयः]

द्रव्यचतुष्टययोगा-
द्गन्धचतुर्विंशतिर्यथैकस्य ।
एवं शेषाणामपि
षण्णवतिः सर्वपिण्डोऽत्र ॥ २६ ॥

---

[1] देयौ—बृ. सं. [2] धूपयितव्याः-बृ. सं.

षोडशके द्रव्यगणे
चतुर्विकल्पेन भिद्यमानानाम् ।
अष्टादश जायन्ते
शतानि सहितानि विंशत्या ॥ २७ ॥

[गन्धानां आहत्य सङ्ख्याप्रमाणम्]

षण्णवतिभेदभिन्न-
श्चतुर्विकल्पो गणो यतस्तस्मात् ।
षण्णवतिगुणः कार्यः
सा संख्या भवति गन्धानाम् ॥ २८ ॥

[भेदज्ञानार्थं लोष्टकप्रस्तारः]

*पूर्वेण पूर्वेण गतेन युक्तं
स्थानं विनाऽन्त्यं प्रवदन्ति सङ्ख्याम् ।
इच्छाविकल्पैः क्रमशोऽभिनीय
नीते निवृत्तिः पुनरन्यनीतिः ॥ २९ ॥

* अत्रैवं लोष्टकप्रस्तरो बृहत्संहिताविवृतौ प्रदर्शितः । एतदुपपादनरीतिः तत्रोक्ता ।

| | | | |
|---|---|---|---|
| 16 | | | |
| 15 | 120 | | |
| 14 | 105 | 560 | |
| 13 | 91 | 455 | 1820 |
| 12 | 78 | 364 | 1365 |
| 11 | 66 | 286 | 1001 |
| 10 | 55 | 220 | 715 |
| 9 | 45 | 165 | 495 |
| 8 | 36 | 120 | 330 |
| 7 | 28 | 84 | 210 |
| 6 | 21 | 56 | 126 |
| 5 | 15 | 35 | 70 |
| 4 | 10 | 20 | 35 |
| 3 | 6 | 10 | 15 |
| 2 | 3 | 4 | 5 |
| 1 | 1 | 1 | 1 |

[गन्धयोगान्तराणि]

[1] द्वित्रीन्द्रियाष्टभागै-
रगरुः पत्रं तुरुष्कशैलेयौ ।
विषयाष्टपक्षदहनाः
प्रियङ्गुमुस्तारसाः केशः ॥ ३० ॥

[2] * स्पृक्कात्वक्तगराणां
मांस्याश्च कृतैकसप्तषड्भागाः ।
सप्तर्तुवेदचन्द्रै-
र्मलयनखश्रीकुकुन्दुरुकाः ॥ ३१ ॥

[प्रस्तारप्रदर्शनफलम्]

† षोडशकें कक्षंपुटे
यथा तथा [3] मिश्रितैश्चतुर्द्रव्यैः ।
येऽत्राष्टादशभागा-
स्तेऽस्मिन्गन्धादयो योगाः ॥ ३२ ॥

---

* इमौ श्लोकौ ख. पुस्तके न स्तः.

† अत्रेवं कोष्ठकन्यासः बृहत्संहिताविवृतौ दर्शितः.

| | | | |
|---|---|---|---|
| अ-2 | प-3 | तु-5 | शै-8 |
| प्रि-5 | मु-8 | र-2 | के-3 |
| स्पृ-4 | त्व-1 | त-7 | मां-6 |
| म-7 | न-6 | श्री-4 | कु-1 |

[1] द्वित्रिशषट-ख. मु. [2] वृक्का-ग. [3] मिश्रिते चतुर्द्रव्ये-बृ. सं.

[सर्वतोभद्रगन्धाः]

नखतगरतुरुष्कयुताः
जातीकर्पूरमृग[1]कृतोद्बोधाः ।
गुडनखधूप्या गन्धाः
कर्तव्याः सर्वतोभद्राः ॥ ३३ ॥

[पारिजातगन्धाः]

जातीफलमृगकर्पूर-
बोधितैः सहकारमधुसिक्तैः ।
बहवोऽत्र पारिजाता-
श्चतुर्भिरिच्छापरिगृहीतैः ॥ ३४ ॥

[स्नानीयास्त्वचः]

सर्जरसश्रीवासक-
समन्वितायेऽत्र [2] धूपयोगास्तैः ।
श्रीसर्जरसवियुक्तैः
स्नानानि [3]सवालुकत्वग्भिः ॥ ३५ ॥

[केसरगन्धास्तत्संख्यानयनप्रकारश्च]

* लोध्रोशीरनतागुरु-
मुस्तापत्रप्रियङ्गु[4]वनपथ्याः ।
नवकोष्ठात्कक्षपुटं
द्रव्यत्रितयं समुद्धृत्य ॥ ३६ ॥

---

* नवद्रव्यकोष्ठम्—

| | | |
|---|---|---|
| लो | उ | न |
| अ | मु | प |
| प्रि | व | प |

लो = लोध्रः, उ = उशीरम्, न = नतम्,
अ = अगुरुः, मु = मुस्ता, प = पत्रम्,
प्रि = प्रियङ्गुः, व = वनम , प = पथ्या,
इदं बृहत्संहिताविवृतौ स्पष्टम् ।

[1] कृतोद्भेदाः—ग. [2] सर्वधूपास्तैः-बृ. सं. [3] सबालक-बृ. सं.
[4] नतपथ्याः—ख.

चन्दनतुरुष्कभागौ
शुक्त्यर्धं [1]पादिका तु शतपुष्पा ।
कटुहिङ्गुलगुडधूप्याः
केसरगन्धाश्चतुरशीतिः * ॥ ३७ ॥

[ दन्तकाष्ठविधानम् ]

सप्ताहं गोमूत्रे
हरीतकीचूर्णसंयुते क्षिप्त्वा ।
गन्धोदके च भूयो
विनिक्षिपेद्दन्तकाष्ठानि ॥ ३८ ॥

एलात्वक्पत्राञ्जन-
मधुमरिचैर्नागपुष्पकुष्ठैश्च ।
गन्धाम्भः कर्तव्यं
किञ्चित्कालं स्थितान्यस्मिन् ॥ ३९ ॥

---

* अत्र चतुरशीतिसङ्ख्यासम्पादकलोष्टप्रस्तारः एवं बृहत्संहिताविवृतिटिप्पण्यां वर्तते.

| | | |
|---|---|---|
| 9 | | |
| 8 | 36 | |
| 7 | 28 | 84 |
| 6 | 21 | 56 |
| 5 | 15 | 35 |
| 4 | 10 | 20 |
| 3 | 6 | 10 |
| 2 | 3 | 4 |
| 1 | 1 | 1 |

[1] पादिकं—ग.

जातीफलपत्रैला-
कर्पूरैः कृतयमैकशिखिभागैः ।
अवचूर्णितानि भानो-
र्मरीचिभिः शोषणीयानि ॥ ४० ॥

[दन्तकाष्ठजा दन्तगुणाः]

वर्णप्रसादं [1]रदनस्य कान्तिं
वैशद्यमास्यस्य सुगन्धितां च ।
संसेविनां श्रोत्रसुखां च वाचं
कुर्वन्ति काष्ठा[2]न्यसकृन्नराणाम् ॥ ४१ ॥

[गन्धशास्त्रोक्ताः पञ्च पल्लवाः]

उदुम्बरवटप्लक्षचूताश्वत्थसमुद्भवाः ।
गन्धशास्त्रोदिता ज्ञेयाः पण्डितैः पञ्च पल्लवाः ॥ ४२ ॥

[अगरुगन्धोत्पादनक्रमः]

पञ्चपल्लवसंयुक्ते काञ्जिके सप्तवासरम् ।
पाचयेन्निम्बसारस्य लघुखण्डानि बुद्धिमान् ॥ ४३ ॥

शिंशुपासारखण्डानि सरसानि लघूनि च ।
पञ्चपत्रयुते नीरे [3]क्वाथितानि दिनत्रयम् ॥ ४४ ॥

मधुपक्वानि जायन्तेऽगरुरूपाणि निश्चितम् ।

[उत्तमागरुगन्धसम्पादनरीतिः]

सल्लक्या देवदारोर्वा सरलस्याथ खण्डितः ॥ ४५ ॥

सारः सुपक्वमालूरमज्जायुक्तो दिनाष्टकम् ।
गोमूत्रे क्वथितो गोष्ठे निहितः पल्लवाम्भसि ॥ ४६ ॥

काञ्चिकेऽगुरुसंयुक्तः पक्वः स्यादगरूत्तमः ।

---

[1] वदनस्य-बृ. सं. [2] न्यसकृद्भवानाम्-बृ. सं. असकृत्-वारद्वयं भवन्तीत्यसकृद्भवाः दन्ताः तेषामित्यर्थः । [3]क्वथितानि-ख.

[कर्पूरनिर्माणविधिः]

निर्मलक्षालितोऽत्यन्तं शिग्रुकन्दोऽतिचूर्णितः ॥ ४७ ॥

सरसश्चन्द्रकाङ्कोलफलकर्षार्धसंयुतः ।
निर्गन्धे निर्मले श्लक्ष्णे भाण्डे निक्षिप्य शोषितः ॥ ४८ ॥

शशाङ्कशकलाकारः खण्डितोऽतिमनोहरः ।
शशविद्धो भवेदेष कर्पूरो भोगिवल्लभः ॥ ४९ ॥

[कर्पूरे कुङ्कुमच्छविविधानक्रमः]

[1]अच्छकाञ्जिकधौतानि शुष्कसञ्चूर्णितानि च ।
शैवाल्याः खदिरोष्णाम्भःकृतरागाणि वह्निना ॥ ५० ॥

पुटे युक्तानि पक्वानि पक्वश्रीफलमध्यतः ।
कुङ्कुमेन सुविद्धानि लभन्ते कुङ्कुमच्छविम् ॥ ५१ ॥

[कस्तूरीसमदिव्यगन्धनिर्माणक्रमः]

सुश्वेतशिग्रुकन्दस्य रसो मांसीसुरायुतः ।
कङ्कुना समभागेन मेलितो मर्दितो भृशम् ॥ ५२ ॥

गुडस्य नखरस्यापि धूपात्कस्तूरिकासमः ।
गन्धोऽस्य जायते दिव्यो दुर्लभो भुवि भोगिनाम् ॥ ५३ ॥

[दिव्यजातीकुसुमगन्धनिर्माणक्रमः]

स्नुहीपत्रं [2]घनच्छुल्लीकुटिलं सममेलितम् ।
गन्धः सञ्जायते दिव्यो जातीकुसुमसौरभः ॥ ५४ ॥

[चम्पकगन्धविधानरीतिः]

द्विभागतगरोन्मिश्रमलयागरुकुष्ठकैः ।
समांशैः सरलैर्गन्धो जायते चम्पकाभिधः ॥ ५५ ॥

---

[1] अथ का—ख. [2] घनच्छल्लीकुटिलं सममेधितम्—मु.

[केतकीगन्धरचनाक्रमः]

[1]पादांशपत्रकोन्मिश्रं पल्लवं दशशिग्रुभिः ।
केतकीपत्रसंवादी गन्धो भवति निश्चितम् ॥ ५६ ॥

[सहकारगन्धोत्पादनरीतिः, एतत्तैलस्य सर्वदेवोपयोगार्हता च]

रक्तचन्दनमञ्जिष्ठाफलिनीखदिरान्वितम् ।
सल्लकीचूर्णयुक्तैलं पक्वमर्कखरातपे ॥ ५७ ॥

सहकारसमं गन्धं धत्ते भृङ्गारलोहयुक् ।
सर्वदेवोपभोगाय तत्तैलं परिकीर्तितम् ॥ ५८ ॥

[धनिकोपभोग्यपौष्पतैलसम्पादनक्रमः तद्गुणाश्च]

श्रीगन्धागरुदारुवालुकनखैरेलाजटाकुङ्कुमै-
रब्जत्वग्घनसारकुष्ठतगरैरङ्कोललाक्षान्वितैः ।
सर्वैरेव समांशकैस्त्रिगुणया युक्तो भवेद्रालया ।
तैलं चास्य सोमयन्त्रविधिना पुष्पैस्तु संवासितम् ॥ ५९ ॥

जातीचम्पककेतकीमरुवकैः संस्थापयेद्भाजने
कस्तूरीसहमोदितं परिमलोल्लोलं सुसौख्यप्रदम् ।
तत्तैलं घनवारिहारि वपुषः कान्तिप्रदं लेपनात्
संसेव्यं धनिनां प्रमोदजनकं कल्याणलक्ष्मीकरम् ॥ ६० ॥

[केतक्यादिपत्राणां मल्लिकादिकुसुमानां च द्रवीकरणोपायाः]

देवदालिफलागस्तिमधुयष्टिसुटङ्कणैः ।
अतिशुद्धमधूपेतैर्लिप्तपत्राणि वेगतः ॥ ६१ ॥

द्रवन्ति भाजने ताम्ये विधूतान्यातपे खरे ।
विलिप्तं मल्लिकापुष्पं सुशुद्धमधुटङ्कणैः ॥ ६२ ॥

द्रवेद्वा चम्पपुष्पाणां [2]समूहे धान्यमध्यतः ।
दग्धशङ्खस्य चूर्णेन तथार्द्रकरसेन च ॥ ६३ ॥

---

[1] पादांशतगरोन्मिश्र–मु. [2] समूहो–ख.

केतकीस्निग्धपत्राणि लिप्यमानानि रश्मिभिः ।
तापितानि द्रवन्त्येव यथा लोहानि वह्निना ॥ ६४ ॥

[स्थिरगन्धधूपोत्पादनक्रमः]

सिता मलयजं कुष्ठं नखसर्जरसौ रसः ।
समांशैर्मेलितो धूपः स्थिरगन्धोऽतिसौरभः ॥ ६५ ॥

[कुङ्कुमसौरभधूपोत्पादनरीतिः]

दलं मलयजं मांसी सितागरु जलं मधु ।
समांशैर्मेलितो धूपो धत्ते कुङ्कुमसौरभम् ॥ ६६ ॥

[राजावासयोग्यधूपवर्तिनिर्माणक्रमः]

नखमुरसिह्लकवालक-
कुन्दुरुशैलेयचन्दनश्यामाः ।
क्रमवृध्द्या भागान्वित-
वर्त्तिः क्षितिनाथकान्तेयम् ॥ ६७ ॥

सुरदारुमरिचमुस्ता-
लाक्षागरुवालचूर्णकर्पूरम् ।
नृपवासगेहयोग्या
मनोहरा धूपवर्तिरियम् ॥ ६८ ॥

[तादृशधूपवर्तिकान्तरनिर्माणविधिः]

गन्धरसागरुकुन्दुरु-
गुग्गुलुपूतिरसकर्पूरम् ।
श्रिवाससिह्लचन्दन-
मित्यपरा धूपवर्तिरियम् ॥ ६९ ॥

[ताम्बूलवटीनिर्माणक्रमः तत्फलं च]

त्वक्पत्रैलानखस्वर्णजातिभिः कारयेद्[1]वटीम् ।
ताम्बूलयु[2]क्ताऽसौ भुक्ता वक्त्रं सुरभितां नयेत् ॥ ७० ॥

---

[1] द्वटीम्–मु. [2] क्ता सा–ख.

[वक्त्रसुवासकवटिकान्तरम्]

केसराङ्कोलमज्जा च [1]क्षौणीयं जातिसस्यकम् ।
वटिका मधुनैतेषां कृता वक्त्रं सुवासयेत् ॥ ७१ ॥

[वदनसुगन्धीकरणचूर्णं सुगन्धीकरणकालावधिश्च]

मुराकिञ्जल्ककुष्ठानां चूर्णं लीढं हि सन्ध्ययोः ।
कर्पूरगन्धि वदनं कुर्यान्मासार्धतो ध्रुवम् ॥ ७२ ॥

[मुखवासवटीविशेषः तदीयगुणश्च]

कस्तूरिचन्दनलवं फलकुङ्कुमं च
पुष्पद्रुतिः खदिरसारहिमान्वितं च ।
एकैकमेकमपि चार्धमथैकभागं
स्यात्पञ्चषोडशगुणैकमथैकभागम् ॥ ७३ ॥

कृता वटी वदनसौरभमातनोति
चूर्णप्रदग्धमुख[2]पाकरुजं हिनस्ति ।
सौभाग्यरञ्जनृपमोहनवाग्विलास-
कन्दर्पपोषणमिदं प्रथमं विधत्ते ॥ ७४ ॥

[ताम्बूलोपयोगिवटीविशेषः तदीयगुणाश्च]

एला चन्दनकोष्ठकोत्पललवं जातीफलं पत्रकं
सेवन्ती शशिमुस्तकुङ्कुमसटीतक्कोलमांसी[3]मदम् ।
सर्वैरेव समानखादिरयुतं हैमाम्बुना पेषितं
गुञ्जामात्र[4]वटीकृतं वितनुते ताम्बूलसंयोजितम् ॥ ७५ ॥

---

[1] क्षणीयं—ख. [2] साक—ख. [3] मधु—ख. [4] अत्र घुटी इति युज्यते ।

[सुगन्धद्रव्यनिरूपणोपसंहारः वस्त्रमाल्यादिधारणोक्तिश्च]

एवं सुगन्धिद्रव्याणि प्रोक्तानीह समासतः ।
*योगेन चान्यथाभावं यान्ति स्वाभाविकान्यपि ॥ ७६ ॥

अङ्गरागप्रकरणात्तस्य जात्यानुरूप्यतः ।
वस्त्रमाल्यानि धार्याणि भोगिनाथ! महीभुजा ॥ ७७ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले गन्धयुक्तिनिरूपणं नाम पञ्चदशस्तरङ्गः

---

## षष्ठकल्लोले षोडशस्तरङ्गः

### वस्त्रमाल्यभूषणोपभोगवर्णनम्

[कुमारस्य वस्त्रमाल्यादिधारणप्रकारप्रश्नः भूपतेस्तदुत्तरप्रतिज्ञा च]

(†वस्त्राणां चैव माल्यानामुपभोगो नृपोचितः ।
इत्याख्यातमभूत्तेषां धारणं क्रियतां कथम् ॥ १ ॥

तत्प्रकारं ममाचक्ष्व गुरो! सर्वविदां वर! ।
यत्त्वया काङ्क्षितं श्रोतुं पुत्र! ते वर्णयामि तत् ॥ २ ॥)

[वस्त्रोपभोगः—तत्र नवीनवस्त्रधारणयोग्यनक्षत्राणि तदीया गुणाश्च]

वस्त्राणामुपभोगोऽत्र प्रथमं परिकीर्त्यते ।
अश्विनी वस्त्रदा प्रोक्ता रोहिणी धनवर्धनी ॥ ३ ॥

पुनर्वसौ वसुप्राप्तिः पुष्ये सौख्यं प्रवर्धते ।
उत्तरायां यशोलाभो हस्ते सिद्धिस्तु कर्मणाम् ॥ ४ ॥

चित्रायां शुभसम्प्राप्तिः स्वात्यां सौभाग्यसम्पदः ।
विशाखायां जनप्रीतिर्मैत्रे मित्रसमागमः ॥ ५ ॥

---

* सार्धमिदं पद्यं ख. पुस्तके नास्ति । † धनुरङ्कितमिदं पद्यद्वयं ख. पुस्तके नास्ति ।

तुष्टिः स्यादुत्तराषाढे धनिष्ठा धान्यपूरणी ।
उत्तरायां सुतप्राप्ती रेवती रत्नवृद्धिकृत् ॥ ६ ॥
एवमृक्ष[1]गुणः प्रोक्तो [2]नवीनाम्बरधारणे ।

[नवीनवस्त्रधारणयोग्यवासराः तदीयगुणाश्च]

बुधे धनागमं विन्द्यात्प्रजावृद्धिर्भवेद्गुरौ ॥ ७ ॥
आयुः प्रवर्धते शुक्रे नूतने वस्त्रधारणे ।

[गृहोत्सवविवाहादिषु नवाम्बरधारणावश्यकता]

गृहोत्सवे विवाहे च परभूपालसङ्गमे ॥ ८ ॥
उत्सवेषु च सर्वेषु गीतनृत्तविनोदने ।
देवकर्मणि यज्ञे च तथा [3]युद्धमहोत्सवे ॥ ९ ॥
जये नवाम्बरं धार्यं न दुष्यति कदाचन ।

[उत्तमबहुवस्त्रानयनाय राज्ञः समादेशः]

[4]कृतानुलेपो राजेन्द्रो वस्त्रभाण्डाधिकारिणः ॥ १० ॥
आनेतुमादिशेद्वस्त्राण्युत्तमानि बहूनि च ।

[नानादेशीयदिव्यवस्त्राणि]

द्वीपान्तपुरजातानि स्नुग्रापुरभवानि च ॥ ११ ॥
अनिलाघाटजातानि चीरवल्लीभवानि च ।
मल्लिकाकरजातानि सिंहलद्वीपजानि च ॥ १२ ॥
चीनजातानि दिव्यानि महाचीनभवानि च ।

[वर्णरेखाद्यलङ्कृतचित्रवस्त्राणि]

नीलानि कृष्णवर्णानि धूम्राणि मधुराणि च ॥ १३ ॥

---

[1] गुणाः प्रोक्ता—ख. [2] नूतनाम्बरधारणे—मु. [3] युद्धे ऋतूत्सवे—मु.
[4] कृताधिलेपो—मु. कृताविलेपो—ख.

पाटलान्यभिरामाणि जम्बूफलनिभानि च ।
नानावर्णविचित्राणि नानारूपमयानि च ॥ १४ ॥

मध्ये रक्तानि कृष्णानि पीतानि हरितानि च ।
क्वचिद्द्वयचिह्नानि सितरेखामयानि च ॥ १५ ॥

तिर्यगायतरेखाणि रेखाभङ्ग[1]युतानि च ।
वक्ररेखासुरम्याणि रेखात्रययुतानि च ॥ १६ ॥

अङ्गुलीद्वयरेखाणि वृत्तरेखाणि कुत्रचित् ।
सुश्लक्ष्णानि सुसूक्ष्माणि घनानि विरलानि च ॥ १७ ॥

लघूनि गुरुमूल्यानि धृढानि च गुरूणि च ।
मञ्जिष्ठारागयुक्तानि लाक्षारागयुतानि च ॥ १८ ॥

कुसुम्भरसयुक्तानि सिन्दूरारुणकानि च ।
हरिद्रारागमिश्राणि नीलीरागोत्कटानि च ॥ १९ ॥

अभयारसकृष्णानि निशानीलीमयानि च ।

[वसन्तकालधार्याणि वस्त्राणि]

शुकपिञ्छसवर्णानि केकीकण्ठनिभानि च ॥ २० ॥
वसन्ते बिभृयाद्राजा क्षौमकार्पाससजानि च ।

[निदाघे धार्याणि वस्त्राणि]

सुश्लक्ष्णानि मनोज्ञानि सूक्ष्माणि विरलानि च ॥ २१ ॥
निदाघे धारयेद्राजा सितानि वसनानि च ।

[प्रावृट्काले धार्याणि वस्त्राणि]

[2]रोमजानि सुसूक्ष्माणि श्लक्ष्णानि च घनानि च ॥ २२ ॥
माञ्जिष्ठानि च रक्तानि प्रावृट्काले [3]विधारयेत् ।

---

[1] गतानि–ख. [2] रोमशानि–ख. [3] च धारयेत्–ख.

[शरत्कालधार्याणि वस्त्राणि]

पाटलान्यभिरामाणि धूम्राणि मधुराणि च । ॥ २३ ॥
शरत्कालेऽतिसूक्ष्माणि वसनानि विधारयेत् ।

[शीतवातप्रयाणेषु धारणीयवस्त्राणि]

कौसुम्भानि सुरम्याणि [1] लाक्षिकाणि घनानि च ॥ २४ ॥
शीते वाते प्रयाणे च विभृयाद्धीरचेलनौ ।

[सर्वदा श्रृङ्गारे च धार्याणि वस्त्राणि]

आङ्गिकोष्णीषकांश्चैव बिभृयात्सर्वदा नृपः ॥ २५ ॥

सूक्ष्माणि बहुमूल्यानि वर्णाढ्यानि वराणि च ।
नानाद्वीपसमुत्थानि श्रृङ्गारे धारयेन्नृपः ॥ २६ ॥

[ऋतुश्रृङ्गारानुसारेण वस्त्रधारणं वस्त्रभोगोक्त्युपसंहारश्च]

ऋतूनामनुसारेण श्रृङ्गारस्यानुसारतः ।
एवं यो बिभृयाद्वस्त्रं वस्त्रभोगस्तु कीर्तितः ॥ २७ ॥

[माल्यभोगः—तत्र माल्ये योजनीयपुष्पाणि]

अधुना कथ्यते सम्यङ्माल्यभोगो मनोहरः ।
वस्त्रप्रसाधनं कृत्वा ततो माल्यानि धारयेत् ॥ २८ ॥

चम्पकं मल्लिकां जातीपुन्नागवकुलानि च ।
केतकीशतपत्राणि गन्धाढ्यं करवीरकम् ॥ २९ ॥

पाटलां यूथिकां चैव सुरभिं गिरिकार्णिकाम् ।
तगरं मुचुकुन्दं च कुन्दमिन्दीवरं तथा ॥ ३० ॥

---

[1] लाक्षतानि—ख.

गन्धोत्पलं च शेफालीमतिमुक्तकमेव च।
वल्लीचम्पकजम्बीरमिरुवन्तिमथापि च ॥ ३१ ॥
बाणपुष्पं च माल्येषु शोभनार्थं विधारयेत्।

[पुष्पयोगविशेषतः चित्रमाल्यनिर्माणक्रमः तेषां गुरुदेवसमर्पणपूर्वकं धारणं च]

चम्पकं मल्लिकायुक्तं चम्पकान्युत्पलैः सह ॥ ३२ ॥
चम्पकं सुरभीयुक्तं चम्पकं पाटलान्वितम्।
मल्लिका पाटलायुक्ता मल्लिका सुरभीयुता ॥ ३३ ॥
मल्लिका बकुलैर्युक्ता मल्लिकोत्पलसंयुता।
मालती मल्लिकोपेता मालती सुरभीयुता ॥ ३४ ॥
करवीरेण संयुक्ता शतपत्रमनोहरा।
शतपत्रं समरुकं शतपत्रं सपाटलम् ॥ ३५ ॥
मालती मल्लिका यूथी बाणपुष्पेण संयुता।
एवं माल्यानि चित्राणि भवन्त्यन्योन्ययोगतः ॥ ३६ ॥
धारयेत्तानि परतो गुरुदेवसमर्पणात्।

[वर्षाशिशिरयोः राजधार्याणि पुष्पाणि]

कुटजस्य तु पुष्पाणि मल्लिका वनमल्लिका ॥ ३७ ॥
वर्षाशिशिरकाले तु धारणीया महीभृताम्।

[शरद्वसन्तयोः राजधार्याणि पुष्पाणि]

नागचम्पकसेवन्तीपुन्नागान्युत्पलानि च ॥ ३८ ॥
शरत्काले वसन्ते च धारयेद्धरणीपतिः।

[ग्रीष्महेमन्तयोः राजधार्यपुष्पाणि]

जाती च केतकीकुन्दचम्पकादिसुमानि तु ॥ ३९ ॥
इतरेषु प्रधार्याणि भोगिना वसुधाभृता।

[मल्लिकाकुसुमधारणे गुणः तस्यैव पुनः पुनः धारणे दोषश्च]

वीर्येणोष्णं मल्लिकायाः प्रसूनं
श्लेष्मघ्नं स्याद्दृष्टिपुष्टिं करोति।
भूयोभूयः सेव्यमानं विशेषा-
द्यूकप्रायं केशजालं करोति॥ ४०॥

[शतच्छदकुसुमधारणगुणाः]

नात्युष्णशीतं सुभगातिगन्धि
दृष्टिप्रसादं वितनोति [1]कैश्यम्।
शिरोभ्रमं हन्ति शरीरजाड्यम्
शतच्छदं पुष्पमुदाहरन्ति॥ ४१॥

[जातीकुसुमधारणगुणाः]

जाती त्रिदोषान् [2]सकलाङ्गदाहान्
हरेत्सुगन्धातिशया मनोज्ञा।
विदग्धकान्ताजनमोहनीया
निवारयन्ती नयनादिरोगान्॥ ४२॥

[केतकीपुष्पधारणगुणाः तत्रत्यविशेषाश्च]

केतक्याः कुसुमं निहन्ति पवनं श्लेष्माणमुन्मूलये-
दुष्णत्वाद्वितनोति कोपमधिकं पित्त(त्तं च)स्य संसेवनात्।
कान्तानां हृदयारविन्ददलने शीतांशुकल्पोदयं
कन्दर्पोत्सवमूलभूतममलं भूपैः सदा सेव्यते॥ ४३॥

[पुष्पान्तरधारणे गुणान्तरबोधातिदेशः धारणकालविषेशाश्च]

अन्येषामपि पुष्पाणामेवं बोध्यं गुणान्तरम्।
मलिने मल्लिका धार्या निर्मले जातिचम्पके॥ ४४॥

---

[1] कैश्यम्–ख.  [2] सकलान् गदांश्च–मु.

अभ्यङ्गे केतकी धार्या कह्लारं धारयेत्सदा ।
मुहूर्तं जातिकुसुमं कुटजं च तदष्ट(र्ध)कम् ॥ ४५ ॥

त्रिरात्रमुत्पलं चैव पञ्चरात्रं च केतकम् ।
द्विरात्रं शतपत्रं स्यादर्धरात्रं तु मल्लिका ॥ ४६ ॥

अहोरात्रं चम्पकं च यूथिका च तदर्धकम् ।
धृतान्येतानि पुष्पाणि जनयन्ति गुणोदयम् ॥ ४७ ॥

[माल्यभोगकीर्तनोपसंहारः]

ऋतूनामनुसारेण तत्तत्पुष्पविधारणम् ।
यद्भूपैः क्रियते सैष (सोऽयं) माल्यभोगः प्रकीर्तितः ॥ ४८ ॥

[भूषणभोगः-तत्र राजभोगार्हैकावल्यादिकण्ठभूषणानि तत्रत्यरचनाविशेषाश्च]

अथ भूषणभोगस्तु राजभोग्यः प्रकीर्त्यते ।
स्थूलमुक्ताफलैः कार्या कण्ठे त्वेकावली वरा ॥ ४९ ॥

मध्ये मुक्ताफलैः कार्यं त्रिसरं सुविचक्षणैः ।
ततः पञ्चसरं कुर्यान्नवसप्तसरं तथा ॥ ५० ॥

उपान्ते नीलमाणिक्यमिश्रितं सुमनोहरम् ।
काञ्चनीभिर्मण्डलीभिः पर्यस्थाभिः सुशोभितान् ॥ ५१ ॥

क्रमतो हीयमानांश्च सरान् कुर्यान्मनोहरान् ।

[नीललम्बनिकाख्यहारः तद्रचनाक्रमश्च]

गुच्छीकृतमृणालाभिर्हारैः सर्वैर्मनोहरान् ॥ ५२ ॥

नीलमाणिक्यसंयुक्तान् पूर्ववत्परिकल्पयेत् ।
नीलैर्युक्ता तथा मुक्ताफलैर्मध्यत्रिके युता ॥ ५३ ॥

नीललम्बनिका ख्याता हारे माणिक्यजा तथा ।

[वर्णसराख्यहारः तद्रीतिश्च]

तथैव नीलसंयुक्ता मुक्ताः पूर्वक्रमेण तु ॥ ५४ ॥

कृता वर्णसरो नाम दर्शनीयो मनोहरः ।

[इन्द्रच्छन्दविजयच्छन्ददेवच्छन्दाख्यहारविशेषाः तद्रचना च]

[1]सुरभूषणं मणीनां सहस्रमष्टोत्तरं चतुर्हस्तम् ॥ ५५ ॥

इन्द्रच्छन्दो नाम्ना विजयच्छन्द[2]स्तदर्धेन ।
शतमष्टयुतं हारो देवच्छन्दोह्यशीतिरेकयुता ॥ ५६ ॥

[अर्धहाररश्मिकलापाख्यहारविशेषौ तद्रीतिश्च]

अष्टाष्टकोऽर्धहारो रश्मिकलापश्च नवषट्कः ।

[गुच्छार्धगुच्छाख्यहारभेदौ तद्रीतिश्च]

द्वात्रिंशद्भिर्गुच्छो विंशत्या कीर्तितोऽर्धगुच्छाख्यः ॥ ५७ ॥

[मन्दालताहारफलकाख्यहारविशेषौ]

मन्दासंज्ञोऽष्टाभिः पञ्च[3]लताहारफलकसंज्ञं तत् ।

[नक्षत्रमालिकाख्यहारः तद्रचना च]

मुक्ताः सप्त च विंशतिरुक्ता नक्षत्रमालेति ॥ ५८ ॥

[पदकाभरणं तद्रीतिः तत्स्थानं च]

सुवर्णपरिविन्यस्तरत्नराजिसमन्वितम् ।
हरिन्माणिक्यनीलेन [4]प्रभासा नायकेन च ॥ ५९ ॥

मध्यदेशनिविष्टेन मणिना परिशोभितम् ।
पदकं रुचिरं रम्यं वक्षस्थलविभूषणम् ॥ ६० ॥

[पदकहारः]

नानारत्नविचित्रं च मध्यनायकसंयुतम् ।
सरकैर्लम्बितं रम्यं पदकं बन्धुरं विदुः ॥ ६१ ॥

---

[1]सतिभूषणं–मु. [2]स्तदर्धकः–ख. [3]लताहारसंज्ञं तत्–ख. [4]बृहता–मान.

[केयूराभरणं तद्रचना तत्स्थानं च]

सिंहवक्त्रसमाकारं नानारत्नविचित्रितम् ।
सूसकैर्लम्ब[1]कैर्युक्तं केयूरं बाहुभूषणम् ॥ ६२ ॥

[अङ्गदभूषणं तद्रचना तत्स्थानं च]

सौवर्णमणिविन्यस्तमुक्ताजालकमङ्गदम् ।
पेचका[2]पिञ्छसंयुक्तं बाहुसन्धिविभूषणम् ॥ ६३ ॥

[कटकभूषणं तद्रीतिः तत्स्थानं च]

सुवर्णोपरि विन्यस्तनानारत्नविराजितम् ।
हस्तस्य कटकं रम्यं [3]सुप्रभापरिशोभितम् ॥ ६४ ॥

[द्विहीरकाङ्गुलीयकभूषणं तद्रीतिश्च]

वज्रद्वितय[4]मध्यस्थहरिन्माणिक्यनीलकम् ।
द्विहीरकमिति ख्यातमङ्गुलीय[5]कभूषणम् ॥ ६५ ॥

[अष्टवज्राङ्गुलीयकं तद्रीतिश्च]

[6]अष्टकोणनिविष्टैश्च पविभिः परिशोभितम् ।
मध्ये रत्नसमायुक्त[7]मष्टवज्रमुदीरितम् ॥ ६६ ॥

[रविमण्डलाङ्गुलीयकं तद्रीतिश्च]

वृत्ताकारनिविष्टैश्च कुलि[8]शैः परिवेष्टितम् ।
मध्ये च मणिना युक्तं रविमण्डलमीरितम् ॥ ६७ ॥

[नवग्रहाङ्गुलीयकं तस्योत्तमता च]

रत्नैर्नवग्रहच्छायैर्नवभिः परिकल्पितम् ।
नवग्रहमिति ख्यातमङ्गुलीयकमुत्तमम् ॥ ६८ ॥

---

[1] नैर्यु–मान. [2] पिञ्छ–ख. मान. [3] स्वप्रभा–मान. [4] मध्यस्थं–मान.
[5] कमुत्तमम्–मान.. [6] अरको-मान. [7] मात्रे (मन्त)व–मान. मत्रे–पा.
[8] शैरपि वेष्टितम्–मान.

[वज्रादिवेष्टिताङ्गुलीयकं तद्रीतिश्च]

अङ्गुलीवे[1]ष्टकैर्वज्रै[2]र्निर्मितं वज्रवेष्टितम्।
अन्यै रत्नैश्च तत्रैवं तत्त[3]द्वेष्टितमुच्यते ॥ ६९ ॥

[त्रिहीरकाङ्गुलीयकं तस्योत्तमता च]

हीरयोरुभयोर्मध्ये कीलितं हीरमुत्तमम्।
त्रिहीरकमिति ख्यातमङ्गुलीयकमुत्तमम् ॥ ७० ॥

[अन्याः शुक्तिमुद्रिकादयः शुभमुद्रिकाः तद्रीतयश्च]

यत्तु नागफणाकारं बहुरत्नविभूषितम्।
अङ्गुलीवलयैर्वज्रैर्वेष्टितैः शुक्तिमुद्रिका ॥ ७१ ॥
अन्यैश्च विविधै रत्नैः सन्निवेश[4]विशेषितैः।
नानारूपाभिधानैश्च कल्पिता मुद्रि(काः)ताः शुभाः ॥ ७२ ॥

[मुक्तामण्डलसंज्ञककर्णभूषणं तद्रीतिश्च]

केवलैर्मौक्तिकैरेव वलयैः सुनिवेशितैः।
मुक्तामण्डलसंज्ञं तत् कर्णभूषणमुत्तमम् ॥ ७३ ॥

[द्विराजिताख्यकर्णभूषणं तद्रीतिश्च]

वलयद्वयविन्यस्तं मुक्ताफलविराजितम्।
मध्ये नीलेन संयुक्तं [5]द्विराजितमुदाहृतम् ॥ ७४ ॥

[त्रिराजितपूर्णमध्यकर्णाभरणरीतिः]

एवं [6]त्रिराजितं प्रोक्तं पूर्णमध्यं च मौक्तिकैः।
तत्पूर्णमध्यमाख्यातं मुक्ताफलविभूषितम् ॥ ७५ ॥

[वज्रगर्भाख्यकर्णाभरणरीतिः]

मौक्तिकानि बहिः पङ्क्तौ [7]तन्मध्ये वलयं ततः।
वज्राणि च [8]ततोऽप्येतद्वज्रगर्भमितीरितम् ॥ ७६ ॥

---

[1] ष्टनैर्व–ख. [2] र्वेष्टितं वज्रत्रेष्टकम्–मान. [3] द्वेष्टक–मान. [4] विशेषतः–मान.
[5] द्विराजिक–मान. [6] त्रिराजिकं–मान. [7] तदन्तर्णलकं–मान. [8] ततोऽप्यन्तः–मान.

[रविमण्डलाख्यकर्णाभरणरीतिः]

एवं बहिस्स्थमुक्तं यन्मध्ये वज्रैश्च [1]भूषितम् ।
मध्ये माणिक्यसंयुक्तं [2]रविमण्डलमुच्यते ॥ ७७ ॥

[तत्तत्संज्ञेतरकर्णाभरणानि]

नीलैर्मरकतैश्चैव माणिक्यैश्च [3]कदम्बितम् ।
यद्रूपै रचितं मध्ये तत्तत्संज्ञकमुच्यते ॥ ७८ ॥

[कुण्डलाभरणं तद्रीतिश्च]

सोपानक्रमविन्यस्तवज्रपङ्क्तिविराजितम् ।
षड्बन्धनेमिभिः कान्तं कुण्डलं तत्प्रचक्षते ॥ ७९ ॥

शोधितेन सुवर्णेन रुचिरेणातिकान्तिना ।
शृङ्खला विविधाः कार्यास्ताभिश्च कटकानि च ॥ ८० ॥

[उक्ताभरणानां स्त्रीपुंसामान्योक्तिः तयोः पृथगाभरणकथनं च]

स्त्रीपुंसयोः समानानि भूषणान्यत्र विस्तरात् ।
कथितान्यत्र वक्ष्यामि स्त्रीणां पुंसां पृथक् पृथक् ॥ ८१ ॥

[योषितां हंसतिलकाभरणं तद्रीतिः तत्स्थानं च]

अश्वत्थपत्रसङ्काशं सुवर्णेन [4]विनिर्मितम् ।
माणिक्यवज्रखचितमायतैर्मौक्तिकैर्युतम् ॥ ८२ ॥

तत्र मुक्ताफलैः पार्श्वे सूसकाभ्यां विराजितम् ।
ताभ्यां बहिर्मरालाभं नानारत्नैः प्रकल्पयेत् ॥ ८३ ॥

तदूर्ध्वे वज्रमाणिक्यमौक्ति[5]कैर्बहुभिर्युतम् ।
तदिदं हंसतिलकं योषित्सीमन्तभूषणम् ॥ ८४ ॥

[दण्डकाभरणं तदाकारः तत्स्थानं च]

कनत्काञ्चनपट्टेन पिनद्धं वलयाकृति ।
मुक्ताजालं तदूर्ध्वे तु कृतं नाम्ना च दण्डकम् ॥ ८५ ॥

---

[1] पूरितम्–मान. [2] भुवे म–मान. [3] करम्बि–मान. [4] विमिश्रितम्–मान.
[5] कैः कृतबन्धकम्–मान.

[चूडाभरणं तदाकारः तत्स्थानं च]

क्रमशो वर्धमानं तच्चूडामण्डनमुत्तमम् ।
केतकीदलसङ्काशं कनत्काञ्चनकल्पितम् ॥ ८६ ॥
दण्ड[1]कादूर्ध्वभागस्य भूषणं तदुदाहृतम् ।

[पद्माभरणं तदाकृतिः त स्थानं च]

सौवर्णकल्पितं पद्मं नानारत्नविराजितम् ॥ ८७ ॥
चूडिकापरभागस्य भूषणं परिकीर्तितम् ।

[लम्बनाख्यवेणीभूषणं तदाकृतिश्च]

सौवर्णकुसुमैः क्लृप्तं मुक्ता[2]जालविभूषितम् ॥ ८८ ॥
बृहन्माणिक्यनीलैश्च लम्बनं [3]वेणिभूषणम्

[मुकुलाख्यकर्णभूषणभेदः तदाकारश्च]

पिचुमन्दफलाकारैर्मौक्तिकैर्नीलकैः कृतम् ॥ ८९ ।
माणिक्यैर्मण्डितैर्हारैर्मुकुलं कर्णभूषणम् *।

[सरिकाख्यगलभूषणं तद्रचना च]

नवभिर्दशभिर्वापि स्थूलमुक्ता[4]फलैः कृता ॥ ९० ॥
कण्ठप्रमाणरचिता सरिका गलभूषणम् ।
तस्या बहिश्च संलग्ना [5]वक्रशृङ्खलिका शुभा ॥ ९१ ॥

[बाहुवलयाख्यभूषणं अस्य पुंसम्बन्धेऽङ्गदसंज्ञा च]

सिंहवक्त्रसमाकारौ स्वर्णरत्नैर्विनिर्मितौ ।
मुक्तामाणिक्यसंयुक्तौ नीलमाणिक्यलम्बितौ ॥ ९२ ॥

---

* एतदुपरि मानसोल्लासे तस्या इत्याद्यधिकमर्धं वर्तते.

[1] कस्योर्ध्व–मान. [2] सरसमन्वितम्–मान. [3] चूडि–मान. [4] फलैर्वृता–मु. [5] वज्रसङ्कलका–मान.

कञ्चुके कीलितौ कार्यौ भुजभूषणकौ वरौ ।
नामतो बाहुवलयौ [1]पुंसश्चेदङ्गदाभिधौ ॥ ९३ ॥

काञ्चनीभिः शलाकाभिः सुसूक्ष्माभिर्विनिर्मितौ ।
मणिबन्धमितादूर्ध्वं वलयै[2]र्विहितैः क्रमात् ॥ ९४ ॥

प्रादेशमात्रकं दैर्घ्ये विस्तारे [3]बाहुवेष्टनम् ।
द्विधा विभज्य कर्तव्यं ग्रथितं कीलकेन तु ॥ ९५ ॥

[चूडार्धचूडाख्याभरणे तदाकारौ तत्स्थानं च]

अनेनैव प्रकारेण वज्रमाणिक्यमौक्तिकैः ।
चूडकं मङ्गलं स्त्रीणां प्रकोष्ठस्य विभूषणम् ॥ ९६ ॥

अनेनैव प्रकारेण तदर्धेन विनिर्मितम् ।
अर्धचूडमिति ख्यातं स्त्रीणां प्रियतमं सदा ॥ ९७ ॥

[काञ्चीदामाख्यकटिभूषणम्]

चतुरङ्गुलविस्तारं जघनाभोगवेष्टनम् ।
सौवर्णरत्नखचितं सुसकैर्लम्बनैर्युतम् ॥ ९८ ॥

हैमघर्घरघण्टाभिः [4]निचितं रवसंयुतम् ।
काञ्चीदामेति विख्यातं कटिभूषणमुत्तमम् ॥ ९९ ॥

[पादचूडकाख्याभरणं तद्रचना च]

हस्तचूडकवद्रम्यौ जङ्घाकाण्डप्रमाणकौ ।
नानारत्नैश्च खचितौ विख्यातौ पादचूडकौ ॥ १०० ॥

[5]सुवर्णरचितौ कार्यौ त्रिभागकृतखेटकौ ।
सन्धिदेशे सुसंश्लिष्टौ कीलकेन च कीलितौ ॥ १०१ ॥

चतुरश्रौ षडश्रौ वा तथाष्टाश्रौ च कारयेत् ।

---

[1] पुंसि यावङ्ग-मान. [2] वर्धितैः-मान. [3] बहु-ख. [4] निर्मितं-मान. [5] सुवर्णरजतौ-मु.

[नूपुराख्यभूषणं तद्रचना च]

सौवर्णैर्बुद्बुदै रम्यैः पङ्क्तिस्थैर्वा विराजितैः ॥ १०२ ॥
श्लक्ष्णौ च कान्तिसंयुक्तौ नादवन्तावथापि वा ।
रत्नैर्वा विविधैर्युक्तौ कटकौ [1]नूपुरौ मतौ ॥ १०३ ॥

[पादपट्टभूषणं तद्रीतिश्च]

त्रिपञ्चश्रृङ्खलाक्लृप्तौ नानारत्न[2]सरैः कृतौ ।
कीलितौ हीरसन्धानौ [3]पादपट्टावितीरितौ ॥ १०४ ॥

[पादघर्घरिकाख्यभूषणं तद्रचना च]

किङ्किण्यः स्वर्णरचिता गुणगुम्भितविग्रहाः ।
नादवत्यः सुरम्यास्ताः पादघर्घरिकाभिधाः ॥ १०५ ॥

[राढकाभरणं तस्य पादघर्घरतो विशेषश्च]

ईदृग्रूपसमायुक्ता नानारत्नविनिर्मिताः ।
ध्वनिहीनाः सुशोभाढ्याः राढकाः परिकीर्तिताः ॥ १०६ ॥

[आन्दुकाख्यभूषणं तत्स्थानं तद्रचना च]

आयताश्च सुवक्त्राश्च [4]कटका रत्ननिर्मिताः ।
[5]आन्दुका इति विख्याता योषित्पादविभूषणम् ॥ १०७ ॥

[पादमुद्रिकाख्यभूषणं तद्रचना च]

पादतर्जनिमानेन कनत्काञ्चनशोभितम् ।
स्थूला च ध्वनिसंयुक्ता सुशुभा मुद्रिका वरा ॥ १०८ ॥

[शिखरमकुटपट्टशिरोवेष्टनानि तत्र पुरुषाणां विशेषश्च]

शिखरैः शोभितं यत्तु शिखरं तद्विदुर्बुधाः ।
मुकुलाभं भवेद्यत्तु मकुटं तत्प्रकीर्तितम् ॥ १०९ ॥

---

[1] पादभूषणं—मु. ख. पादभूषणौ—मान. [2] शतैः—मान.
[3] पादपाकावि—मान. [4] कटकाकारनि—मान. [5] अन्दु—ख.

मध्ये चाष्टाङ्गुलः पञ्चपञ्चभिः शिखरैर्युतः ।
सौवर्णरत्नसंयुक्तः पट्टो राज्ञां प्रशस्यते ॥ ११० ॥

केवलं [1]सरलैर्यत्र शिरोवेष्टनमुच्यते ।
एवं विरचितै रत्नै राज्ञां [2]मस्तकभूषणम् ॥ १११ ॥

दलकं [3]रञ्जितं हेमव्याघ्रपुच्छविनिर्मितम् ।
मुक्तामाणिक्यखचितं पुरुषाणां विभूषणम् ॥ ११२ ॥

[स्त्रीनासाभरणं तद्रीतिश्च]

मुक्ताफलेन स्थूलेन शोभिताग्रं मनोहरम् ।
कोशाकारं रत्नविद्धं स्त्रीणां नासाविभूषणम् ॥ ११३ ॥

[कर्णाभरणादिधारणे फलानि भूषाभोगोपसंहारश्च]

पवित्रं पुण्यजनकं कर्णाभरणधारणम् ।
मौक्तिक स्वर्णसंयुक्तं भूरिभाग्याय कल्पते ॥ ११४ ॥

काञ्चनोपरिविन्यस्तनानारत्नविराजितम् ।
पदकं श्रीकरं मेध्यं प्रशस्तं कान्तिवर्धनम् ॥ ११५ ॥

यशस्यं धन्यमायुष्यं यथारत्नगुणं च तत् ।
वश्यकारि पवित्रं स्यादङ्गुलीयकधारणम् ॥ ११६ ॥

[4]पवित्रकारणं नृणां विषदोषनिवारकम् ।
शुचिना भूषणं धार्यं दिव्यरत्नविनिर्मितम् ॥ ११७ ॥

रत्नादिदेवतास्तुष्टा यच्छन्ति महतीं श्रियम् ।
यथारुचि यथाभोगं प्रेयसीचित्तसम्मतम् ॥
धत्ते यद्भूषणं राजा भूषाभोगः प्रकीर्तितः ॥ ११८ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले वस्त्रमाल्यभूषणोपभोगवर्णनं नाम षोडशस्तरङ्गः

---

[1] सरकैर्यत्तच्छिरो–मान. [2] चूडामणिः शुभः–मु. [3] हेमरचितं व्या–मान.
[4] प्रभुत्वकारणं–मु.

# षष्ठकल्लोले सप्तदशस्तरङ्गः

## भूषणोपभोगे रत्नस्वरूपवर्णनम्

[रत्नप्रभेदप्रश्नः तदुत्तरप्रतिज्ञा च]

राजोपभोगकथनप्रस्तावे करुणानिधे ! ।
धृतिः प्रोक्ता भूषणानां [1]नानारत्नविराजिनाम् ॥ १ ॥

कियद्विधानि रत्नानि तानि ब्रूहि [2]महागुरो ! ।
शृणु नन्दन ! शंसामि संसदाश्चर्यकारकम् ॥ २ ॥

[राज्ञः कोशे परीक्षापूर्वकं रत्नसङ्ग्रहः]

रत्नानि धारयेत्कोशे शुद्धानि गुणवन्ति च ।
सम्भवन्ति तथा जातिं गुणं तेषां परीक्ष्य च ॥ ३ ॥

[कृतादियुगभेदेन वज्रोत्पत्तिस्थानानि]

कृते युगे कलिङ्गे च कौसले वज्रसम्भवः ।
हिमालये मतङ्गाद्रौ त्रेतायां कुलिशोद्भवः ॥ ४ ॥

पौण्ड्रके च सुराष्ट्रे च द्वापरे पविसम्भवः ।
[3]वैराकरे च सैवीरे कलौ हीरसमुद्भवः ॥ ५ ॥

[सामान्यतो वज्राणां गुणदोषच्छायासङ्ख्या]

गुणाः पञ्च समाख्याताः दोषाः पञ्च प्रकीर्तिताः ।
छायाश्चतस्रो विज्ञेया वज्राणां रत्नकोविदैः ॥ ६ ॥

[वज्रस्य पञ्च गुणाः तत्स्वरूपाणि च]

षट्कोणत्वं लघुत्वं च समस्तदलता तथा ।
तीक्ष्णाग्रता निर्मलतेत्येवं पञ्च गुणाः स्मृताः ॥ ७ ॥

---

[1] नानारत्नैर्विराजिताम्-मु. [2] गुरोऽधुना-ख. [3] वैरागरे च सोपारे-मान.

[वज्रस्य पञ्च दोषाः तत्स्वरूपाणि च]

मलो बिन्दुस्तथा रेखा त्रासः काकपदं च यत् ।
एते दोषाः समाख्याताः पञ्च वज्रेषु कोविदैः ॥ ८ ॥

[वज्राणां श्वेताद्याः चतस्रः छायाः]

श्वेता रक्ता तथा पीता कृष्णा छाया चतुर्विधा ।

[विप्रादीनां यथाक्रमं श्वेतादिगुणवद्रत्नधारणं तत्फलं च]

विप्रक्षत्रियवैश्यानां शूद्रजातेर्यथाक्रमम् ॥ ९ ॥

गुणयुक्तस्य वज्रस्य विप्रजातेस्तु धारणात् ।
यज्ञैर्दानैस्तपोभिश्च यत्फलं तदवाप्नुयात् ॥ १० ॥*

[मलदुष्टरत्नधारणे दोषाः]

मलं मलिनताख्यं तद्धारणे दंष्ट्रिणो भयम् ।
कोणे व्याधिभयं प्रोक्तं मध्ये वह्निभयं भवेत् ॥ ११ ॥

[बिन्दुदोषस्य चातुर्विध्यं तल्लक्षणं च]

दोषेषु बिन्दुरावर्तः परिवर्तो यवाकृतिः ।
चतुर्धैवं समाख्याता बिन्दवो रत्नसंश्रयाः ॥ १२ ॥

[बिन्दोरावर्तत्वादावुपाधयः]

रक्तोऽत्र वर्तुलो बिन्दुरावर्तः [1]सव्यवर्तनः ।
संरक्तः परिवर्तस्तु [2]यव एवापसव्यकः ॥ १३ ॥

[बिन्द्वादीनां फलम्]

बिन्दुरायुर्धनं हन्यादावर्तो भयमावहेत् ।
परिवर्ताद्भवेद्व्याधिर्यवे तु फलमुच्यते ॥ १४ ॥

---

* इतः परं क्षत्रादिवज्रधारणे फलकीर्तनश्लोकाः मानसोल्लासे वर्तन्ते.

[1] सर्ववर्तनः—ख.   [2] रक्त—मान.

[रक्तादिभेदेन यवत्रैविध्यं तद्धारणे दोषाश्च]

स च रक्तस्तथा पीतः श्वेतश्चेति त्रिधा मतः ।
रक्तवर्णो यवः ख्यातो जात्यश्वस्य विनाशकः ॥ १५ ॥

यवे पीते कुलस्यान्तो धनमायुः सितो हरेत् ।
एवं दोषा गुणाः प्रोक्ता यवबिन्दोरशेषतः ॥ १६ ॥

[रेखादोषस्योपाधितो गुणदोषावहत्वम्]

सव्यवक्रा शुभा रेखा वामवक्रा भयङ्करी ।
भेदभ्रान्तिकरी [1]छेदा रेखा शस्त्रभयप्रदा ॥ १७ ॥

पक्षद्वयप्रदृश्या या [2]भेदना सुप्रकीर्तिता ।
रेखा बन्धुविनाशाय जायते वज्र[3]संश्रिता ॥ १८ ॥

[काकपदाख्यदोषफलानि]

[4]रेखा काकपदाकारा दृश्यते वज्रसंश्रिता ।
[5]मृत्युमेवादिशत्याशु धनं वा सकलं हरेत् ॥ १९ ॥

भग्नाग्रं भग्नधारं च दलहीनं च वर्तुलम् ।
कान्तिहीनं च यद्वज्रं दोषाय न गुणाय तत् ॥ २० ॥

[त्रासाख्यदोषफलं दोषगुणोक्त्युपसंहारश्च]

भिन्नभ्रान्तिकरस्त्रासः सन्त्रासं जनयेत् स्फुटम् ।
एवं दोषा गुणाः प्रोक्ता वज्राणां रत्नकोविदैः ॥ २१ ॥

[वज्रेषु स्त्रीपुन्नपुंसकजातिभेदाः]

स्त्रीपुन्नपुंसकमिति त्रिविधा रत्नजातयः ।

[पुंवज्रलक्षणम्]

वृत्ताः फलकसम्पूर्णास्तेजस्वन्तो महत्तराः ॥ २२ ॥

पुरुषास्ते निबोद्धव्या रेखाबिन्दुविवर्जिताः ।

---

[1] भिन्ना—मु. [2] छेदगा—मान. [3] संस्थिता—ख. [4] शुकः—मान.
[5] स मृत्युमादिशत्याशु—ख. मान.

[स्त्रीवज्रलक्षणम्]

रेखाबिन्दुसमायुक्तास्ते सखण्डाश्च योषितः ॥ २३ ॥

[नपुंसकवज्रलक्षणम्]

त्रिकोणतनवो दीर्घा विज्ञेयास्ते नपुंसकाः ।

[स्त्रीपुन्नपुंसकवज्राणां क्रमात्स्त्रीपुन्नपुंसकधार्यता]

स्त्रीपुन्नपुंसकं वज्रं योज्यं स्त्रीपुन्नपुंसकैः ॥ २४ ॥
व्यत्यासो नैव फलदः पुंवज्रेण विना क्वचित् ।

[ऐन्द्रादिवज्रलक्षणानि]

ऐन्द्रं षडश्रयुक्तं याम्यं सर्पास्यरूपमसितं च ।
कदलीकाण्डनिकाशं वैष्णवमिति सर्पसंस्थानम् ॥ २५ ॥
वारुणमबलागुह्योपमं भवेत्कर्णिकारपुष्पनिभम् ।
शृङ्गाटकसंस्थानं व्याघ्राक्षिनिभं च हौतभुजम् ॥ २६ ॥
*वायव्यं च यवोपममशोककुसुमप्रभं समुद्दिष्टम् ।

[चतुर्वर्णधार्यवज्राणि]

रक्तं पीतं [1]च [2]भृशं राजन्यानां सितं द्विजातीनाम् ॥ २७ ॥
शैरीषं वैश्यानां शूद्राणां शस्यतेऽसिनिभम् ।

[मुक्ताफलोत्पत्तिस्थानानि तत्तन्मुक्तातिशयश्च]

[3]इभाहिकीटमत्स्यानां शीर्षे मुक्ताफलोद्भवः ।
त्वक्सारशुक्तिशङ्खानां गर्भे मुक्ताफलोद्भवः ॥ २८ ॥
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः ।
दुर्लभं तन्महारत्नं देवैस्तन्नीयतेऽम्बरात् ॥ २९ ॥

---

* 'स्रोत: खनि: प्रकीर्णकं' इति वज्रत्रैविध्यबोधकमेतत्पद्यार्धं बृहत्संहितायां वर्तते
[1] कपिशं—मु. [2] शुभं—बृ. सं. [3] कोलाहिकरिमत्स्यानां—मान.

गजादिजं सुदुष्प्रापं मौक्तिकं तपसा विना ।
मौक्तिकं शुक्तिजं लभ्यमाकरेषु कलौ नृभिः ॥ ३० ॥

कुक्कुटाण्डसमं वृत्तं मौक्तिकं निबिडं गुरु ।
घनजं भानुसङ्काशं देवयोग्यममानुषम् ॥ ३१ ॥

काम्भोजकुम्भिसम्भूतं धात्रीफलनिभं समम् ।
आताम्रपिञ्जरच्छायं मौक्तिकं मन्ददीधिति ॥ ३२ ॥

फणिजं वर्तुलं रम्यं नीलच्छायं महाद्युति ।
पुण्यहीना न पश्यन्ति वासुकेः कुलसम्भवम् ॥ ३३ ॥

कोलजं [1]त्वङ्कोलनिभं तद्दंष्ट्रासदृशच्छवि ।
अलभ्यं मनुजै रत्नं पुण्यसम्पद्विवर्जितैः ॥ ३४ ॥

गुञ्जाफल[2]सम[3]स्थौल्यं निबिडं मौक्तिकं लघु ।
पाटलीपुष्पसदृशं मत्स्यजं स्यात्सुवर्तुलम् ॥ ३५ ॥

वंशजं शशिसङ्काशं [4]मञ्जालीफलमात्रकम् ।
प्राप्यते बहुभिः पुण्यैस्तद्र[5]क्ष्यं वेदमन्त्रतः ॥ ३६ ॥

[6]पुरुषोत्तमसच्छायं पाञ्चजन्यकुलोद्भवम् ।
कपोताण्डप्रमाणं तच्छान्तं दोषहरं परम् ॥ ३७ ॥

विद्रुमाभलतायुक्तो यस्य पारेऽस्ति पर्वतः ।
शरच्चन्द्रसमाभाससमुत्तुङ्गतरङ्गयुक् ॥ ३८ ॥

यस्य वेलाम्बुधेः शुक्ला महामकरसङ्कुला ।
एवं लक्षणसंयुक्ते सागरे मौक्तिकोद्भवः ॥ ३९ ॥

[अष्टौ मुक्ताकराः]

सिंहलकपारलौकिकसौराष्ट्रकताम्रपर्णि[7]पारसिकाः ।
कौबेरपाण्ड्यवाटक[8]संज्ञा मुक्ताकरास्त्वष्टौ ॥ ४० ॥

---

[1] कोलसदृशं—मान. [2] समं तौल्यात—मान. [3] स्थाल्यं—ख. [4] कङ्कोली—मान.
[5] क्ष्यं—ख. [6] वर्षोपलस मंदीप्त्या—मान. [7] पारशवाः—बृ. सं. [8] हैमा—बृ. सं

[सिंहलाद्युद्भवमुक्तालक्षणानि]

बहुसंस्थानाः स्निग्धा
हंसाभाः सिंह[1]लाकराः स्थूलाः ।*
कृष्णाः श्वेताः पीताः
शर्करकाः पारलौकिका विषमाः ॥ ४१ ॥

न स्थूला नात्यल्पा
नवनीतनिभाश्च सौराष्ट्राः ।
ज्योतिष्मत्यः शुभ्राः
गुरवोऽतिमहागुणाश्च [2]पारसिकाः ॥ ४२ ॥

†लघुबर्बरा दधिनिभाः
शङ्खनिभाश्च ताम्रपर्णिभवाः ।
बिम्बफलत्रि[3]पुटाकृति-
युक्ताः ख्यातास्तु पाण्डयवाटभवाः ॥ ४३ ॥

[देवताभेदेन मुक्ताफलवर्णाः]

अतसीकुसुमश्यामं
वैष्णवमैन्द्रं शशाङ्कसङ्काशम्
हरितालनिभं वारुण-
[4]मभ्राभं यमदैवतं भवति ॥ ४४ ॥

परिणतदाडिम[5]कलिका-
गुञ्जाताम्रं च वायुदैवत्यम्
निर्धूमानल[6]कमल-
[7]प्रभमुक्तं वह्निदैवत्यम् ॥ ४५ ॥

इति वर्णाः समाख्याता देवताभेदतः क्रमात् ।

---

* एतदुपरि बृहत्संहितायां ईषत्ताम्रा इत्याद्यधिकमर्धं वर्तते ।

† लघुजर्जरं दधिनिभं बृहद्विसंस्थानमपि हेमम् ।
विषमं कृष्णश्वेतं लघु कौबेरं प्रमाणतेजोवत् ॥ इति बृ. सं. पाठः ॥

[1] लाङ्शिरस्थूलाः—ख. [2] पारशवाः-मान.—बृ. स. [3] पुटधान्यकचूर्णाः स्युः पा.—बृ. सं. [4] मसितं. बृं. सं. [5] गुञ्जिका—बृ. सं. [6] कमलप्रभाकान्तं—मु. कणिकप्रभा—र.शा. [7] प्रभं च विज्ञेयमाग्नेयम्—बृ. सं.

[शुभमुक्ताफलोत्पत्तिस्थानानि]

शुक्तिजन्माम्बुधेर्मध्ये [1] शुद्धे चैवारवायके ॥ ४६ ॥
पारसीके [2]मच्छले च भवेन्मुक्ताफलं शुभम् ।

[मुक्ताफलजनिक्रमः तन्मौल्यनिर्णयश्च]

स्वात्यां स्थिते रवौ मेघैर्यें मुक्ताजलबिन्दवः ॥ ४७ ॥
ते शुक्तौ पतिता मुक्ता जायन्ते निर्मलत्विषः ।
स्थूला मध्यास्तथा सूक्ष्मा बिन्दुमानानुसारतः ॥ ४८ ॥
भवन्ति मुक्तास्तासां च मौल्यं तन्मानरूपतः ।

[शौक्तिकं अमूल्यमुक्ताफलं तस्य नृपभोग्यता च]

रुग्मिण्याख्या भवेच्छुक्तिस्ततो जातं च मौक्तिकम् ॥ ४९ ॥
निर्मलं कुङ्कुमच्छायं जातीफलसमाकृति ।
अमूल्यं तद्विनिर्दिष्टं रत्नलक्षणवेदिभिः ॥ ५० ॥
दुर्लभं नृपभोग्यं तत्स्वल्पपुण्यैर्न लभ्यते ॥

[सिंहलादिसम्भवोत्तममुक्ताफलानि]

स्निग्धं सुमधुरच्छायं मौक्तिकं [3]सितमुत्तमम् ॥ ५१ ॥
*शुक्तिगर्भसमुत्पन्नं पीतच्छायं सुनिर्मलम् ।

---

*अत्र मानसोल्लासे—

आरवाटसमुत्पन्नं पीतच्छायं सुनिर्मलम् ।
पारसीकोद्भवं स्वच्छं सितं मुक्ताफलं शुभम् ॥
ईषच्छायं च रूक्षं च मौक्तिकं बर्बरोद्भवम् ॥ एवं पाठः ।

[1] सिद्धे–मु. सिंहले चारवाटके–मान. [2] बर्बरे–मान. [3] सिंहलोद्भवम्–मान.

[रत्नस्य मौक्तिकस्य च चत्वारो महादोषाः पञ्च मध्यदोषाश्च]

चत्वारः स्युर्महादोषाः पञ्च मध्याः प्रकीर्तिताः ॥ ५२ ॥
मौक्तिकस्य च रत्नस्य नव दोषान् परीक्षयेत् ॥

[चतुर्णां महादोषाणां त्याज्यता]

शुक्तिखण्डं च परुषं मत्स्याक्षं चातिरक्तताम् ॥ ५३ ॥
महादोषांश्च चतुरस्त्यजेल्लक्षणविन्मणौ ॥

[पञ्चानां मध्यदोषाणामुपादेयता]

त्रिवृत्तं चर्पटं [1] त्र्यश्रं धीर्घपार्श्वं च यत्कृशम् ॥ ५४ ॥
सामान्याः पञ्च दोषाः स्यू रत्नशास्त्रपरीक्षिणाम् ।

[त्रिविधा रत्नच्छाया]

मधुपीतसितत्वं च छाया सा त्रिविधा मता ॥ ५५ ॥

[नवविधमौक्तिकानि तेषां धारणप्रयोजनं च]

ह्लादि श्वेतं गुरु स्निग्धं रश्मिमन्निर्मलं महत् ।
ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवलक्षणम् ॥ ५६ ॥
मौक्तिकं विशदं वृत्तं सितं श्रीदं सुशीतलम् ।
सदा सुधाकरप्रीतिमावहेद्धारणेन तु ॥ ५७ ॥

[धारणायोग्यमौक्तिकानि]

रूक्षाङ्गं निर्जलं श्यामं ताम्राभं लवणोपमम् ।
अर्धखण्डं च विकृतं मौक्तिकं ग्रन्थिलं त्यजेत् ॥ ५८ ॥

---

[1] श्यश्रि—ख.

[पार्थिवार्हमौक्तिकानि]

शङ्खतिमिवेणुवारण-
वराहभुजगाभ्रजान्य[1]वेद्यानि।
असितगुणत्वाच्चैषा-
मर्घः शास्त्रे न निर्दिष्टः ॥ ५९ ॥

शस्तेऽवनिप्रदेशे
रजतमये भाजने स्थिते यस्मिन्।
वर्षति देवोऽकस्मात्
तज्ज्ञेयं नागसम्भूतम् ॥ ६० ॥

एतानि सर्वाणि महागुणानि
सुतार्थसौभाग्ययशस्कराणि।
सङ्कीर्तितान्येव तु पार्थिवानां
मुक्ताफलान्यर्थितकामदानि ॥ ६१ ॥

[चत्वारि माणिक्यक्षेत्राणि तन्नामानि च]

[2]सिद्धावरणगङ्गायाः सिंहले जन्म कीर्तितम्।
क्षेत्राणि तस्य चत्वारि माणिक्यस्य बुधा जगुः ॥ ६२ ॥

सिंहलं प्रथमं क्षेत्रं ततः कारपुरं परम्।
आन्ध्रं तृतीयमादिष्टं चतुर्थं तुम्बुरं स्मृतम् ॥ ६३ ॥

[सिंहलादिजानां रत्नानां वर्णनामभेदाः]

सिंहले तद्भवेद्रक्तं पद्मरागमनुत्तमम्।
पीतं कालपुरोद्भूतं कुरुविन्दमिति स्मृतम् ॥ ६४ ॥

अशोकपल्लवच्छायमान्ध्रे सौगन्धिकं विदुः।
तुम्बुरे छायया नीलं नीलग्रन्थि प्रकीर्तितम् ॥ ६५ ॥

[क्षेत्रभेदेन माणिक्यस्य तारतम्यम्]

उत्तमं सिंहलोद्भूतं निकृष्टं तुम्बुरोद्भवम्।
मध्ययोर्मध्यमं ज्ञेयं माणिक्यं क्षेत्रयोगतः ॥ ६६ ॥

---

[1] वेध्यानि—ख.   [2] नद्यां रावण—अगस्त्यमतम्. सिन्धौ रावणगङ्गायां—मान.

[माणिक्यगुणदोषच्छायाः तत्सङ्ख्या च]

माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः ।
गुणाश्चत्वार आख्याताः छायाः षोडश कीर्तिताः ॥ ६७ ॥

[दुष्टानि माणिक्यानि तेषां धारणे दोषाश्च]

छायाद्वितयसम्बन्धि द्विच्छायं बन्धुनाशनम् ।
द्विरूपं द्विपदं तेन माणिक्येन पराभवः ॥ ६८ ॥

सभेदं भिन्नमित्युक्तं शस्त्रघातभयावहम् ।
कर्करं शर्करायुक्तं पशुबन्धुविनाशनम् ॥ ६९ ॥

दुग्धमस्तुसमाकारं लशुनापटमुच्यते ।
अशोभनं तदुद्दिष्टं माणिक्यं मणिकोविदैः ॥ ७० ॥

मधुबिन्दुसमच्छायं कोमलं परिकीर्तितम् ।
आयुर्लक्ष्मीं जयं हन्ति सदोषं तन्न धारयेत् ॥ ७१ ॥

रागहीनं जडं प्रोक्तं धनधान्यपवादकृत् ।
धूम्रं धूमसमाकारं [1]धूतं तु भयमावहेत् ॥ ७२ ॥

ईदृग्दोषयुता निन्द्या मणयो माल्यवर्जिताः ।
अपि प्राप्ता न ते धार्या गृहे शुभमभीप्सता ॥ ७३ ॥

[माणिक्यगुणाः तेषां सङ्ख्या च]

माणिक्यस्य गुणाः प्रोक्ताश्चत्वारो मुनिपुङ्गवैः ।
स्निग्धच्छाया गुरुत्वं च नैर्मल्यमतिरक्तता ॥ ७४ ॥

कुशेशयदलच्छायं स्वच्छं स्निग्धं गुरु स्फुटम् ।

[श्रेष्ठा मणयः तेषां धारणे फलातिशयश्च]

[2]वृत्तायतसमानं च माणिक्यं श्रेष्ठमुच्यते ॥ ७५ ॥

---

[1] धुतं तद्भय-मु. वैधुतं भयमावहेत्-मान.   [2] वृत्तायतप्रमाणं च-मु.

लाक्षारसनिभं चैव हिङ्गुली कुङ्कुमप्रभम् ।
ईषन्नीलं च रक्तं च ज्ञेयं सौगन्धिकं बुधैः ॥ ७६ ॥

भ्रमरशिखिशिखण्डवर्णो
दीपशिखानुप्रभो भुजङ्गानाम् ।
भवति मणिः किल मूर्धनि
नित्यं धार्यः स विज्ञेयः ॥ ७७ ॥

यस्तं बिभर्ति मनुजाधिपतिर्न तस्य
दोषा भवन्ति विषरोगकृताः कदाचित् ।
राष्ट्रे च नित्यमभिवर्षति तस्य देवः
शत्रुर्विनाशमुपयाति [1]मणिप्रभावात् ॥ ७८ ॥

[चतुर्वर्णरत्नानि तन्नामानि च]

ब्राह्मणः पद्मरागः स्याज्जातरङ्ग इतीरितः ।
क्षत्रियः कुरुविन्दाख्यो वैश्यः सौगन्धिकः स्मृतः ॥ ७९ ॥

गवाङ्गो नीलगन्धी च शूद्रस्तूभयनामवान् ।

[ब्राह्मणादिरत्नानां छायासङ्ख्याः]

छाया दशविधा अस्य द्वितीयस्याष्टधा स्मृताः ॥ ८० ॥

तृतीयस्य च षट् प्रोक्तास्तुरीयस्य चतुर्विधाः ।

[ब्राह्मणरत्नछायाः]

पद्मकह्लारखद्योतदहनान्यभृताक्षिभिः ॥ ८१ ॥

दीपदाडिमबीजार्कदाडिमीप्रसवैरपि ।
इन्द्रगोपैश्च तुल्याः स्युश्छायाः प्रथमवर्णजाः ॥ ८२ ॥

---

[1] मणेःप्र—ख.

[क्षत्रियरत्नछाया:]

लोध्रकिंशुकबन्धूकजपाकुसुमसन्निभम् ।
गुञ्जाशशासृक्सिन्दूरतप्तलोहाभमष्टधा ॥ ८३ ॥

[वैश्यरत्नछाया:]

लाक्षारसः कोकिलदृक् शाल्मलीसप्तपर्णयोः ।
प्रसूनं तप्तलोहश्च षष्ठं चाशोकपल्लवम् ॥ ८४ ॥

[तुरीयवर्णछाया:]

छाया जाते[1]स्तुरीयस्याः चतुर्धा सा तु कथ्यते ।
कुसुम्भकुसुमेनापि पक्वबिम्बफलेन च ॥ ८५ ॥

तथा कुरवपुष्पेण धातुना च समाः स्मृताः ।

[वज्रपद्मरागयोः प्रशंसनीयगुणौ]

लघु वज्रं प्रशंसन्ति गुरुत्वं पद्मरागके ॥ ८६ ॥

[पद्मरागे रश्मिप्रसरक्रमतः उत्तमाधममध्यमविभागः]

ऊर्ध्वरश्मिरधोरश्मिः पार्श्वरश्मिरिति क्रमात् ।
पद्मरागाः सुविज्ञेया उत्तमाधममध्यमाः ॥ ८७ ॥

[जातरङ्गादिरत्नधारणप्रयोजनानि]

गोभूमिविद्याकन्यानां दातुर्वाजिमखस्य च ।
कर्तुश्च पुण्यमाप्नोति जातरङ्गस्य धारणात् ॥ ८८ ॥

धारयेत्कुरुविन्दं यः स सम्राड् भवति ध्रुवम् ।
यस्तु सौगन्धिकं धत्ते सम्पदा यशसाधिकः ॥ ८९ ॥

गवाङ्गं धारयेद्यस्तु क्षीरसस्यसमृद्धिमान् ।
सर्वलक्षणसम्पूर्णे पद्मरागे गृहे स्थिते ॥ ९० ॥

---

[1] स्तृतीयस्याः—ग.

अश्वमेधफलं तस्य वित्तमायुर्जयो भवेत्।

[ माणिक्ये वर्णोत्कर्षजननोपायः ]

कांस्यपात्रे बीजपूररसे सप्तदिनावधि ॥ ९१ ॥
अधिवासे तु माणिक्ये वर्णोत्कर्षः प्रजायते ।

[ जलनीलेन्द्रनीलभेदेन नीलद्वैविध्यं तयोरिन्द्रनीलस्य श्रैष्ठ्यं च ]

नीलं तु द्विविधं प्रोक्तं रत्नसिद्धान्तशासने ॥ ९२ ॥
जलनीलेन्द्रनीले च शक्रनीलं तयोर्वरम् ।

[ जलनीलेन्द्रनीलयोर्लक्षणम् ]

श्वेतगर्भितनीलाभं लघु तज्जलनीलकम् ॥ ९३ ॥
कार्ष्ण्यगर्भितनीलाभं सुगात्रं शक्रनीलकम् ।

[इन्द्रनीलस्य जन्मस्थानम्]

इन्द्रनीलस्य सम्भूतिः सिंहलद्वीपमध्यतः ॥ ९४ ॥
[1] सिद्धावरणगङ्गायाः कूले पद्माकरान्तरे ।

[नीले सितत्वादिना ब्राह्मणादिविभागः]

सितच्छायो भवेद्विप्रस्ताम्रः क्षत्रियजातिमान् ॥ ९५ ॥
पीतस्तु वैश्यजातीयो वृषलः कृष्णदीधितिः ।

[नीलस्य सङ्ख्यातो गुणदोषप्रतिज्ञा तन्नामलक्ष्मोक्तिप्रतिज्ञा च]

दोषांस्तस्य प्रवक्ष्यामि नामभिर्लक्षणैश्च षट् ॥ ९६ ॥
गुणांश्च कथयिष्यामि पञ्च [2] चाष्टविधां छविम् ।

---

[1] नद्या रावणगङ्गायाः—मान.    [2] चाष्टविधा छविः—वा.

[नीलस्य दोषास्तद्धारणफलं च]

अभ्रवत्पटलं [1]यत्तु तदभ्रममितद्युति ॥ ९७ ॥

धारणं तस्य सम्पत्तिमायुश्चैव समं हरेत् ।
शर्करामिश्रितं यत्तु तद्विज्ञेयं सशर्करम् ॥ ९८ ॥

तस्मिन् धृते शरीरार्तिर्देशत्यागश्च जायते ।
भेदसंशय[2]कृद्यत्तु तेन दृष्टिभयं भवेत् ॥ ९९ ॥

भिन्नं भिन्नमिति ज्ञेयं धर्तुर्भार्यां विनाशयेत् ।
मृत्तिका यस्य गर्भस्था लक्ष्यते रत्नकोविदैः ॥ १०० ॥

मृत्तिकागर्भकं नाम त्वग्दोषजनकं भवेत् ।
[3]दृषत्प्रत्यक् पतेद्यस्य गर्भे नीलस्य कोविदैः ॥ १०१ ॥

अश्मगर्भं तदाख्यातं [4]तद्वर्णपरिभूतिकृत् ।

[पञ्च नीलगुणाः तत्स्वरूपं च]

गुरुत्वं स्निग्धकान्तित्वं सुरागं पार्श्वरञ्जनम् ॥ १०२ ॥

तृणग्राहित्वमित्येते गुणाः पञ्च प्रकीर्तिताः ।

[अष्टौ नीलच्छायाः तत्स्वरूपाणि च]

नीलीरससमाभासा वैणवीपुष्पसन्निभा ॥ १०३ ॥

लवलीपुष्पसङ्काशा नीलेन्दीवरसप्रभा ।
अतसीपुष्पसङ्काशा चाषपक्षसमद्युतिः ॥ १०४ ॥

कृष्णागकर्णिकापुष्पसमानद्युतिधारिणी ।
मयूरकण्ठसच्छायेत्येवं छायाऽष्टधा स्मृता ॥ १०५॥

---

[1] यस्य—मान. [2] कृत्रासस्तेन—मान. [3] दृषत्प्रलक्ष्यते यस्य—मान.
[4] तद्धर्तां परिभूयते—मान.

[निर्दुष्टसकलगुणवदिन्द्रनीलप्रशंसा]

दोषैस्त्यक्तो गुणैर्युक्त इन्द्रनीलो महामणिः।
यस्य हस्ते वसेत्तस्य वित्तमायुर्बलं यशः ॥ १०६ ॥

[इन्द्रनीलजलनीलयोः सप्त भेदाः]

एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम्।
मृदु मध्योल्लसज्ज्योतिः सप्तधा नीलमुत्तमम् ॥ १०७ ॥
कोमलं [1] निहतं वर्णं निर्भारं रक्तगन्धि च।
चिपिटाभं च रूक्षं च जलनीलं च सप्तधा ॥ १०८ ॥

[इन्द्रनीललक्षणान्तरं तस्यामूल्यत्वं भूदुर्लभत्वं च]

यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा।
तदिन्द्रनीलमित्याहुर्महार्घं भुवि दुर्लभम् ॥ १०९ ॥

[महानीलरत्नं तत्परीक्षाक्रमश्च]

यस्य वर्णस्य भूरित्वात् क्षीरे शतगुणाधिके।
नीलस्याञ्जनशोभा स्यात्स महानील उच्यते ॥ ११० ॥

[इन्द्रनीलधारणगुणाः]

इन्द्रनीले धृते सौरिर्मुदितः सततं भवेत्।
आयुश्च महतीं लक्ष्मीमारोग्यं च प्रयच्छति ॥ १११ ॥

[नीलस्य वर्णोत्कर्षजननोपायः]

नीलीरसे बीजपूररसमिश्रे निवेशिते।
कांस्यपात्रे तु नीलस्य वर्णोत्कर्षः प्रजायते ॥ ११२ ॥

[मरकतमणेरुत्पत्तिस्थानं तद्गुणदोषोक्तिप्रतिज्ञा च]

तुरुष्कविषयाम्भोधेः समीपे विषमस्थले।
भवेन्मरतकं रत्नं गुणो दोषोऽस्य कथ्यते। ११३ ॥

---

[1] निहितं—ख.

[मरकतगुणदोषच्छायासंख्या]

दोषाः सप्त भवन्त्यस्य गुणाः पञ्चविधाः स्मृताः ॥ ११४ ॥
भवेदष्टविधा छाया मणेर्मरकतस्य हि ।

[मरकतदोषाः तद्धारणे दोषाश्च]

अस्निग्धं रूक्षमित्युक्तं व्याधिस्तस्मिन् धृते भवेत् ॥ ११५ ॥
*सस्फोटं स्यात्तु पिटकं [1]व्याधिस्तस्मिन् धृते भवेत् ।
सपाषाणे भवेद्बन्धुनाशो मरकते धृते ॥ ११६ ॥
विच्छायं मलिनं प्राहुर्बाधिर्यं तेन जायते ।
कर्करं शर्करायुक्तं पुत्रशोककरं ध्रुवम् ॥ ११७ ॥
जठरं कान्तिहीनं स्याद्दंष्ट्रिवह्निभयावहम् ।
[2]कल्माषवर्णं शबलं ततो मृत्युभयं भवेत् ॥ ११८ ॥
इति दोषाः समाख्याताः

[पञ्च मरकतगुणाः]

वर्ण्यन्ते साम्प्रतं गुणाः ।
निर्मलं कथितं स्वच्छं गुरु स्याद्गुरुतायुतम् ॥ ११९ ॥
स्निग्धं रौक्ष्यविनिर्मुक्तमरजस्कमरेणुकम् ।
सुरागं रागबहुलमिति पञ्च गुणाः स्मृताः ॥ १२० ॥

[अष्टौ मरकतछायाः तद्विवरणं च]

[3]केकिपिञ्छसमाभासा चाषपक्षसमप्रभा ।
हरितालनिभा चान्या तथा शैवालसन्निभा ॥ १२१ ॥
खद्योतपृष्ठसङ्काशा बालकीरगरुत्समा ।
नवशाद्वलसच्छाया शिरीषकुसुमोपमा ॥ १२२ ॥
एवमष्टौ समाख्यातारछाया मरकताश्रयाः ।

---

* इदमर्धं—ख. पुस्तके नास्ति.

[1] तत्र शस्त्रहतिर्भवेत्—मान. [2] कश्मालव—ख. [3] बर्हिपिञ्छ—मान.

[समग्रच्छायायुतमरकतमणेः श्रेष्ठता]

छायाभिर्युक्तमेताभिः श्रेष्ठं मरकतं भवेत् ॥ १२३ ॥

[महामरकतरत्नं तत्परीक्षाक्रमश्च]

कृत्वा करतले चैव भास्कराभिमुखे धृतम् ।
रञ्जयेदात्मपार्श्वं यन्महामरकतं स्मृतम् ॥ १२४ ॥

[मरकते पद्मरागदोषातिदेशेन तादृशानां त्याज्यता]

पद्मरागस्य नीलस्य ये दोषाः परिकीर्तिताः ।
तैरेव दूषितं रत्नं त्याज्यं मरकतं नृपैः ॥ १२५ ॥

[राज्ञ उत्तममरकतधारणफलम्]

इति गुणगणयुक्तं दोषसङ्घैर्विहीनं
मरकत[1]मवनीन्द्रो धारयेद्रत्न[2]वर्यम् ।
जयति रिपुमहीपानाहवे मध्यवर्ती
नयति मुदमुदग्रां शीतधाम्नस्तनूजात् ॥ १२६ ॥

[पञ्च महारत्नानि]

वज्रं च जलबिन्दुश्च पद्मरागेन्द्रनीलके ।
गारुत्मतेन संयुक्तं स्यान्महारत्नपञ्चकम् ॥ १२७ ॥

[पञ्चोपरत्नानि]

पुष्प(ष्य)रागं च वैडूर्यं गोमेधं स्फटिकं तथा ।
पञ्चोपरत्नान्येतेषां प्रवालं पञ्चमं स्मृतम् ॥ १२८ ॥

[स्फटिकोत्पत्तिस्थानानि]

हिमालये सिंहले च विन्ध्ये [3]तापीतटे तथा ।
स्फटिकं जायते रत्नं नानारत्न[4]समुद्भवम् ॥ १२९ ॥
हिमाद्रौ हिमसङ्काशं स्वच्छं कान्तियुतं भवेत् ।

---

[1] मवनीन्द्रैर्धार्यमेकं सुकान्ति–मु. पा. [2] मेकम्–मु. [3] वापीतटे–मु.
[4] मनोहरम्–मान.

[सूर्यकान्तादिस्फटिकप्रभेदाः]

सूर्यकान्तं चन्द्रकान्तं तारकान्तं तथाऽपरम् ॥ १३० ॥

[सूर्यकान्तस्फटिकलक्षणम्]

सूर्यांशुस्पर्शमात्रेण वह्निं वमति यत् क्षणात् ।
सूर्यकान्तं समाख्यातं स्फटिकं रत्नवेदिभिः ॥ १३१ ॥

[चन्द्रकान्तस्फटिकलक्षणं तस्य कलिदुर्लभता च]

पूर्णचन्द्रकरस्पर्शादमृतं वमति क्षणात् ।
चन्द्रकान्तं समाख्यातं दुर्लभं तत्कलौ युगे ॥ १३२ ॥

[तारकान्तस्फटिकलक्षणम्]

स्वच्छं स्निग्धं गुरु श्वेतं शर्करापरिवर्जितम् ।
शीतलं च विदोषं च तारकान्तमुदीरितम् ॥ १३३ ॥

[इतरस्फटिकोद्भवस्थानानि]

अशोकपल्लवच्छायं दाडिमीबीजसन्निभम् ।
विन्ध्ये [1]तापीतटोद्देशे जायते मन्दकान्तिकम् ॥ १३४ ॥

सिंहले जायते कृष्णमाकरे नीलगन्धिके ।
पद्मरागोद्भवस्थाने विविधं स्फटिकं भवेत् ॥ १३५ ॥

[पुष्यरागलक्षणं तत्प्रभेदः सङ्ख्या च]

ईषत्पीतं [2]च सुच्छायं स्वच्छं कान्त्या मनोहरम् ।
पुष्यरागमिति ख्यातं रत्नं रत्नपरीक्षकैः ॥ १३६ ॥

कर्णिकारप्रसूनाभं मसृणं शुभमष्टधा ।

---

[1] वापी–मु. [2] पविच्छायं–मान.

[त्याज्यं पुष्यरागं पुष्यरागधारणफलं च]

निष्प्रभं कर्करं रूक्षं पीतश्यामं विवर्णकम् ॥ १३७ ॥

कपिलं हरितं पाण्डु पुष्यरागं परित्यजेत् ।
बृहस्पतिर्भवेत्तुष्टः पुष्यरागस्य धारणात् ॥ १३८ ॥

[गोमेदलक्षणं तद्गुणाः तत्प्रभेदाश्च]

गोमेदलक्षणं वक्ष्ये तद्गुणानपि [1]सम्प्रति ।
गोमेदसमरागत्वाद्गोमेदं रत्नमुच्यते ॥ १३९ ॥

सुस्वच्छगोलकच्छायं स्वच्छं स्निग्धं समं गुरु ।
[2]निर्दलं मसृणं दीप्तं शस्तं गोमेदमष्टधा ॥ १४० ॥

[अशुभावहगोमेदकानि]

विच्छायं लघु रूक्षं च चिपिटं पटलान्वितम् ।
निष्प्रभं पीतकाचाभं गोमेदं न शुभावहम् ॥ १४१ ॥

[निर्दुष्टगोमेदकधारणफलं पूर्वोक्तब्राह्मणादिविभागातिदेशश्च]

गोमेदं दोषरहितं शुभलक्षणसंयुतम् ।
तद्रत्नधारणात्पुंसां पावित्र्यं पापनाशनम् ॥ १४२ ॥

पूर्वरत्नवदत्रापि ज्ञेयं जातिचतुष्टयम् ।

[वैडूर्यलक्षणगुणदोषाः]

वैडूर्यलक्षणं वक्ष्ये क्रमाद्दोषान् गुणानपि ॥ १४३ ॥

वैडूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम् ।
भ्रमच्छुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ॥ १४४ ॥

श्यामं तोयसमच्छायं चिपिटं लघु कर्कशम् ।
सुप्तगर्भोत्तरीयं च वैडूर्यं न प्रशस्यते ॥ १४५ ॥

---

[1] संशृणु–मु. [2] निर्दशं–मु.

[जीवरत्नलक्षणगुणदोषोत्पत्तिस्थानानि]

जीवरत्नाभिधस्यास्य लक्षणं सुमनोहरम् ।
[1]वृत्तिं गात्रं गुणान् दोषान् कथयामि स्वरूपतः ॥ १४६ ॥

नवमेघोदयारम्भे विदूरधरणीतले ।
उद्भिदं जायते रत्नं खद्योत इव सुप्रभम् ॥ १४७ ॥

अन्यत्र पीतरत्नानि तन्नामानि भवन्ति हि ।

[जीवरत्नगुणदोषसूत्रसङ्ख्या]

दोषाश्चैकादश प्रोक्ताः सूत्राण्यत्र त्रयोदश ॥ १४८ ॥
पञ्च वर्णा गुणाः षट् च कथयामि पृथक् पृथक् ।

[जीवरत्नस्य पीतत्वादिना ब्राह्मण्यादिज्ञानं उत्तमत्वादिकं च]

पीतं रक्तं सितं श्याममिति वर्णचतुष्टयम् ॥ १४९ ॥

जातिक्रमेण विज्ञेयं पञ्चमं मधुबिन्दुवत् ।
उत्तमं हेमवर्णं च मध्यं गोमेदकच्छवि ॥ १५० ॥

अधमं सितवर्णं च कृष्णं स्यादधमाधमम् ।

[जीवरत्नस्य ब्रह्मसूत्रादिकं तत्सङ्ख्याभेदेन तस्योत्तमत्वादिकं च]

दर्पणोपरि संस्थाप्य [2]प्रदक्षिणमनुक्रमात् ॥ १५१ ॥

सम्मुखं जायते यत्तु ब्रह्मसूत्रं तदुच्यते ।
एकं द्वे त्रीणि चत्वारि पञ्च वाऽथ बहूनि वा ॥ १५२ ॥

सूत्राण्यत्र भवन्त्येव द्वे त्रीणि च शुभानि वै ।
चत्वारि पञ्च सूत्राणि मध्यमानि बहूनि च ॥ १५३ ॥

अर्धसूत्रं पार्श्वसूत्रं पृष्ठसूत्रं विकीर्णकम् ।
गर्भसूत्रं धूमसूत्रं षट् सूत्राण्यधमानि वै ॥ १५४ ॥

---

[1] वासगात्र—ख. [2] प्रादक्षिण्यक्रमेण तु—मु.

[रौक्षादयः एकादश जीवरत्नदोषाः]

रौक्षं कार्कश्यमालिन्ये निष्प्रभत्वं च लाघवम् ।
चिपिटं त्रासि हीनाङ्गं शर्करा कोमलच्छवि ॥ १५५ ॥

सुप्तगर्भोत्तरीयं च दोषा एकादश स्मृताः ।

[वैडूर्यस्योत्तमा गुणाः]

निर्मलत्वं गुरुत्वं च पीतत्वं स्थिरता तथा ॥ १५६ ॥

तिर्यग्भ्रम[1]स्त्रिरेखं च गर्भवर्तिः समुज्ज्वला ।
रत्नमानः सुसूक्ष्मत्वं वैडूर्यस्योत्तमा गुणाः ॥ १५७ ॥

[वैडूर्यस्य जीवप्रसृतिभेदाद्वर्णविभागः]

दक्षप्रसृतजीवं स्याद्वैडूर्यं ब्राह्मणाह्वयम् ।
सव्यप्रसृतजीवं तु वैडूर्यं क्षत्रमुच्यते ॥ १५८ ॥

पश्चात्प्रसर्पिजीवं तु वैडूर्यं तद्विशो मतम् ।
प्राचीविसर्पिजीवं तु वैडूर्यं शूद्रमुच्यते ॥ १५९ ॥

[राज्ञो वैडूर्यधारणफलम्]

नित्यमेतानि पूज्यानि मतिमान् धारयेन्नृपः ।
भूतप्रेतपिशाचादिभयं तस्य न विद्यते ॥ १६० ॥

[विद्रुमवल्लरीस्थानानि]

सेतौ सागरमध्ये तु जायते वल्लरी तु या ।
विद्रुमाख्या समाख्याता पृथ्वीपादप्रदेशके ॥ १६१ ॥

सागरस्य च वेलायां सम्भवन्त्यरुणारुणाः ।

---

[1] स्त्रिरेखा च -ख.

[प्रवालरत्ननिष्पत्तिः]

पाषाणत्वं भजत्येषा प्रयत्नात्खण्डिता सती ॥ १६२ ॥
प्रवालं नाम तद्रत्नं वर्णाढ्यं रक्तकान्तिकम् ।

[शुभप्रवालानि]

पक्वबिम्बफलच्छायं वृत्तायतमवक्रकम् ॥ १६३ ॥
स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम् ।

[त्याज्यप्रवालानि]

पाण्डुरं धूसरं रूक्षमवृत्तं कोटरान्वितम् ॥ १६४ ॥
निर्भरं शुभ्रवर्णं च प्रवालं सप्तधा त्यजेत् ।

[प्रवालधारणगुणाः]

क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु ॥ १६५ ॥
विषभूतादिशमनं विद्रुमं नेत्ररोगहृत् ।
धारयेत्तत्सुखायुष्यसुपुत्रारोग्यसिद्धये ॥ १६६ ॥

[ रत्नपरीक्षाक्रमः ]

रत्नानां रूपसाम्यं तु धूर्ताः कुर्वन्ति यत्नतः ।
तेषां परीक्षां वक्ष्यामि प्रोक्तां रत्नविचक्षणैः ॥ १६७ ॥

वज्रेण भेदयेद्वज्रं कृत्रिमं चेद्विभिद्यते ।
कृत्रिमं मौक्तिकं चैव क्षालयेल्लवणाम्भसा ॥ १६८ ॥

माणिक्यादीनि रत्नानि घर्षणात्तोदनादपि ।
शोधयेद्रत्नवित्प्राज्ञः कृत्रिमं शुद्धमेव च ॥ १६९ ॥

शुद्धानि दीप्तिं ददति कृत्रिमं न प्रकाशते ।
मार्दवं दृश्यते घृष्टौ ज्ञेयं तत्कृत्रिमं बुधैः ॥ १७० ॥

[ रत्नपरीक्षायां वारनियमः ]

वारक्रमेण वीक्षेत माणिक्यादीन् मणीनथ ।
रविवारे तु माणिक्यं सोमवारे तु मौक्तिकम् ॥ १७१ ॥

विद्रुमं भौमवारे तु सौम्ये मरकतं तथा ।
पुष्परागं गुरोर्वारे वज्रं वारे भृगोरपि ॥ १७२ ॥

नीलं वारे रवेः सूनोर्गोमेदं रविवारके ।
वैडूर्यं शशिनो वार इति [1]वीक्षाविनिर्णयः ॥ १७३ ॥

[रत्नपरीक्षकेण धार्याणि पुष्पाणि]

पद्मं जातिप्रसूनं च रक्तं कैरवमेव च ।
शिलीन्ध्रं मालतीपुष्पं शतपत्रप्रसूनकम् ॥ १७४ ॥

कालासं चैव कह्लारं श्वेतमन्दारमेव च ।
वीक्षको धारयेन्मूर्ध्नि शुचिर्धर्मपरायणः ॥ १७५ ॥

[रत्नस्थापनक्रमः तत्पूजा च]

शुद्धवस्त्रास्तृतं पीठं शुद्धदेशे निधाय च ।
माणिक्यादीनि रत्नानि मण्डलाकारतो न्यसेत् ॥ १७६ ॥

मध्ये तु पद्मरागं च मुक्तादीनि यथाक्रमम् ।
पूर्वादिदिक्षु विन्यस्य तत्र तत्र समर्चयेत् ॥ १७७ ॥

आदित्यादिग्रहान्वितं तत्तत्पुष्पैर्यथाक्रमम् ।

[नवग्रहप्रियाणि रत्नानि]

आदित्यस्य तु पद्मरागममलं मुक्ताफलं शीतगोः
माहेयस्य तु विद्रुमं मरकतं सौम्यस्य गारुत्मतम् ।
देवेज्यस्य च पुष्परागमसुरामात्यस्य वज्रं शनेः
नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ॥ १७८ ॥

---

[1] वारविनिर्णयः—ख.

[तत्तद्ग्रहप्रियरत्नविन्यासेन मुद्रिकानिर्माणम्]

ग्रहाणां प्रीतये कार्या तत्तद्रत्नैस्तु मुद्रिका ।

[ग्रहाख्यमुद्रिकानिर्माणक्रमः]

माणिक्यं मध्यतः प्राक्कुलिशमणिरथाग्नेयभागे च मुक्ता
याम्ये चापि प्रवालं निशिचरदिशि गोमेदकं नीलरत्नम् ।
वारुण्यां पुष्यरागं परमनिलदिशि स्यादुदीच्यां विदूरो-
त्पन्नं गारुत्मतं चेश्वरदिशि च यदा मुद्रिका सा ग्रहाख्या ॥

[अङ्गुलिसङ्ख्यया रत्नविक्रयोपयोगिसङ्ख्यापरिज्ञानं तत्रत्यविशेषाश्च]

रत्नानां विक्रये सङ्ख्यां विद्यादङ्गुलिसङ्ख्यया ।
एकद्वित्रिचतुस्संज्ञास्तर्जन्याद्यङ्गुलीग्रहे ॥ १८० ॥

साङ्गुष्ठानां पुनस्तासां ग्रहणे पञ्च संज्ञकाः ।
कनिष्ठादितलस्पर्शे षट् सप्ताष्टौ नव क्रमात् ॥ १८१ ॥

तर्जन्यां दशविज्ञेयास्तदादीनां नखाहतौ ।
एकद्वित्रिचतुर्युक्ता दश ज्ञेया यथाक्रमम् ॥ १८२ ॥

हस्तस्य तलसंस्पर्शे पुनः पञ्चदश स्मृताः ।
तले कनिष्ठिकादीनां षट्सप्ताष्टनवाधिकाः ॥ १८३ ॥

क्रमशो दश विज्ञेया हस्तसंज्ञाविशारदैः ।
तर्जन्यादिद्वित्रिचतुःपञ्चग्राहे यथाक्रमम् ॥ १८४ ॥

विंशत्रिंशच्च चत्वारिंशत्पञ्चाशत्प्रकल्पना ।
कनिष्ठाद्यङ्गुलितलैः षष्टिसप्तत्यशीतयः ॥ १८५ ॥

नवतिश्च क्रमाज्ज्ञेयास्तर्जन्यर्धग्रहे शतम् ।
सहस्रमयुतं लक्षं प्रयुतं चात्र विश्रुतम् ॥ १८६ ॥

मणिबन्धे पुनः कोटिं हस्तसंज्ञाविदो विदुः ।
अनया संज्ञया रत्नविक्रयं कारयेद्वणिक् ॥ १८७ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले भूषणोपभोगे रत्नस्वरूपवर्णनं नाम सप्तदशस्तरङ्गः

---

## षष्ठकल्लोले अष्टादशस्तरङ्गः

### अन्नादियूषादिवर्णनम्

[कुमारस्यान्नोपभोगप्रश्नः]

स्वामिन् ! भूषणमाल्याद्यानुपभोगान् प्रकीर्तितान् ।
आकर्ण्य विस्मयानन्दमन्थरं मामकं मनः ॥ १ ॥

अधुना कथयान्नस्य भोगं सर्वजगद्धितम् ।

[सविस्तरमन्नोपभोगकथनप्रतिज्ञा]

षड्विधैश्च रसै[1]र्यत्तु स्वरूपेण [2]च षड्विधैः ॥ २ ॥
यदेव सर्वजगतां प्रभवेत्तृप्तिकारणम् ।
तस्य भेदं तथाऽन्नस्य [3]ब्रूमस्त्ववहितः शृणु ॥ ३ ॥

अन्नभोगोऽयमधुना हृद्यो रुच्यो निगद्यते ।

[अन्नोपभोगे—पाकशालास्वरूपविवरणम्]

तत्रादौ पाकशालादिसाधनानि प्रचक्ष्महे ॥ ४ ॥
द्वात्रिंशद्धस्तविस्तारा व्यायामे चाष्टहस्तका ।
पाकशाला प्रकर्तव्या धूमनिर्गमनान्विता ॥ ५ ॥

[चुल्लीविधानक्रमः तत्स्वरूपं च]

पूर्वभागे तु तत्रान्तश्चुल्लीं संस्थापयेद्बुधः ।
चुल्लीं गोपुच्छसद्रूपां लोहेष्टकमयीं तथा ॥ ६ ॥

अथवा मृण्मयीं कुर्याच्चुल्लीं लक्षणसंयुताम् ।

[चुल्या उपरि छिद्रनिर्माणं तत्सङ्ख्या च]

चुल्या उपरि च छिद्रं कारयेन्नवसङ्ख्यया ॥ ७ ॥

---

[1] र्युक्ता—ख. [2] मनोहरैः—मु. [3] ब्रूमस्तेऽवहितः—मु.

[पाकशालायां समन्तात् दिग्भेदेनाग्न्यादिस्थापनक्रमः]

आग्नेयेऽग्निं च संस्थाप्य याम्ये काष्ठं तु निक्षिपेत् ।
नैर्ऋत्ये कल्पनी स्थाप्या वारुणे जलकुम्भकम् ॥ ८ ॥

उलूखलं च वायव्ये कौबेरे शूर्पमार्जनी ।
ऐशे मुसलपेषिण्यौ शाकं तत्रैव शोधयेत् ॥ ९ ॥

भाण्डं च पूर्वदिग्भागे क्रम एवमुदीरितः ।

[अन्नपाके पात्रभेदाः तत्फलभेदाश्च]

ताम्रपात्रे पचेदन्नं वातघ्नं गुल्मशूलहृत् ॥ १० ॥

किञ्चित्पित्तकरं सौख्यं योगिनां परमं हितम् ।
लोहपात्रे पचेदन्नं पाण्डुक्षयविनाशनम् ॥ ११ ॥

[1]कांस्यपात्रे पचेदन्नं त्रिदोषघ्नं रसायनम् ।

पचेद्यदन्नं कनकस्य पात्रे
विषघ्नमामक्षयपाण्डुहारि ।
वीर्यप्रदं प्राणकरं च वृष्यं
वातादिरोगान् विनिहन्ति सद्यः ॥ १२ ॥

रूप्यपात्रे पचेदन्नं श्लेष्म[2]पित्तमलापहम् ॥ १३ ॥

कलायलेपिते पात्रे पचेदन्नं सुशीतलम् ।
मृण्मये भाजने पक्वं शीतलं पित्तनाशनम् ॥ १४ ॥

रक्तप्रसादं [3]त्वग्दोषविसर्पिव्रणनाशनम् ।
जाङ्गलस्थलसम्भूतमृत्स्नाभाण्डेषु पाचितम् ॥ १५ ॥

दीपनं च बलं चैव सुखसौभाग्यमावहेत् ।
अनूपमृत्स्नापात्रेषु पाचितं गुरु शीतलम् ॥ १६ ॥

---

[1] कान्तपा–ख. [2] पित्तामयापहम्–मु. [3] वाग्दोष–मु. पा.

रक्तपित्तहरं रुच्यं कफपीनसनाशनम् ।
देशे साधारणे मृत्स्ना बलवर्णकरी परा ॥ १७ ॥

श्वेतमृत्स्नामये पात्रे पाचितं लघु शीतलम् ।
रक्तमृत्स्नामये पात्रे पाचितं पित्तदाहजित् ॥ १८ ॥

कृष्णमृत्स्नामये पात्रे क्षयपाण्डुनिवारणम् ।
मृण्मये गौरवर्णे च पाचितं चान्नमुत्तमम् ॥ १९ ॥

[दर्वीप्रमाणं तत्साधनद्रव्याणि च]

दर्वी हस्तसमायामा द्वादशाङ्गुलमुन्नता ।
त्र्यङ्गुलं दर्विकाग्रे तु रजतस्वर्णलोहजा ॥ २० ॥
नालिकेरास्थिभिर्वापि दर्वी दारुभिरेव वा ।

[उलूखललक्षणम्]

उलूखलं चतुर्हस्तं दीर्घविस्तारभेदतः ॥ २१ ॥

चतुरश्रप्रमाणं तदायामेन त्रिहस्तकम् ।
अङ्गुलीनां चतुष्कं तु वलयं तत्र कल्पयेत् ॥ २२ ॥

षोडशाङ्गुलदीर्घं च आयामेऽङ्गुलसप्तकम् ।
उलूखलस्य मध्ये तु विवरं परिकल्पयेत् ॥ २३ ॥

[शूर्पचालिनीस्वरूपम्]

गजकर्णसमाकारं शूर्पमित्युच्यते बुधैः ।
चालिनीत्युच्यते तत्र तुषपाषाणवारिणी ॥ २४ ॥

मध्ये सूक्ष्मैश्च विवरैः संयुता वेणुनिर्मिता ।
एवं पाके साधनानां स्वरूपं परिकीर्तितम् ॥ २५ ॥

[सूदलक्षणम्]

सूदस्य लक्षणं तावद्वक्ष्ये संक्षेपतः शृणु ।
स्वदेशसम्भवः प्राज्ञो विशिष्टकुलसम्भवः ॥ २६ ॥

सदाचारसमायुक्तः [1]स्वदारनिरतः शुचिः ।
रागद्वेषविनिर्मुक्तो धर्माधर्मविभागवित् ॥ २७ ॥

धातुज्ञो देशकालज्ञो वयोऽवस्थाविशेषवित् ।
प्रक्षाल्य चरणौ पाणी कृतकेशप्रसाधनः ॥ २८ ॥

सम्पूर्णकामो हृष्टात्मा पाकं रुच्यं समाचरेत् ।

[शालिभेदाः तेषां लक्षणानि च]

रक्तशालिर्महाशालिर्गन्धशालिः कलिङ्गकः ॥ २९ ॥

मुण्डशालिः स्थूलशालिः सूक्ष्मशालिश्च षाष्टिकः ।
रक्त[2]त्वग्रक्तशालिः स्यान्महाशालिर्महाकृतिः ॥ ३० ॥

सुगन्धी गन्धशालिः स्यात्कलिङ्गोत्थः कलिङ्गकः ।
शूकशून्यो मुण्डशालिः स्थूलशालिस्तदाकृतिः ॥ ३१ ॥

[3]सूक्ष्मस्तु सूक्ष्मशालिः स्याद्द्विमासः षाष्टिकः स्मृतः ।

[शालीनां वितुषीकरणं शोधनं च]

एतान् शालीन्पृथक्सर्वान्मुसलैर्वितुषीकृतान् ॥ ३२ ॥

निक्षिप्य तण्डुलान् पट्टे विसृजेत्कणकांस्ततः ।
पाषाणमृत्तिकाशालीतृणपर्णतुषांस्तथा ॥ ३३ ॥

[4]एतान् विमृश्यापनयेद्दासीभिस्तण्डुलस्थितान् ।
अखण्डान् [5]शोधितानेवं क्षालितान् बहुशो जलैः ॥ ३४ ॥

[तण्डुलपाकप्रकारः, दोषाष्टकराहित्यादन्नस्योत्तमत्वं च]

तण्डुलान् कुन्दसङ्काशान् तोयान्तर्धारितांश्चिरम् ।
स्थाल्यां [6]स्वर्णकृतायां वा मृज्जातायामथापि वा । ३५ ॥

---

[1] परदारपराङ्मुखः–मु. [2] त्वाद्रक्त–मान. [3] सौक्ष्म्यात्तु–मान.
[4] यत्नाद्विकृष्याप–मान. [5] पोथितानेवं–मु. [6] ताम्रकृ–मान.

तण्डुलात्त्रिगुणं तोयं निक्षिप्य च विधानतः ।
वाससा शशिशुभ्रेण धौतेन च घनेन च ॥ ३६ ॥

चुल्ल्यां निधाय निर्धूमे वह्नौ तत्क्काथ[1]येज्जलम् ।
सुतप्ते बुद्बुदोपेते [2]रवबाष्पसमन्विते ॥ ३७ ॥

तण्डुलानावपेत् स्थाल्यां दर्व्या च [3]परिकल्पयेत् ।
सिक्थं [4]विमृज्य वीक्षेत वारं वारं विचक्षणः ॥ ३८ ॥

मृदुभूते च तत्सिक्थे किञ्चिद्वा कणगर्भिते ।
तत्र दुग्धं घृतं वापि निक्षिप्योत्तारयेत्ततः ॥ ३९ ॥

स्थाल्यास्ये पिटकं दत्वा मण्डमास्रावयेद्द्रुतम् ।
[5]ईषदुद्वर्तितं मण्डमूष्मणा [6]परिशोषयेत् ॥ ४० ॥

एवं भक्तं सुपक्वं यद्राजयोग्यं तदुच्यते ।
दोषाष्टकेन रहितमाहरेदन्नमुत्तमम् ॥ ४१ ॥

[अष्टावन्नदोषाः तेषां लक्षणानि तद्भक्षणतो रोगाश्च]

एतेऽन्नमाश्रिता दोषा [7]अस्रुतः पिच्छिलोऽशुचिः ।
क्वथितः शुष्कितो दग्धो विरूपोऽन्तर्तुजस्तथा ॥ ४२ ॥

स्वरूपं लक्षणं चैषां गुणश्चापि निगद्यते ।
अस्रावितयवागूकमन्नमस्रुतमुच्यते ॥ ४३ ॥

तद्भक्तं भुज्यते येन तस्य चामादिरुग्भवेत् ।
अन्नमाश्रयतेऽजीर्णमतिपाकेन पिच्छिलम् ॥ ४४ ॥

तद्भक्तं भुज्यते येन तं त्यजेदौदरोऽनलः ।
क्रिमिकेशादिसंयुक्तं यदन्नमशुचि स्मृतम् ॥ ४५ ॥

तद्भक्षणे स्यादरुचिर्लाला स्रवति नित्यशः ।
ईषत्तण्डुलमिश्रं यत्क्वथितं परिकीर्तितम् ॥ ४६ ॥

---

[1] येत्ततः—मान. [2] स्वल्पबा—मान. [3] परिघट्टयेत्—मान. [4] विमर्द्य—मान.
[5] ईषदुर्वरितं—ख. ईषदुद्धरितं—मान. [6] परिशोषयेत् -ख. [7] असृतः—ख. अनृतः—मु

आलस्यादिदोषकृत्तस्य कायस्थं यस्य तद्भवेत् ।
यत्कालविरहादन्नं शुष्कितं परिकीर्तितम् ॥ ४७ ॥

भक्षितं येन तत्तस्य विद्रधिर्भवति ध्रुवम् ।
अतिपावकसंयोगाद्दग्धो भवति चौदनः ॥ ४८ ॥

भक्षितो येन कुक्षिस्थः स कुर्याद्धातुशोषणम् ।
ओदनं च विरूपाख्यं पाकाद[1]क्षुण्णतण्डुलात् ॥ ४९ ॥

कुक्षिस्थं यस्य तद्भक्तमायुरादीनि हन्ति च ।
अन्तर्तुजाभिधानं यदन्नं पर्युषितं भवेत् ॥ ५० ॥

निद्राशीतादि[2]रोगाः स्युर्भक्षकस्य नरस्य च ।
एते चान्नाश्रिता दोषा मया सम्यक्प्रदर्शिताः ॥ ५१ ॥

एभिर्दोषैर्विहीनं यत्तदन्नं तु नृपोचितम् ।*

[सूपकर्मणि नियोज्यानि सप्त धान्यानि तन्नामानि च]

राजमुद्गा[3]स्त्वचाऽपेता निष्पावाश्चणका अपि ॥ ५२ ॥

कृष्णाढकास्तथा माषा मसूरा राजमाषकाः ।
सूपकर्मणि सप्तैते नियोज्याः सूपकारकैः ॥ ५३ ॥

दलिताऽदलिताश्चैते पचनीया यथारुचि ।

[धान्यानां दलीकरणम्]

चणका राजमाषाश्च मसूरा माषमुद्गकाः ॥ ५४ ॥

[4]घरट्टैर्दलिताः कार्याः पाकार्थं च विचक्षणैः ।

---

[1] क्षण–ख. [2] दोषाः–मु. [3] त्वचा पीता–मान. [4] घुर–ख.

* एतदुपरि–अयं

( [3]योऽदत्वातिथिभिक्षुभ्योऽन्नमश्नाति मानवः ।
विफलं तस्य तत्सर्वं धनरक्षादिकं च यत् ॥
प्रत्याचक्षीत नैवान्नं सदा न परिभावयेत् )—मुद्रितपुस्तकेऽधिकः पाठः ।

[द्विदलधान्यपाकः]

किञ्चिद्भ्रष्टास्तथाऽढक्यो यन्त्रकैश्च द्विधा कृताः ॥ ५५ ॥

मुसलैर्घटिताः सम्यक् छूर्पकैर्वितुषीकृताः ।
स्थाल्यां शीतोदकं दत्वा द्विदलैः सममानतः ॥ ५६ ॥

आवपेद्द्विदलान्पश्चाच्चुल्यामारोपयेत्ततः ।
मृद्वग्निपच्यमानेषु हिङ्गुतोयं विनिक्षिपेत् ॥ ५७ ॥

वर्णार्थं रजनीचूर्णं [1]किञ्चित्तत्र नियोजयेत् ।
मुहुर्मुहुः क्षिपेत्तोयं यावत्पाकस्य पूर्णता ॥ ५८ ॥

सुश्लक्ष्णं सैन्धवं [2]कृत्वा विंशत्यंशेन निक्षिपेत् ।
वर्णतः स्वादुतो गन्धान्मार्दवाल्लाघवादपि ॥ ५९ ॥

[3]एवं द्विदलपाकस्य [4]सम्यक्सिद्धिरुदाहृता ।

[अदलितधान्यपाकः]

निष्पावमेचकाढक्यो हिङ्गुना परिवर्जिताः ॥ ६० ॥

अभिन्नाः पूर्ववत्पाच्या हरिद्राचूर्णकं विना ।
मसूरमाषपाकेषु हिङ्गुतोयं विनिक्षिपेत् ॥ ६१ ॥

इतरान् पूर्ववत्कुर्युः पाकान् पाकविशारदाः ।

[शाकभेदाः तद्योगाभिधानप्रतिज्ञा च]

फलशाकः पत्रशाकः कण्डशाकश्च मूलकः ॥ ६२ ॥

पुष्पशाकः शिम्बिशाकः पक्वापक्वविभेदतः ।
योगान् वदामि शाकानां तत्तद्दोषनिवारकान् ॥ ६३ ॥

---

[1] ईषत्तत्र–मान. [2] चूर्णं–मु. [3] इतः विना इत्यन्तं–ख. पुस्तके नास्ति.
[4] सम्यक्कृतिरुदाहृता–मु.

[शाकयोगाः तत्पाकश्च]

अमृताख्यलतायाश्च दोषहृत्कदलीदलम् ।
लशुनश्च पलाण्डुश्च निष्पावदलसंयुतः ॥ ६४ ॥

शतावर्या बदरिका बदर्या अपि काञ्जिकम् ।
अर्कस्य तिलपत्राणि कुमार्याः स्नुहिभस्मकम् ॥ ६५ ॥

स्नुह्या निष्पावपत्राणि ताम्बूली सूरणस्य च ।
निम्बपत्रस्य बकुलमूलं दोषहरं भवेत् ॥ ६६ ॥

ईरितं तु कुबेराक्षिबीजतत्पर्णयोः क्रमात् ।
चूर्णार्धचन्द्रिके पाकात्तत्तद्दोषनिवारके ॥ ६७ ॥

फलं बृहत्यास्तरुणमानीय सुमनोहरम् ।
वृन्ताग्रं विसृजेच्छित्वा [1]कर्तिकातीक्ष्णधारया ॥ ६८ ॥

पुनश्च तत्फलं छिन्द्याद्द्विधा भिन्नं तु बुद्धिमान् ।
सजले निक्षिपेद्भाण्डे बृहत्या[2]स्तादृशं फलम् ॥ ६९ ॥

सिञ्चेदपोऽ[3]निशं भाण्डे निक्षिपेदपरे घटे ।
रामठं तत्र कैदर्यं धान्याकं च विनिक्षिपेत् ॥ ७० ॥

पुनश्च निक्षिपेत्तत्र लशुनार्द्रकयोः कणान् ।
एतान् वै मेलनं कृत्वा पचेच्चुल्यां विचक्षणः ॥ ७१ ॥

[बृहतीपाकप्रकारः]

[4]बृहत्याश्च फलं भिन्नं निक्षिपेत्पक्वत्वारिणि ।
आदाय तानि पक्वानि निक्षिपेद्भाजने शुभे ॥ ७२ ॥

सम्भारैर्मरिचादीनां कल्कं कुर्याद्विधानतः ।
चिञ्चापक्वफलाम्लेन दध्ना कल्कं विलोडयेत् ॥ ७३ ॥

---

[1] कलिकन्याती—पाकदर्पणे. [2] सदृशं—पाक. [3] निशाभाण्डे........कद्धम् —पाक. [4] बृहतीफलानि भिन्नानि—पाक.

कुर्यात्कल्केन तेषां च लेपनं बहिरन्ततः ।
भर्जयेत्तानि लिप्तानि गोघृतेनाथ सूपवित् ॥ ७४ ॥

अवतार्य पुनस्तानि कर्पूरेणाथ वासयेत् ।
शुचौ तु पूगपट्टस्य [1]नेत्रे तानि विनिक्षिपेत् ॥ ७५ ॥

[2] ततश्च पोटलीं कृत्वा तप्ते सर्पिषि निक्षिपेत् ।
स्वादु वृष्यं रुचिकरं त्रिदोषशमनं भवेत् ॥ ७६ ॥

इदं बृहत्यास्तरुणं फलं पुष्टिविवर्धनम् ।
तिन्त्रिणी चूतफलयोर्भाण्डे कुर्याच्च मेलनम् ॥ ७७ ॥

कुम्भीं कुस्तुम्बरीं तत्र निक्षिपेत्सल्लकीफलम् ।
सैन्धवादीन् विनिक्षिप्य [3]पचेत्तत्पाकवित्पुनः ॥ ७८ ॥

घनसारादिना सम्यक्पुनस्तदधिवासयेत् ।
बध्नीयाद्भर्जितं नेत्रे पूगपट्टस्य तत्फलम् ॥ ७९ ॥

पूर्ववन्निक्षिपेद्विद्वांस्तप्ते सर्पिषि तत्फलम् ।
पित्तश्लेष्मप्रशमनं बृहत्यास्तरुणं फलम् ॥ ८० ॥

फलं बृहत्यास्तरुणं सवृन्तं दारयेद्द्विधा ।
वेष्टयेदार्द्रवस्त्रेण भागमेकं तयोर्बुधः ॥ ८१ ॥

भाण्डे निधायाप्यपरं भागं चुल्ल्यां पचेत्पुनः ।
पाकावसानपर्यन्तमन्यस्य जलमासिचेत् ॥ ८२ ॥

पाकयुक्ते पुनर्भागे सम्भारान् समुपक्षिपेत् ।
भर्जयेत्पूर्ववद्भागं सुपक्वं सूदराट् पुनः ॥ ८३ ॥

भर्जितं पूर्ववद्भागं कर्पूरेणाधिवासयेत् ।
पक्वं च वेष्टयेद्भागमपक्वं पूगनेत्रयोः ॥ ८४ ॥

---

[1] पत्रे—मु. [2] नेत्रेण पूगपट्टस्य वेष्टयेत्सूदराट् पुनः । पाटलीं वेष्टितां गाढं तप्ते सर्पिषि निक्षिपेत् ॥—मु. [3] भर्जयेद्रामठादिभिः—पाक.

इदं च निक्षिपेद्विद्वांस्तप्ते सर्पिषि पूर्ववत् ।
बृहत्याः फलपाकस्य चित्रपाकः प्रदर्शितः ॥ ८५ ॥

पाकापाकसमायुक्तभागद्वितययोगतः ।

[पनसफलपाकप्रकारः]

पनसस्य फलं रम्यं तरुणं कोमलं नवम् ॥ ८६ ॥

आनीय विसृजेच्छित्वा कण्टकांश्च बहिः स्थितान् ।
पुनस्तद्बहुधा छिन्द्यात् दण्डमन्तस्स्थितं त्यजेत् ॥ ८७ ॥

पाकार्हं च पुनश्छित्वा प्रवेणीभाण्डमाविशेत् ।
निशारामठकैर्दर्यधान्याकांस्तत्र निक्षिपेत् ॥ ८८ ॥

पनसस्य फलान्यप्सु पचेद्भिन्नानि तैः सह ।
नीरसं [1]पीडयेत्तानि समादाया[2]थ वाससा ॥ ८९ ॥

समादाय पुनस्तेषां कानिचिच्छकलानि च ।
कुर्यात्सूक्ष्मं च दीर्घं च कराग्रेण विचक्षणः ॥ ९० ॥

कल्कं च मरिचादीनां जम्बीराम्लेन मेलयेत् ।
कल्केन लेपयेत्तानि भर्जयेत्सर्पिषा पुनः ॥ ९० ॥

यदा कुङ्कुमकान्तिः स्यात्तदा तान्यवतारयेत् ।
कर्पूरं मृगनाभिं च कुङ्कुमं हिमवारि च ॥ ९२ ॥

मातुलुङ्गदलच्छेदान् केतकीकुसुमानि च ।
कुम्भीं कुस्तुम्बरीं तत्र सर्वाण्येतानि निक्षिपेत् ॥ ९३ ॥

[3]नेत्रेण पूगपट्टस्य वेष्टयेत्सूदराट् पुनः ।
पोटलीं वेष्टितां गाढं तप्ते सर्पिषि निक्षिपेत् ॥ ९४ ॥

दीपनं पाचनं रुच्यं पनसस्य फलं त्विदम् ।

---

[1] विसृजेत्–पाक. [2] थवा सह–पाक. [3] श्लोकोऽयं मुद्रितपुस्तके ७४-७५ श्लोकयोरुत्तरार्धपूर्वार्धतया पठितः ।

[कारवल्लीफलपाकप्रकारः]

शोधितं कृमिभिः सम्य[1]गदुष्टं कोमलं नवम् ॥ ९५ ॥

पाकार्थमाहरेद्विद्वान् कारवल्लीफलं ततः।
मूलाग्रे विसृजेच्छित्वा [2]कल्पन्यास्य विचक्षणः ॥ ९६ ॥

निक्षिपेत्प्रवणीभाण्डे कारवल्लीफलं ततः।
काञ्जिकामिश्रितं सिञ्चेज्जलं तत्र पुनर्बुधः ॥ ९७ ॥

चुल्यां निधाय तद्भाण्डं पचेदातिक्तमोचनात्।
ततस्तस्मात्समादाय पुनरन्यत्र निक्षिपेत् ॥ ९८ ॥

पुनः पाकं प्रकुर्वीत पटुजम्बीररसैर्बुधः।
भर्जयित्वा पुनः सूदः सर्पिषा तत्फलं शनैः ॥ ९९ ॥

तस्यैकदेशं [3]प्रच्छिद्य पणमात्रं शलाकया।
शकलं [4]भक्षयित्वा तत्फलमादाय सूदराट् ॥ १०० ॥

शलाकया सकोशं च बीजं छिद्रात्समुद्धरेत्।
[5]रक्षेत्तत्पुटिकाकारकारवल्लीफलं बुधः ॥ १०१ ॥

बीजकोशं तनुं छिन्द्यात्कल्पन्या तीव्रधारया।
तत्रैव निक्षिपेत् क्षारवटकानाम्लसम्भवान् ॥ १०२ ॥

*पुनश्च निक्षिपेत्तत्र लशुनार्द्रकयोः कणान्।
मरीचादिसमुद्भूतं चूर्णं [6]चापि विनिक्षिपेत् ॥ १०३ ॥

कर्पूरादीन् समावेश्य घनीभूतघृतं क्षिपेत्।
सर्वानेतान् प्रकुर्वीत कल्काकारं [7]करैर्बुधः ॥ १०४ ॥

---

* इतः पूर्वं पाकदर्पणे—नारिकेलफलोद्भूतपुष्पाकारकणान् क्षिपेत्। इत्यधिकः पाठो वर्तते।

[1] कटुष्णं—मु. [2] छेदिन्या, कल्किन्या—पाक. [3] प्रच्छिन्द्यात्—पाक.
[4] रक्षयित्वा—पाक. [5] रक्षेत घटकाकारं—पाक. [6] तत्र विनिक्षिपेत्—पाक.
[8] शनैर्बुधः—पाक.

सुस्निग्धे प्रवणीभाण्डे कल्कमेतत्समाविशेत् ।
[1]पर्पटस्य कणैर्माषवटकैः सह भर्जयेत् ॥ १०५ ॥

कल्कमेतत्समादाय यथायोग्यं प्रवेशयेत् ।
कारवल्लीफलोद्भूतपुटकान् पूरयेत्ततः ॥ १०६ ॥

[2]तद्रन्ध्रं छादयेद्विद्वांस्तदुत्थशकलेन च ।
नेत्रेण वेष्टयित्वाथ पूगपट्टस्य शोभिना ॥ १०७ ॥

उष्णे सर्पिषि निक्षिप्य फलमेत[3]त्प्रदापयेत् ।
*सर्वामयप्रशमदं कारवल्लीफलं त्विदम् ॥ १०८ ॥

निष्पावफलमानीय कोमलं कृमिवर्जितम ।
त्वचमुत्सृज्य तद्बीजमाहरेच्छोधयेत्पुनः ॥ १०९ ॥

पचेत प्रवणीभाण्डे क्षीरेणैव ततः परम् ।
नालिकेरफलक्षीरे वटकान् पेषयेत्तिलान् ॥ ११० ॥

मरीचान् सर्षपान् पिष्ट्वा कल्कं तत्र विनिक्षिपेत् ।
रामठक्षीरमासिच्य तानि पक्त्वाऽवतारयेत् ॥ १११ ॥

ततश्च घनसाराद्यैः सुदस्तान्यधिवासयेत् ।
पुनस्तत्पूगपट्टेन वेष्टयित्वा प्रदापयेत् ॥ ११२ ॥

इदं स्वादुतरं हृद्यं वृष्यं कफहरं गुरु ।

कोशातकीबिम्बपटोलरम्भा-
फलाम्रकूश्माण्डककर्कटानाम् ।
भूकन्दककोंटफलादिकानां
पाकक्रमः पूर्वमिहोक्त एव ॥ ११३ ॥

---

* इतः पूर्वं पाकदर्पणे—पथ्यं श्लेष्महरं नित्यं समीरणहरं पुनः । इत्यधिकः पाठो वर्तते ।

[1] सार्धश्लोकोऽयं पाकदर्पणे नास्ति. [2] तद्रसं, चारयेत्–पाक. [3] प्रपाचयेत्–मु. प्रमाणवित्–पाक.

[चक्रवर्तपाकः तद्गुणश्च]

घनीभूतदलैर्युक्तं चक्रवर्तं सुकोमलम् ॥ ११४ ॥

[1]तरुणं नवमानीय क्रिमिभ्यः शोधयेच्च तत् ।
प्रक्षाल्य पात्रे निक्षिप्य छादयेदार्द्रवाससा ॥ ११५ ॥

निधाय प्रवणीं चुल्यां तत्र किञ्चिज्जलं [2]क्षिपेत् ।
रामठस्य पुनस्तत्र क्षीरमल्पं च सेचयेत् ॥ ११६ ॥

चक्रवर्तसमुद्भूतरसैः सह पचेच्च तत् ।
*तिरोधाय मुखं तस्य [3]अर्धपाको यथा भवेत् ॥ ११७ ॥

तमालोक्य पुनस्तत्र यथार्हं लवणं क्षिपेत् ।
शकलानि पुनस्तत्र लशुनार्द्रकयोः क्षिपेत् ॥ ११८ ॥

जाते पाके तमादाय कर्पूराद्यैश्च वासयेत् ।
बध्वा तं पूगपट्टेन भुक्तिकाले प्रदापयेत् ॥ ११९ ॥

चक्रवर्तः परं पथ्यो ग्रहण्यर्शोविकारनुत् ।

[शाकयोग्यानि पत्राणि तत्र पूर्वोक्तपाकक्रमातिदेशश्च]

चक्रवर्तं तण्डुलीयं वैकुण्ठं चाप्युपोदकिम् ॥ १२० ॥

शकुटं च महाबाष्पं गोणीराजगिरिस्तथा ।
गन्धलक्ष्मीश्च मत्स्याक्षी कालशाकश्च शाकिनी ॥ १२१ ॥

मेन्थीचणकपत्रं च तथा सर्षपपत्रकम् ।
एवमादीनि पत्राणि शाकयोग्यानि भूरिशः ॥ १२२ ॥

पूर्ववत्क्रम एतेषां पत्राणां समुदीरितः ।

---

* पाकदर्पणे—इतः पूर्वं "तादृशं चक्रवर्तं तत्तप्ते पयसि निक्षिपेत्" इत्यधिकः पाठो दृश्यते ।

[1] तरुणीदलमानीय-पाक. [2] द्दरेत्-पाक. [3] अर्धपाकं ततो भवेत्-पाक.

[तक्रतेमनपाकक्रमः तस्यान्यतेमनेष्वतिदेशश्च]

जालिनीलुलितं तक्रं [1]किञ्चिदाम्लेन संयुतम् ॥ १२३ ॥

सुगन्धगुणसंयुक्तं कुसुमैरधिवासयेत् ।
मुहूर्तमात्रं संस्थाप्य कुसुमानि परित्यजेत् ॥ १२४ ॥

लशुनार्द्रकयोश्छेदान् पुनस्तत्र विनिक्षिपेत् ।
कुम्भीदलं च धान्याकं शुण्ठीचूर्णं च निक्षिपेत् ॥ १२५ ॥

[2]निशाचणकशालीनां पिष्टं चापि ततः क्षिपेत् ।
सैन्धवं च यथायोग्यं जम्बीराम्लं च निक्षिपेत् ॥ १२६ ॥

रामठं तत्र निक्षिप्य कुर्यादालोडनं बुधः ।
चुल्ल्यां पचेच्च तत्तक्रं दर्व्यालोडनपूर्वकम् ॥ १२७ ॥

पाकार्थं निक्षिपेत्तत्र सूचीभिन्नमरीचिकान् ।
तद्यावता कटु भवेत्तावत्पक्त्वावतारयेत् ॥ १२८ ॥

प्रवणीभाण्डमारोप्य चुल्या[3]मन्यं प्रतापयेत् ।
([4]गोघृतं तत्र निक्षिप्य तस्मिंस्तप्ते विचक्षणः ॥ १२९ ॥

रामठं लशुनं तत्र खण्डान् वै पर्पटस्य च ।
सर्षपं जीरकं तत्र निक्षिप्यैतांश्च भर्जयेत् ॥ १३० ॥)

दर्व्या निघट्टनं कृत्वा तेमनं तत्र निक्षिपेत् ।
पिधानेन समाच्छाद्य तन्मुखं तत्पुनः पचेत् ॥ १३१ ॥

[5]पक्वे तस्मिंस्तदादाय मातुलुङ्गदलं क्षिपेत् ।
कर्पूरं मृगनाभिं च केतकीकुसुमं न्यसेत् ॥ १३२ ॥

स्वादु पथ्यं लघुतरं तेमनं तक्रसम्भवम् ।
([6]अयमेव क्रमः पाके तेमनानां प्रकीर्तितः ॥ १३३ ॥

---

[1] तिलतैलेन—पाक. [2] इदमर्धं पाकदर्पणे न दृश्यते. [3] मस्यां—पाक. [4] धनुरङ्कितमिदं सार्धं पद्यं पाकदर्पणे नास्ति. [5] प्रकृतेऽस्मिन्—पाक. [6] अयं धनुरङ्कित भागः पाकदर्पणे नोपलभ्यते.

[आढकीयूषपाकक्रमः, तस्य मुद्गादियूषादिष्वतिदेशश्च]

रसं तथाढकीजातं लशुनैर्मरिचैर्युतम् ।
रामठं सैन्धवं तत्र निक्षिपेन्मानवित्तमः ॥ १३४ ॥

जम्बीररससंयुक्तं प्रदद्यात्सूदराट् पुनः ।
रक्तपित्तज्वरश्वासकृच्छ्रातीसारनाशनम् ॥ १३५ ॥ )

कषायमधुरं शीतमाढकीयूषमादिशेत् ।
एवं मुद्गकुलित्थादियूषपाकः प्रदृश्यताम् ॥ १३६ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले सूपशाखे अन्नादियूषान्तवर्णनं नामाष्टादशस्तरङ्गः

---

## षष्ठकल्लोले एकोनविंशस्तरङ्गः

### भक्ष्यलेह्याद्युपदंशान्तवर्णनम्

[भक्ष्यलेह्यादिभेदवर्णनप्रतिज्ञा]

भोज्यभेदाः सङ्ग्रहेण मयैवं प्रतिपादिताः ।
इदानीं भक्ष्यलेह्यादिविभेदान् वर्णये क्रमात् ॥ १ ॥

[मण्डकविधानक्रमः]

गोधूमाः क्षालिताः शुभ्राः शोषिता रविरश्मिभिः ।
घरट्टे चूर्णिताः श्लक्ष्णं चालिन्या वितुषीकृताः ॥ २ ॥

गोधूमचूर्णकं श्लक्ष्णं किञ्चिद्धृतविमिश्रितम् ।
लवणेन समायुक्तं क्षीरनीरेण पिण्डितम् ॥ ३ ॥

सुमहत्यां काष्ठपात्र्यां करास्फालैर्विमर्दयेत् ।
मर्दितं चिक्कणीभूतं गोलकान् परिकल्पयेत् ॥ ४ ॥

स्नेहाभ्यक्तैः करतलैः शालिचूर्णैर्विरूषितान् ।
प्रसार्य गोलकांस्तांस्तान्करसञ्चारवर्तनैः ॥ ५ ॥

विस्तृता मण्डकाः [1] श्लक्ष्णाः सितपङ्कसमप्रभाः ।
प्रयत्नान्निक्षिपेत्प्राज्ञस्तप्तखर्परमस्तके ॥ ६ ॥

पक्वांश्चोपनयेच्छीघ्रं यावत्कार्ष्ण्यं न जायते ।
चतस्रश्च चतस्रश्च घुटिका मण्डका वराः ॥ ७ ॥

[पोलिकानिर्माणक्रमः, तस्य पूरिकास्वतिदेशश्च]

गोलान् प्रसारितान् पाणावङ्गारेषु विनिक्षिपेत् ।
अङ्गारपोलिकाः शस्ताः किञ्चित्कृष्णत्वमागताः ॥ ८ ॥

गोलकान् पिष्टकालिप्तान् पेषिण्या तान् प्रसारितान् ।
सुतप्त[2]शालिनीक्षिप्तानीषत्पक्वान् विवर्तयेत् ॥ ९ ॥

खर्परेऽपि पचेदेवं [3]पूरिकानामयं क्रमः ।

[सोहलादिभक्ष्यपाकप्रकारः]

तैलपूर्णकटाहे तु सुतप्ते सोहलाः पचेत् ॥ १० ॥

उत्तानपाकसंसिद्धाः [4]कथिताः सोहलाः सिताः ।
तैले मग्नाः पीतवर्णा मृद्व्यो वा [5]हलिकाः स्मृताः ॥ ११ ॥

गोधूमचूर्णादुद्धृत्य क्षुद्रानभ्याहृतान् कणान् ।
दुग्धाक्तान् घृतपक्वांश्च सितया च विमिश्रितान् ॥ १२ ॥

एलामरीचचूर्णेन संयुक्तान् रसरञ्जितान् ।
गोलकेन समावेष्ट्य घृतेनौदुम्बरान् पचेत् ॥ १३ ॥

[चणकादिधान्यैः पूरिकानिर्माणक्रमः]

उन्मथ्य विदलान् सर्वान् चणकप्रभृतीञ्छुभान् ।
हिङ्गुसैन्धवसंयुक्तान् शर्करापरिमिश्रितान् ॥ १४ ॥

---

[1] रुच्याः–मु. [2] तापिनी–मान. [3] पोलिकाना–मान. [4] कठिनाः–मान.
[5] हरिकाः–मु.

एलामरिचचूर्णेन युक्तान्गोलकवेष्टितान् ।
किञ्चित्प्रसारितांस्तैले पूरिका विपचेच्छुभाः ॥ १५ ॥
एवमेवान्यधान्यानां करणे पूरिका भवेत् ।

[दोषकपाकविधानम्]

माषस्य राजमाषस्य तण्डुलस्य च [1]दोषकान् ॥ १६ ॥
ताभ्यां तैलविलिप्तायां विपचेत्पाकतत्त्ववित् ।

[इड्डुलिकानिर्माणपाकक्रमः]

माषस्य विदलान् क्लिन्नान् वितुषान् हस्तलोडनैः ॥ १७ ॥
ततः सम्पिष्य पेषिण्या सम्भारेण विमिश्रितान् ।
स्थाल्यां [2]विमृज्य बहुशः स्थापयेत्तदहस्ततः ॥ १८ ॥
आम्लीभूतं माषपिष्टं [3]पट्टिकासु विनिक्षिपेत् ।
वस्त्रगर्भाभिरन्याभिः पिधायोपरि पाचयेत् ॥ १९ ॥
अवतार्यात्र मरिचं चूर्णितं विकिरेदनु ।
घृताक्तहिङ्गुसर्पिर्भ्यां जीरकेण च धूपयेत् ॥ २० ॥
सुशीता धवलाः श्लक्ष्णा एता इड्डुलिका वराः ।

[तेमनवटकविधानम्]

आरनालेन सान्द्रेण दध्ना सुमथितेन च ॥ २१ ॥
सैन्धवार्द्रकधान्याकजीरकांश्च विमिश्रयेत् ।
मरीचानि द्विधा कृत्वाधिक्षिपेत्तत्र पाकवित् ॥ २२ ॥
दर्व्या विघट्टयेत्सर्वं पचेद्यावद्घनीभवेत् ।
उत्तार्य वटकान् क्षिप्त्वा विकिरेन्मारिचं रजः ॥ २३ ॥
हिङ्गुना धूपयेत्सम्यग्वटकांस्तेमनाभिधान् ।

---

[1] दोवकान्–मु. [2] विमर्घ–मान. [3] विटिकासु–मान.

[क्षीरपाकभक्ष्यविधानक्रमः]

दुग्धमुत्क्वाथ्य तन्मध्ये तक्रमम्लं विनिक्षिपेत् ॥ २४ ॥

हित्वा तोयं घनीभूतं वस्त्रबन्धपृथक्कृतम् ।
शालितण्डुलपिष्टेन मिश्रितं [1]परिवेष्टितम् ॥ २५ ॥

नानाकारैः सुघटितं सर्पिषा परिपाचितम् ।
पक्वशर्करया युक्तमेलाचूर्णेन वासितम् ॥ २६ ॥

क्षीरपाकाभिधं चैतद्भक्ष्यं मृष्टं मनोहरम् ।

[वर्षैलकापाकविधिः]

शर्करां [2]वासनायुक्तां ताम्रपात्रे विपाचयेत् ॥ २७ ॥

अर्धपाके क्षिपेद्दुग्धं तक्रं वापि यथारुचि ।
तेन मुञ्चेन्मलं सा तु शर्करा कथिता सती ॥ २८ ॥

निर्मलेन च वस्त्रेण [3]गालयेच्च मुहुर्मुहुः ।
मृदुपाके [4]मृदुः पेया मध्यमे मधुसन्निभा ॥ २९ ॥

खरे तु कलिना भक्ष्या सारिके शर्करा भवेत् ।
खरपाकसु[5]सिद्धायां सितायां वज्रसम्पुटैः ॥ ३० ॥

नानारूपाणि कुर्वीत खण्डपाकविशारदः ।
शोधितायां सितायां तु क्षीरं सम्मिश्रयेत्समम् ॥ ३१ ॥

खरपाकविधिर्यावत्तावत्तत्क्वाथयेत्पुनः ।
उत्तार्य नागरं तीक्ष्णैरेलाकर्पूरकेसरैः ॥ ३२ ॥

उत्क्षिप्य गोलकाः कार्या नाम्ना वर्षैलकास्तु ते ।

---

[1] परिपेषितम्–मान. [2] वारिसंयुक्तां–मान. [3] गालयेत्तां–मान.
[4] द्रुता–मान. [5] सिद्धाया: सिताया:–मु. पा.

[विचित्राः पायसभेदाः—तत्र लशुनपायसविधानं तद्गुणश्च]

अथ भेदान् प्रवक्ष्यामि पायसस्य विचित्रकान् ॥ ३३ ॥

श्यामाककङ्गुनीवारगन्धशालिसुतण्डुलैः ।
रसवीर्यघृतसेयाकैर्घुटिकालघुविस्तृतैः ॥ ३४ ॥

चिरप्रसूनमहिषीपयसा पायसं पचेत् ।
पायसं लेहने योग्यं स्वादु गन्धि मनोहरम् ॥ ३५ ॥

त्वचं लशुनभागानां समुत्सृज्य प्रयत्नतः ।
अग्रतो मूलतः किञ्चिच्छित्त्वा छेदान् समुत्सृजेत् ॥ ३६ ॥

विरूढार्थं स्रजं तेषां कुर्यात्सूच्याऽथ तन्तुभिः ।
पायसं यावता सिद्धं तावदेव परिग्रहेत् ॥ ३७ ॥

यावच्च स्यात्क्रियासिद्धिस्ता[1]वत्तच्च प्रयोजयेत् ।
भागान् लशुनकन्दस्य छिन्द्यात्सूदश्चतुर्विधान् ॥ ३८ ॥

तेषां विरूढं गर्भस्थं समादाय समुत्सृजेत् ।
तानेव पोटलीं विद्वान् कुर्याद्वै सूक्ष्मवाससा ॥ ३९ ॥

काञ्जिकामिश्रिते पाके [2]यावनालकसम्भवे ।
निधाय पोटलीं विद्वान् स्रजं च लशुनोद्भवाम् ॥ ४० ॥

कृत्वा स्थाल्यां पचेत्सम्यग्गन्धकटुमोचनात् ।
पक्वं लशुनमादाय वस्त्रतन्तून् समुत्सृजेत् ॥ ४१ ॥

क्षालयेद्वारिणा सम्यक्पचेत् क्षीरेण तान् बुधः ।
चतुःकृत्वः पञ्चकृत्वः क्षालयेद्वारिणा [3]च तान् ॥ ४२ ॥

भाण्डद्वये च लशुनं निक्षिपेत्तावदेव ततः ।
एकस्मिन्निक्षिपेद्भाण्डे सूदो लशुनसीवकान् ॥ ४३ ॥

---

[1] -वदेव प्र—पाक.  [2] यावतण्डुकसं—पाक.  [3] पुनः—पाक.

अन्यस्मिन्विन्यसेद्भाण्डे सूदः सरलिकांस्ततः ।
शृतमर्धावशिष्टं च क्षीरं विश्रामयेत्ततः ॥ ४४ ॥

यथार्हं शर्करायुक्तं क्षीरं भाण्डद्वये क्षिपेत् ।
निक्षिपेत्पायसेऽन्यस्मिन् रम्भाफलमनुत्तमम् ॥ ४५ ॥

पनसस्य फलं रम्यमन्यस्मिन् पायसे न्यसेत् ।
कल्कं च घनसारादि निक्षिपेदुभयत्र हि ॥ ४६ ॥

[1]पायसं लघु [2]वातघ्नमिदं व्याधिहरं शुभम् ।

[गोधूमतण्डुलशोधनक्रमः]

नवगोधूममानीय समुत्सार्याश्ममृत्कणान् ॥ ४७ ॥

ईषज्जलेन संक्लिन्नमवहन्यादुलूखले ।
मोचयेत्तत्तुषं सम्यक्कुर्यादेवं [3]द्विधा त्रिधा ॥ ४८ ॥

अवहन्याच्च तक्रेण श्वेतं यावद्भवेत्पुनः ।
दशविंशतिकृत्वस्तानवहन्याच्च सर्पिषा ॥ ४९ ॥

संस्पृश्य केन चित्सम्यक् कुर्यात्तत्तुषमोचनम् ।

[गोधूमतण्डुलपायसविधानं तस्य तण्डुलपायसेऽतिदेशः तद्गुणाश्च]

त्रिभागं माहिषं क्षीरं क्षीरभाण्डे [4]प्रसिच्य तत् ॥ ५० ॥

एकेन जलभागेन सह मृद्वग्निना पचेत् ।
जलनिर्गमनं यावत्तावत्पाकं प्रसाधयेत् ॥ ५१ ॥

तप्तं पयस्तथा सिञ्चेत्पयोभाण्डेऽष्टभागकम् ।
एकभागं च गोधूमं तादृशं तत्र निक्षिपेत् ॥ ५२ ॥

यथा च धूमसंस्पर्शो न भजेत्तं तथा पचेत् ।

---

[1] पाकदर्पणे इतः पूर्वं " निक्षिपेत्तत्र जात्यादिकुसुमान्युभयत्र हि " इत्यधिकः पाठो दृश्यते. [2] वातघ्नं रम्यं- पाक. [3] द्विधा द्विधा-पाक. [4] प्रसिञ्चयेत-पाक.

दर्व्या प्रदक्षिणं सम्यक्करवेदालोड्य पाकवित् ॥ ५३ ॥

कल्केन लेपयेद्भाण्डं कर्पूराद्यैः परं ततः ।
जात्यादिकुसुमैस्तत्र कुर्याद्वै वासनं ततः ॥ ५४ ॥

यदा तु दर्वीलेपः स्यात्पायसं तत्र निक्षिपेत् ।
पूरितं पायसेनाल्पमङ्गारे तं न्यसेत्पुनः ॥ ५५ ॥

कुर्यादेवं ततो विद्वांस्तण्डुलस्य च पायसम् ।
सुधासममिदं ज्ञेयं वृष्यं लघु बलप्रदम् ॥ ५६ ॥

[इक्षूद्भवक्षीरवर्तिपायसविधानक्रमः तद्गुणाश्च]

रसावहं दीर्घपर्वदण्डमिक्षोः समाहरेत् ।
उत्पाट्य कर्तिकाकोट्या त्वचं तस्य परित्यजेत् ॥ ५७ ॥

कल्पिन्या तं पुनश्छिन्द्याच्चक्राकारं गतत्वचम् ।
भाण्डे निक्षिप्य तांश्छेदान् पचेच्चूर्णजलैः पुनः ॥ ५८ ॥

तद्गन्धस्य निवृत्यर्थं बहुशः क्षालयेज्जलैः ।
प्रवण्यां तु पचेत्तांश्च क्षीरमाश्रित्य पाकवित् ॥ ५९ ॥

पुनश्च क्षालयेत्तांश्च वारिभिस्तु प्रयत्नतः ।
घासिते पूगपट्टे तानिक्षुखण्डान् पुनः क्षिपेत् ॥ ६० ॥

क्षीरं सुपक्वं तत्रापि यथार्हं च प्रसेचयेत् ।
शर्करां च विनिक्षिप्य पूगपट्टेन वेष्टयेत् ॥ ६१ ॥

क्षीरवर्तीति पाकज्ञाः प्राहुरिक्षोः समुद्भवम् ।
इदं पित्तहरं पथ्यं बलपुष्टिविवर्धनम् ॥ ६२ ॥

[जम्बीरादिफलैः पायसविधानक्रमः तद्गुणाः तद्विधानस्य चिञ्चादि-
पायसेष्वतिदेशश्च]

जम्बीरबीजपूराम्रमुख्याम्लफलसम्भवम् ।
विचित्रं पायसं वक्ष्ये त्रिषु लोकेषु विश्रुतम् ॥ ६३ ॥

फलमन्यतमं तेषामादाय त्वचमुत्सृजेत् ।

अच्छिन्नकेसरान् गृह्य बीजान्यान्न्याणि सन्त्यजेत् ॥ ६४ ॥

समालोड्य नवे भाण्डे चूर्णं चुल्यां पचेज्जलम् ।
पाके बुद्बुदसंयुक्ते निक्षिपेत्तत्र केसरान् ॥ ६५ ॥

तान् पचेत्पाकवित्तावद्यावदम्लत्वमोचनात् ।
वस्त्रेण शोधयेत्पक्वान् केसरांश्चूर्णवारिणा ॥ ६६ ॥

भक्षणादीक्षयेत् स्थाल्यां केसरानम्लतश्च्युतान् ।
क्षालयेच्च पुनः सम्यक्कांश्चतुःपञ्चवारकम् ॥ ६७ ॥

एवं प्रक्षालितान् वस्त्रे शुभ्रे तान्प्रक्षिपेद्बुधः ।
अर्धावशेषदुग्धे तान्प्रक्षिपेच्छर्करान्विते ॥ ६८ ॥

जात्यादिपुष्पकल्कं च कर्पूरादि च निक्षिपेत् ।
कृष्णरम्भाफलं तत्र निक्षिपेन्मानवित्पुनः ॥ ६९ ॥

मातुलुङ्गफलादीनां पायसं कथितं परम् ।
इदं हन्ति शरीरस्थानामयानरुचिं तथा ॥ ७० ॥

अथ चिञ्चाचूतधात्रीफलानां पायसं परम् ।
पाकवित्पूर्ववत्कुर्याद्विधानेन विचक्षणः ॥ ७१ ॥

[भोजनोत्तरावश्यकपानीयभेदाः तद्गुणाश्च]

पानभेदाः प्रवक्ष्यन्ते भुक्तान्नस्य विपाचकाः ।
हिरण्मये घटे चित्रे नानारत्नविराजिते ॥ ७२ ॥

[1] शर्करोद्भवमेकं च [2] खण्डं तत्र विनिक्षिपेत् ।
गाङ्गं तद्द्विगुणं तोयं सिञ्चेद्वस्त्रेण शोधितम् ॥ ७३ ॥

यावत्प्रलीयते खण्डं तावत्तत्रैव विन्यसेत् ।
तदादाय न्यसेद्यन्त्रे लुलितं पट्टनिर्मिते ॥ ७४ ॥

भवेद्धिमाम्बुवद्यावत्तावत्तत्र पुनः पुनः ।

---

[1] शर्कराभागमेकं च—पाक. [2] सखण्डं तत्र निक्षिपेत्—पाक.

शोधयेच्छर्करातोयं सम्यक्सूदः प्रमाणवित् ॥ ७५ ॥

दशविंशतिपात्रेषु सूक्ष्मरूपेषु शोभिषु ।
प्रत्येकं पूगपट्टस्य लोचनानि न्यसेत्क्रमात् ॥ ७६ ॥

फलानां तेषु नेत्रेषु रसान् पुष्पाणि च न्यसेत् ।
(*एकस्मिन् सहकारस्य रसं सूदः प्रसेचयेत् ॥ ७७ ॥

चम्पकस्य प्रसूनानि मल्लिकाकुसुमानि च ।
अन्यस्मिन् प्रक्षिपेत्पात्रे रसं वै पनसस्य च ॥ ७८ ॥

तत्रैव केतकीजातिकुसुमानि न्यसेद्बुधः ।
अन्यत्र रसमासिञ्चेत्कपित्थफलसम्भवम् ॥ ७९ ॥)

चिञ्चाफलरसं सिञ्चेदन्यत्राम्लं सपुष्पकम् ।
कह्लारकुसुमं चैव न्यसेत्तत्रैव बुद्धिमान् ॥ ८० ॥

एवं सुगन्धपुष्पैश्च भक्ष्यैर्नानाफलैरपि ।
शर्करारससम्मिश्रैः सम्भवन्ति रसालयाः ॥ ८१ ॥

[आम्रादिफललेह्यनिर्माणक्रमः]

सुपक्वफलसन्दोहं सहकारादिसम्भवम् ।
[1]मर्दयेच्छोधयित्वा च पृथक् शर्करया सह ॥ ८२ ॥

तदुत्थमाह[2]रेत्कल्कं तद्बीजानि समुत्सृजेत् ।
द्रवे तस्मिन् घनीभूते सिञ्चेत्किञ्चिज्जलं [3]सुधीः ॥ ८३ ॥

तद्द्रव्यं सूक्ष्मवस्त्रेण यावल्लेह्यं विशोधयेत् ।
आनयेत्पूगपट्टस्य नेत्राणि रुचिराणि च ॥ ८४ ॥

अनेकेषु च पात्रेषु मध्ये तानि पुनर्न्यसेत् ।

---

*अयं धनुरङ्कितो भागः पाकदर्पणे न दृश्यते.

[1]आनीय सूदः शास्त्रज्ञः क्रिमिभ्यः शोधयेत्पृथक् । भर्जयेच्च पुनस्तानि पृथक् शर्करया सह ॥—पाक. [2]रेद्द्रव्यं त्वग्बीजानि—पाक. [3]ततः—पाक.

लेह्यं च [1] लुलितं तेषु निक्षिपेच्च पृथक् पृथक् ॥ ८८॥
ततश्च घनसारादिकल्कं तेषु च मेलयेत् ।
विचित्रवासनापुष्पैर्लेह्यं सम्यक्च वासयेत् ॥ ८६ ॥

ततः पुष्पाणि सन्त्यज्य तानि कुर्याच्च पोटलीम् ।
पूर्ववत्स्थापनं कृत्वा कुर्याच्छैत्योपचारकम् ॥ ८७ ॥

एवंविधानि लेह्यानि कर्तव्यानि बहून्यपि ।

[पायसदध्यपेक्षितक्षीरपाकक्रमः]

सर्वपायसभेदानां कथितानां [2] निदानकम् ॥ ८८ ॥

करिष्यमाणदध्यादिकार्याणां मूलकारणम् ।
अतोऽत्र कथ्यते सम्यक् क्षीरपाको मनोहरः ॥ ८९ ॥

महिष्याः सम्भवं क्षीरं सवत्सायाः समाहरेत् ।
तदादाय शुभे भाण्डे निदध्यात्सूदकोविदः ॥ ९० ॥

गाङ्गं जलं च लुलितं पूरयेदपरे घटे ।
वासयेत्तज्जलं पुष्पैर्नानापरिमलान्वितैः ॥ ९१ ॥

मुहूर्तमात्रमालोक्य तानि पुष्पाणि सन्त्यजेत् ।
क्षीरं जलं समं कृत्वा क्षीरभाण्डे पचेद्बुधः ॥ ९२ ॥

त्रिनिष्कमानयुक्तानि प्रत्येकं तत्र मानवित् ।
धानानि त्रीणि निक्षिप्य [3] कान्तिस्वरकराणि च ॥ ९३ ॥

दर्व्या मुहुर्मुहुः क्षीरं सम्यगालोड्य [4] शोषयेत् ।
एवं द्वित्रिः शुभे पात्रे पचेदाजलसंक्षयात् ॥ ९४ ॥

[5]दर्वी यदा तदासज्जेदवतार्य तदा सुधीः ।
पिधाय [6] रन्ध्रभाण्डेन चाङ्गारे विन्यसेच्च तत् ॥ ९५ ॥

---

[1] गुलेकं—पाक. [2] निदानके—पाक. [3] कातेस्वरकृतानि च—पाक.
[4] तत्पचेत्—पाक. [5] यदा दर्वी मज्यतेऽन्तरव—मु. [6] रन्ध्रं भाण्डेन—मु, रन्ध्रं भाण्डानामङ्गा—पाक.

[क्षीरपानं तद्गुणश्च]

तस्मिन् मण्डे तु सञ्जाते यथार्हं शर्करां क्षिपेत् ।
ईषदुष्णेन संयुक्तं दापयेत् क्षीरमुत्तमम् ॥ ९६ ॥
वृष्यं पित्तादिरोगघ्नं शरीरबलवर्धनम् ।

[पानादिपाकोपयोगिक्षीरपाकक्रमः]

* विना जलेन तत् क्षीरं क्षीरभाण्डे निधापयेत् ॥ ९७ ॥
स्थाल्यां पचेन्मन्दवह्नौ दर्वीघट्टनपूर्वकम् ।

[पानपाके]

अर्धावशिष्टमिति तत्पानं प्राहुर्विचक्षणाः ॥ ९८ ॥

[लेह्यपाके]

त्रिभागशेषमिति तल्लेह्यमाहुश्च कोविदाः ।

[गुटिकापाके]

षड्भागशेषमिति तद्गुटिकां प्रवदन्ति हि ॥ ९९ ॥

[शर्करापाके]

भुवन्त्यष्टावशिष्टं तच्छर्करामिति साधवः ।

[पानादिचतुर्विधक्षीरस्य पृथक् स्थापनं रसामृतपाननिर्माणक्रमश्च]

चतुर्विधमिदं क्षीरं न्यसेद्भाण्डचतुष्टये ॥ १०० ॥
सम्यग्विश्राम्य तत् क्षीरं मानविद्भाण्डसंस्थितम् ।
तेषु क्षीरेषु मानज्ञः फलपुष्पाणि निक्षिपेत् ॥ १०१ ॥
पानरूपे पुनः क्षीरे पनसस्य फलं क्षिपेत् ।
[1]रसामृतं पुनस्तत्तु रसनाजाड्यहृद्भवेत ॥ १०२ ॥

---

* पाकदर्पणे इतः पूर्वं "श्रमजित्स्वादुसंयुक्तं बुद्धीन्द्रियबलप्रदम्" इत्यधिकः पाठो वर्तते.

[1] सारामृतं—पाक.

[दुग्धलेह्यनिर्माणक्रमः]

जात्यादिकुसुमं तत्र पुनः सूदो विनिक्षिपेत् ।
भूयो [1]लेह्यमये दुग्धे खर्जूरीफलमाहरेत् ॥ १०३ ॥
*न्यसेच्चम्पकपुन्नागकुसुमं तत्र मानवित् ।

[दुग्धघुटिकानिर्माणक्रमः तत्सेवनफलं च]

भूयश्च घुटिकारूपे क्षीरे चूतफलं क्षिपेत् ॥ १०४ ॥
सर्पिश्च माक्षिकं तत्र निक्षिपेत्सर्वरोगजित् ।

[दुग्धशर्करासंयोजनक्रमः तद्गुणश्च]

कुसुमं सप्तलादीनां न्यसेत्तत्र मनोहरम् ॥ १०५ ॥
क्षीरे तु शर्कराकारे कृष्णरम्भाफलं न्यसेत् ।
पुनश्च शर्कराखण्डं जिह्वाजाड्यहरं न्यसेत् ॥ १०६ ॥
कुसुमं विन्यसेत्तत्र पुन्नागादिसमुद्भवम् ।

[पानादिदुग्धसामान्यसंस्कारः तद्गुणश्च]

तेषु क्षीरेषु सर्वेषु निक्षिपेत्केतकीदलम् ॥ १०७ ॥
कर्पूरमृगनाभ्योश्च कल्कं कुङ्कुमवर्जितम् ।
सूदस्तु [2]पानलेह्यादिक्षीरेषु प्रविनिक्षिपेत् ॥ १०८ ॥
एतत्पित्तकफश्लेष्मसम्भवामयवारकम् ।
[3]अनप(अनेक)श्चित्रसंयुक्तः क्षीरपाकः प्रदर्शितः ॥ १०९ ॥

[विचित्रदधिभेदाः—तत्र मातुलुङ्गदधिनिर्माणक्रमः तद्गुणश्च]

दर्श्यते दधिभेदस्तु [4]साम्प्रतं विविधो मया ।

---

* पाकदर्पणे इतः पूर्वं "फलसेदं पुनस्तत्र निक्षिपेदमृतोद्भवम्" इत्यधिकः पाठः वर्तते.

[1] लेह्यद्वये–पाक. [2] पानरूपेषु क्षी–पाक. [3] अनेकश्चित्रसंयुक्तः–पाक.
[4] सुचित्रं विविधं मया–पाक.

अर्धाव[1]शिष्टं मधुरं सुपक्वं क्षीरमुत्तमम् ॥ ११० ॥

समण्डं पाकविद्भाण्डे समादाय शुचौ न्यसेत् ।
सुजातं मातुलुङ्गस्य फलं स्थूलं समाहरेत् ॥ १११ ॥

फणाकारसमायुक्तशलाकाग्रसुधारया ।
वृन्तमूले ततस्तस्य किञ्चिच्छित्वा प्रमाणवित् ॥ ११२ ॥

उद्धरेत्तद्गतान् सर्वान् बीजत्वक्केसरान् बुधः ।
एकवारं द्विवारं वा क्षालयेद्वारिणा च तत् ॥ ११३ ॥

कल्केन घनसारादेस्तदन्तर्लेपयेद्बुधः ।
वासयेद्वहुभिस्तत्र जात्यादिकुसुमैः पुनः ॥ ११४ ॥

तत्र स्थितानि पुष्पाणि दध्यर्थं च समुत्सृजेत् ।
[2]ईषदुष्णेन संयुक्तं क्षीरं तत्र समण्डकम् ॥ ११५ ॥

पूरयेन्नवनीतं च किञ्चित्तत्र विनिक्षिपेत् ।
छेदेन पूर्वं छिन्नेन तन्मुखं छादयेत्सुधीः ॥ ११६ ॥

अनेनैव प्रकारेण दधि कृत्वा प्रदापयेत् ।
इदं रुचिकरं पथ्यं सर्वारुचिनिवारणम् ॥ ११७ ॥

बलपुष्टिकरं रम्यं मातुलुङ्गाभिधं दधि ।

[गन्धवासदधिनिर्माणक्रमः]

अनन्तरं पुनर्भागैस्त्रिभिः शिष्टं पयः शुभम् ॥ ११८ ॥

पक्वं समण्डं मधुरं दध्यर्थं माहिषं पुनः ।
समादाय शुभे भाण्डे तदङ्गारेषु विन्यसेत् ॥ ११९ ॥

सद्यो विपाकपूगस्य पुष्पपट्टं समानयेत् ।
कर्पूरं मृगनाभिं च कुङ्कुमं हिमवारिणा ॥ १२० ॥

पेषयित्वा पुनस्तद्भूतेन कल्केन लेपयेत् ।

---

[1] शिष्टधवलं–पाक. [2] कोष्णं समण्डकं क्षीरं पूरयेत्तत्र पात्रके–मु.

केतकीचम्पकाद्यैश्च वासयेत्तानि सन्त्यजेत् ॥ १२१ ॥
ईषदुष्णेन संयुक्तं तत् क्षीरं तत्र पूरयेत् ।
निक्षिपेन्नवनीतं च तक्रस्थं तक्रमानवित् ॥ १२२ ॥
तादृशं पूगपट्टं तु वेष्टयेत्तनुतन्तुभिः ।
एवं स्थिते च तद्दुग्धं दधिभावं भजेत्ततः ॥ १२३ ॥
गन्धवासमिदं नाम्ना दधि प्राहुर्विचक्षणाः ।

[कुङ्कुमाभघुटिकादधिभेदः]

उच्यते दधिभेदस्तु घुटिकाक्षीरसम्भवः ॥ १२४ ॥
रसैश्च भावयित्वैतत्सहकारफलोद्भवैः ।
भाण्डं चतुःपञ्चकृत्वः शोषयेत्तमनातपे ॥ १२५ ॥
कल्केन घनसारादेर्जात्यादिकुसुमैश्च तम् ।
भावज्ञो भावयेद्भाण्डमापञ्चदशवासरम् ॥ १२६ ॥
निक्षिपेद्घुटिकाकारं क्षीरं भाण्डे च तादृशे ।
तावत्येव कृते सम्यक्कुङ्कुमाभं भवेद्ध्रुवम् ॥ १२७ ॥
कुङ्कुमाभमिदं प्राहुः [1] दधिशास्त्रविशारदाः ।

[शर्कराखण्डदधिनिर्माणक्रमः तस्य गुणश्च]

न्यसेच्च शर्कराकारं क्षीरं पात्रे प्रमाणवित् ॥ १२८ ॥
तदर्धं घुटिकाकारं क्षीरं तत्रैव निक्षिपेत् ।
कल्केन घनसारादेः कुर्यात्सम्मेलनं बुधः ॥ १२९ ॥
केतकीचम्पकाद्यैश्च कुसुमैरधिवासयेत् ।
पुनश्च पूगपट्टस्य नेत्रे तत्क्षीरमर्पयेत् ॥ १३० ॥
नेत्रे निक्षिप्य तत्क्षीरं वेष्टयेत्तन्तुभिः पुनः ।
एवं कृते दधि भवेद्राजयोग्यं बलावहम् ॥ १३१ ॥
एतच्च शर्कराखण्डं नाम्ना प्राहुर्मनीषिणः ।

---

[1] सूपशास्त्र-मु.

[घृतान्नविधानक्रमः तद्गुणश्च]

सुपक्वं राजशाल्यन्नमानीय सुमनोहरम् ॥ १३२ ॥

विशाले स्थापयेद्देशे पात्रेषु विविधेष्वथ ।
स्थितेषु सर्वपात्रेषु क्षिपेदन्नेषु सैन्धवम् ॥ १३३ ॥

हैयङ्गवीनमेकस्मिन् सिञ्चेत्पात्रे सुसंयुते ।
क्षिपेच्चूर्णं पुनस्तत्र दुग्धपर्पटकस्य च ॥ १३४ ॥

निक्षिपेच्च ततस्तत्र लशुनार्द्रकयोः कणान् ।
चूर्णं निवेशयेत्किञ्चिन्मेन्थी[1]जीरणसम्भवम् ॥ १३५ ॥

कुस्तुम्बुरु च कैडर्यं केतकीकुसुमं न्यसेत् ।
बीजपूरदलं तत्र निक्षिपेत्सूदराट् ततः ॥ १३६ ॥

एभिर्द्रव्यैर्भाजनस्थमन्नं कुर्याद्विमिश्रितम् ।
पुनश्च तत्र कस्तूरीं कर्पूरं च विनिक्षिपेत् ॥ १३७ ॥

पुनश्च पूगपट्टेन बद्ध्वा भोक्त्रे निवेदयेत् ।
घृतान्नमेतदुदितं बलवृद्धिकरं भवेत् ॥ १३८ ॥

रुच्यं पित्तहरं नित्यं चक्षुरिन्द्रियवर्धनम् ।

[तैलान्नविधानरीतिः तद्गुणश्च]

अन्यस्मिन्नपि पात्रस्थे शाल्यन्ने[2]ऽनुष्णसंयुते ॥ १३९ ॥

तिलतैलं नवं रम्यं सिञ्चेत्सूदः समन्ततः ।
जम्बीराम्लं ततस्तत्र प्रमाणेन निवेशयेत् ॥ १४० ॥

चूर्णं च निक्षिपेत्तत्र पिण्याकवटकोद्भवम् ।
लशुनार्द्रककैडर्यधान्याकानां क्षिपेत्कणान् ॥ १४१ ॥

ततस्तैलं पुनस्तत्र हिङ्गु सहितं क्षिपेत् ।

---

[1] मेरण–मु.  [2] शीतलान्विते–मु.

कृत्वा तन्मेलनं तत्र कर्पूरादींश्च निक्षिपेत् ॥ १४२ ॥

तद्बध्वा पूगनेत्रेण निक्षिपेदुपरस्थले ।
तैलान्नस्य क्रमस्त्वेष बलकृद्दीपनप्रदः ॥ १४३ ॥

[तिन्त्रिण्याद्यन्नानि तेषां तत्तद्द्रव्यगुणता च]

एवमादीनि भक्तानि तिन्त्रिणीदधि[1]सर्षपैः ।
कुम्भीफलप्रभृतिभिः बहुधा सम्भवन्ति हि ॥ १४४ ॥

एतेषामन्नभेदानां तत्तद्द्रव्यगुणो भवेत् ।

[गव्यनवनीतं तत्क्षालनादिक्रमः तद्गुणश्च]

अर्धावशेषदुग्धोत्थदधिनिर्मथनोद्भवम् ॥ १४५ ॥

नवनीतं नवं गव्यं लघु पित्तहरं शुभम् ।
दशकृत्वः क्षालयित्वा तक्रेण च मुहुर्मुहुः ॥ १४६ ॥

तदादाय पुनः सूदः शोधयेत्सूक्ष्मवाससा ।
द्विवारमेकवारं वा क्षालयेद्वारिणा पुनः ॥ १४७ ॥

निधाय वासिते शुभ्रे पूगपट्टस्य लोचने ।
सुगन्धपुष्पैर्बहुभिस्तद्द्रव्यमधिवासयेत् ॥ १४८ ॥

वेष्टयित्वा पुनस्तच्च स्थापयेत्सजले घटे ।
इदमित्थं साधयित्वा नवनीतं प्रदापयेत् ॥ १४९ ॥

नवनीतमिदं गव्यं वृष्यं व्याधिविनाशनम् ।
कान्तिकृत्पुष्टिदं सम्यक् ज्ञानेन्द्रियबलप्रदम् ॥ १५० ॥

[माहिषनवनीते गव्यनवनीतक्षालनाद्यतिदेशः]

अनेनैव प्रकारेण माहिषे नवनीतके ।
क्षालनं शोधनं सम्यक्कुर्याद्वै वासनां पुनः ॥ १५१ ॥

---

[1] सर्षपा–मु.

[गव्यमाहिषनवनीतपाकक्रमः तत्संस्कारः तत्सेवनगुणाश्च]

* नवनीतं नवं धौतं सम्यङ्मृद्वग्निना पचेत् ।
तदीषद्द्रवसंयुक्तं चालिन्या च विशोधयेत् ॥ १५२ ॥

शोधितं तत्पचेत्सम्यग्दर्वीघट्टनपूर्वकम् ।
बुद्बुदेषु विलीनेषु रक्तवर्णं यदा भवेत् ॥ १५३ ॥

सौरभ्यार्थं क्षिपेत्तत्र किञ्चिद्गोधूमचूर्णकम् ।
तदावलोक्य सूपज्ञः तद्घृतं चावतारयेत् ॥ १५४ ॥

न्यसेत्तत्र ताम्बूल्याः पत्रकं कृष्णवर्णकम् ।
घनसारादिना सूदो वासयेत्सर्पिरुत्तमम् ॥ १५५ ॥

इदमाज्यं नवं पूज्यं प्रदद्याद्भोजनार्थिने ।
वातपित्तप्रशमनं सुरभि स्वादु बृंहणम् ॥ १५६ ॥

नवनीते क्रमः प्रोक्त एष एव हि माहिषे ।

[रक्तमृदादिप्रक्षेपेण पूतिगन्धिसर्पिःपाकक्रमः ततस्तस्य सुगन्धसम्पत्तिश्च]

घृतस्य पाकभेदं च वक्ष्ये लोकहिताय च ॥ १५७ ॥

पूतिगन्धपरित्यागसुगन्धागमनाय च ।
पूतिगन्धसमायुक्ते सर्पिषि प्रक्षिपेदिदम् ॥ १५८ ॥

रक्तवर्णसमायुक्तां मृदमीषत्प्रमाणतः ।
दध्यम्लयुक्तं तत्रैव निक्षिपेत्तत्प्रमाणवित् ॥ १५९ ॥

जम्बीराम्लं च तत्रैव भस्म किञ्चिच्च निक्षिपेत् ।

---

* पाकदर्पणे इत आरभ्य तदीषद्द्रवेत्यन्तमेवं पाठो दृश्यते—
नवनीतं सितं सम्यक् शोधितं पीतवर्णकम् ।
एकस्मिन्निक्षिपेद्भाण्डे गव्यं तद्वासरोद्भवम् ॥
चुल्ल्यामारोपयेद्विद्वान् तापयेन्मृदुवह्निना । तदीषद्द्रव......

पुनर्नवीदलं शिग्रुताम्बूलीदलमर्पयेत् ॥ १६० ॥

इदमेतैः समालोड्य दर्व्या चुल्ल्यां पचेद्बुधः ।
दुर्गंधस्य निवृत्तिः स्याद्यावत्तावत्पचेच्च तत् ॥ १६१ ॥

अनेनैव प्रकारेण सर्पिर्विद्वान् प्रसाधयेत् ।
साधितं च पुनर्दद्याद्भोजनाय मनोरमम् ॥ १६२ ॥

[अन्नपायसभक्ष्यादिषु घृतोपयोगक्रमः]

अन्नभोजनवेलायां प्रदद्याद्द्रवरूपकम् ।
ईषद्घनीकृतं सर्पिर्दद्यात्पायस[1]भोजने ॥ १६३ ॥

भक्ष्यादिभक्षणे [2]काले घृतं दद्याद्घनीकृतम् ।

[गव्यमाहिषतक्रभेदोपभेदौ तद्गुणभेदश्च]

सजलं निर्जलं चेति तक्रं तावद्द्विधा मतम् ॥ १६४ ॥

पादाम्ब्वर्धाम्बुभेदेन सजलं च द्विधा मतम् ।
माहिषं स्वादु गुरु तल्लघु गोसम्भवं मतम् ॥ १६५ ॥

[माहिषतक्रनिर्माणक्रमः तद्गुणाश्च]

माहिषं मथितं तावद्वक्ष्ये सम्यग्विधानतः ।
मातुलुङ्गफलोद्भूतं दधि निर्मथ्य निर्जलम् ॥ १६६ ॥

उद्धरेन्नवनीतं च सितवस्त्रेण शोधयेत् ।
तत्पूगपट्टनेत्रस्य शुभे पात्रे निधापयेत् ॥ १६७ ॥

सिञ्चेत्तन्मथितं तत्र यावदिष्टं प्रमाणवित् ।
सैन्धवं मातुलुङ्गस्य छेदान् पुष्पाणि च न्यसेत् ॥ १६८ ॥

तमदशं मथितं बध्वा नेत्रस्थं च प्रदापयेत् ।
इदं नराणां सततं शुभं स्वादुतरं परम् ॥ १६९ ॥

---

[1] भक्षणे–मु.   [2] दिष्टे–मु.

[घुटिकादध्नस्तक्रसम्पादनक्रमः तस्य कपित्थादितक्रेष्वतिदेशश्च]

पूगपट्टस्य नेत्रस्थं घुटिकारूपकं दधि ।
समोदकेन निर्मथ्य नवनीतं समुद्धरेत् । १७० ॥

उदश्विल्लुलितं नेत्रपात्रस्थं विन्यसेच्च तत् ।
सैन्धवं केतकीकल्कं [1]कर्पूरादींश्च निक्षिपेत् ॥ १७१ ॥

सहकारफलछेदान् जम्बीराम्लं च निक्षिपेत् ।
उदश्वित्पूगपट्टस्थं वासितं वेष्टयेद्बुधः ॥ १७२ ॥

उदश्वित्सहका[2]राख्यं सहकारफलोद्भवम् ।
एवमेव कपित्थादिसम्भवं तक्रमिष्यताम् ॥ १७३ ॥

[चूतादिफलोपदंशनिर्माणक्रमः]

तैले वापि जले वापि राजिकालवणान्विते ।
प्रक्षाल्य वृन्तसहितं फलं चूतादिजं न्यसेत् ॥ १७४ ॥

पूर्ववत्तैलजलयोः प्रक्षिपेदङ्कुरादिसान् ।
मागिणीमाद्रकं मूलं चकोरं वनमागिणीम् ॥ १७५ ॥

कर्पूरमागिणीमूलं तथैवाम्लहरिद्रकौ ।
सूरणं मधुशिग्रुं च तथा शबलकन्दकम् ॥ १७६ ॥

एतानि पूर्ववत्तैले सलिले वा विनिक्षिपेत् ।
हिङ्गुजीरककैदर्यमेन्थीसर्षपसम्भवम् ॥ १७७ ॥

कल्कं विनिक्षिपेद्रम्यं उपदंशेष्वयं विधिः ।

[पञ्चविधोपदंशपाकः पाकप्रकरणोपसंहारश्च]

अपक्वं जलपक्वं च तैलपक्वाग्निपक्वकम् ॥ १७८ ॥

भाजनोदरपक्वं च पक्वं पञ्चविधं स्मृतम् ।
सूपाद्या उपदंशान्ताः पाका एवं प्रदर्शिताः ॥ १७९ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले भक्ष्यलेह्याद्युपदंशान्तवर्णनं नामैकोनविंशस्तरङ्गः

---

[1] कर्पूरादेश्च—ग.    [2] राख्ये—मु.

## षष्ठकल्लोले विंशस्तरङ्गः

### भोजनादिशयनोत्थानान्तवर्णनम्

[भोजनक्रमतदनन्तरकर्तव्यक्रमप्रश्नः तदुत्तरकथनप्रतिज्ञा च]

स्वामिन्! पाकक्रमोऽन्नादिपदार्थानां प्रदर्शितः।
श्रुत्वैतद्भवच्चित्तं मामकं कौतुकान्वितम् ॥ १ ॥

भोजनस्य क्रमं पश्चात्कर्तव्यमपि शंस मे।
पुत्र! ते कथयिष्यामि भोजनस्य क्रमं तथा ॥ २ ॥

भोजनानन्तरं यच्च कर्तव्यं तदपि क्रमात्।

[भोजनमण्टपनिरूपणं तत्र भोजनाय गुर्वादिभिस्सह राज्ञः प्रवेशश्च]

आप्तैः कञ्चुकिभिर्गुप्तं सुवृत्तपरिचारकम् ॥ ३ ॥

शुक्लवस्त्रपरिच्छन्नं मणिस्तम्भविभूषितम्।
मुक्तादामपरिच्छन्नं वितानपरिशोभितम् ॥ ४ ॥

शीतगन्धजलासिक्तं मृष्टकुट्टिमशोभितम्।
पुष्पोपहारललितं बहुदीपैरलङ्कृतम् ॥ ५ ॥

गुरुभिः पुत्रपौत्राद्यैर्वनिताभिः सुहृज्जनैः।
बन्धुभिः संश्रितैः साकं विशेद्भोजनमण्टपम् ॥ ६ ॥

[भोजनपीठानि तदाकारश्च]

वञ्जुलाम्रमधूकानां पनसोदुम्बरस्य च।
आयतं चतुरश्रं च काञ्चनेनोपशोभितम् ॥ ७ ॥

श्लक्ष्णं मनोहरं पीठं भोजनाय समाश्रयेत्।

[भोजने प्राङ्मुखत्वादौ फलभेदः]

प्राङ्मुखस्तु सुभुञ्जान आयुश्च लभते बहु ॥ ८ ॥

यशश्च लभतेऽत्यर्थमश्नन् दक्षिणदिङ्मुखः ।
श्रियं च लभते पुष्टिं भुञ्जानः पश्चिमाननः ॥ ९ ॥
सत्यवाक्यफलं प्राप्नोत्यश्नन् धनददिङ्मुखः ।

[ भोजने सौवर्णादिपात्रभेदाः ]

सौवर्णे राजते पात्रे रीतिचत्रविराजिते ॥ १० ॥
नानारत्नोपरचितसौवर्णचषकैर्युते ।
जलप्रक्षालिते सम्यक्सितवस्त्रप्रमार्जिते ॥ ११ ॥

[ भोज्यपदार्थपरिवेषणं तत्परीक्षा च ]

क्रमेण फलशाकादीन् पदार्थान् परिवेषयेत् ।
ततश्च फलशाकादीन् पदार्थान् परिवेषितान् ॥ १२ ॥
स्वयं परीक्ष्य मतिमानादधीत महीपतिः ।

[ भक्ष्यभोज्यपरीक्षावश्यकता तत्र हेतुश्च ]

तत्परीक्षाप्रकारं च दोषचिह्नानि च ब्रुवे ॥ १३ ॥
मित्रोदासीनविद्विष्टमये चात्र जगत्त्रये ।
भवत्यभ्यवहार्येषु विषाश्लेषोऽपि कर्हिचित् ॥ १४ ॥

[ अभ्यवहार्येषु विषसंश्लेषचिह्नानि तत्स्वरूपाणि च ]

धीमन्तः सहिताः सम्यगमीभिर्लक्षणैः स्फुटैः ।
प्रयुक्तमरिभिर्गुप्तं विषं जानन्ति तद्यथा ॥ १५ ॥
अविक्लेद्यं भवेदन्नं पच्यमानं विषान्वितम् ।
चिराच्च पचते सद्यःपक्वं पर्युषितोपमम् ॥ १६ ॥
स्तब्धमूष्मविनिर्मुक्तं पिच्छिलं चन्द्रिकान्वितम् ।
वर्णगन्धरसान्यत्वदूषितं च प्रजायते ॥ १७ ॥
सविषाणि क्षणादेव शुष्यन्ति व्यञ्जनान्यपि ।
क्वाथे तूद्दामतापेन सीमन्ताः बुद्बुदास्तथा ॥ १८ ॥

जायन्ते राजयो नीला रसे क्षीरे च लोहिताः ।
स्युर्मध्यतोऽनयोः कृष्णा दध्नि श्यामास्तु राजयः ॥ १९ ॥

तक्रे तु नीलपीता स्यात्कपोताभा तु मस्तुनि ।
कृष्णा सौवीरके राजिर्घृते तु जलसन्निभा ॥ २० ॥

द्रवौषधे तु कपिला क्षौद्रे सा कपिला भवेत् ।
तैलेऽरुणा वसागन्धा पाकः [1]आमीफले क्षणात् ॥ २१ ॥

सपाकानां फलानां च प्रकोपः सहसा तथा ।
जायते म्लानिरार्द्राणां सङ्कोचश्च विषादिह ॥ २२ ॥

शुष्काणां श्यामकोऽपेतं वैवर्ण्यं मृद्रिमा पुनः ।
कर्कशानां मृदूनां च काठिन्यं जायते विषात् ॥ २३ ॥

माल्यानां म्लानता स्वल्पा विकारो गन्धहीनता ।
स्याद्ध्याममण्डलत्वं च सव्यानास्तरणे विषात् ॥ २४ ॥

मणिलोहमयानां च पात्राणां मलदिग्धता ।
वर्णरागप्रभास्पर्शगौरवस्नेहसंक्षयः ॥ २५ ॥

तनूनां शातनं लोमपक्ष्मणां च भवेद्विषात् ।

[भोज्यपदार्थेषु विषमिश्रत्वसन्देहे अन्नयादिषु परीक्षा]

सन्देहे तु परिक्षेत तान्यन्नथादिषु तद्यथा ॥ २६ ॥

अन्नं हालाहलाकीर्णं प्राप्य वैश्वानरो भृशम् ।
एकावर्तस्तथा रूक्षो मुहुश्चटचटायते ॥ २७ ॥

इन्द्रायुधमिवानेकवर्णज्वाला दधाति च ।
स्फुरत्कुणपगन्धैश्च मन्दतेजाश्च जायते ॥ २८ ॥

शिरोर्तिः पीनसश्लेष्म लाला नयनयोस्तथा ।
[2]आकुलत्वं क्षणाद्रोमहर्षस्तद्धूमसेवनात् ॥ २९ ॥

---

[1] आमीपुले—मु. [2] आमकत्वं—मु.

विषदुष्टाशनास्वादात्काकः क्षामस्वरो भवेत् ।
लीयते मक्षिका नात्र विलीना वा विपद्यते ॥ ३० ॥

अन्नं सविषमाघ्राय भृङ्गः कूजति चाधिकम् ।
सारिका सविषेऽन्ने तु विक्रोशति तथा शुकः ॥ ३१ ॥

विषान्नदर्शनान्नेत्रे चकोरस्य विरज्यतः ।
म्रियते कोकिलो मत्तः क्रौञ्चो माद्यति तत्क्षणात् ॥ ३२ ॥

नकुलो हृष्टरोमा स्यान्मयूरस्तु [1]प्रमोदते ।
अस्य चालोकमात्रेण विषं मन्दायते क्षणात् ॥ ३३ ॥

उद्वेगं याति मार्जारः पुरीषं कुरुते कपिः ।
गतिः स्खलति हंसस्य ताम्रचूडो विरौति च ॥ ३४ ॥

सविषं देहिभिः सर्वं वक्ष्यमाणं करोत्यलम् ।
ओष्ठे चिमिचिमामास्ये दाहं लालाजलप्लवम् ॥ ३५ ॥

हनुस्तम्भं रसज्ञायां कुरुते शूलगौरवे ।
तथा क्षाररसाज्ञानं दाता चास्याकुलो भ्रमेत् ॥ ३६ ॥

विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ।
स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृम्भते ॥ ३७ ॥

स्फाटिकष्टङ्कणः क्षारो धार्यः पुंसा मुखान्तरे ।
वेत्ति न क्षारतां यावदित्युक्तं स्थावरे विषे ॥ ३८ ॥

[विषद्वैविध्यं विषपरीक्षोपसंहारश्च]

आकस्मिकं कृत्रिमं च विषं तद्द्विविधं मतम् ।
एवं परीक्षितान्राजा पदार्थांस्तूपविन्यसेत् ॥ ३९ ॥

[परीक्षितानामभ्यवहार्याणां परिवेषणक्रमः]

पात्रस्यादौ निधायाथ परमान्नं घृतं दधि ।
ततश्चेतरभागे तु फलमूलादिकं न्यसेत् ॥ ४० ॥

---

[1] प्रदादिति–मु.

पात्रदक्षिणभागे तु पत्रशाकादिकं न्यसेत् ।
वामभागे तु पानीयं भक्ष्याणि परिवेषयेत् ॥ ४१ ॥

तन्मध्यभागे शाल्यन्नं सूपं तस्माच्च दक्षिणे ।
रसायनं पार्श्वभागे क्षीरं च परिवेषयेत् ॥ ४२ ॥

[भोजनपात्रपरिवेषितानां देवतासमर्पणम्]

पात्रे दत्तानि देवाय समर्प्य स्वयमाहरेत् ।

[अभ्यवहरणक्रमः]

आदौ मधुरमश्नीयान्मध्ये तु लवणाम्लकम् ॥ ४३ ॥

अन्त्ये तिक्तं कषायं च कटुकं चापि भक्षयेत् ।
यथारुचि यथासात्म्यं सुखं भुञ्जीत भूपतिः ॥ ४४ ॥

सूपैर्नानाविधैः शाकैः फलपत्रसमुद्भवैः ।
वटकैः पर्पटैः साज्यैरन्नमश्नीत मिश्रितम् ॥ ४५ ॥

पक्वान्नं पायसं मध्ये शर्कराघृतमिश्रितम् ।
ततः फलानि भुञ्जीत मधुराम्लरसानि च ॥ ४६ ॥

पिबेच्च पानकं हृद्यं [1] लिह्याच्छिखरिणीमपि ।
चूषेच्च मथितं पश्चाद्दधि वाद्यात्ततोनघम् ॥ ४७ ॥

ततस्तक्रान्नमश्नीयात्सैन्धवेन च संयुतम् ।
क्षीरं शर्करया सार्धं किञ्चिदुष्णं पिबेच्च वा ॥ ४८ ॥

[ऋतुभेदेन पानीयव्यवस्था]

वसन्ते कटुमश्नीयाद्ग्रीष्मे मधुरशीतलम् ।
वर्षासु च तथा क्षारं मधुरं शरदि स्मृतम् ॥ ४९ ॥

हेमन्ते स्निग्धमुष्णं च शिशिरेऽभ्युष्णमाहरेत् ।
एवं भुञ्जीत यद्भूपो भोज्यभोगः स कथ्यते ॥ ५० ॥

---

[1] लिह्येच्च कठिनं दधि–मु.

[भोजने पानीयोपभोगकालव्यवस्था तत्र कारणं च]

मध्ये मध्ये पिबेद्वारि स्तोकं स्तोकं सुशीतलम् ।
भोजनस्य च दृढ्यर्थं पाकार्थमशितस्य च ॥ ५१ ॥

भुक्त्यादौ सलिलं पीतं कार्श्यमन्दाग्नि[1]शोषकृत् ।
अन्ते करोति स्थूलत्वं मध्ये धातुसुखावहम् ॥ ५२ ॥

[पिपासायां जलपानक्रमः]

पिपासायां तु जातायां स्वेच्छया पीयते जलम् ।
नियमो नात्र कालस्य तृषावेगोऽत्र वार्यते ॥ ५३ ॥

[2]असवः प्राणिनामापो जीवनं यत्तदाश्रितम् ।
मूर्छिता अपि जीवन्ति शीततोयेन सेचिताः ॥ ५४ ॥

[नव जलभेदाः]

दिव्यान्तरिक्षनादेयं निष्यन्दं सारसं जलम् ।
भौमं कौण्डं च ताटाकं नैर्झरं नवमं स्मृतम् ॥ ५५ ॥

[दिव्यं जलं तद्गुणश्च]

स्वात्यां पयोदनिर्मुक्तं सूर्यरश्मित्रिमिश्रितम् ।
सर्वदोषापहं स्वादु दिव्यमित्युच्यते जलम् ॥ ५६ ॥

[अन्तरिक्षजलम्]

प्रावृड्जलदनिर्मुक्तमव्यक्तस्वादुलक्षणम् ।
वारि स्फटिकसङ्काशमान्तरिक्षमिति स्मृतम् ॥ ५७ ॥

[नादेयजलम्]

नद्यां शैल[3]प्रसूतायामिन्द्रनीलसमप्रभम् ।
प्रशस्तभूमिभागस्थं नीरं नादेयमुच्यते ॥ ५८ ॥

---

[1] कृशदा–मु. शोषकृत्–मु.पा. [2] आवासः–मु. [3] प्रसूतायां गोमेदकमणि-प्रभम्–सुषे. वै.

[निष्यन्दजलम्]

[1]वालुकासु करैर्गर्तं कृत्वा यत्प्राप्यते जलम् ।
[2]उष्णेक्षणेन नैर्मल्यं याति निष्यन्दजं हि तत् ॥ ५९ ॥

[सारसजलम्]

नद्याः शैलवराद्वापि स्रुतमेकत्र यत्स्वयम् ।
कुमुदाम्भोजसंछन्नं तोयं सारसमुच्यते ॥ ६० ॥

[भौमजलम्]

वापीकूपसमुद्भूतं नीलोत्पलसमप्रभम् ।
विमलं मधुरं स्वादु भौममम्भोऽभिधीयते ॥ ६१ ॥

[कौण्डजलम्]

स्वयं दीर्घे[3]शिलापात्रेष्वतसीपुष्पसन्निभम् ।
निर्मलं मधुरं पथ्यं सलिलं कौण्डमुच्यते ॥ ६२ ॥

[ताटाकजलम्]

[4]शिलाबन्धेन संरुद्धं कुर्यात्पूरागतं रसम् ।
प्रतिवर्षं नवाम्भोभिर्मिश्रं ताटाकमुच्यते ॥ ६३ ॥

[नैर्झरजलम्]

निर्मलं लघु पानीयमुत्तमं स्वादु शीतलम् ।
शैलसानुसमुद्भूतं नैर्झरं परिकीर्तितम् ॥ ६४ ॥

[दशमं नारिकेलजलम्]

दशमं केचिदिच्छन्ति वार्क्षं जीवनमुत्तमम् ।
नारिकेलसमुद्भूतं स्वादु वृष्यं मनोहरम् ॥ ६५ ॥

---

[1] वालुकास्वकरैरात मु. पाठे खननसाधनीभूतायुधविशेषैरित्यर्थः । [2] उष्णिकाक्षेण इति स्यात्, जलशोषकं वस्त्रं पात्रं वा तदर्थः। [3] शिलाश्मभ्रेष्वतसी—मान, शिलाश्मभ्रे-नीलोत्पल-समप्रभम्—छुपे. वै. [4] पालबन्धेन संरुद्ध ख. कुर्यापूरागतो रसः—छुपे. वै.

[संस्कृतजलम्]

हंसोदकं तथा चान्यत्क्रियासंस्कारसम्भवम् ।
दिवा सूर्यांशुसन्तप्तं रात्रौ चन्द्रांशुशीतलम् ॥ ६६ ॥

[वर्जनीयानि जलानि]

सकर्दमं सशैवालं पल्वलोत्थं च पाल्वलम् ।
वर्जयेदूषरोद्भूतं गन्धवर्णादिदूषितम् ॥ ६७ ॥

[पेयजलकान्तरम्]

अशोकपल्लवप्रख्यं शुद्धस्फटिकसन्निभम् ।
नीलोत्पलदलश्यामं कषायं मधुरं वरम् ॥ ६८ ॥

[जलशोधकपिण्डवासादयः, तत्र पिण्डवासाख्यसंस्कारक्रमः]

फणामुस्तकसंयुक्तैरेलोशीरकचन्दनैः ।
मृदितं मृत्तिकापिण्डं खदिराङ्गारपाचितम् ॥ ६९ ॥
निक्षिप्तं निर्मले तोये सर्वदोषहरे शुभे ।
कथितः पिण्डवासोऽयं सलिलेषु विचक्षणैः ॥ ७० ॥

[पुष्पवासाख्यसंस्कारक्रमः]

सहकाररसेनापि पाटलोत्पलचम्पकैः ।
वासयेच्च यथाकालं पुष्पवासोऽयमीरितः ॥ ७१ ॥

[चूर्णाधिवासाख्यसंस्कारक्रमः]

लवङ्गोशीरकर्पूरकाश्मीरागरुचन्दनैः ।
शैलामलकतक्कोलपथ्याकर्पूरसंयुतैः ॥ ७२ ॥
विचूर्णितैः समैरेभिः सुशीतामलवारिणा ।
चूर्णाधिवासनं प्रोक्तं जलमाधुर्यकारकम् ॥ ७३ ॥

[करकादिपात्रैः तोयसौहित्यकरणं, तत्र पात्रविशेषश्च]

करकैर्मृण्मयैः श्लक्ष्णैः प्रवालारुणकान्तिभिः ।
शुल्बपात्रैः सुरम्यैर्वा त्रिवारं परिशोधितैः ॥ ७४ ॥

नालैश्च बहुचित्राढ्यै रौप्यस्फाटिककाञ्चनैः ।
सहितैस्तैः शुभाकारैः शीतवस्त्रावकुण्ठितैः ॥ ७५ ॥

हृतं सुशीतलं तोयं निर्मलं मृदु वीजितम् ।
पिबेच्च स्वर्णचषकैरथवा पद्मपत्रकैः ॥ ७६ ॥

[ऋतुभेदेन पेयानि जलानि]

दिव्यं शरदि पानीयं हेमन्ते सरिदुद्भवम् ।
शिशिरे वारि ताटाकं वसन्ते सारसं पयः ॥ ७७ ॥

निदाघे नैर्झरं तोयं भौमं प्रावृषि पीयते ।

[सदा पेयजलानि पानीयभोगोपसंहारश्च]

हंसोदकं सदा पथ्यं वार्क्षं पेयं यथारुचि ॥ ७८ ॥

सहजं निर्मलं वापि संस्कृतं गन्धवासनैः ।
पीयते सलिलं यत्तु पानभोगः प्रकीर्तितः ॥ ७९ ॥

[उदरस्य विभागतोऽन्नादिपूरणक्रमः]

अन्नेन पूरयेदर्धं पानेनैकं प्रपूरयेत् ।
वायुसञ्चालनार्थाय चतुर्थमवशेषयेत् ॥ ८० ॥

[भोजनानन्तरं हस्तप्रक्षालनं दन्तादिलग्नोच्छिष्टनिरसनोपायश्च]

यथोक्तं भोजनं कृत्वा क्षालयेदुष्णवारिणा ।
कपोलदन्तमध्यस्थमुच्छिष्टं सन्त्यजेत्ततः ॥ ८१ ॥

काष्ठेन पिचुमन्दस्य कीचकस्य तृणस्य च ।

[उच्छिष्टशोधने उत्तमादिकाष्ठभेदाः]

उत्तमं पिचुमन्दस्य व्रणकृद्वेणुजस्य च ॥ ८२ ॥

लक्ष्मीं हरति सर्वत्र तृणजं काष्ठमायतम् ।
सौवर्णं राजतं ताम्रमुत्तमं मध्यमाधमे ॥ ८३ ॥

[हस्तचिक्कणशोधनचूर्णं हस्तपरिमार्जनं च]

मुद्गपिष्टेन हस्तस्य चिक्कणं सन्त्यजेत्ततः ।
करं च वासनायुक्तं वस्त्रेण परिमार्जयेत् ॥ ८४ ॥

[भोजने त्याज्यग्राह्ययामभेदाः शय्याभजनकालश्च]

यामादर्वाङ्न भुञ्जीत यामयुग्मं न लङ्घयेत् ।
रात्रौ यामान्तरे भुक्त्वा शय्यां यामत्रयं भजेत् ॥ ८५ ॥

[भोजननिमित्तं तत्फलं च]

अन्नाद्युदीर्णे जातायां बुभुक्षायां च भोजनम् ।
आयुर्बलं च वर्णं च संवर्द्धयति देहिनाम् ॥ ८६ ॥

[भोजनानन्तरं कश्चित्कालमङ्गमर्दनादिनिषेधः]

अङ्गमर्दननीहारभारोत्क्षेपोपवेशनम् ।
स्नानाद्यं च कियत्कालं भुक्त्वा कुर्यान्न बुद्धिमान् ॥ ८७ ॥

[भोजनानन्तरकर्तव्यम्]

भोजनानन्तरं वामपार्श्वस्थो घटिकाद्वयम् ।
शयीत निद्रया हीनो यद्वा शतपदं व्रजेत् ॥ ८८ ॥

[भोजनानन्तरकर्तव्यपादाभ्यञ्जनं तत्साधनानि च]

पादाभ्यङ्गस्य भोगोऽयमधुना परिकीर्त्यते ।
वामपार्श्वे शयानः सन् पादावभ्यञ्जयेत्सुधीः ॥ ८९ ॥

सर्पिषा शतधौतेन नवनीतेन वा नृपः ।
दध्ना तैलेन पयसा तक्रेणाभिप्लुतेन वा ॥ ९० ॥

श्रीखण्डक्षोदनीरेण बदर्याः फेनकेन वा ।
पादसंवाहदक्षाणां कामिनीनां मनोहरैः ॥ ९१ ॥

अशोकपल्लवच्छायैः करैरत्यन्तपेशलैः ।

[ऋतुभेदेन पादाभ्यञ्जनसाधनानि]

वसन्ते सर्पिषा दध्ना शीतेन पयसाऽपि वा ॥ ९२ ॥

निदाघे नवनीतेन काञ्जिकैः [1]कोलफेनकैः ।
वर्षासु पयसाभ्यङ्गः पादौ तक्रेण वा पुनः ॥ ९३ ॥

शतधौतेन शरदि सर्पिषा चन्दनोदकैः ।
हेमन्ते शिशिरे चैव तैलेनाभ्यञ्जयेत्पदे ॥ ९४ ॥

[अभ्यक्तपादप्रक्षालनक्रमः तदुपयोगिचूर्णं च]

पश्चात्प्रक्षालयेत्पादौ सुखस्पर्शेन पाथसा ।
मसूरयवपिष्टैश्च हरिद्राचूर्णमिश्रितैः ॥ ९५ ॥

उद्वर्त्य च पुनः पादौ क्षालयेत्सुखवारिणा ।
एवं यः कारयेद्राजा भोजनादूर्ध्वमन्वहम् ॥ ९६ ॥

पादाभ्यङ्गस्य भोगोऽयं कथितो भोगवेदिभिः ।

[ताम्बूलभोगः]

पादाभ्यङ्गे कृते पश्चात्प्रविश्य सुखमन्दिरम् ॥ ९७ ॥

ताम्बूलभोगमन्विच्छंस्ताम्बूलास्वादनं चरेत् ।

[क्रमुकफलं तत्संस्कारश्च]

[2]वेलावर्णसमुद्भूतांस्तथेश्वरपुरोद्भवान् ॥ ९८ ॥

[3]कोटिकापुरजान्वापि क्रमुकौघान् सुपाकिनः ।
भङ्गे पाटलसङ्काशान् कषाय[4]मधुरात्मकान् ॥ ९९ ॥

दलीकृत्योष्णतोये च प्रक्षिप्याशोष्य घर्षितान् ।
माकन्दफलवृन्तोत्थनिर्यासेन सुभावितान् ॥ १०० ॥

---

[1] कोरिफेनकैः—मु. परिकीर्तितः—मान. [2] वेलामर्ति—मु. [3] काण्डि-कापुर—मान. [4] मधुराम्बरान्—मास.

कर्पूरवारिणा सिक्तान् श्रीखण्डक्षोदभिश्रिताम् ।
कस्तूरीकल्कसंयुक्तान् छायाशुष्कान्मनोहरान्[1] ॥ १०१ ॥

तरुणानि सवल्कानि क्वाथितानि प्रयत्नतः ।
वनवासप्रभूतानि क्रमुकस्य फलानि वा ॥ १०२ ॥

कृत्वा त्वचा वियुक्तानि छायायां शोषितानि च ।
चतुर्भागैर्वियुक्तानि ताम्बूलार्थं समाहरेत् ॥ १०३ ॥

[ताम्बूलपर्णानि तदीयविशेषाश्च]

वनवासे राष्ट्रराजे सम्भूतानि वराणि च
कर्पूरवल्लीजातानि नागवल्युद्भवानि च ॥ १०४ ॥

उषितानि समा वर्या वत्सरं[2] भारकेषु च ।
नादेयोदकसिक्तानि पाण्डुराणि वराण्यपि ॥ १०५ ॥

पर्णानि प्रान्तकृष्णानि द्विपञ्चाशन्मितानि च ।
वहिस्थकृष्णवर्णानि पिटके पिहितानि च ॥ १०६ ॥

[चूर्णं तत्संस्कारक्रमश्च]

शैलोदकसमुद्भूतशिलापाकसमुद्भवम् ।
मुक्ताशुक्तिभवं चूर्णं पिटकेषु विचारितम् ॥ १०७ ॥

अपक्वमुज्ज्वलं स्वच्छं कर्पूरं स्फटिकोपमम् ।
मलयाचलभृङ्गोत्थलतानिर्याससम्भवम् ॥ १०८ ॥

सहकारसमानेन सौरभेण समन्वितम् ।
ईशावसाभिधानं च कर्पूरं सहजं परम् ॥ १०९ ॥

समानाय्य महीपालस्ताम्बूलार्थं प्रकल्पयेत् ।
कस्तूरीचूर्णकं श्लक्ष्णं घनसारस्य चूर्णकम् ॥ ११० ॥

---

[1] क्रमुकानिति विशेष्यमध्याहार्यम्.  [2] वरकेषु च—मान.

मिश्रयित्वा समं कृत्वा ताम्बूलार्थं नियोजयेत् ।
कस्तूरीशशितक्कोलजातीफलसुचूर्णकम् ॥ १११ ॥
श्लक्ष्णं करम्भकं हृद्यं नानापरिमलोत्कटम् ।
खदिरक्वाथचूर्णं तु कस्तूरीक्षोदमिश्रितम् ॥ ११२ ॥
श्रीखण्डकल्कसंयुक्तं कर्पूररजसाऽन्वितम् ।
मेलयित्वा समैर्भागैर्गुटिकाः कल्पिताः शुभाः ॥ ११३ ॥
त्रिदोषशमनीः कण्ठ्या दन्तानां च बलावहाः ।
अन्यत्खादिरसारस्य चूर्णं कोष्ठार्धसंयुतम् ॥ ११४ ॥
जातीफलस्य चूर्णेन मिश्रितं मुखरञ्जनम् ।
जम्बीरबीजपूरस्य कलिकाभिः समन्वितम् ॥ ११५ ॥
कर्पूरपूर्वं खादेच्च तदनु क्रमुकान्वितम् ।

[प्रातरादिक्रमेण पूगचूर्णदलाधिक्यम्]

प्रातः पूगफलाधिक्यं मध्याह्ने चूर्णकं बहु ॥ ११६ ॥
सायाह्ने च दलाधिक्यमायुरारोग्यवर्धनम् ।

[निषिद्धताम्बूलपर्णानि पूगसंस्कारश्च]

ताम्बूलं नातिबालं च नातिवृद्धं न जन्तुजम् ॥ ११७ ॥
[1]न भजेद्वत्सरातीतं नैव दग्धं न शोषितम् ।
न सेव्यं श्यामलं क्लिन्नं तिलकाकं च धीमता ॥ ११८ ॥
खण्डितं घर्षितं लिप्तं शशिकस्तूरिकादिभिः ।
वासितं विविधैः पुष्पैः पूगं शोधितमुच्यते ॥ ११९ ॥

[ताम्बूलपर्णमूलादिभागस्य त्यागावश्यकता तत्र कारणं च]

पर्णमूले वसेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरेच्चायुः सिरा बुद्धिविनाशिनी ॥ १२० ॥
तस्मादग्रं च मूलं च सिरां चैव विवर्जयेत् ।

---

[1] न भवेद्वत्सरातीतं—मु.

[पर्णपूगचूर्णादीनां क्रमाद्वातादिहरत्वम्]

ताम्बूलपत्राणि हरन्ति वातं
पूगीफलं हन्ति कफाभिवृद्धिम् ।
चूर्णं हरत्याशु च वह्निमान्द्यं
निहन्ति पित्तं खदिरस्य सारः ॥ १२१ ॥

[नागवल्लीदलाग्रादिभागाधिष्ठातृदेवता]

ताम्बूलाग्रे निवसति रमा दक्षिणे वागधीशः
पृष्ठे ज्येष्ठा गिरिवरसुता वामभागे स्थिता स्यात् ।
अन्तर्विष्णुर्बहिरुडुपतिः शङ्करः सर्वकोणे
मूले मृत्युर्वसति मदनः सर्वतो नागवल्याः ॥ १२२ ॥

[जातीफलगुणाः]

जातीफलं कषायोष्णं कटु कण्ठामयापहम् ।
वातातिसारमेहघ्नं वृष्यं दीपनदं लघु ॥ १२३ ॥

[लवङ्गगुणाः]

लवङ्गं लघु चक्षुष्यं कटु स्वादु क्षयापहम् ।

[कर्पूरगुणाः]

तृट्छर्दिहिमशूलघ्नं वह्निकृच्छ्वासकासजित् ॥ १२४ ॥

कर्पूरः शीतलो वृष्यश्चक्षुष्यः [1] पित्तहृन्मृदुः ।
कफदाहास्यवैरस्यमेदस्वेदविषापहः ॥ १२५ ॥

[प्रियङ्गुगुणाः]

प्रियङ्गुः शीतलो वातज्वरपित्तास्रदाहजित् ।
आस्यशोषहरो हृद्यः शुक्रवृद्धिकरो वरः ॥ १२६ ॥

---

[1] विस्तरभकः—मु.

[ताम्बूलातिसेवने दोषः]

दन्तशैथिल्यपाण्डुत्वनेत्ररोगबलक्षयान् ।
वितनोत्याशु मेहांश्च ताम्बूलमतिसेवनात् ॥ १२७ ॥

कुष्ठो भवति मेहो वा मूत्रदोषोऽथवा भवेत् ।

[क्षीरपानानन्तरं मुहूर्ताभ्यन्तरे ताम्बूलचर्वणे दोषः]

क्षीरं पीत्वा मुहूर्ते तु ताम्बूलं यदि चर्वति ॥ १२८ ॥

हृच्छूली जायते सद्यः पित्ताधिक्यं भवेत्तथा ।
तस्मान्मुहूर्तादुपरि ताम्बूलं भक्षयेत्सदा ॥ १२९ ॥

[भोजनानन्तरं ताम्बूलचर्वणकालः]

भुक्त्वान्ते सलिलं पीत्वा गृहीत्वा विश्वभेषजम् ।

प्रतीक्ष्य घटिकामेकां कार्यं ताम्बूलचर्वणम् ॥ १३० ॥

[ताम्बूलचर्वणे पूगादीनां मानम्]

निष्कद्वयं पूगफलं तु पर्णं
निष्कं शतं चूर्णमितं तु शाणम् ।
पूर्वाह्णकाले त्वथ भोजनान्ते
वेदं निशायां त्रयमेव खाद्यम् ॥ १३१ ॥

[ताम्बूलसेवने रसभेदाः]

आदौ विषोपमं पीतं द्वितीये भेदकं स्मृतम् ।
पश्चात्सुधोपमं विद्याद्रसं ताम्बूलसेवने ॥ १३२ ॥

[भूपतेः ताम्बूलसेवनप्रकारः]

स्वर्णवर्णानि ताम्बूलीपर्णानि सुमृदूनि च ।
मिलितानि सुगन्धैश्च नवपूगफलानि च ॥ १३३ ॥

जितेन्दुघर्षं चूर्णं च कर्पूरघुटिकायुतम् ।

खादिरैः शकलैर्युक्तं मृगनाभिविमिश्रितम् ॥ १३४ ॥

ताम्बूलं लोलनेत्राणां [1]करसङ्घट्टसंस्थितम् ।
तदीयकरभूषाणां रत्नैः किर्मीरितप्रभम् ॥ १३५ ॥

विलसद्दशनज्योतिर्मिश्रहासप्रभासितम् ।
लीलापाङ्गव्यतिकरप्राप्तनीलोत्पलच्छवि ॥ १३६ ॥

तदीया[2]धरवच्चापि माधुर्येण विराजितम् ।
चर्वंत्सर्वातिशायिन्या प्रेयस्या वेष्टितो नृपः ॥ १३७ ॥

इत्थं विविधयोगेन ताम्बूलं पृथिवीभुजा ।
यत्खाद्यते स ताम्बूलभोगश्चतुरवर्णितः ॥ १३८ ॥

[शय्याभोगवर्णनप्रतिज्ञा]

एवं चर्वितताम्बूलः शय्यामथ समाश्रयेत् ।
शय्याभोगोऽयमधुना वर्ण्यते सुखदायकः ॥ १३९ ॥

[सप्तविधाः शय्याः]

हंसपिच्छमयी कापि शाल्मलीतूलजाऽपरा ।
कार्पासरचिता चान्या केसरैरितरा कृता ॥ १४० ॥

पल्लवैः कलिता काचित् काचित्कुसुमनिर्मिता ।
पानीयपूरिता काचिच्छय्यैवं सप्तधा स्मृता ॥ १४१ ॥

[अष्टविधा मञ्चाः]

दन्ताङ्घ्रिर्लोहचरणः साष्टापदपदस्तथा ।
[3]अचलश्च चलश्चैव वेत्रिकः पट्टिकामयः ॥ १४२ ॥

दोलाख्यश्चेति कथिता मञ्चा विद्भिरष्टधा ।

---

[1] करसंपुट–मु. [2] धरतश्चापि–मु. [3] वरश्च चलनं चैव–मान.

[शय्यामञ्चलक्षणोक्तिप्रतिज्ञा]

शय्याया लक्षणं वक्ष्ये मञ्चकानां तथैव च ॥ १४३ ॥

[हंसीशय्यालक्षणम्]

मरालजठरोद्भूतैर्मृदुभिः पिञ्छगुच्छकैः ।
श्लक्ष्णेन चर्मणा नद्धैः शय्या हंसी महीभुजाम् ॥ १४४ ॥

[शाल्मलीतूलिकाशय्या]

शाल्मलीफलगर्भोत्थैस्तूलकैर्बीजवर्जितैः ।
घनेन वाससा नद्धैः शाल्मलीतूलिका भवेत् ॥ १४५ ॥

[कार्पासशय्यास्वरूपम्]

निर्बीजं तूलमास्तीर्य मृदुनावेष्ट्य वाससा ।
या शय्या क्रियते मृद्वी सा तु कार्पासजा मता ॥ १४६ ॥

[केसरजशय्यालक्षणम्]

केसरैः पद्मसम्भूतैर्नागपुष्पसमुद्भवैः ।
सुरभीकुसुमोत्थैश्च तथा कुङ्कुमसम्भवैः ॥ १४७ ॥

पट्टवस्त्रेण चित्रेण गुम्भितैश्चारुचित्रितैः ।
शय्या केसरजा ख्याता सुगन्धिः पृथिवीभुजाम् ॥ १४८ ॥

[पल्लवशय्यालक्षणम्]

कमलोत्पलकह्लाररम्भाकङ्कोलिपल्लवैः ।
कोमलैः कल्पिता शय्या शीतला पल्लवाभिधा ॥ १४९ ॥

[कुसुमशय्यास्वरूपम्]

मल्लिकापाटलीपुष्पैः कुसुमैश्चम्पकस्य च ।
अन्यैः सुगन्धिभिः पुष्पैरपवृन्तैः कृता तु या ॥ १५० ॥

शय्या कुसुमजा नाम कामकेलिसुखावहा ।

[तोयशय्यास्वरूपम्]

चर्मजा वारिणा पूर्णा तोयशय्या प्रकीर्तिता ॥ १५१ ॥

[दन्ताङ्घ्रिमञ्चलक्षणम्]

द्विपदन्तकृतैः पादैश्चतुर्भिरुपशोभितः ।
दन्ताङ्घ्रिर्नाम मञ्चोऽयं सर्वदन्तमयः शुभः ॥ १५२ ॥

[लोहमञ्चस्वरूपम्]

ताम्रारकूटघटितचरणैस्तन्मयैः शुभैः ।
लोहमञ्चकनामाऽयं सुदृढः परिकीर्तितः ॥ १५३ ॥

[अष्टापदमयमञ्चरीति.]

चारुचामीकरानद्धो रचनापरिरञ्जितः ।
अष्टापदमयः प्रोक्तो मञ्चकोऽयं चतुष्पदः ॥ १५४ ॥

[अचलमञ्चस्वरूपम्]

[1] यन्त्रप्रतिकृतैर्नालैरानन्दं तनुते नदन् ।
[2] अचलोऽयं समाख्यातो रतिकेलिषु कामिनाम् ॥ १५५ ॥

[चलमञ्चलक्षणम्]

उपवेशनमात्रेण गच्छत्यूर्ध्वमधश्च यः ।
दृढाङ्घ्रिश्चारुरूपश्च चलमञ्चः प्रकीर्तितः ॥ १५६ ॥

[वेत्रकमञ्चरीतिः]

त्वग्भिर्वैत्रस्य बाह्याभिः तनुभिर्गुम्भितो घनैः ।
कुटिलैश्चरणैर्युक्तो वेत्रमञ्चः प्रकीर्तितः ॥ १५७ ॥

---

[1] यन्त्रपत्रमयैर्नादैरानन्दं तनुते नुदन्–मान.  [2] वरमञ्चः समाख्यातः–शिल्परत्ने.

[पट्टिकामञ्चस्वरूपम्]

कार्पासगुणक्लृप्ताभिः पट्टिकाभिः सुगुम्भितः ।
दीर्घाभिश्चित्रवर्णाभिः मञ्चोऽयं पट्टिकाभिधः ॥ १५८ ॥

[दोलामञ्चस्वरूपम्]

श्रीखण्डदारुघटितां [1]कनत्काञ्चनभूषितः ।
खचितो दिव्यरत्नैश्च मत्तवारणशोभितः ॥ १५९ ॥

सौवर्णशृङ्खलाबद्धो लम्बमानः स दोलनः ।
किञ्जल्कशय्यया युक्तो डोलामञ्चः सुखप्रदः ॥ १६० ॥

[मञ्चयोग्याः शुभवृक्षाः]

मञ्चयोग्यानथो वक्ष्ये वृक्षान्मानं च तद्गतम् ॥ १६१ ॥

असनस्यन्दनचन्दन-
हरिद्रसुरदारुतिन्दुकाः सालाः ।
काश्मीर्यञ्जनवर्त्मक-
शाकोटाः शिंशुपाश्च शुभाः ॥ १६२ ॥

[मञ्चायोग्याः अशुभवृक्षाः]

अशनिजलानिलहस्ति-
प्रपातिता मधुविहङ्गकृतनिलयाः ।
चैत्यश्मशानपथिजा-
र्धशुष्कवल्लीपिनद्धाश्च ॥ १६३ ॥

कण्टकिनो ये च स्यु-
र्महानदीसङ्गमोद्भवा ये च ।
सुरभवनजाश्च न शुभाः
ये चापरे याम्यदिक्पतिताः ॥ १६४ ॥

---

[1] नदत्काञ्चन-शिवप.

[अशुभवृक्षकृतमञ्चासनसेवनफलम्]

प्रतिषिद्धवृक्षनिर्मित-
शयनासनसेविनां कुलविनाशः।
व्याधिभयं व्ययकलहौ
भवन्त्यनर्थाश्च नैकविधाः ॥ १६५ ॥

[अङ्गुलमानप्रमाणम्]

अन्योन्यमुदरासक्तं वितुषं तु यवाष्टकम्।
कर्माङ्गुलमिति प्रोक्तं तेन मानेन कारयेत् ॥ १६६ ॥

[नृपादिशय्यामानानि]

नृपाणामङ्गुलशतं शय्या दीर्घा जयावहा।
नवतिर्नृपपुत्रस्य सा षडूना तु मन्त्रिणः ॥ १६७ ॥

द्वादशोना बलेशस्य षट्त्रिकोना पुरोधसः।
दैर्घ्यार्धमष्टभागोनो विष्कम्भः परिकीर्तितः ॥ १६८ ॥

आयामत्र्यंशतुल्यश्च पादोच्छ्रायः प्रकीर्तितः।
सकुप्ये शिरसि ज्ञेयः शय्यायां शुभकारकः ॥ १६९ ॥

[ऊनाधिकमानायाः स्वामिशय्याया अशुभप्रदत्वम्]

ऊनाधिका तु या शय्या स्वामिनो न शुभप्रदा।
खट्वादैर्घ्ययुता शय्या तदर्धं विस्तृता मता ॥ १७० ॥

उत्सेधो हस्तमात्रं वा तदर्धं वा क्वचिन्मतः।

[उपधानभेदाः]

हंसरोमभिरापूर्णं तूलैः कार्पासकैस्तु वा ॥ १७१ ॥

देवाङ्गवेष्टितं कुर्यादुपधानं मनोहरम्।

[ऋतुभेदेन शय्यामञ्चभेदाः शय्याभोगोपसंहारश्च]

वसन्ते हंसजा शय्या क्रीडायां पुष्पपत्रजा ॥ १७२ ॥

निदाघे तूलजा शय्या मध्याह्ने तोयजा शुभा ।
हेमन्ते शिशिरे चैव वर्षासु च विचक्षणः ॥ १७३ ॥

भजेत शय्यां कार्पासीं नृपः शीतापनुत्तये ।
शरत्काले तु कैअलकं डोलामञ्चं मनोहरम् ॥ १७४ ॥

अधितिष्ठेन्महीपालो भोगार्थं सुविचक्षणः ।
एवंविधेषु मञ्चेषु शय्यास्वेवंविधासु च ॥ १७५ ॥

शेते विशां पतिर्यत्तु शय्याभोगः प्रकीर्तितः ।

[धूपभोगः—तत्र चूर्णधूपः तद्द्रव्याणि च]

धूपभोगोऽयमधुना वक्ष्यते सौरभोत्कटः ॥ १७६ ॥

लाक्षागुग्गुलुकर्पूर[1]कालकुन्दुरुसिह्लकम् ।
श्रीखण्डदारुसरलं लघुकोष्ठं च [2]बालकम् ॥ १७७ ॥

मांसीकुङ्कुमपथ्याश्च कस्तूरीपूतिबीजकैः ।
शङ्खनाभिनखश्चैव शिला मधु घृतं गुडः ॥ १७८ ॥

समान्येतानि चूर्णानि द्रवद्रव्यं विहाय च ।
द्विगुणं लघुकर्पूरं चूर्णधूपोऽयमुत्तमः ॥ १७९ ॥

[चूर्णधूपद्रव्यैरेव पिण्डधूपविधानम्]

एतान्येव हि सिह्लेन मिश्रयेन्मधुसर्पिषा ।
गुडेन पिण्डयेत्तस्मात्पिण्डधूपोऽयमुत्तमः ॥ १८० ॥

[चूर्णधूपद्रव्यैरेव वर्तिधूपनिर्माणम्]

द्रव्याण्येतानि तोयेन पिष्टानि मधुसर्पिषा ।
वर्तिरूपाणि [3]कल्प्यानि वर्तिधूपो मनोहरः ॥ १८१ ॥

---

[1] राल—मान. [2] बालकैः—मान. [3] शुष्काणि—मान.

[पिण्डधूपे क्रमविशेषः]

रीतिरूप्यमयोवापि सुवर्णघटितोऽपि वा ।
खगो वापि मृगो वापि सरन्ध्रः सम्पुटात्मकः ॥ १८२ ॥

अङ्गारगर्भिते पिण्डे नालतो धूपमुद्गिरेत् ।
मुखकर्णादिभिश्छिद्रैः पिण्डधूपे त्वयं क्रमः ॥ १८३ ॥

एवं नानाविधैर्धूपैर्भवने सुरभीकृते ।
शयीत भूपः शय्यायां रत्नदीपप्रभान्विते ॥ १८४ ॥

[शय्यागृहदीपः]

दीपः प्रदक्षिणावर्तो निष्प्रकम्पोऽतिभासुरः ।
आयतो घनमूर्तिश्च निःशब्दो रुचिरस्तथा ॥ १८५ ॥

चञ्चत्काञ्चनसङ्काशः प्रभामण्डलमण्डितः ।
गृहालोकाय माङ्गल्यः कर्तव्यः शुभकाङ्क्षिणा ॥ १८६ ॥

[पुरुषानिष्टसूचकशय्यागृहदीपलक्षणम्]

सस्फुलिङ्गोऽल्पमूर्तिश्च वामावर्तस्तनुप्रभः ।
वातकीटाद्यभावेऽपि विधूमे तैलवर्तिमान् ॥ १८७ ॥

विकीर्णार्चिः सशब्दश्च प्रदीपो मन्दिरे स्थितः ।
पुरुषाणामनिष्टानि प्रकाशयति निश्चितम् ॥ १८८ ॥

[कान्तया सह नर्मगोष्ठीमासेव्य प्रसुप्तस्य राज्ञो ब्राह्मे वन्दिभिः प्रबोधः, तदनन्तरकर्तव्यं च]

मङ्गलावहदीपार्चिःप्रभामण्डलमण्डिते ।
भवने काञ्चनमये पुष्पमाल्यसुगन्धिते ॥ १८९ ॥

कान्तया सह निर्वर्त्य नर्मगोष्ठीपरम्पराम् ।
सुप्तो मङ्गलवाद्यानां वन्दिनां ध्वनिभिः शुभैः ॥ १९० ॥

ब्राह्मे मुहूर्ते सम्प्राप्ते प्रबुध्येत महीपतिः ।
उत्थाय मङ्गलद्रव्याण्यवेक्षेत ततः परम् ॥ १९१ ॥

दक्षिणं हस्तमाकाशमग्निं धेनुं सवत्सकाम् ।
रत्नानि दर्पणं दीपं वामे च वनिताननम् ॥ १९२ ॥

गोक्षीरं स्वर्णकलशं राजानं गुरुमेव च ।
मर्कटं दधि दूर्वां च पित्रोर्वक्त्रं च देवताः ॥ १९३ ॥

[ दृढशरीरस्य राज्ञः तत्तत्कालोचितनानाभोगकीर्तनम् ]

एवं दृढशरीरः सन् तत्तत्कालोचितान् शुभान् ।
नानाविधान् भोगभेदान् निषेवेत महीपतिः ॥ १९४ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले भोजनादिशयनोत्थानान्तवर्णनं नाम विंशस्तरङ्गः

---

## षष्ठकल्लोले एकविंशस्तरङ्गः

### वैद्यशास्त्रे आदाननिदानचिकित्सानिरूपणम्

[शरीरदार्ढ्यकारणप्रश्नः तदुत्तरकथनप्रतिज्ञा च]

स्वामिन् दृढशरीरेण भोगाः सेव्या इतीरितम् ।
किं तच्छरीरदार्ढ्यस्य कारणं तद्वदस्व मे ॥ १ ॥

पुत्र! ते तद्ब्रवीम्यद्य यच्छ्रोतुमभिकाङ्क्षसे ।

[आयुर्वेदविधानेन रसायनस्य शरीरदार्ढ्यादिहेतुत्वम्]

आयुर्वेदविधानेन सेवेतैकं रसायनम् ॥ २ ॥

दृढगात्रो भवेत्तेन वलीपलितवर्जितः ।
जीवेच्च सुचिरं कालं सर्वरोगविवर्जितः ॥ ३ ॥

[ब्रह्मादिद्वारा आयुर्वेदप्रचारः तत्र अग्निवेश्यादिभिस्तन्त्ररचना च]

तमायुर्वेदमधुना ब्रवीम्यवहितः शृणु ।
ब्रह्मा स्मृत्वाऽयुषो वेदं प्रजापतिमजिग्रहीत् ॥ ४ ॥

सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन् ।
तेऽग्निवेश्यादिकांस्ते तु पृथक्तन्त्राणि तेनिरे ॥ ५ ॥

[आयुर्वेदे आदरातिशयावश्यकता तत्र कारणं च]

आयुः कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ ६ ॥

[साङ्गायुर्वेदः तदुद्देश्यं च]

अष्टाङ्गः स्थानषट्कश्च त्रिस्कन्धः पुरुषार्थकः ।

[अष्टावायुर्वेदाङ्गानि तेषां चिकित्साश्रयत्वं च]

कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् ॥ ७ ॥

अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संस्थिता ।

[कायतन्त्रम्]

सर्वाङ्गसंश्रितानां च ज्वरादीनां रुजामपि ॥ ८ ॥

यत्स्यादुपशमे युक्तं कायतन्त्रं तदुच्यते ।

[बालतन्त्रम]

बालरोगचिकित्सा स्याद्बालतन्त्रमुदीरितम् ॥ ९ ॥

[ग्रहतन्त्रम्]

यक्षरक्षःपिशाचादिग्रहोपहतचेतसाम् ।
शान्तिकर्मविधानं यद्ग्रहतन्त्रं तदीरितम् ॥ १० ॥

[ऊर्ध्वाङ्गतन्त्रं अथवा शालाक्यतन्त्रम्] (IS)

कण्ठादूर्ध्वस्थिताङ्गेषु संस्थितानां रुजामपि ।
यच्चोपशमनं तत्तु शालाक्यं तन्त्रमीरितम् ॥ ११ ॥

[शल्यतन्त्रम्]

तृणकाष्ठाश्मनखरजातदुष्टव्रणेषु च ।
गर्भस्थशल्योद्धरणं यत्तत्स्याच्छल्यतन्त्रकम् ॥ १२ ॥

[अगद(दंष्ट्रा)तन्त्रम्]

सर्पादिविषशान्त्यर्थं यत्तन्त्रमगदाभिधम् ।

[रसायन(जरा)तन्त्रम्]

वयसो वृद्धिकृद्यत्स्यात्तन्त्रं तद्धि रसायनम् ॥ १३ ॥

[वृषतन्त्रम्]

अल्पदुष्टपरिक्षीणविशुष्यद्रेतसामपि ।
आप्यायनादिजननं वृषतन्त्रं तदीरितम् ॥ १४ ॥

[अष्टाङ्गोक्त्युपसंहारः स्थानषट्कोक्तिप्रतिज्ञा च]

इत्यष्टाङ्गानि चोक्तानि स्थानषट्कमितीरितम् ।

[शिरआदिषट्स्थानानि अक्ष्यादीनां प्रत्यङ्गता च]

शिरोऽन्तरादिद्वौ बाहू सक्थिनी च समासतः ॥ १५ ॥

षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ।

[स्कन्धत्रयं तद्विवरणं च]

आदानं रोगहेतुः स्यान्निदानं रोगलक्षणम् ॥ १६ ॥

चिकित्सातत्प्रतीकार इति स्कन्धत्रयं मतम् ।

[दैवादिचतुर्विधवैद्यानि तत्स्वरूपं च]

रसवैद्यं भवेद्दैवं मानुषं मूलिकादिभिः ॥ १७ ॥

आसुरं शस्त्रदाहाभ्यां सिद्धवैद्यं तु मान्त्रिकम् ।

[वैद्यलक्षणम्]

गुरोरधीताखिलवैद्यविद्यः
पीयूषपाणिः कुशलः क्रियासु ।
गतस्पृहो धैर्यधरः कृपालुः
शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १८ ॥

[अमृतहस्तकलक्षणम्]

पताकाकुम्भपाथोजमत्स्यचापाङ्कपाणिमान् ।
अना[1]माधस्थरेखाङ्कः स स्यादमृतहस्तकः ॥ १९ ॥

[दग्धहस्तकलक्षणं तस्य निन्दितत्वं च]

अनैष्ठिकः कृपामुक्तो लुब्धो गुरुविवर्जितः ।
कृष्णरेखाकरो वैद्यो दग्धहस्तः स निन्दितः ॥ २० ॥

[भिषजा त्याज्या रोगिणः]

त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम् ।
हीनोपकरणं व्यग्रमविधेयं गतायुषम् ॥ २१ ॥
चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ।

[भेषजदाने योग्याः]

प्रदद्याद्भेषजं त्वेतदन्यस्मै गुणशालिने ॥ २२ ॥

[देहरीतिः तत्रत्यदोषत्रयं तदीयविकारभेदेन
देहस्थितिनाशौ देहे तत्स्थानानि च]

देहे चर्मास्थिमांसासृङ्मज्जाशुक्रादिसंयुते ।
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥ २३ ॥
विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च ।
ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥ २४ ॥
वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ।

---

[1] मादग्धरे—मु.

[अग्नेर्वैषम्यादौ कारणानि]

तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ॥ २५ ॥
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ।

[प्रकृतित्रयं तत्र हीनमध्योत्तमभावः तत्रत्यविशेषश्च]

शुक्लार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ॥ २६ ॥
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः [1]पृथक् ।
समधातुः समस्तासु [2]श्रेष्ठा निन्द्या द्विदोषजाः ॥ २७ ॥

[वातस्थानानि तत्रत्यविशेषश्च]

पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ।
स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः ॥ २८ ।

[पित्तस्थानानि तत्रत्यविशेषश्च]

नाभिरामाशयः स्वेदो [3]लसीका रुधिरं रसः ।
दृक् स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः ॥ २९ ॥

[कफस्थानानि तत्रत्यविशेषश्च]

उरः कण्ठः शिरः क्लोम पर्वाण्यामाशयो रसः ।
मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः ॥ ३० ॥

[प्राणादिवायवः तेषां क्रियाः स्थानानि च]

प्राणादिभेदात्पञ्चात्मा वायुः प्राणोऽत्र मूर्धगः ।
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृत् ॥ ३१ ॥

ष्ठीवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत् ।
उरः स्थानमुदानस्य नासानाभिगलांश्चरेत् ॥ ३२ ॥

---

[1] क्रमात्–मु. [2] श्रेष्ठानन्दा–मु. [3] लसिको रु–मु.

वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ।
व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ॥ ३३ ॥

गत्यवक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥ ३४ ॥

समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ ३५ ॥

अपानोऽपानगः श्रोणिवस्तिमेढ्रोरुगोचरः ।
शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः ॥ ३६ ॥

[पाचकपित्तं तत्क्रियास्थानादिकं तदीयविशेषश्च]

पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ ३७ ॥

त्यक्तद्रुमत्वं पाकादिकर्मणाऽनलशब्दितम् ।
पचत्यन्नं विभजते सारकिट्टौ पृथक्तथा ॥ ३८ ॥

तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।
करोति बलदानेन पाचकं नाम तत्स्मृतम् ॥ ३९ ॥

[गजादीनां अग्निप्रमाणम् ]

गजोष्ट्रतुरगादीनां वह्निरङ्गुष्ठमात्रतः ।

[मनुष्यादीनामग्निप्रमाणम् ]

मनुष्यादिमृगादीनां यवमात्रोऽनलो भवेत् ॥ ४० ॥

[गृध्रादीनामग्निप्रमाणम् ]

गृध्रोलूकबकादीनामणुमात्रोऽनलो भवेत् ।

[पिपीलिकादीनामग्निप्रमाणम् ]

पिपीलिकादिजन्तूनां केशाग्रं स्याद्धुताशनः ॥ ४१ ॥

[रसादीनां जीरणकालः]

रसः सप्तघटीजीर्णः संहिता घटिपञ्चके ।
शीताम्बु जीर्यते यामे यामार्धे शृतशीतकम् ॥ ४२ ॥
तदर्धं च शृतोष्णं स्यात्काथं च घटिकात्रये ।
षष्ठे चान्नरसो जीर्णस्त्वन्नं यामद्वयेऽपि च ॥ ४३ ॥
पिष्टं विंशद्घटीजीर्णं घटीद्वादशके पयः ।
चतुर्दशसु दध्यन्नं त्रयोदशसु तक्रयुक् ॥ ४४ ॥
अष्टादशे तु पललं घृतान्नं यामयुग्मके ।
द्रव्याणामेवमाख्याता जीर्णता शास्त्रकोविदैः ॥ ४५ ॥

[त्रिदोषाणां गुणाः तदीयक्षयकोपाभ्यां विकारभेदश्च]

वायुः शीतः खरो रूक्षः पित्तमुष्णं च पाचनम् ।
स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ॥ ४६ ॥
संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ।

[षड्रसाः तेषां पूर्वक्रमाद्बलावहत्वं च]

रसाः स्वाद्वाम्ललवणतिक्तोषणकषायकाः ॥ ४७ ॥
षड्द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ।

[षड्रसानां पूर्वपूर्वत्रिकक्रमाद्वातकफपित्तहरत्वमितरेषां तद्वर्धकत्वं च]

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ॥ ४८ ॥
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ।

[षड्रसानां गुणाः]

मधुरो बृंहणः स्निग्धस्त्वम्लो हृद्यश्च लोचकः ॥ ४९ ॥
तिक्तस्तु शोषणः शोधी कषायस्त्वधिरोपणः ।
लवणः पाचकः क्लेदी कटुः [1]शोष्यनलावहः ॥ ५० ॥

---

[1] शोष्योऽनलापहः—मु.

[षड्रसान्नस्यादौ मधुरस्यापि पाकक्रमाद्रसभेदः भौमादिपञ्चोष्मणां पुनः तत्पचनं च]

आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत्।
फेनभूतं कफं यातं विदाहादम्लतां ततः ॥ ५१ ॥

पित्तमामाशयात्कुर्याच्चयवमानं च्युतं पुनः।
अग्निना शोषितं पक्वं पिण्डितं कटु मारुतम् ॥ ५२ ॥

भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥ ५३ ॥

[त्रिदोषाणां ऋतुभेदेन चयप्रकोपप्रशमाः। ]

चयप्रकोपप्रशमा वायुर्ग्रीष्मादिषु त्रिषु।
वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ॥ ५४ ॥

[रोगिणः परीक्षणीयान्यष्टौ स्थानानि]

रोगाक्रान्तशरीरस्य स्थानान्यष्टौ परीक्षयेत्।
नाडी मूत्रं मलं जिह्वा शब्दस्पर्शस्वरूपधृक् ॥ ५५ ॥

[आदौ नाडीपरीक्षणनिमित्तानि]

दोषे कोपे घने चाल्पे पूर्वं नाडीं परीक्षयेत्।

[नाडीस्वरूपं तदवयवाश्च]

तिर्यक्कूर्मो देहिनां नाभिदेशे
वामे पुच्छं तस्य वक्त्रं तु याम्ये।
ऊर्ध्वे भागौ हस्तपादौ च वामौ
तस्यैवाधः संस्थितौ दक्षिणौ तौ ॥ ५६ ॥

[शरीरस्थिता विंशतिर्नाड्यः तत्तन्नाडीस्थानानि च]

वक्त्रे नाडीद्वयं तस्य पुच्छे नाडीद्वयं तथा।
पञ्च पञ्च करे पादे वामदक्षिणभागयोः ॥ ५७ ॥

नाभेरधः प्रसृतयोर्दश यान्त्यधस्ता-
दूर्ध्वं तथा प्रसृतयोर्दश तद्वदेव ।
द्वे द्वे सिरे प्रवितते प्रसृते च तिर्य-
ग्युक्ताश्चतुर्भिरिति विंशतिरत्र काये ॥ ५८ ॥

[सामान्यतो नाडीसङ्ख्या, तत्र मुख्यनाड्यस्तासां नामानि स्थानानि च]

द्विसप्ततिसहस्राणि नाड्यो मुख्यास्तु षोडश ।
तासां स्थानानि वक्ष्यामि बाह्वोर्हस्तिनिचित्तिनी ॥ ५९ ॥

कुहूः कुचे दक्षिणे च पूषा वामकुचे तथा ।
अलम्बुसा च हृदये नासायामिडपिङ्गले ॥ ६० ॥

सुषुम्ना च भ्रुवोर्मध्ये गजजिह्वा गले तथा ।
गुहा नाभिप्रदेशे च नेत्रयोः सूक्ष्मरन्ध्रगे ॥ ६१ ॥

पादाङ्गुष्ठे रुद्रनाडी ब्रह्मनाडी च गुह्यके ।
ऊर्ध्वनाडी कपोले च गान्धारी ब्रह्मरन्ध्रके ॥ ६२ ॥

[स्त्रीपुंसयोर्नाडीपरीक्षास्थानानि]

पुंसां च दक्षिणे हस्ते वामहस्ते च योषिताम् ।
कराग्रे मणिबन्धे च स्फुरन्नाडीं परीक्षयेत् ॥ ६३ ॥

[रागे वीणातन्त्र्या इव हस्तनाड्याः सर्वरोगप्रकाशकत्वम्]

यथा वीणागता तन्त्री सर्वरागप्रकाशिका ।
तथा हस्तगता नाडी सर्वरोगप्रकाशिका ॥ ६४ ॥

[नाडीपरीक्षाक्रमः]

निपीड्याङ्गुष्ठमूलादावङ्कुशाकृतिकाङ्गुलिः ।
त्र्यङ्गुल्यग्रैः परीक्षेत धमनीं रोगभेदिनीम् ॥ ६५ ॥

[ब्रह्मविष्णुरुद्राख्यानां नाडीनां क्रमाद्वातपित्तकफजन्यत्वं तर्जन्याद्यवस्थितिश्च]

ब्रह्मनाडी वायुजन्या विष्णुनाडी च पित्तजा ।
रुद्रनाडी कफोत्पन्ना तर्जन्यादिषु लक्ष्यते ॥ ६६ ॥

[वातादिनाडीगतिभेदाः]

वाता वक्रगतिर्नाडी पित्ता च फलवाहिनी ।
श्लेष्मा स्थिरगतिश्चैव सर्वलिङ्गा तु सर्वगा ॥ ६७ ॥

[नाडीपरीक्षानर्हावसराः]

व्यायामतृष्णातपपीडितस्य
बुभुक्षतो भुक्तवतोऽपि जन्तोः ।
अभ्यञ्जनस्नानवधूपभोग-
क्रियासु नाडी न विबोधनीया ॥ ६८ ॥

[शरीरे नाडीस्थानानि]

पादयोर्हस्तयोर्घ्राण-
मूलयोः कर्णमूलयोः ।
पादयोर्नाडिकास्थानं
गुल्फस्याधोऽङ्गुलत्रयम् ॥ ६९ ॥

हस्तयोस्तु प्रकोष्ठान्ते मणिबन्धेऽङ्गुलत्रयम् ।
नासामूलेऽङ्गुलद्वन्द्वं कर्णमूलेऽङ्गुलान्वितम् ॥ ७० ॥

इत्येवं नाडिकास्थानं स्पर्शनाज्ज्ञेयमीरितम् ।

[रोगविशेषज्ञानाय नाडीविशेषपरीक्षा]

अजीर्णे रक्तपित्ते च रक्तनाडीं विनिर्दिशेत् । ॥ ७१ ॥

क्षयश्वासादि[1]गुल्मादिज्वरे शीतज्वरेऽपि च ।

---

[1] गुल्मेषु ज्व—मु.

सन्निपातादिरोगेषु हस्तनाडीं विनिर्दिशेत् ॥ ७२ ॥

व्रणे भगन्दरे चार्शोलूताशीर्षव्यथासु च ।
एवमादिषु रोगेषु नासानाडीं विनिर्दिशेत् ॥ ७३ ॥

वातापस्मारकुष्ठेषु कण्ठनाडीं विनिर्दिशेत् ।
कर्णरोगे च हृद्रोगे प्रमेहे पादरोगके ॥ ७४ ॥

क्रमेण बुद्धिमान् वैद्यः कर्णनाडीं परीक्षयेत् ।

[त्रिदोषेषु नाडीनां गतिभेदाः]

सर्पजलूकादिगतिं [1]वदन्ति विबुधाः प्रभञ्जने नाड्याम् ।
पित्ते तु काकलावक[2]मण्डूकगतिं विदुः सुधियः ॥ ७५ ॥

राजहंसमयूराणां पारावतकपोतयोः ।
कुक्कुटस्य गतिं धत्ते धमनी कफसङ्गिनी ॥ ७६ ॥

मुहुः सर्पगतिं नाडी मुहुः [3]काकगतिं तथा ।
वातपित्तसमुद्रि[4]क्तां प्रवदन्ति विचक्षणाः ॥ ७७ ॥

[ज्वरादिषु नाडीगतिभेदाः]

ज्वरासृक्कामिलापाण्डुष्वतिसारे प्रमेहके ।
चटमेकगतिं पश्येद्वैद्यविद्याविशारदः ॥ ७८ ॥

अशीतिवातेष्वानाहे तथोदावर्तसंज्ञके ।
जलूकागतिमाश्रित्य नाडी नित्यं प्रवर्तते ॥ ७९ ॥

अष्ठीला च प्रतिष्ठीला तुनी प्रतितुनी तथा ।
श्वासकासे यक्ष्मरोगे पिटिकागुल्मकोदरे ॥ ८० ॥

बकहंसमयूरादिगतिर्नाडी निगद्यते ।

---

[1] धत्ते कुपिते प्रभञ्जने नाडी–बृ. यो. त. [2] मण्डूकादेस्तथा चपलाभ्–बृ. यो. त. [3] भेकगतिं तथा–बृ. यो. त. [4] क्ता दाहपीडासमन्विता–बृ. यो. त.

[अस्वस्थनाडीचिह्नानि]

चाञ्चल्यं दोषपूर्णत्वं काठिन्यमतिमन्दता ॥ ८१ ॥
अस्वस्थनाडीं जानीयात्क्रमेणैवं तु बुद्धिमान् ।

[स्वस्थनाडीस्वरूपम्]

चाञ्चल्यरहिता दोषहीना काठिन्यवर्जिता ॥ ८२ ॥
अवक्रा चाप्यसूक्ष्मा च स्वस्थनाडी प्रकीर्तिता ।

[असाध्यनाडीचिह्नानि]

[1] मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं वा
स्थित्वा स्थित्वा वहति धमनी याति नाशं च सूक्ष्मा ।
नित्यं [2] स्कन्धे स्फुरति पुनरप्यङ्गु[3]लीस्पर्शवेद्या
भावैरेवं [4]बहुतरविधा सन्नि[5]पातात्त्वसाध्या ॥ ८३ ॥

[पुनः सञ्जीवनयोग्या नाडी]

भारप्रहारमूर्छा-
भयशोकप्रमुखसञ्जता नाडी ।
सम्मूर्छितापि गाढं
पुनरपि सञ्जीवनं लभते ॥ ८४ ॥

[दुस्साध्यनाडीलक्षणम्]

पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रती-
[6]मत्यन्तं भ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव ।
भीष्मत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं
नो साध्यां धमनीं वदन्ति मुनयो [7]नाडीपरिज्ञानिनः ॥ ८५ ॥

---

[1] जिह्मं जिह्मं कुटिलपटिलं-बृ-यो-त. [2] कण्ठं-बृ-यो-त. [3] लीसंस्पृ-शेद्या-बृ-यो-त. [4] बहुविधतरैः-बृ-यो-त. [5] पातादसाध्या-बृ-यो-त. [6] स्वस्थानाक्र....रूढेव या-बृ-यो-त. [7] नाडीगतिज्ञानिनः-बृ-यो-त.

[एकवर्षाद्यायुस्सूचकनाडीगतयः]

निमिषं च निवृत्यान्ते पुनर्वहति चेत्तदा ।
वर्षमायुर्विजानीयान्निमेषा द्वादशापि च ॥ ८६ ॥

पुनर्वहत्यपि यदेत्पञ्चमासे गतायुषः ।
अतिसूक्ष्माऽतिवेगा चेदातुरो न निवर्तते ॥ ८७ ॥

नाड्यां पित्तं यदा लीनमनुभूतं दिने दिने ।
स्थिता नाडी मुखे यस्य विद्युत्पात इवेक्षते ॥ ८८ ॥

एकाहं जीवितं तस्य द्वितीये म्रियते ध्रुवम् ।

[जम्बीरादिभक्षणे नाडीगतिभेदाः]

जम्बीरमातुलुङ्गादिचिञ्चाम्लरससेवने ॥ ८९ ॥

चटिकामीनसदृशीं गतिं नाडी समाश्रयेत् ।
लवणे सेविते तावदतिशीघ्रं प्रवर्तते ॥ ९० ॥

मधुरे राजहंसानां कषाये च जलौकसाम् ।
कटुतिक्तरसे [1]भुक्ते गजोष्ट्रादिसमाश्रिता ॥ ९१ ॥

[बालादिसङ्गमे नाडीगतिभेदाः]

बालायाः सङ्गमे सौम्याः तरुण्याः केकीनां गतिः ।
प्रौढाया राजहंस(स्य)स्तु वृद्धाया महिषीगतिः ॥ ९२ ।

[मनुष्यादिदारुकीटान्तप्राणिशरीरेषु नाडीसङ्ख्या]

द्विसप्ततिसहस्राणि नाड्यः सन्ति नृणां तनौ ।
चत्वारिंशत्तथाश्वानां गजानां त्वेकसिंश्रितम् ॥ ९३ ॥

गवादिके चतुष्पादजीवे त्रिंशत्सहस्रकम् ।
नाड्यः सर्पादिकीटानां सहस्रार्धं पृथक् पृथक् ॥ ९४ ॥

---

[1] भुङ्क्ते–ग.

त्रिंशज्जलचराणां स्युः पक्षिणां त्रिशतं भवेत् ।
पिपीलिकानां तस्यार्धं मृज्जातानां तु विंशतिः ॥ ९५ ॥

त्र्यधिका भक्षिकादीनां द्वयं दारुभुवां तथा ।
एवं प्राणभृतां नाड्यः शरीरेषु वसन्ति हि ॥ ९६ ॥

[मलप्रकोपस्य रोगनिदानत्वं मलप्रकोपकारणं च]

सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं त्रिविधाहितसेवनम् ॥ ९७ ॥

[वातप्रकोपः तत्कारणं कालश्च]

अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ।
तिक्तोषणकषायाल्परूक्षाप्रमितभोजनैः ॥ ९८ ॥

धारणोदीरणनिशाजागरात्युच्चभाषणैः ।
क्रियाऽभियोगभीशोकचिन्ताव्यायामसङ्गमैः ॥ ९९ ॥

ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ।

[पित्तप्रकोपः तत्कारणं कालश्च]

पित्तं कट्वम्लतिक्तोष्णकट्वक्रोधविदाहिभिः ॥ १०० ॥

शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ।

[श्लेष्मप्रकोपः तत्कारणं कालश्च]

स्वाद्वम्ललवणास्निग्धगुर्वभिष्यन्दशीतलैः ॥ १०१ ॥

आस्यास्वप्नसुखाजीर्णदिवास्वप्नाविबृंहणैः ।
प्रच्छर्दनाद्ययोगे च भुक्तमात्रवसन्तयोः ॥ १०२ ॥

पूर्वाह्णे पूर्वरात्रे च श्लेष्मद्वन्द्वं तु सङ्करात् ।

[सन्निपातप्रकोपकारणानि]

मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ॥ १०३ ॥

सङ्कीर्णाजीर्णविषमविरुद्धाद्यशनादिभिः ।
व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ॥ १०४ ॥
पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ।
दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्तनैः ॥ १०५ ॥
ऋतोर्दुष्टात्पुरोवाताद्ग्रहावेशाद्गराद्विषात् ।
दुष्टामात्पर्वताश्लेषाद्ग्रहजन्मर्क्षपीडनैः ॥ १०६ ॥
मिथ्यायोगाच्च विविधपापानां च निषेवणात् ।
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ॥ १०७ ॥
व्यामिश्रसेवनाच्चापि सन्निपातः प्रकुप्यति ।

[दोषविकारकारणम्]

प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ॥ १०८ ॥
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ।

[अष्टौ महारोगाः]

वात[1]व्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ॥ १०९ ॥
अर्शांसि ग्रहिणीत्यष्टौ महारोगाः [2]सुदुस्तराः ।

[ज्वरनामानि ज्वरप्रभेदाश्च]

ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ॥ ११० ॥
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ।
जन्मान्तको मोहमयः सन्तापात्माऽपचारजः ॥ १११ ॥
विविधैर्नामभिः क्रूरो नानाजातिषु वर्तते ।
ज्वरोऽष्टधा पृथक् द्वन्द्वसङ्घातागन्तुजः स्मृतः ॥ ११२ ॥

[दोषाणां मिथ्याहारादिभिः ज्वरजनकत्वम्]

मिथ्याहारविहाराभ्यां दोषा ह्यामाश्रयाश्रयाः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरादीन् जनयन्ति हि ॥ ११३ ॥

---

[1] कार्ष्यश्मरी—मु. [2] प्रकीर्तिताः—मु.

[ज्वरपरिज्ञाने उपायाः]

स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा ।
युगपद्यत्र [1]रोगे स्युः स ज्वरो व्यपदिश्यते ॥ ११४ ॥

[सन्निपातप्रकोपः]

विरोधिकैरन्नपानैरजीर्णात्यशनादिभिः ।
व्यामिश्रसेवनाच्चापि सन्निपातः प्रकुप्यति ॥ ११५ ॥

[सन्निपातज्वराकृतिः]

क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजः ।
सस्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ ११६ ॥

सस्वनौ सरुजौ कर्णौ कण्ठः [2]शूकैरिवावृतः ।
[3]संज्ञा मोहः प्रलापश्च कासश्वासारुचिभ्रमाः ॥ ११७ ॥

परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गतापनम् ।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ ११८ ॥

शिरसो [4]लुण्ठनं तृष्णा निद्रानाशो हृदि व्यथा ।
स्वेदो मूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ ११९ ॥

कृशत्वं नातिगात्राणां [5]प्रततं कण्ठकूजनम् ।
कोशानां श्यामरक्तानां मण्डलानां च दर्शनम् ॥ १२० ॥

मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ।
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ १२१ ॥

[सन्निपातज्वरस्य साध्यासाध्यकृच्छ्रसाध्यत्वविवेकः]

दोषे विबन्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ १२२ ॥

---

[1] रोगेषु–मु. [2] शूकै–मु. [3] तन्द्रा मोहः—यो. त. [4] लोठनं–यो. त.
[5] सततं–यो. त. शीर्णता–मु.

सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ १२३ ॥

सप्तमी द्विगुणा चैव दशमी द्वादशी तथा ।
एषापि गतिरुद्दिष्टा मोक्षाय च वधाय च ॥ १२४ ॥

[त्रयोदश कण्ठकूजादिसन्निपातज्वरभेदाः]

कण्ठकूजः सन्धिगश्च तान्द्रिको भुग्ननेत्रकः ।
रुग्दाहो रुधिरष्ठीवी अभिन्यासश्च कर्णिकः ॥ १२५ ॥

जिह्वकश्चान्तकश्चैव प्रलापश्चित्तविभ्रमः ।
शीताङ्गश्चेति विख्याताः सन्निपातास्त्रयोदश ॥ १२६ ॥

[साध्यासाध्यसन्निपातज्वरास्तेषां पृथक् सङ्ख्या च]

सन्धिगस्तन्द्रिकश्चेति साध्यः स्याच्चित्तविभ्रमः ।
कष्टसाध्यः कण्ठकूजः कर्णिको जिह्वकस्तथा ॥ १२७ ॥

कष्टात्कष्टतरो ज्ञेयो रुग्दाहो हन्ति मानवम् ।
अन्तको भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ॥ १२८ ॥

शीताङ्गश्चेत्यभिन्यासः षट् साध्याः सप्त मारकाः ।

[रसस्थज्वरे लिङ्गम्]

गुरुता हृदये क्लेशः सदनं छर्द्यरोचकौ ॥ १२९ ॥

रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ।

[रक्तगतज्वरलिङ्गम्]

रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ ॥ १३० ॥

प्रलापः [1]पिटकस्तृष्णा रक्तं प्राप्ते ज्वरे नृणाम् ।

---

[1] पिण्डका तृष्णा-बृ-यो-त.

[ मांसगतज्वरलिङ्गम् ]

पिण्डकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ॥ १३१ ॥

ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ।

[ मेदोऽस्थिगतज्वरलिङ्गम् ]

भृशं स्वेदस्तृषा मूर्छा प्रलापश्छर्दिरेव च ॥ १३२ ॥

दौर्गन्ध्यारोचकौ ग्लानिर्मेदस्थे चासहिष्णुता ।
भेदोऽस्थ्नां कूजनं [1]शोषो विरेकश्छर्दिरेव च ॥ १३३ ॥

विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ।

[ मज्जागतज्वरलिङ्गम् ]

तमः प्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ॥ १३४ ॥

अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ।

[ शुक्रस्थानगतज्वरलिङ्गं तत्र मृतिश्च ]

मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ॥ १३५ ॥

[2]शेफः सशब्दता मोक्षः शुक्रस्थे तु विशेषतः ।
सन्निपातज्वररुजोरिस्यादाननिदानके ॥ १३६ ॥

एवमन्येषु रोगेषु द्रष्टव्यं तद्द्वयं बुधैः ।

[ औषधनिरूपणं-तत्र वातहरः एरण्डादिगणः ]

अथ रोगचिकित्सार्थमौषधं प्रतिपाद्यते ॥ १३७ ॥

एरण्डामरदारुगोक्षुरवरीकोरण्टकैरातकै-
र्वारीशिंशुमती [3]पलत्रययुता वृश्चीवशोभाञ्जनैः ।
पूतीकद्वितयामृतार्कजटिलारास्नाश्वगन्धामयै-
रेरण्डादिरयं बुधैरभिनुतो वातामयघ्नो गणः ॥ १३८ ॥

---

[1] श्वासो-बृ-यो-त. [2] शेफसस्तब्धता मोक्षः-बृ-यो-त. [3] फल-मु.

[ पित्तहरः काकोल्यादिगणः ]

काकोलीद्वयमृद्धिवृद्धिमधुकं मेदाद्वयं पद्मकं
श्रृङ्गीकीचकरोचनामृतलता द्वे मुद्गमाषच्छदे ।
जीवन्ती च सजीवका सवृषभा स्यात्पुण्डरीकान्विता
काकोल्यादिरुदीरितोऽयमृषिभिः पित्तापहस्तद्गणः ॥१३९॥

[ कफामयहरः कृष्णादिगणः ]

कृष्णाग्रन्थिकचव्यचित्रकवृषाविश्वौषदिव्यादिभिः
[1]पाठारेमठरेणुकामधुरसासिद्धार्थतिक्तौषधैः ।
सृक्काशक्रयवाजमोदत्रुटिभिभार्ङ्गीविलङ्गान्वितै-
रेभिर्विंशतिभिः कफामयहरः कृष्णादिरुक्तोगणः ॥१४०॥

[ पित्तवातहरः स्थिरादिगणः ]

स्थिरापृथक्पर्णिपुनर्नवाभि-
स्त्रिकण्टकैरण्डजटोज्झटाभिः ।
विदारीकानागबलावराभि-
रयं गणः पित्तसमीरणघ्नः ॥ १४१ ॥

[ कफवातहरः कट्फलादिगणः ]

कटफलाम्बुधरधान्यकभार्ङ्गी-
श्रृङ्गिपर्पटकविश्ववचाभिः ।
[2]साभयामरसगन्धतृणाभि-
र्वर्ग एष कफवातनिहन्ता ॥ १४२ ॥

[ पित्तकफामयहरः त्रायन्तिकादिगणः ]

त्रायन्तिकाकुटजबीजवृषामृताभिः
तिक्तापटोलपिचुमन्ददुरालभाभिः ।
भूनिम्बराजिजतुपद्मकपर्पटाख्यै-
रेभिर्गणोऽयमिति पित्तकफामयघ्नः ॥ १४३ ॥

---

[1] पादारामभरेणुका—मु. [2] साभयामर—मु.

[प्रमेहपित्तयोनिरोगहरः उदुम्बरादिगणः]

उदुम्बराश्वत्थमधूकलोध्र-
नन्दीवटप्लक्षपलाशपार्थाः ।
जम्बूत्रयं चेति गणः प्रमेह-
पित्तार्तिहा [1] योनिगदापहश्च ॥ १४४ ॥

[गुल्महरः हिङ्ग्वादिगणः]

हिङ्गुचव्यमरिचानि यवानि
ग्रन्थिविश्वतुटिमागधिकाभिः ।
श्रेयसी च परमामयहन्ता
गुल्महा निगदितश्च गणोऽयम् ॥ १४५ ॥

[गुरुपञ्चमूलम्]

श्रीवृक्षपाटलसकट्फलवैजयन्त्या
डुण्डूकसम्भृतमिदं गुरु पञ्चमूलम् ।

[लघुपञ्चमूलम्]

एरण्डयुक्च बृहतीद्वयसालपृश्नि-
पर्णीभिरप्यभिहितं लघु पञ्चमूलम् ॥ १४६ ॥

[गुरुलघुपञ्चमूलहार्यरोगः]

आभ्यां तु पूर्वमुदितं कफमारुतघ्नं
पित्तानिलापहमतः परतः प्रदिष्टम् ।

[तत्तद्व्याधिषु द्रव्यकथनम्]

ज्वरे पर्पटकः प्रोक्तो रास्ना वातामये तथा
पित्ते छिन्नरुहा शस्ता कफे विश्वं विशेषतः ॥ १४७ ॥
कुटजो ग्रहिणीरोगे [2] शोषे सति फलङ्कषः ।
छर्द्यां लाजाः समुद्दिष्टा मेहे धात्रीरसः परः ॥ १४८ ॥

---

[1] योगि–मु. [2] शोफे–मु.

प्लीहायां पिप्पली ज्ञेया पथ्या पाण्ड्वामये तथा ।
त्रिफला नेत्ररोगेषु कुष्ठेषु खदिरं तथा ॥ १४९ ॥

कासेषु कण्टकारिः स्याद्द्राक्षा सर्वेषु यक्ष्मसु ।
क्रिमिघ्नं क्रिमिषु श्रेष्ठं स्यादर्शस्स्वप्यरुष्करः ॥ १५० ॥

उरःक्षते बला ख्याता गोमूत्रमुदरेषु च ।
स्यात्काश्मीरं शिरोरोगे श्वासे भार्ङ्गी प्रशस्यते ॥ १५१ ॥

गलग्रहे पटोलानि तृष्णास्वम्लानि शान्तये ।

[व्याससमासतो द्रव्योक्त्युपसंहारः]

व्यासेनापि समासेन प्रोक्तोऽयं द्रव्यसङ्ग्रहः ॥ १५२ ॥

[पूर्वोक्तद्रव्यैर्यथाव्याध्यौषधनिर्माणोक्तिः]

एतैस्तैले सर्पिषि वा प्रलेपान् पानकान्यपि ।
ज्ञात्वौषधान् प्रकुर्वीत यथाव्याधि भिषग्वरः ॥ १५३ ॥

[क्रिमिघ्नगणः]

मदनमधुकलम्बा निम्बचिञ्चे विशाला
त्रपुसकुटजमुर्वा देवदाली क्रिमिघ्नाः ।

[छर्दनगणः]

विदलदहनचित्राः कोशवत्याः करञ्जः
कणलवणवचैलासर्षपा[1]श्छर्दनानि ॥ १५४ ॥

[विरेचनगणः]

निकुम्भकुम्भत्रिफला गवाक्षी
स्नुशङ्खिनी नीलिनितिल्व[2]लानि ।
शम्याककम्पिल्लकहेमदुग्धं
दुग्धं च मूत्रं च विरेचनानि ॥ १५५ ॥

---

[1] श्छर्दकाः स्युः–मु.पा., छर्दकार्याः–मु. [2] कानि–मु.

[रूक्षगणः]

मदनमधुककुष्ठदेवदाली-
मधुकवचादशमूलदारुरास्नाः ।
यवमिशिकृत[1]वेपनं कुलुत्था
मधु लवणं त्रिवृतानि रूक्षणानि ॥ १५६ ॥

[उत्तमाङ्गशोधकगणः]

वेल्लापामार्गव्योषदार्वी सुराला
बीजं शैरीषं बार्हतं शैग्रवं च ।
सारो मधूकसैन्धवं तार्क्ष्यशैलं
त्रुट्यौ पृथ्वीका शोधयत्युत्तमाङ्गम् ॥ १५७ ॥

[फलसाराः]

द्राक्षादाडिमखर्जूररम्भापनसचूतकाः ।
तालबिल्वकतुङ्गद्रुश्लेष्मातककपित्थकाः ॥ १५८

नारङ्गलुङ्गलिकुचपारावतप्रियालुकाः ।
सुरसौवीरबदरगुञ्जाकर्कन्धुतोरणाः ॥ १५९ ॥

वल्लीफलादयश्चान्ये फलसाराः प्रकीर्तिताः ।

[पत्रसाराः]

भृङ्गालर्कोज्झटा [2]छल्ली हरिन्मञ्जरिकाम्लिका ॥ १६० ॥

उपानदंघ्री दुत्तूरकारवेल्लपटोलिकाः ।
निर्गुण्डी मत्स्यदङ्मुण्डी कुण्डली कासमर्दका ॥ १६१ ॥

मण्डूकपर्णी लवणी [3]तलपोतार्ककिंशुकाः ।
जयाग्निमन्था शार्ङ्गेरी शाकुष्ठा द्विपुनर्नवा ॥ १६२ ॥

---

[1] वेधनं—मु. [2] चिल्ली—मु. [3] तलहाटार्क—मु.

ब्राह्मी कुरण्टिकाऽनन्ता सहदेवी हरिप्रिया ।
लक्ष्मीर्द्वितीया जीवन्ती मूर्वावास्तुकवल्गुजाः ॥ १६३ ॥

पुष्पाखुकर्णिकालिङ्गा निम्बाद्याः पत्रसारकाः ।

[पुष्पसाराः]

पुष्पसारास्तु चाम्पेयकेतकाशोकपाटलाः ॥ १६४ ॥

पुन्नागभूर्जवकुलमाधवीजातिमल्लिकाः ।
शेफालीयूथिकाशिग्रुशतपत्रनृपद्रुमाः ॥ १६५ ॥

वरालधातकीनन्द्यावर्तोत्पलजपादयः ।

[मूलसाराः]

बृहत्यौ सुमती द्वन्द्वफला [1]पञ्चकुत्रवंराः ॥ १६६ ॥

तण्डुलीयवगोकण्टकुण्डलीद्विपुनर्नवाः ।
पुङ्खोवालुकलामज्जा यासहिंस्रासुवर्चलाः ॥ १६७ ॥

पाठाकुरण्टश्यामाद्या मूलसाराः प्रकीर्तिताः ।

[कन्दसाराः]

कन्दसारास्तु मञ्जिष्ठाकुष्ठचोरविदारिकाः ॥ १६८ ॥

हरिद्रालाङ्गलीमुस्तावरीरास्नाघुणप्रियाः ।
शारिवार्द्रकवाराहिवचाब्जवनसूरणाः ॥ १६९ ॥

निकुम्भमौर्वेऽम्लिका च वाजिगन्धा शुकानना ।

[बीजसाराः]

रक्ताद्याः शालयस्तद्वन्मुद्गाद्याः शिम्बिजातयः ॥ १७० ॥

एरण्डयुग्मपुन्नागनग्नजिच्चक्रमर्दकाः ।
प्रियालुनिम्बवकुलमुनिशिग्रुकरञ्जकाः ॥ १७१ ॥

---

[1] चम्पक-मु.

ज्योतिष्मती कुबेराक्षी शङ्खिनी युग्मचूतकाः ।
जातीफलैलातक्कोलब्रह्मद्रुममयूरकाः ॥ १७२ ॥

पिप्पली मरिचा जाजी यवान्याधान्यसर्षपाः ।
कनकारुष्करणशणपथ्याधात्रीविभीतकाः ॥ १७३ ॥

वाकुच्यङ्कोलबदरवेल्लाद्या बीजसारकाः ।

[सारसाराः]

मधूकचन्दनद्वन्द्वरोहिण्यमरभूरुहाः ॥ १७४ ॥

खदिरासननिम्बाद्याः सारसाराः प्रकीर्तिताः ।

[क्षीरिणः पञ्चपादपाः तदीयपञ्चपल्लवं च]

न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः ॥ १७५ ॥

पञ्चैते क्षीरिणः प्रोक्ताः तेषां त्वक्पञ्चवल्कलम् ।

[त्र्यूषणम्]

विश्वोपकुल्या [1]मरिचैस्त्र्यूषणं [2]कटुकं कटु ॥ १७६ ॥

[चतुरूषणम्]

व्योषं कटुत्रयं तच्चेत् षड्ग्रन्थि चतुरूषणम् ।

[फलत्रयम्]

जया विभीतको धात्री फलत्रयमुदाहृतम् ॥ १७७ ॥

[त्रिजातकचतुर्जातके]

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेसरसंयुक्तं चतुर्जातकमुच्यते ॥ १७८ ॥

---

[1] मरिचं त्रयं त्रिकटु कथ्यते–भावप्रकाशे । [2] कथितं बुधैः–बृ-यो-त.

[अङ्गादिविशेषानुक्तावुपयोज्यानि]

अङ्गेऽप्यनुक्ते विहितं तु मूलं
भागेऽप्यनुक्ते समभाग एव ।
कालेऽप्यनुक्तेऽप्युषसि प्रयोज्यं
द्रवेऽप्यनुक्ते विहितं तु तोयम् ॥ १७९ ॥

[कषायसप्तके अर्धादिक्रमः]

अर्धं पादं पदार्धं पदपदशकलं पञ्चभागावशिष्टं
द्वात्रिंशत् षष्ठमष्टौ चरकमतविधौ शास्त्रतत्त्वार्थकारैः ।
सेके स्नेहे कषाये व्रणमलहरणे त्वेवमाश्च्योतनार्थे
गण्डूषाद्ये निरूहे क्रम इति कथितः सप्तभेदे कषाये ॥ १८० ॥

[पानीयादौ शोषणप्रकारः]

सचतुर्विंशतिपले जले द्रव्यपलं क्षिपेत् ।
पाने कषाये तत्कुर्यादष्टभागावशेषितम् ॥ १८१ ॥
पानीयं कार्षिकद्रव्यं प्रस्थाम्ब्वर्धावशेषितम् ।

[पत्रादीनां वीर्यविमोककालः]

पत्रकन्दप्रसूनत्वक्फलं तत्रापि कालतः ॥ १८२ ॥
एकद्वित्रिचतुःपञ्चयामं वीर्यं विमुञ्चति ।

[क्वाथे कठिनादिद्रव्यप्रक्षेपक्रमः]

आदौ सारादि कठिनं मध्ये मध्यं त्वगादिकम् ॥ १८३ ॥
अन्ते मृदूनि पत्राणि क्षिप्त्वा क्वाथं समाचरेत् ।

[भैषज्यसेवनकालः]

नाडीचतुष्टये प्रातर्विना भुक्तेन कालतः ॥ १८४ ॥
प्रातः सेव्यं तु भैषज्यमजीर्णेऽन्ने न शस्यते ।
नाडिकाष्टकवेलायां रात्रौ क्वाथादिकं भजेत् ॥ १८५ ॥
अथवा भोजनादूर्ध्वं नाडिकात्रितयात्परम् ।

[ त्रिधा-जाङ्गलादिदेशविभागः ]

देशो जाङ्गल आनूपः साधारण इति त्रिधा ॥ १८६ ॥

[ जाङ्गलदेशपरिस्थितिः ]

जाङ्गलो विरलात्यल्पकण्टकद्रुमलाञ्छितः ।
अल्पप्रस्रवणो दूरविघातविरसोदकः ॥ १८७ ॥

व्योमविस्तीर्णविषमविरूक्षविगतस्थलः ।
कृशः स्थिरः क्लेशसह्वातभूयिष्ठमानुषः ॥ १८८ ॥

[ अनूपदेशपरिस्थितिः ]

अनूपः शिशिरः स्निग्धभूमिर्भूरितृणो बल ।
प्रभूतशैवलच्छन्नगृहन्मत्स्यजलाशयः ॥ १८९ ॥

महाद्रितुङ्गस्तुङ्गद्रुस्तालहिन्तालवेल्लिताः ।
गलरोगोपचिद्ग्रन्थिश्रीपदाद्या उपद्रवाः ॥ १९० ॥

सुकुमारमृदुस्थूलश्लेष्मभूयिष्ठमानुषः ।

[ साधारणदेशपरिस्थितिः ]

साधारणः सममलो युक्तश्चोभयलक्षणैः ॥ १९१ ॥

शितोष्णवर्षपवनैः समः साधारणस्तथा ।

[ कृष्णमृत्स्नाभुवो गुणाधिक्यम् ]

विशेषतः स्थूलवृक्षतृणसस्योज्वला स्थिरा ॥ १९२ ॥

गुरुरश्मवती श्यामा कृष्णा भूमिर्गुणाधिका ।

[ अम्बुगुणाधिका भूमिः ]

शीतला कोमला स्निग्धा द्रुमसस्यतृणोल्बणा ॥ १९३ ॥

आसन्नसलिला पाण्डुः स्निग्धा त्वम्बुगुणाधिका ।

[तेजोगुणाधिकभूमिस्वरूपम्]

अल्पपुष्पा सविरला पाण्डुवृक्षप्ररोहिणी ॥ १९४ ॥

लघुरूष्मवती नैकवर्णा वह्निगुणाधिका ।

[वायुगुणाधिकभूलक्षणम्]

तरुकोटरवृक्षाल्पद्रुमसस्यप्ररोहिणी ॥ १९५॥
रूक्षा रासभभस्साभवर्णा वायुगुणाधिका ।

[आकाशगुणाधिकभूमिलक्षणम्]

समा श्वभ्रवती श्यामा मृदुशर्करसोदका ॥ १९६ ॥
सर्जसालमहावृक्षप्राया व्योमगुणाधिका ।

[ऋत्वनुगुणतत्तद्भूमिग्राह्याणि अम्ब्वादीनि द्रव्याणि]

तत्र क्ष्माम्बुगुणोद्रिक्तभूमिजातं विरेचनम् ॥ १९७ ॥
वमनं वह्निपवनखगुणोल्बणभूमिजम् ।
शाखापत्रं नवं तत्र ग्राह्यं वर्षावसन्तयोः ॥ १९८ ॥
ग्रीष्मे प्ररूढपर्णानां मूलं शिशिरघर्मयोः ।
तत्रापि शिशिरे सौम्यं ग्रीष्मे त्वाग्नेयमिष्यते ॥ १९९ ॥
सारं हिमागमे कन्दत्वक्क्षीराणि घनात्यये ।
पुष्पं फलं यथर्त्वेवमव्यापन्नगुणं भवेत् ॥ २०० ॥

[सर्वर्तुग्राह्या भूपदार्थाः]

सर्वर्तुकाः कन्दनालशुङ्गस्वरसपल्लवाः ।
क्षारप्ररोहनिर्यासभस्मतैलानि कण्टकाः ॥ २०१ ॥

[रथ्यादिसम्भूतौषधीनां निर्वीर्यत्वम्]

[1]रथ्याकूपतरुच्छायाप्रेतभूदेवगेहजाः ।
वल्मीकसम्भवा वह्निदग्धाः पानीयपीडिताः ॥ २०२ ॥
हिमाम्बुक्रिमिभि[2]र्भुक्ता मृदुकाकालसम्भवाः ।
ओषध्योऽविधिना नीता न कार्यं साधयन्ति ताः ॥ २०३ ॥

---

[1] मिथ्या–मु. [2] युक्ता–मु.

[ओषधिग्रहणे नक्षत्रादिपरिशीलनम्]

अतः प्रशस्ते नक्षत्रे शुचिना शुभवासरे ।
औषधं विविधं ग्राह्यं स्मृत्वा देवीं च सुप्रभाम् ॥ २०४ ॥

[ओषधिग्रहणकाले जप्यो मन्त्रः]

मन्त्रः —सुप्रभायै नमः

[ओषधिग्रहणयोग्यकालः]

पुष्यार्के मूलार्के हस्तार्के चोत्तरार्कदिवसे वा ।
ग्राह्यं प्रातर्द्रव्यं निमन्त्रितं भानुसुतदिवसे ॥ २०५ ॥

[लेह्यादिसाधने योग्यपात्राणि]

पात्रष्वयोमयं श्रेष्ठं प्रायो लेह्यादिसाधने ।
वीर्याधिक्यमरिष्टादेस्तत्र सिद्धिस्तु जायते ॥ २०६ ॥

तदभावे दृढं सिद्धं मृद्भाण्डं परिकल्पयेत् ।

[लेह्याद्यौषधप्रयोगे प्रमाणम्]

लेह्यं पाणितलं तदर्धघुटिका त्वक्षप्रमाणं रजो
मार्जारस्य पदं वदन्ति मुनयो मुद्गप्रमाणाञ्जनम् ।
कर्णे द्वादश बिन्दवश्च कथिताः षड् बिन्दवो नस्यके
द्वात्रिंशत्कवलेषु कीर्तितमिदं वक्त्रार्धगण्डूषके ॥ २०७ ॥

[दोषानुरूपौषधप्रयोगोपसंहारः]

दोषानुरूपकथितौषधसम्प्रयोगै-
श्चूर्णेन कल्पघृततैलविलेपनाद्यैः ।
गण्डूषणाञ्जनकषायविरेकपानैः
खाद्यावलेह्यवमनाख्यगणैः प्रयोज्यम् ॥ २०८ ॥

इति शिवनत्नाकरे षष्ठकल्लोले वैद्यशास्त्रे आदाननिदानचिकित्सानिरूपणं नामैकविंशस्तरङ्गः

## षष्ठकल्लोले द्वाविंशस्तरङ्गः

### द्रव्यगुणमहारसादिनिरूपणम्

[व्रीह्यादिद्रव्यगुणाः]

अथ द्रव्यगुणान् वक्ष्ये येषामत्रोपयोगिता ।
शालयो मधुराः स्निग्धा रक्ता शालिस्त्रिदोषजित् ॥ १ ॥

महाशालिः परं वृष्यः कलमाख्यश्च पित्तहा ।
षाष्टिकः स्याल्लघुः शीतो नीवारो वातनाशनः ॥ २ ॥

श्यामाकः शोषणो रूक्षः प्रियङ्गुः कफवातजित् ।
कोद्रवो रक्तपित्ताढ्यः पित्तश्लेष्महरो यवः ॥ ३ ॥

कफपित्तहरो मुद्गो गोधूमो वातनाशनः ।
कुलुत्थः श्लेष्मवातघ्नो माषो वृष्योऽनिलापहः ॥ ४ ॥

चणको वातलः प्रोक्तो मसूरो ग्राहि पित्तहा ।
आढकी कफपित्तघ्नी राजमाषोऽनिलार्तिकृत् ॥ ५ ॥

स्निग्धश्चोष्णस्तिलो ज्ञेयः सिद्धार्थः कफवातजित् ।
अतसी पित्तला ज्ञेया गृञ्जनं वातनाशनम् ॥ ६ ॥

कलशी श्लेष्महा हृद्यः पिण्डालुः कफवातलः ।
मण्डूकी पित्तरोगघ्नी पित्तकृच्चक्रमर्दकः ॥ ७ ॥

आवर्तः पित्तरूक्षश्च कलायश्चातिवातलः ।
वास्तुकः पोतकी छिल्ली पालकी तण्डुलीयका ॥ ८ ॥

निष्पावश्चाथ जीवन्ती विदारिकापिकुञ्चिकाः ।
मीनाक्षी चेति पित्तघ्नी विरूढाः शुक्रवर्धनाः ॥ ९ ॥

[1] शार्ङ्गेष्ठा व्यन्दला मुण्डी वृश्चिकाली च दुग्धिका ।
द्रोणकः पर्पटश्चेति जन्तुघ्ना वह्निदीपनाः ॥ १० ॥

---

[1] शार्ङ्गेष्ठा वृदला—मु.

[कारवेल्ल्यादिशाकगुणाः]

छिन्नरुहा कारवल्ली पटोलवार्ताकवचच्छटा बृहती ।
कर्कोटकी समीरश्लेष्महरजातयो वृष्याः ॥ ११ ॥

कूष्माण्डोर्वारुभिदा नन्दी कर्कारुकर्कटत्रपुसाः ।
लम्बा चेति समीरश्लेष्मकराः पित्तरोगनुदः ॥ १२ ॥

[हिन्तालादिगुणाः]

हिन्तालतालपनसाः स्निग्धा लघवः कफोत्तरारम्भाः ।
वृष्यास्तु नालिकेरा विज्ञेयाः पित्तवातहराः ॥ १३ ॥

चिञ्चा स्रंसनहृद्यो नारङ्गः पिच्छलो मतो वृष्यः ।
जम्बीरो वातहरः त्रिदोषहा मातुलुङ्गः स्यात् ॥ १४ ॥

आम्रातकाम्लावुदितौ च वृष्यौ
वातापहः स्याल्लिकुचश्च हृद्यः ।

[द्रव्याणां पाकान्तरैर्भावभेदः]

द्रव्याणि शीतान्यपि बाल्यमध्य-
पाकान्तरैर्भिद्यत एव भावः ॥ १५ ॥

[1](वातश्लेष्मकराः कन्दाः करिराः पित्तवातलाः ।
प्रफुल्ला भेदिनो रूक्षाः कुड्मलाः श्लेष्महारिणः ॥ १६ ॥

क्रिमिविरहितं ससूर्यं प्रशस्तमुदकं प्रसन्नं च ।
कोष्णं ज्वरहारि स्याद्वारि परं वातनाशकरम् ॥ १७ ॥)

श्रितशीतलमदहृद्यं त्रिदोषहृ[2]त्खातमुदकं च ।

[सितादिगोक्षीरगुणाः दधितक्रघृतनवनीतगुणाश्च]

गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् ।
कफघ्नं रक्तवर्णानां कपिलानां त्रिदोषहृत् ॥ १८ ॥

घृष्टेः क्षीरं तु वातघ्नं मध्यमायास्तु पित्तहृत् ।

---

[1] इदं धनुरङ्कितं पद्यद्वयं मुद्रितपुस्तके नास्ति. [2] त्खातमु–मु.

वृद्धाया वृद्धवत्साया गोक्षीरं श्लेष्मनाशनम् ॥ १९ ॥

स्निग्धं पित्तहरं रसायनसमं क्षीरं गवां कीर्तितं
वल्यं वातहरं च पित्तलमिति प्रोक्तं दधि श्लेष्मकृत् ।
गुल्मार्शोदरपाण्डुरोगशमनं तक्रं त्रिदोषापहं
सर्पिः पित्तसमीरहारि मधुरं हृद्यं तु नीतं नवम् ॥ २० ॥

[माहिषक्षीरगुणाः]

अत्यग्निसन्दीपनदेहभाजां
निद्राङ्गसङ्गेषु समुत्सुकानाम् ।
क्षीरं हितं माहिषमामनन्ति-
शीतं त्वभिष्यन्दकरं गुरुः स्यात् ॥ २१ ॥

[ओदनगुणाः]

लघुरोदनः स्वभावा-
द्गुरुरध्युषितः शोषितश्च गुरुः ।

[पायसदध्योदनगुणाः]

कफकृत्पायसमुदितं
बल्यं दध्योदनं कफानिलदम् ॥ २२ ॥

[सूपगुणाः]

वातश्लेष्महरः सूपः किञ्चित्पित्तोत्तरो लघुः ।

[कुलत्थमुद्गसूपगुणाः]

कौलत्थो वातहा यूषो मौद्गः [1]पित्तास्रनाशनः ॥ ३ ॥

[रसालमस्तुगुणाः]

रसालं बृंहणं हृद्यं मस्तुस्रोतोविशोधनम् ।

---

[1] पित्तप्रणाशनः—मु.

[मच्छण्डीगुडगुणाः]

मच्छण्डी पित्तजित्तृष्णा पित्तवातहरो गुडः ॥ २४ ॥

[सक्तुपृथुकगुणाः]

सक्तवो भेदिनो रूक्षाः पृथुकाः स्निग्धवातलाः ।

[पैष्टिकगुडाक्तभक्ष्यगुणाः]

पैष्टिका गुरवो भक्ष्या गुडाक्ता वातनाशनाः ॥ २५ ॥

[भुक्त्युत्तरानुपानगुणः त्रिदोषानुसारेण तत्र कोष्णत्वादिकं च]

सीदति च भुक्तमन्नं ततोऽनुपानं प्रशस्यते शमनम् ।
कोष्णं वाते शीतं पित्ते रूक्षे कफे समे क्षीरम् ॥ २६ ॥

[कासश्वासोर्ध्वरोगेषु भुक्त्यनुपानस्याप्रशस्तता]

अनुपानमप्रशस्तं कासश्वासोर्ध्वरोगिणां पुंसाम् ।

[तैलगुणाः]

बलवर्णकारि तैलं वातहरं केश्यमपि च चक्षुष्यम् ॥ २७ ॥

[परस्परविरुद्धद्रव्याणि]

मधुतुल्यं घृतं नाद्या[1]दारनालेन शष्कुलीम् ।
प्रियङ्गुकल्कदिग्धाङ्गो नोपभुञ्जीत पायसम् ॥ २८ ॥

शाकाम्लफलपिण्याककुलित्थलवणैः सह ।
करीरदधितक्रैश्च प्रायः क्षीरं विरुध्यते ॥ २९ ॥

कांस्ये दशाहमुषितं सर्पिरुष्णमरुष्करे ।
मधु सर्पिर्वसा तैलं पानीयानि द्विशस्त्रिशः ॥ ३० ॥

एकत्र वा समांशानि विरुध्यन्ते परस्परम् ।

---

[1] दावनालेन संयुतम्—मु.

[आहारसामान्यस्य बलवति पथ्यत्वमबलेऽपथ्यत्वं च]

अविरुद्धा विरुद्धाश्च समाश्चाहारजातयः ॥ ३१ ॥

सर्वा बलवतः पथ्या भवन्त्यन्यस्य चान्यथा ।

[अजीर्णे आहारस्य दोषप्रकोपकत्वम्]

अजीर्णे पुनराहारो गृह्यमाणः प्रकोपयेत् ॥ ३२ ॥

[1] वातपित्ते तथा श्लेष्मदोषमाशु शरीरिणाम् ।

[अजीर्णाद्रसशेषादिचतुर्विधपरिणामैर्जृम्भादिचतुर्विधरोगाः]

रोगोत्पत्तिः कि[2]लाजीर्णाच्चतुर्धा तत्पुनः स्मृतम् ॥ ३३ ॥

रसशेषामविष्टब्धविपक्वादिविभेदतः ।
रसशेषे भवेज्जृम्भः समुद्गारस्तथामिके ॥ ३४ ॥

अङ्गभङ्गश्च विष्टब्धे धूमोद्गारो विपक्वतः ।

[तेषां क्रमेण शमनोपायाः]

निद्राऽनुवमनस्वेदजलपानादिकर्मभिः ॥ ३५ ॥

सदा पथ्यविदां तानि शान्तिमायान्त्यनुक्रमात् ।

[विरुद्धाद्याहारिणामुपचारक्रमः]

विरुद्धात्यशनाहारदोषदुष्टातुरं नरम् ॥ ३६ ॥

विरेकवमनप्रायैः प्रतीकारैरुपाचरेत् ।
षट्सु मासेषु वमनं त्रिमासेषु विरेचनम् ॥ ३७ ॥

मासे मासे च गण्डूषं नस्यं सप्तदिनान्तरे ।

[लोहशुद्ध्यादिकथनप्रतिज्ञा]

लोहानामथ वक्ष्यामि क्रमाच्छुद्ध्यादिकाः क्रियाः ॥ ३८ ॥

---

[1] वातपित्तश्लेष्मदोषमाशु कुर्याच्छरीरिणाम्—मु. [2] लाजीर्णे—मु.

[शुद्धादिलोहाः तदीयप्रभेदाश्च]

शुद्धं लोहं कनकरजतं भानुलोहाश्मसारं
पूतीलोहद्वितयमुदितं नागवङ्गाभिधानम्।
मिश्रं लोहं त्रितयमुदितं पित्तलं कांस्यवर्तम्
धातुर्लोहस्त्रिविध उदितो मुण्डतीक्ष्णे च कान्तम् ॥ ३९ ॥

[स्वर्णादिलोहशोधनक्रमः तदुपयोगिद्रव्याणि च]

तैले तक्रे गवां मूत्र आरनाले कुलुत्थके।
रविदुग्धे निम्बनीरे क्षालयेच्च पुनः पुनः ॥ ४० ॥

स्वर्णादिसर्वलोहानां शुद्धिर्भवति निश्चिता

[वङ्गादिलोहनिहननसाधनानि]

तैलेन वङ्गं दरदेन तीक्ष्णं
नागेन रीतीः शिलया च नागम्।
गन्धाश्मना चैव निहन्ति शुल्वं
तारं तथा माक्षिकतो निहन्यात् ॥ ४१ ॥

घनेन नागं शिलया सुवर्णं
त्रपुश्च तारेण तथाहिनार्कम्।
अयश्च ताम्रेण सुवर्णतोऽथ
शशी समुत्थाप्यत एव युक्त्या ॥ ४२ ॥

[स्वर्णादिलोहद्रवीकरणविधानम्]

जालिनीचूर्णमत्यन्तं स्वनिर्यासेन भावितम्।
प्रतिपाकेन तस्यापि काञ्चनं जलवद्भवेत् ॥ ४३ ॥

पनसस्यार्धपक्वस्य वृन्तनिर्याससयोगतः।
खल्वे तु मर्दनाद्यान्ति सर्वलोहानि नीरताम् ॥ ४४ ॥

रक्तोत्पलस्य नालाम्भोमर्दितं घनचूर्णकम् ।
रसरूपं चिरं तिष्ठेत्कौसुम्भीतैल[1]मिश्रितम् ॥ ४५ ॥

[2]एकपात्रे कृतं व्योम स्थितमम्ले दिनाष्टकम् ।
हिङ्गुलस्य तरोः क्षारं नीरे संस्थापितं द्रवेत् ॥ ४६ ॥

[अष्टौ महारसाः]

सर्वेश्वरः पूर्णचन्द्रोदयो राजमृगाङ्ककः ।
स्यान्मालिनीवसन्ताख्यो वसन्तकुसुमाकरः ॥ ४७ ॥

त्रैलोक्यचिन्तामणिः स्यान्महाभूपतिरेव च ।
लक्ष्मीविलास इत्युक्ता अष्टावेते महारसाः ॥ ४८ ॥

[सर्वेश्वररसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

ताप्या टङ्कणहेमताररसकं गन्धं पृथग्भागिकं
ताम्रं विद्रुममौक्तिकं शिखरिणं द्व्यंशं पृथग्भागिकम् ।
वङ्गायोहिरसस्य भस्म गगनं वैक्रान्तकान्तत्रिकम्
सर्वैर्मध्यविभावयेन्मुनिमितं यष्टित्रिजाताग्निभिः ॥ ४९ ॥

मस्तोशीरवरावृषामृतशटीकन्या विदारी वरी
गोदुग्धे मुसलेक्षुवारिमृदितं गोलं पचेद्वासरम् ।
मध्याग्नौ च मृगाङ्कवत्पुटरसः सेव्यस्ततो भावने
द्वे कस्तूरिमृगाङ्कयोर्मधुकणायुक्तस्तु वल्लद्वयम् ॥ ५० ॥

मेहार्शोग्रहिणीजलोदरमहाव्याधीन् ज्वरान् कामिला-
पाण्डुं कुष्ठभगन्दरं बहुतरं मूलं च शुक्लत्रयम् ।
स्त्रीपुंसोरनपत्यतामिह रसः सर्वेश्वरश्चौषधम्
हन्ति स्याद्बलवीर्यवृद्धिरतुला पुष्टिश्च कान्तिस्तथा ॥

---

[1] वर्जितम्–मु, [2] एकपात्री कृतं–मु.

[पूर्णचन्द्रोदयरसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

पलं मृदु स्वर्णदलं रसेन्द्रः
पलाष्टकं षोडश गन्धकं च ।
शोणैश्च कार्पासभवप्रसूनै-
र्दिनं विमर्द्याथ कुमारिकाद्भिः ॥ ५२ ॥

तत्काचकुप्यां निहितं सुगाढं
मृत्कर्पटैस्तद्दिवसत्रयं च ।
पचेत्क्रमाग्नौ सिकताख्ययन्त्रे
ततो रजः पल्लवरागरम्यम् ॥ ५३ ॥

निगृह्य चैतस्य पलं पलानि
चत्वारि कर्पूररजस्तथैव ।
जातीफलं चोषणमिन्द्रपुष्पं
कस्तूरिकायामिह शाणमेकम् ॥ ५४ ॥

चन्द्रोदयोऽयं कथितः समास्रो
भुक्तोऽहिवल्लीदलमध्यवर्ती ।
मदोत्कटानां प्रमदाशतानां
गर्वाधिकत्वं शमयत्यकाण्डे ॥ ५५ ॥

श्रितं घनीभूतमतीव शुद्धं
मृदूनि मांसानि समण्डकानि ।
नवान्नमिष्टानि फलानि पथ्य-
मानन्ददायीन्यपराणि चात्र ॥ ५६ ॥

वलीपलितनाशनस्तनुभृतां वयस्तम्भनः
समस्तगदखण्डनः प्रचुररोगपञ्चाननः ।
गृहे न रसराडयं भवति यस्य चन्द्रोदयः
स पञ्चशरदर्पिनो मृगदृशां कथं वल्लभः ॥ ५७ ॥

[राजमृगाङ्करसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

माणिक्यगोमेधिकनीलतार्क्ष्य-
वैडूर्यमुक्ताफलराजवर्ताः ।
[1] पेरोजताह्यभ्रकपुष्यराग-
प्रवालवैक्रान्तकवज्रशङ्खाः ॥ ५८ ॥

पृथक् पृथक्कर्षयुतं सुवर्ण-
तारार्कमिश्रत्रयतीक्ष्णकान्तम् ।
मन्डूरसूतं बलिसूर्यकान्तं
[2]वराटकासर्परिशुक्तितालम् ॥ ५९ ॥

वङ्गाहिमुण्डाश्म[3]जिदिन्दुकान्तं
प्रत्येक[4]मक्षद्वयमेतदिष्टम् ।
विशोध्य चैतद्धसितं विदध्या-
द्विमुच्य तं गन्धकमेकमेव ॥ ६० ॥

शुभे दिने खल्वतले निधाय
सम्पूजयेद्भैरवविघ्नराजौ ।
लुङ्गाम्बुना मर्द्य दिनत्रयं च
गोलं विनिक्षिप्य सुभाण्डमध्ये ॥ ६१ ॥

तद्भाण्डमध्ये लवणं प्रपूर्य
पचेच्चतुर्याममथोत्तराग्नौ ।
तत्स्वाङ्गशीतं च विमर्द्य [5]भाव्या
जीरद्वयं शिग्रुमुशीरभृङ्गम् ॥ ६२ ॥

श्रीपुष्पसिन्धू रजनीद्वयं च
मुस्तां पृथग्भाव्य च सप्त वारान् ।
कस्तूरिकानुष्णमयूखकर्षं
संमर्द्य शोष्याथ करण्डमध्ये ॥ ६३ ॥

---

[1] पीरोजतास्याभ्रक-मु. [2] वराटिकापर्परिसूक्ति-मु [3] अमिन्दु-मु.
[4] मष द्वयमेव दुष्टम्-मु. [5] भावयेत्-मु.

शुभे मुहूर्ते तु सुचन्द्रतारा-
बले नियोज्यो भिषगुत्तमेन ।
गुञ्जाद्वयं वा त्रिचतुष्ककं वा
पणामधुभ्यां मरिचाज्ययुक्तम् ॥ ६४॥

तत्तद्रोगहितानुपानसहितो देयो मृगाङ्को रसो
यक्ष्मातङ्कभगन्दराश्म[1]रिरुजो वातादिजीर्णज्वरान् ।
अर्शांसि ग्रहिणीसपाण्डुखसनश्वासोदरप्लीहजा
हिक्काध्मानहलीमकं प्रदरकं कुष्ठं च गुल्मं जयेत् ॥ ६५॥

उद्वर्तनाभ्यञ्जनमर्दनं च
लाक्षादितैलं च सुगन्धतैलम् ।
दुकूलवस्त्रादिसुशुभ्रवस्त्रं
रत्नाद्यलङ्कारसुवर्णधारणम् ॥ ६६ ॥

कस्तूरिकाचन्द्रसुगन्धलेपनं
[2]महासहापुष्पसमूहधारणम् ।
सुवर्णरूप्यादिपलाशरम्भा-
पत्रेषु भुक्तं च घृताक्तदीपम् ॥ ६७॥

शाल्योदनं मुद्गपटोलवास्तुकं
ससूरणं चार्द्रकतण्डुलीयकम् ।
सुसौम्यमिष्टान्नयुतं च भुक्तं
ताम्बूलसेवा विधिवद्विधेया ॥ ६८॥

वलीपलितनिर्मुक्तो रमयेत्प्रमदाशतम् ।
अप्रजा युवती नारी पुत्रान् सूते महाबलान् ॥ ६९॥

आयुष्यं वर्धते दीर्घं जीवेद्वर्षशतं नरः ।
महाराजमृगाङ्कोऽयं महादेवेन भाषितः ॥ ७० ॥

---

[1] विरुजो–मु. [2] महानदा–मु.

[वसन्तसुकुमाररसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

स्वर्णं मुक्तादरदमरिचं भागवृद्ध्या क्रमेण
[1]खर्परेंष्टासुनवनवनीतेन निम्बाम्बुनाथ ।
यावत्स्नेहो व्रजति [2]निलयं मर्द्यते दीयतेऽसौ
[3]गुञ्जे द्वे द्वे मधु त्रपलया सर्वरोगे वसन्तः ॥ ७१ ॥

प्रदरं नाशयत्याशु तथा [4]दुर्नामशोणितम् ।
विषमं वा त्रिदोषं वा हन्ति सत्यं न संशयः ॥ ७२ ॥

[वसन्तकुसुमाकररसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

पृथग्द्वौ कनकं चन्द्रं त्रयो वङ्गाहिकान्तजम् ।
चत्वारः सूतमभ्रं च प्रवालं मौक्तिकं तथा ॥ ७३ ॥

भावना गव्यदुग्धेक्षुवाशाश्रिद्विनिशाजलैः ।
मोचाकन्दरसेनैव भाव्याः सप्त पृथक् पृथक् ॥ ७४ ॥

शतपत्ररसेनैव मालत्याः कुसुमेन च ।
पश्चान्मृगमदो भाव्यः सुसिद्धो रसराड् भवेत् ॥ ७५ ॥

कुसुमाकर इत्युक्तो वसन्तपदपूर्वकः ।
वल्लद्वयमितः सेव्यः सीतामध्वाज्यसंयुतः ॥ ७६ ॥

मेहघ्नः पुष्टिदः श्रेष्ठः परं वृष्यो रसायनः ।
वलीपलितहृन्मेध्यः कामदः सुखदो नृणाम् ॥ ७७ ॥

क्षयकासारुचिश्वासानम्लपित्ताश्मरीर्जयेत् ।
आयुर्वृद्धिकरः पुंसां प्रजाजनकशेखरः ॥ ७८ ॥

[त्रैलोक्यचिन्तामणिरसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

रसं वज्रं हेम तारं ताम्रं तीक्ष्णाभ्रकं मृतम् ।
गन्धकं मौक्तिकं शङ्खं प्रवालं तालकं शिलाम् ॥ ७९ ॥

---

[1] खर्परेंष्टौ मसृणमृदितं तेन—बृ. यो. त. [2] निचयं मर्दयेत्तावदेव — बृ. यो. त. [3] गुञ्जाद्वन्द्वं मधु—बृ. यो. त. [4] दुर्योग—बृ. यो. त, दुर्मांस—मु.

शोधितं च समं सर्वं सप्ताहं [1]भावयेद्दृढम् ।
चित्रमूलकषायेण भानुदुग्धैर्दिनत्रयम् ॥ ८० ॥

निर्गुण्डीसूरणद्रावैर्वज्रदुग्धैर्दिनं दिनम् ।
अनेन पूरयेत्सम्यक् पीतवर्णवराटिकाम् ॥ ८१ ॥

टङ्कणं रविदुग्धेन पिष्ट्वा तासां मुखं लिपेत् ।
दग्ध्वा भाण्डपुटे पश्चात्स्वाङ्गशीतं विचूर्णयेत् ॥ ८२ ॥

चूर्णतुल्यं मृतं सूतं वैक्रान्तं सूतपादकम् ।
शिग्रुमूलद्रवैः सर्वं सप्तवारं विभावयेत् ॥ ८३ ॥

चित्रमूलकषायेण भावना चैकविंशतिः ।
आर्द्रकस्य रसैः सप्तत्रिदिन विजयारसैः ॥ ८४ ॥

जम्बीरैर्मातुलुङ्गैर्वा सप्तवारं विभावयेत् ।
सूक्ष्मचूर्णं ततः कृत्वा चूर्णपादांशटङ्कणम् ॥ ८५ ॥

टङ्कणांशं वत्स[2]नाभं तत्समं [3]मरिचं क्षिपेत् ।
लवङ्गं नागरं पथ्या कणा जातीफलं पृथक् ॥ ८६ ॥

प्रत्येकं वत्सनाभस्य पादांशं चूर्णितं क्षिपेत् ।
मातुलुङ्गार्द्रकद्रावैः सर्वमेतद्विलोडयेत् ॥ ८७ ॥

चतुर्गुञ्जामितं खादेत्कणाक्षौद्रं लिहेदनु ।
क्षौद्रैर्वा चार्द्रकाद्रावैः शुण्ठ्या वा सगुडेन वा ॥ ८८ ॥

अनुपाने सदा खादेत्सर्वरोगप्रशान्तये ।

वह्निं दीपयते बलं च कुरुते तेजो महच्चच्छति
वीर्यं वर्धयते विषं च हरते दार्ढ्यं विधत्ते तनौ ।
अभ्यासेन निहन्ति मृत्युपलिते पुष्टिं प्रदत्ते नृणां
कासं कृन्तयते क्षयं क्षपयते श्वासं च निष्कासयेत् ॥ ८९ ॥

---

[1] भावयेद्धृतम्—मु. [2] नाभि—मु. [3] पर्यनु‍क्षिपेत—मु.

वातं विद्रधिशूलपाण्डुग्रहणीरक्तातिसारं जये-
न्मेहप्लीहजलोदराश्मरितृषाशोफं हलीमादिकम् ।
मूत्रकृच्छ्रभगन्दरग्रहगणानर्शांसि कुष्ठान्यपि
साध्यासाध्यरुजो निहन्ति रसराट्त्रैलोक्यचिन्तामणिः॥९०॥

[महाभूपतिरसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

तारं हेमभुजङ्गशुल्वगगनं वैक्रान्तवङ्गं शिला-
तीक्ष्णं ताप्यकतालकान्तममृतं प्रत्येककर्षं क्षिपेत् ।
सर्वं तत्समसूतसिन्धुरयुतं योज्यं क्षिपेत्कल्पितं
जम्बीरैः सह हंसपादिसुरसैर्मर्द्यं दिनैकैककम् ॥ ९१ ॥

तत्कल्कं मरिचप्रमाणघुटिकाः शोष्यं क्षिपेत्कूपिका-
स्वाच्छाद्यं कठिना मुखं द्रढयितुं लेप्यं च मृत्कर्पटे ।
यन्त्रे वालुकमध्यवेष्टितरसं यामान्पचेत् षोडश
शीतं चेद्धृतश्लक्ष्णचूर्णितरसं दान्ते करण्डे क्षिपेत् ॥ ९२ ॥

गुञ्जैका मधुशर्करात्रिकटुकं लेह्यं रुजं नाशये-
द्वातं पित्तकफादिदोषजनितान् दुःसाध्यनानाक्षयान् ।
पित्ताम्लं च गुदाङ्कुरान् जलधरं दुःसाध्यनानाज्वरान्
मेहं विंशतिमूत्रकृच्छ्रग्रहणीरोगातिसारान् हरेत् ॥ ९३ ॥

एष त्र्युत्तरसन्निपातदशकं वातानशीतिं जये-
त्सर्वव्याधिकुलान्तको रसवरः सेव्यो महाभूपतिः ।

[भूपत्यादयो दशरसप्रभेदाः]

भूपतिर्नवलोहाख्यो रसः सिद्धो लघुर्महान् ।
प्रतापप्राणदिव्याख्य उत्तमश्चेति ते दश ॥ ९४ ॥

[लक्ष्मीविलासरसद्रव्याणि, तन्निर्माणक्रमः, तदीयगुणाश्च]

सुवर्णताराभ्रकताम्रवङ्ग-
त्रिलोहनागामृतमौक्तिकं च ।

एतत्समं शुद्धरसस्य सर्वं
भस्मीकृतं स्यात्कृतकज्जलीयम् ॥ ९५ ॥

सम्मर्दयेन्माक्षिकसम्प्रयुक्तं
संशोषयेद्द्वित्रिदिनं च घर्मे ।
कल्कं च मूषोदरमध्यसंस्थं
यन्त्रीकृते तार्क्ष्यघटे विपक्वम् ॥ ९६ ॥

यामाष्टकं स्वाङ्गसुशीतलं स्या-
ल्लक्ष्मीविलासः प्रवरो रसेषु ।
क्षये त्रिदोषे गरजे सपाण्डौ
सकासिले शूलगदाष्टके च ॥ ९७ ॥

हन्त्यग्निमान्द्यं सकलज्वरांश्च
त्रयोदशोक्तानपि सन्निपातान् ।
प्लीहोदरानाहसगुल्मकुष्ठ-
निवारकोऽयं सुखदो नराणाम् ॥ ९८ ॥

[रसाष्टकनिरूपणोपसंहारः]

वर्णिताः क्रमशः सम्यगेवमष्टौ महारसाः ।

[अर्धनारीश्वररसद्रव्याणि, तत्साधनक्रमः, तदुपयोगविधिस्तद्गुणादिकं च]

रसगन्धामृतं चैव सर्वतुल्यं च टङ्कणम् ॥ ९९ ॥

मर्दयेत्तप्तखल्वे तु यावत्कज्जलसन्निभम् ।
नकुलस्य मुखे सम्यक् कज्जलं तद्विनिक्षिपेत् ॥ १०० ॥

भावयेद्रुक्मनिर्गुण्ड्या पुनः शाल्मलिकारसैः ।
सुदृढं तन्मुखं बध्वा तत्कुर्यात्कुण्डलीकृतम् ॥ १०१ ॥

दृढभाण्डस्य मध्यस्थमूर्ध्वाधो लवणं क्षिपेत् ।
वस्तमृत्तिकया सम्यक्चतुर्यामं हराग्निना ॥ १०२ ॥

स्वाङ्गशीतलमुद्धृत्य खल्वमध्ये विनिक्षिपेत् ।
भावयेद्रुक्मनिर्गुण्ड्या पुनश्शाल्मलिकारसैः ॥ १०३ ॥

शोषयेत्सूर्यतापेन रसः सिद्धो भविष्यति ।
पूजयेद्वटुविघ्नेशौ कुमारीमथ चण्डिकाम् ॥ १०४ ॥

गुञ्जाद्वयप्रमाणेन नस्यं कुर्याद्विचक्षणः ।
वामभागे ज्वरं हन्ति लोक आश्चर्यमश्नुते ॥ १०५ ॥

योजयेद्दक्षिणे भागे [1]आरोग्यं भवति ध्रुवम् ।
गुह्याद्गुह्यतरं गुह्यं गोपनीयं प्रयत्नतः ॥ १०६ ॥

अर्धनारीश्वरो नाम रसः सारेण निर्मितः ।

[रसौषधैः सिन्दूरनिर्माणक्रमः]

रसौषधानि सर्वाणि त्वग्निमध्ये विनिक्षिपेत् ॥ १०७ ॥

किञ्चिद्गन्धं धूमयुक्तं [2]रसयुक्तं सुपाचितम् ।
न ज्ञायते धूम[3]गन्धावतिपाकमनौषधम् ॥ १०८ ॥

वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति ।
घर्षणे रक्तवर्णं स्यात् सिन्दूरं तत्प्रशस्यते ॥ १०९ ॥

[वसन्तकुसुमाकरसिन्दूरलक्षणम्]

चाम्पेयकुसुमाभासं तद्गन्धेन च संयुतम् ।
लघुवारिकरं श्लक्ष्णं वसन्तकुसुमाकरम् ॥ ११० ॥

[राजमृगाङ्कसिन्दूरलक्षणम्]

बृहतीकुसुमाकारं लघुवारिकरं गुरु ।
घर्षणे कृष्णवर्णं स्यात् तन्मृगाङ्कस्य लक्षणम् ॥ १११ ॥

---

[1] नीरोगित्वं भवेद्ध्रु–मु. [2] दरदेन–मु. [3] गन्धौ पाकाधिक्यादनौषधम्–मु.

[भूपतिपूर्णचन्द्रोदयसिन्दूरयोः स्वरूपम्]

अतसीपुष्पसङ्काशो भूपतिर्लघुमानकः ।
दाडिमीपुष्पसङ्काशं पूर्णचन्द्रोदयाह्वयम् ॥ ११२ ॥

[रजतभस्मस्वरूपम्]

कस्तूर्यामोदसंयुक्तं मेहरोगापहं शुभम् ।
किञ्चित्कपिलशुभ्रांशु छेदे गुरु च निर्दलम् ॥ ११३ ॥

मृदुलं वर्णतः श्रेष्ठं स्वच्छवर्णं बलप्रदम् ।
[1]राजतं चाप्यतिश्वेतं भसितं [2]न च कर्बुरम् ॥ ११४ ॥

[ताम्रभस्मस्वरूपम्]

ताम्रं जम्बूफलाभासं गुरु स्याद्रेकवान्तिकृत् ।

[नागभस्मस्वरूपम्]

नागोऽपि रक्तवर्णः स्यात् किञ्चिच्छोणो जले [3]तरेत् ॥११५॥

[वङ्गभस्मस्वरूपम्]

शङ्खाभं वङ्गभस्म स्यादलघूत्थानवर्जितम् ।

[लोहभस्मस्वरूपम्]

लोहजं लोहसङ्काशं कृष्णवर्णं भवेल्लघु ॥ ११६ ॥

[कान्तभस्मस्वरूपम्]

प्रवालानलसङ्काशं कान्तभस्म लघूच्यते ।

[वैक्रान्तभस्मस्वरूपम्]

बृहतीपुष्पसङ्काशं वैक्रान्तस्य च भस्मकम् ॥ ११७ ॥

[अभ्रकभस्मस्वरूपम्]

लेखापूर्णं वारिकरमभ्रकं लघु चोत्तरम् ।

---

[1] राजितम्–मु.    [2] नचकर्बुरम्–मु.    [3] प्लवेत्–मु.

[ द्रवद्रव्यमानानि ]

बिन्दुः स्यान्मध्यमाङ्गुल्या मध्यपर्वच्युतो मतः ॥ ११८ ॥

बिन्दुद्वाविंशकमुडुरुद्ध द्वे [1]शुक्तिरिष्यते ।
[1]शुक्तिद्वयं प्रकुञ्चं तु तद्द्वयं प्रसृतं स्मृतम् ॥ ११९ ॥

अञ्जलिः प्रसृतिद्वन्द्वं कुडुबं चाञ्जलिद्वयम् ।
चतुःकुडुबकं प्रस्थः प्रस्थाश्चत्वार आढकः ॥ १२० ॥

चत्वार आढका द्रोणः खारी द्रोणचतुष्टयम् ।
घटः खारीचतुष्कं स्याद्द्रवद्रव्यस्य मानकम् ॥ १२१ ॥

[अद्रवद्रव्यमानानि]

परमाणोश्चतुष्कं यदणुरित्यभिधीयते ।
त्रसरेणुस्तच्चतुष्कं रेणुस्तस्य चतुष्टयम् ॥ १२२ ॥

[2]लीक्षा रेणुचतुष्कं स्यात्तस्मान्माधुरिका तथा ।
तच्चतुष्कं तु बिदरं व्रीहिस्तस्मात्तथा [3]स्मृतः ॥ १२३ ॥

व्रीहेस्स्माच्छकी तद्वच्छकयाश्चैव तथा पणः ।
ततः पणाष्टकं शाणं कर्षं शाणचतुष्टयम् ॥ १२४ ॥

[4]कर्षं चतुष्टयं प्रोक्तं पलमित्येव पण्डितैः ।
तुलां पलशतं विद्याद्भारस्तद्विंशतिः स्मृतः ॥ १२५ ॥

द्रवस्य चाद्रवस्यैवं क्रमान्मानं विधीयते ।

[क्वाथादिभेषजानां वीर्यावस्थितिकालविशेषाः]

क्वाथस्य कल्कस्य रसस्य यामं
मासं तु चूर्णं घुटिका द्विमासम् ।
षण्माससंस्थं गुडलेह्यवीर्यं
संवत्सरं तैलघृतस्य तिष्ठेत् ॥ १२६ ॥

रसलोहरसैर्युक्तं पुराणं गुणवद्भवेत् ।
मण्डलं च तदर्धं च तदर्धं सप्तकं तथा ॥ १२७ ॥

नवसप्तत्रिदिवसं भेषजानामिति क्रमः ।

---

[1] शक्ति–मु. [2] लिक्षा–मु. [3] मतः–मु. [4] कर्षश्चतुष्कैः–मु.

[स्त्रीणां पुरुषाणां च शैशवाद्यवस्थाभेदेन कल्कप्रमाणम्]

कल्कं निष्कं पादहीनं शिशूनां
[1] यूनामक्षं वार्धके च द्विनिष्कम् ।
स्त्रीणां निष्कं शैशवे पादहीनं
वृद्धे निष्कं मध्यमे च द्विनिष्कम् ॥ १२८ ॥

[हेमादिलोहानां रसेन्द्रस्य च प्रयोगे मानानि]

शान्तपाषाणवैक्रान्तगन्धकव्योमटङ्कणम् ।
हेमादिलोहमखिलं निष्कान्तं च पणाद्यकम् ॥ १२९ ॥
कलादिपणमात्रं तु प्रयोक्तव्यं रसेन्द्रकम् ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले द्रव्यगुणमहारसादिनिरूपणं नाम द्वाविंशस्तरङ्गः

---

## षष्ठकल्लोले त्रयोविंशस्तरङ्गः

### रसोपरसोत्पत्त्यादिवर्णनम्

[कुमारस्य रसोत्पत्त्यादिप्रश्नः, राज्ञस्तदुत्तरकथनप्रतिज्ञा च]

श्रीमद्भिः कथितं पूर्वं बहुधा रसवैभवम् ।
संसेवितं नृणां दद्यादजरत्वमिति स्फुटम् ॥ १ ॥
अत्यद्भुतमिति श्रुत्वा हृष्यतीदं मनोऽधिकम् ।
तस्योत्पत्त्यादिकं सर्वं रसेन्द्रस्य निरूप्यताम् ॥ २ ॥
सर्वलोकोपकारार्थं गुह्याद्गुह्यतरं हितम् ।
तत्सर्वं च प्रवक्ष्यामि शृणु नन्दन! सम्प्रति ॥ ३ ॥

[रसोत्पत्तीतिहासः]

*[2] पुरावसन्तलीलाढ्ये हिमवद्गिरिकन्दरे ।
कौतुकागारमागत्य क्रीडतोरावयोर्गतम् ॥ ४ ॥

---

* अयं रसभागो रससिद्धान्तशासनादुद्धृतः । तत्र तत्र पाठव्यत्यासः ग्रन्थस्खलनं च वर्तते । अत्र वाचकानुकूल्यार्थं प्रायस्ते सङ्गृहीताः ।

[1] अत्र 'यूनां निष्कं' इति पाठो युज्यते. [2] पुरावतंसली—रससि.

दिव्यं युगशतोपेतं सहस्रयुगमीश्वरि ! ।
तदा तारकदैत्येन बाधिताः सर्वदेवताः ॥ ५ ॥

मद्वीर्यंजनितं पुत्रं तद्वधार्थमभीप्सवः ।
अग्निमाज्ञापयामासुः सम्भोगस्य निवृत्तये ॥ ६ ॥

अग्निः कपोतरूपेण स्मरलीलां विलोकयन् ।
आस्ते तमग्निमाज्ञाय लज्जया रतमत्यजत् ॥ ७ ॥

प्रच्युतं चरमं धातुं स गृहीत्वैकपाणिना ।
तेन दन्दह्यमानोऽग्निर्गङ्गायां विससर्ज तत् ॥ ८ ॥

तेन गङ्गा तु सन्तप्ता तद्बहिर्विससर्ज च ।

[गङ्गाविसर्जितेश्वरचरमधातोः द्वैधीभावः, तत्रैकस्य स्कन्दरूपता च]

तद्द्विधाभूद्बहिः प्राप्य चैकं स्कन्दप्रसूतये ॥ ९ ॥

[धातोरितरभागस्य रसात्मता, भारते पतितस्य तस्य पञ्चकूपसंस्थितिश्च]

अपरः क्षेपसंरम्भादाकाशे पञ्चधाऽभवत् ।
स तु शुद्धरसो जातोऽप्यपतद्भुवि भारते ॥ १० ॥

शतयोजन[1]निम्नेषु पञ्चकूपेषु संस्थितः

[धात्वादीनां रसमूलता, तत्तद्भूविशेषसम्पर्कान्नामवर्णादिकं च]

तन्मूला धातवो जाता मणयो दिव्यवस्तु च ॥ ११ ॥

तत्तत्क्षेत्रविशेषेण नामवर्णादिकान् गुणान् ।
भिन्नान् प्राप्तो रसेन्द्रोऽयं जन्मदारिद्र्यभञ्जनः ॥ १२ ॥

[पञ्चानां रसकूपानां सद्योजातादिपञ्चमुखरूपता]

[2] सद्योजातादिनामाङ्काः पञ्च कूपास्तु ते स्मृताः ।
मुखवत्पञ्चवर्णाढ्यास्तत्तत्कर्मोपकारिणः ॥ १३ ॥

---

[1] निम्नेषु-मु.

[2] तानि कूपानि मे पञ्च सद्योजातानि तानि वै ।
मुखानि पञ्चवर्णानि निवृत्यादीनि तानि च ॥
पञ्च नामानि देवेशि ! सर्वतत्त्वयुतानि च । -रससि.

[पारददिक् तद्वर्णस्तदीयगुणाश्च]

पूर्वस्यां पारदः श्वेतो [1]नानारूपगदापहः।

[चञ्चलरसदिक् तदीयवर्णः तद्गुणाश्च]

चञ्चलो दक्षिणस्यां तु रसेन्द्रो नीलवर्णवान् ॥ १४ ॥

दोषहीनोऽतिरूक्षश्च सुतरां चपलः प्रिये!।
तेन जाता भुजङ्गेन्द्रा जराजन्म[2]गदापहाः ॥ १५ ॥

[सूतरसदिक् तद्वर्णः तदीयगुणाश्च]

पश्चिमा (मां) स्यां तु सूतश्च पीतवर्णोऽतिरूक्षकः।
सर्वदोषयुतोऽसौ तु शुद्धोऽष्टादशकर्मभिः ॥ १६ ॥

सर्वसिद्धिप्रदः सोऽयं [3]देहलोहादिसिद्धिदः।

[रसदिक् तद्वर्णस्तदीयगुणाश्च]

उत्तरस्यां रसो रक्तः सर्वदोषविवर्जितः ॥ १७ ॥

रसायनं तु तेनैव [4]जितं जन्मजराभयम्।

[मिश्ररसदिक् तद्वर्णः तदीयगुणाश्च]

मध्ये तु मिश्रको ज्ञेयः सर्ववर्णसमन्वितः ॥ १८ ॥

[5]क्वचिच्चन्द्रकसच्छायोऽशेषदोषसमन्वितः।

[सर्वेषां रसानामष्टादशशुद्धिभिः सिद्धिप्रदत्वम्]

स चाष्टादशसंस्कारैः शुद्धः सिद्धिप्रदो भवेत् ॥ १९ ॥

अन्ये च सर्वकार्येषु सिद्धिदा अपि कर्मभिः।
अष्टादशभिरत्यन्तं शुद्धाः सिद्धिप्रदा ध्रुवम् ॥ २० ॥

---

[1] नानायोगैर्गदापहः-रससि. [2] गदोज्झिताः-रससि. [3] देहलोहकरः स्मृतः-रससि. [4] जातं जन्मजरोज्झितम्-रससि. [5] बहिश्चन्द्रकसच्छायो दोषादोषसमन्वितः-रससि.

[रसानां श्वेतादिवर्णतश्चातुर्वर्ण्यपरिज्ञानं, तत्तन्नामान्वर्थता च]

श्वेतादिवर्णतो ब्रह्मक्षत्रविट्छूद्रमिश्रकाः ।
असाधारणसामर्थ्यात्सन्धत्ते नामपञ्चकम् ॥ २१ ॥

[पारदनामार्थनिरुक्तिः]

जन्मरोगजरामृत्युदारिद्र्याम्भोनिधेः परम् ।
पारं ददाति तेनैव पारदः परिकीर्तितः ॥ २२ ॥

[रसेन्द्रनामनिर्वचनम्]

रसोपरसलोहादिकर्तृत्वाच्च रसेन्द्रकः ।

[सूतनामनिरुक्तिः]

मम प्रत्यङ्गसूतत्वात्सूत इत्यभिधीयते ॥ २३ ॥

सूते यस्मात्सर्वसिद्धिं तस्मात्सूत इति स्मृतः ।

[रसनामनिरुक्तिः]

मम देहरसो यस्माद्रसस्तस्मात्प्रकीर्तितः ॥ २४ ॥

स्वयं च द्रवरूपत्वाद्रसशब्देन कीर्तितः ।

[मिश्रनामोपपत्तिः]

[1] मिश्रकस्त्वन्यसम्बन्धात्सर्वसिद्धिप्रदानतः ॥ २५ ॥

[पारदादीनां उपयोगः]

पारदो व्याधिसंहारे रसेन्द्रो रसकर्मणि ।
धातुकर्मणि सूतः स्याद्रसाख्यश्च रसायने ॥ २६ ॥

सर्वकर्मार्हकतया सर्वरूपतयापि च ।
सर्वसिद्धि[2]प्रदतया मिश्रकोऽयमुदाहृतः ॥ २७ ॥

---

[1] मिश्रको मिश्रवर्णत्वात्सर्वसिद्धिप्रदो मतः–रससि. [2] प्रदो देवि–रससि.

[रससिद्धेः सर्वासाधारण्याय ब्रह्मादिभिः शिवप्रार्थनं तदाप्रभृति शिवेन रसस्य दोषकञ्चुकयोजनम्]

अमोघशक्तिममलं सर्वसिद्धिप्रदं रसम् ।
आलोक्य त्रिदशाः सर्वे ब्रह्मविष्णुपुरोगमाः ॥ २८ ॥

शिवं सम्प्रार्थयामासुः स्तोत्रैश्च विविधैरपि ।
रसेन्द्रदर्शनादेव नरपक्षिमृगादयः ॥ २९ ॥

सिद्धिं नानाविधां यान्ति तं निवारय शङ्कर !
तैरिति प्रार्थितो दोषैः कञ्चुकैस्तमयोजयत् ॥ ३० ॥

[अष्टादशसंस्कारैर्विशुद्धरसस्य सिद्धिप्रदत्वम्]

[1]तदाप्रभृति दोषैश्च कञ्चुकैश्च विवर्जितः ।
शुद्धोऽष्टादशसंस्कारैः सूतो भवति सिद्धिदः ॥ ३१ ॥

[धूमादयः पञ्च रसावस्थाः]

धूमश्चिट[2]चिटिशब्दो मण्डूकप्लुतिरेव च ।
सकम्पश्च विकम्पश्च पञ्चावस्था रसस्य तु ॥ ३२ ॥

[धूमाद्यवस्थाचतुष्टयस्य दृश्यता, पञ्चमावस्थाया अदृश्यता, ध्यानादिभिस्तद्गतिरोधश्च]

रसावस्थाश्चतस्रोऽपि [3]दृश्यन्ते न तु पञ्चमी ।
ध्यानमन्त्रौषधाद्यैश्च रोद्धव्या पञ्चमी गतिः ॥ ३३ ॥

[पार्थिवादयो नैसर्गिका रसमलाः]

पार्थिवश्च तथैवाप्य आग्नेयश्चानिलस्तथा ।
नाभसो गजचर्माख्यः पुण्डरीको विसर्पकः ॥ ३४ ॥

हारिद्रो रक्तचर्माख्यो [4]नारङ्गो रक्तबिन्दुकः ।
असह्याग्निश्च मण्डूको मला नैसर्गिका मताः ॥ ३५ ॥

---

[1] तस्मान्मया कञ्चुकाभिर्दोषैश्चासौ नियोजितः—रससि. [2] चिटिश्चैव—रससि.
[3] नश्यन्ते—रससि. [4] सारङ्गो—मु

[औपाधिकाः कालिकादयः सप्त रसकञ्चुकाः]

कालिका मालिनी चैव कपोती [1]रक्तिका तथा ।
अलोमी गिरिजा चैव पिङ्गली सप्त कञ्चुकाः ॥ ३६ ॥
औपाधिका इमे सप्त पारदे परिकीर्तिताः ।

[यौनिकभेदाः]

त्रिषं नागश्च वङ्गश्च [2]यौनिकास्तु त्रयः स्मृताः ॥ ३७ ॥

[पार्थिवादिरसमलोद्भवरोगाः]

भौमस्तु कुष्ठदश्चाप्यो दोषोद्रे[3]कं करोति सः ।
आग्नेयः कुरुते दाहं वायव्यः शूलकृद्भवेत् ॥ ३८ ॥
बाधिर्यं नाभसो दोषो गजत्वग्गजचर्मकृत् ।
पुण्डरीको दद्रुकरो विसर्पः पिटकादिकृत् ॥ ३९ ॥
हारिद्रः पाण्डुकृत्प्रोक्तो रक्तत्वर्माक्षिपाटलम् ।
[4]नारङ्गोदुम्बरं कुष्ठं रक्तबिन्दुर्मसूरिकाम् ॥ ४० ॥
असह्याग्निर्मेहकारी मण्डूकश्चर्मकीलकृत् ।
मलो मूर्छाकरो देवि! ख्याता दोषोद्भवा गुणाः ॥ ४१ ॥

[औपाधिकरसकञ्चुकजा दोषाः]

कालिका कृष्णवर्णत्वं मलिनी मलसङ्ग्रहम् ।
कपोती [5]सर्वसादं च विस्फोटं [6]रक्तिका तथा ॥ ४२ ॥
सलोमी वमनं कुर्याद्गिरिजा जाड्यकारिणी ।
[7]पिङ्गल्या नेत्ररोगः स्यादिति कञ्चुकसप्तकम् ॥ ४३ ॥

[यौनिकसम्भवा दोषाः]

विषं मृत्युप्रदं नागो जाड्यं यच्छति वङ्गकः ।
कुरुते पूतिगन्धत्वं गुणा यौनिकसम्भवाः ॥ ४४ ॥

---

[1] रक्तकञ्चुका—रससि. मु. [2] यौगि—मु. [3] कविकारजः—रससि. [4] सारङ्गो—मु. [5] स्वरदाहं—रससि. स्वरसारं—मु. [6] रक्तकञ्चुका—रससि. वर्तिका तथा—मु. [7] पिङ्गली नेत्ररोगघ्नी गुणाः कञ्चुकजाः स्मृताः—रससि.

[रसग्रहणप्रकारः]

प्रथमार्तवसुस्नाता सुरूपा शुभलक्षणा ।
शुद्धाम्बरधरा माल्यगन्धलिप्ता सुभूषिता ॥ ४५ ॥

उत्तमाश्वसमारूढा पतिसङ्गविवर्जिता ।
अभ्यर्च्य गणनाथं च रसेन्द्रं च गुरुं तथा ॥ ४६ ॥

रसेन्द्रमीश्वरं ध्यात्वा कूपस्थं पारदं तथा ।
पश्येच्छीघ्रं ततो गच्छेत्पुनः पृष्ठं न वीक्षयेत् ॥ ४७ ॥

एकयोजनमात्रेण कुमारी [1] ह्यसाधना ।
तदानीं हरेतस्तु कुमारीसन्निघृक्षया ॥ ४८ ॥

कूपमध्यात्समुत्पत्य सोऽनुधावति तां प्रति ।
यावद्योजनमागत्य पुनः कूपं विशेत् क्षणात् ॥ ४९ ॥

परितः कृतगर्तेषु तेषु तेषु च संस्थितिम् ।
तं रसेन्द्रं शुचिर्भूत्वा गृह्णीयाद्रसदेशिकः ॥ ५० ॥

[पारदशोधनक्रमः]

गौरवादग्निवदनात्पतितो दरदः क्षितौ ।
[2] देशेषु सूतो भूलीनस्तन्त्रज्ञैः रसकोविदैः ॥ ५१ ॥

निक्षिप्य मृत्तिकायन्त्रे पातनाख्ये समासतः ।
पारदो गृह्यते [3] शुद्धः सप्तकञ्चुकवर्जितः ॥ ५२ ॥

[रसस्थापनवीक्षणयोः फलविशेषः]

एवमेवं तत्र तत्र सिद्धैर्विद्याधरैः सुरैः ।
निक्षेपतः पारदेन्द्रो [4] विद्यते सर्वसिद्धिदः ॥५३॥

---

[1] जयसाधना—रससि. [2] देशे स सूतो—रससि. [3] देवि! दोषहीनः स कथ्यते—रससि. [4] वक्ष्यते—रससि.

[1]सेतुकेदारपर्यन्तं दिव्यलिङ्गौघदर्शने ।
यत्पुण्यं लभते मर्त्यः [2]तल्लभेत रसेक्षणात् ॥ ५४ ॥

अभिधानानि जानन्ति ये चापि रससंहिताम् ।
सर्वदेशीयभाषाज्ञाः [3]संग्राह्यास्ते तु वार्तिकाः ॥ ५५ ॥

[रसवैद्यलक्षणानि]

समस्तमूलिकाऽभिज्ञः शुचिर्दक्षो जितक्लमः ।
अनुरक्तो निमित्तज्ञः बुद्धिमान् परिचारकः ॥ ५६ ॥

धर्मिष्ठः सत्यवाग्विद्वान् शिवकेशवपूजकः ।
पद्महस्तश्च सम्पूज्यो रसवैद्यः स कथ्यते ॥ ५७ ॥

[भूनागादयोऽष्टौ महारसाः]

भूनागघनवैक्रान्तविमलाताप्य[4]तुत्थकाः ।
खर्परी राजवर्तश्च ख्याता अष्टौ महारसाः ॥ ५८ ॥

सुधोपमानि सत्त्वानि तेषामत्र न संशयः ।

[गन्धकादयोऽष्टावुपरसाः]

गन्धकं कुष्ठकासीसशिलाः काङ्क्षी वराटिका ॥ ५९ ॥

गैरिकस्तालकश्चाष्टावुपपूर्वा रसा अमी ।

---

[1] रसस्य स्मरणं पुण्यं दर्शनं स्पर्शनं तथा ।
पूजनं भक्षणं दानं भोगपुण्यमुदीरितम् ॥
सर्वसिद्धिप्रदं देवि ! सर्वकामफलप्रदम् ।
स्मरणं रसराजस्य सर्वोपद्रवनाशनम् ॥
हृदम्भोजस्थितं . नश्यते तानि पार्वति !
दर्शनं पारदेन्द्रस्य हन्ति पापं त्रिकालजम् ॥
सेतु केदार....... । इति रससि. पाठः ।

[2]तत्कोटिगुणितं भवेत्–रससि. [3]निघण्टुज्ञाश्च वार्तिकाः–रससि.

[4]तुच्छकाः–मु.

[गिरिसिन्दूरादयः साधारणरसाः]

गिरिसिन्दूर[1]पोदारशृङ्गिगौरिशिलाञ्जनम् ॥ ६० ॥
काम्पिल्लश्चपलः प्रोक्ताः साधारणरसा इमे ।

[हिङ्गुलादयश्चत्वारः शक्तिरसाः]

हिङ्गुलं सस्यकं चैव शिलाजित्वग्निजारकः ॥ ६१ ॥
एते शक्तिरसाः प्रोक्ताश्चत्वारो रसशासने ।

[रसोद्भवा माणिक्यादयो नव मणयः]

माणिक्यमुक्तावैडूर्यनीलगारुडविद्रुमाः ॥ ६२ ॥
गोमेदपुष्परागौ च वज्रश्च मणयो नव ।

[सूर्यकान्तादीनि त्रीणि उपरत्नानि पाक्षिकलोहकान्तोपरत्नता च]

सूर्यकान्तश्चन्द्रकान्तस्तारकान्त इति त्रयः ॥ ६३ ॥
त्रीण्येव चोपरत्नानि लोहकान्तं च केचन ।

[सूतोद्भवाः स्वर्णादयोऽष्टौ लोहाः, घोषादयस्त्रय उपलोहाश्च]

स्वर्णं रौप्यं ताम्रनागौ वङ्गं कान्तं च तीक्ष्णकम् ॥ ६४ ॥
मुण्डं चेत्यष्टधा लोहाः घोषो वर्तश्च रीतिका ।
उपलोहास्त्रयः प्रोक्ताः सूतसिद्धान्तशासने ॥ ६५ ॥

[भूनागसत्त्वोत्पादनक्रमः, तदीयगुणाश्च]

अथतेषां समुत्पत्तिं लक्षणं च क्रमाद्ब्रुवे ।
वज्राणां द्रावणार्थाय सत्त्वं भूनागजं ब्रुवे ॥ ६६ ॥

---

[1] मोदाश्मभृङ्गीगैरिशिलाञ्जनम्–रससि. मु.

तदेव परमं तेजः सूतराजेन्द्रवज्रयोः ।
भुजङ्गमानुपादाय चतुःप्रस्थसमन्वितान् ॥ ६७ ॥

सुवर्णरूप्यताम्रायस्कान्तसम्भूतभूमिजान् ।
प्रक्षाल्य रजनीतोयैः शीतलैश्च जलैरपि ॥ ६८ ॥

उपोषितमयूरं वा [1]शूरं वा चरणायुधम् ।
क्रमेण चारयित्वा वा तद्विष्ठां समुपाहरेत् ॥ ६९ ॥

क्षाराम्लैः सह सम्पेष्य विशोष्य च खरातपे ।
ततः खर्परके क्षिप्त्वा भर्जयित्वा मर्षी चरेत् ॥ ७० ॥

मर्षी द्रावणवर्गेण संयुक्तां सम्प्रमर्दिताम् ।
निरुध्य कोविकामध्ये प्रथमे घटिकाद्वयम् ॥ ७१ ॥

शीतभूतं तु मूषाया घोटमाहृत्य पेक्षयेत् ।
क्षाल्य नवकान् पांसून् समादाय प्रयत्नतः ॥ ७२ ॥

सुवर्णमानव[2]दूध्मात्वा रवं कृत्वा नियोजयेत् ॥

भूनागोद्भवसत्त्वमुत्तमतमं श्रीसोमदेवोदितं
दत्तं [3]पादमितं द्विशाणकनकेनैकं गतेनोर्मिकाम् ।
तद्धौताम्बुविलेपनं स्थिरचरोद्भूतं विषं नेत्ररु-
ग्दुर्नामानि च कर्णरोगमखिलं हन्यात्प्रसूतिग्रहम् ॥ ७३ ॥

[अभ्रकोत्पत्तिः तस्य भूसङ्गात्त्रैविध्यं च]

कदाचिद्गिरिजा देवी हरं दृष्ट्वा मनोहरम् ।
अमोचयत्तदा शुक्रं तज्जातं शुभ्रमभ्रकम् ॥ ७४ ॥

पीतं रक्तं तथा कृष्णं भेदोऽभूद्भूमिसङ्गमात् ।

[वैक्रान्तोत्पत्तिः तस्य वज्राकारता च]

दैत्येन्द्रो महिषः सिद्धो हरदेहसमुद्भवः ॥ ७५ ॥

---

[1] शुक्रं—रससि. मु.  [2] दध्मात्वा—रससि.  [3] पादमिदं—मु.

दुर्गा भगवती देवी तं शूलेन व्यदारयत् ।
तस्य रक्तं तु पतितं यत्र यत्र स्थितं भुवि ॥ ७६ ॥
तत्र तत्र तु वैक्रान्तो वज्राकारो महारसः ।

[वैक्रान्तवज्रलक्षणं तस्य विन्ध्यदक्षिणोत्तरयोः क्रमात् स्थित्यभावौ च]

विन्ध्यस्य दक्षिणे चास्ति सर्वथा नास्ति चोत्तरे ॥ ७७ ॥
अष्टाश्रकोऽष्ट[1]फलकः षट्कोणो मसृणो गुरुः ।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ ७८ ॥

[वैक्रान्तवज्रस्य वर्णतोऽष्टौ प्रभेदाः]

श्वेतो रक्तश्च पीतश्च नीलः पारावतच्छविः ।
श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टमः स्मृतः ॥ ७९ ॥

[विमलरत्नोत्पत्तिः तत्प्रभेदः तेषां लक्षणानि तद्विनियोगः तेषां पूर्वपूर्वस्य गुणाधिक्यं च]

पुरामृतकणा देवि! पतिता देवतामुखात् ।
शुष्कास्ते विमलाः प्रोक्ताः सर्वकर्मकराः शुभाः ॥ ८० ॥
त्रिविधास्ते महेशानि ! हेमाद्यास्तारपूर्विकाः ।
अन्यश्च कांस्यविमलो रत्नसिद्धान्तशासने ॥ ८१ ॥
वर्तुलः कोणसंयुक्तः तिर्यक्सुफलकान्वितः ।
पूर्वो हेमक्रियायुक्तो द्वितीयो रौप्यकृन्मतः ॥ ८२ ॥
तृतीयो भेषजे तेषु पूर्वः पूर्वो गुणाधिकः ।

[माक्षिकोत्पत्तिः तस्य निम्बफलसङ्काशता च]

कृष्णपादतले विद्धे व्याधेन मृगशङ्कया ॥ ८३ ॥
तत्र ये पतिता भूमौ क्षताद्रुधिरबिन्दवः ।
ते निम्बफलसङ्काशा जाता माक्षिकगोलकाः ॥ ८४ ॥

---

[1] फलकः—ग.

[माक्षिकद्वैविध्यं तन्नामजन्मस्थलादिकं च]

माक्षिको द्विविधो हेममाक्षिक[1]स्तारमाक्षिकः ।
तत्राद्यो माक्षिकः कन्याकुब्जोत्थस्वर्णसन्निभः ॥ ८५ ॥

[2]तपतीतीरसम्भूतः पञ्चवर्णसुवर्णवत् ।

[तुत्थोत्पत्तिः तत्स्थानं तस्य मयूरकण्ठसादृश्यं च]

पीत्वा हालाहलं तद्वदमृतं च गरुत्मता ॥ ८६ ॥

विषेणामृतयुक्तेन गिरौ मरकताह्वये ।
तद्वान्तं हि घनीभूतं सञ्जातं तुत्थकं खलु ॥ ८७ ॥

मयूरकण्ठसच्छायं भाराढ्यमिति शस्यते ।

[त्रिविधरसिकोत्पत्तिः तेषां मृत्पाषाणगुडसादृश्यं तदीयवर्णादिकं च]

मृत्पाषाणगुडैस्तुल्यस्त्रिविधो रसिको मतः ॥ ८८ ॥

पीतस्तु मृत्तिकाकारो मृत्तिकारसिको वरः ।
गुडाभो मध्यमो ज्ञेयः पाषाणाभः कनिष्ठकः ॥ ८९ ॥

[राजावर्तोत्पत्तिः तस्य गन्धकाख्या तद्गुणाः तस्य रससमानधर्मता च]

राजाऽवर्तोऽल्परक्तोरुनीलिमाश्रितसुप्रभः ।
गुरुश्च मसृणः श्रेष्ठस्तदन्यो मध्यमः स्मृतः ॥ ९० ॥

क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ।
निजगन्धेन तान् सर्वान् हर्षयन् सुरदानवान् ॥ ९१ ॥

तत्तु देवगणैर्गुप्तं गन्धकाख्यां समाश्रयत् ।
रसस्य बन्धनार्थाय जारणाय च जायते ॥ ९२ ॥

ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्ति हि ।

---

[1] स्ताम्र–रससि. [2] तपतीतटसंभूतः–रससि. ततः पतिरसं–मु.

[गन्धकचातुर्विध्यं तदीयवर्णाः तदीयोपयोगाः कृष्णगन्धकस्य दौर्लभ्यं च]

चतुर्धा गन्धको ज्ञेयो वर्णैः श्वेतादिभिः स्वयम् ॥ ९३ ॥

श्वेतोऽत्र स्फटिकाभः स्यात् शस्तोऽसौ [1]लोहमारणे ।
तथामलकसाराख्यो यो भवेत्पीतवर्णवान् ॥ ९४ ॥

शुकपिच्छः स एव स्याच्छ्रेष्ठोऽसौ तु रसायने ।
रक्तस्तु शुकतुण्डाख्यो धातुवादविधौ परः ॥ ९५ ॥

दुर्लभः कृष्णवर्णश्च जरामृत्युविनाशनः ।

[कङ्कुष्ठोत्पत्तिस्थानं, तस्य नालिकारेणुकाख्याभ्यां द्वैविध्यं, तदीयविशेषाश्च]

हिमवत्पादशिखरे कङ्कुष्ठमुपजायते ॥ ९६ ॥

तत्रैकं नालिकाख्यं हि तदन्यद्रेणुकं मतम् ।
पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् ॥ ९७ ॥

श्यामं पीतं लघु त्यक्तसत्त्वं नेच्छन्ति रेणुकम् ।

[कासीसलक्षणं तत्प्रभेदः तदीयप्रयोजनं च]

([2]कासीसं रेणुकाद्येकं पुष्पपूर्वमथापरम् ॥ ९८ ॥

क्षाराभं गुरु पुष्पाद्यं सोष्णवीर्यविषापहम् ।
वालुका पूर्वकं तत्र विषघ्नं केशरञ्जनम् ॥ ९९ ॥)

[मनःशिलाप्रभेदाः, तन्नामानि, तदुत्तरोत्तरश्रेष्ठता च]

मनश्शिला त्रिधा प्रोक्ता श्यामला करवीरका ।
कन्दाख्या चेति[3] निर्दिष्टा श्रेष्ठा तासूत्तरोत्तरा ॥ १०० ॥

---

[1] लोहपूरणे-म. [2] अयं धनुरङ्कितो भागः मुद्रितपुस्तके नास्ति. [3] तद्रूपं विविच्य परिकथ्यते-रससि.

[श्यामादिमनःशिलास्वरूपं यथोत्तरं तदीयगुणकृतश्रेष्ठता च]

श्यामा रक्ता च गौरा च भाराढ्या श्यामिका मता ।
तेजस्विनी च निर्गाढा स्वर्णाभा करवीरका ॥ १०१ ॥

चूर्णीभूतातिरक्ताङ्गी [1]तृतीया रससंयुता ।
यथोत्तरं गुणैः श्रेष्ठा भूरिसत्त्वा प्रकीर्तिता ॥ १०२ ॥

[मृत्स्नोत्पत्तिस्थानं तदीयश्रेष्ठता च]

सौराष्ट्रखनिसम्भूता मृत्स्ना या तु वरा मता ।

[मञ्जिष्ठास्वरूपं तत्प्रभेदः तदीयगुणविशेषाश्च]

[2]वस्त्रे तु लिप्यते या सा [3]मञ्जिष्ठारागवर्धिनी ॥ १०३ ॥

पीतिका स्फुटिका चेति द्विधा सा परिकीर्तिता ।
ईषत्पीता गुरुः स्निग्धा पीतिका विषनाशिनी ॥ १०४ ॥

[4]व्रणकण्डूहरा सर्वविषघ्नी च विशेषतः ।
निर्भरा शुभ्रवर्णा च स्निग्धा साम्ला परा मता ॥ १०५ ॥

[स्त्रीपुरुषभेदेन वराटकाद्वैविध्यं तत्स्वरूपादिकं मानभेदेन तत्तारतम्यं च]

वराटिका द्विधा प्रोक्ता बुधैः स्त्रीपुंविभेदतः ।
पीताभा ग्रन्थिला क्षुद्रा [5]दीर्घा वृत्ता वराटिका ॥ १०६ ॥

रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञिका ।
सार्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ॥ १०७ ॥

पादोननिष्कभारा तु कनिष्ठा परिकीर्तिता ।

[गैरिकद्वैविध्यं तदीयस्वरूपविशेषश्च]

द्विविधं गैरिकं प्रोक्तं पाषाणस्वर्णभेदतः ॥ १०८ ॥

---

[1] सभारा खण्डपूर्विका–रससि. [2] वस्त्रेषु–रससि. [3] मञ्जिष्ठाङ्गारव–म.मु.
[4] इदमर्धं मुद्रितकोशे नास्ति. [5] दीर्घवृत्ता.

तत्राद्यं ताम्रवर्णाढ्यं कठिनं परिकीर्तितम् ।
अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् ॥ १०९ ॥

[तालद्वैविध्यं, तदीयगुणाः, तदुपयोगश्च]

[1]तालकं द्विविधं प्रोक्तं पत्रपिण्डप्रभेदतः ।
तत्राद्यो बहुपत्राढ्यो [2]तरुपत्रश्च भासुरः ॥ ११० ॥

स्वर्णवर्णो गुरुः स्निग्धः शस्यते च रसायने ।
निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु ॥ १११ ॥

स्त्रीपुष्पहरणे दक्षो द्वितीयः परिकीर्तितः ॥

[सिन्दूरस्थानं, तत्स्वरूपं, तदुद्भवदेशश्च]

गिरेरधित्यकायां तु [3]पाषाणान्तःस्थितं रजः ॥ ११२ ॥

[4]शुष्कः शोणप्रभः प्रोक्तो गिरिसिन्दूरसंज्ञकः ।
सदलं पीतवर्णं च भवेद्गुर्जरमण्डले ॥ ११३ ॥

[बोदारश्रृङ्गकोत्पत्तिस्थानम्]

अर्जुनस्य गिरेः पार्श्वे जातं [5]बोदारश्रृङ्गकम् ।

[गौरीपाषाणकस्वरूपं, तद्गुणाश्च]

गौरीपाषाणकः पीत ईषद्रक्तस्तु चूर्णितः ॥ ११४ ॥

---

[1] हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् ।
स्वर्णवर्णं गुरु स्निग्धं तनुपत्रं च भासुरम् ॥
तत्पत्रतालकं प्रोक्तं बहुपत्रं च भासुरम् ।
निष्पत्रं पिण्डसदृशं स्वल्पपत्रं तथा गुरु ।
स्त्रीपुत्रहरणं तत्तु गुणाल्पं पिण्डतालकम्—रससि.

[2] भासुरस्तरुपत्रकः—मु. [3] पाषाणं तत्स्थितं—मु. [4] शुभ्रः छ्णः स निर्दिष्टो गिरिसिन्दूरसंज्ञया—रससि. [5] पोदरश्रृङ्गकम्—मु..

रसबन्धकरः स्निग्धो दोषघ्नो लोहवेधकृत् ।

[सौवीराद्यञ्जनपञ्चकम्]

सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् ॥ ११५ ॥

स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनमतः परम् ।
नीलाञ्जनमिति प्रोक्तं भेदपञ्चकसंयुतम् ॥ ११६ ॥

[कम्पिल्लकस्वरूपं, तदुत्पत्तिस्थानं च]

इष्टकाचूर्णसङ्काशश्चन्द्रिकाद्युतिरेचनः ।
सौराष्ट्रदेशखनिजो [1] नाम्ना कम्पिल्लको मतः ॥ ११७ ॥

[चपललक्षणं, तत्प्रभेदाः, तत्स्वभावः, विषे विशेषः, तद्विनियोगश्च]

चपलः स्फटिकच्छायः षडश्रः स्निग्धको गुरुः ।
चपलो बहुभेदश्च सर्वलोहकरो मतः ॥ ११८ ॥

[2] हेमतारो रविमयः सीसात्मा वङ्गरूपधृत् ।
तीक्ष्णरूपः कांस्यरूपः रक्तो विषमयस्तथा ॥ ११९ ॥

तत्र लोहसदृक्षोऽस्ति विषो हरितवर्णभाक् ।
विषाख्यं चपलं [3]बद्ध्वा निर्जने स्थापयेत्क्वचित् ॥ १२० ॥

तद्धूमालोकनाच्छीर्षपीडा सञ्जायते नृणाम् ।
अज्ञानात्तस्य संस्पर्शे म्रियते सद्य एव हि ॥ १२१ ॥

सर्वेषां चपलानां वै स्वभावोऽयमुदाहृतः ।
नागस्तम्भे नागरञ्जे क्रमेणातीव शस्यते ॥ १२२ ॥

सर्वलोहानि कुर्वीत सुवर्णं तारमेव वा ।
युक्त्याऽयं साधितः सूतो विना बीजांशकेन च ॥ १२३ ॥

---

[1] नामतः सिद्धको मतः—मु. [2] हेमस्तारो—मु. [3] बध्वा—मु.

[हिङ्गुलत्रैविध्यं, तन्नामानि, तद्गुणाः, तेषामुपयोगः, तदुत्तमत्वादिकं च]

हिङ्गुलस्त्रिविधो ज्ञेयश्चर्मारः शुकतुण्डकः ।
हंसपादश्च तत्राद्यं हेमकृत्ये नियोजयेत् ॥ १२४ ॥

अधमं तं विजानीयाच्छुकतुण्डं तु मध्यमम् ।
उत्तमं हंसपादं च योजयेद्धेमरूप्ययोः ॥ १२५ ॥

चर्मारस्तीक्ष्णरूपः स्यात्सुपीतः शुकतुण्डकः ।
जपाकुसुमसङ्काशो हंसपादो महोत्तमः ॥ १२६ ॥

रसायने सर्वरोगहरणे लोहरञ्जने ।
सूतस्य रञ्जने श्रेष्ठो वर्णोत्कर्षणकर्मणि ॥ १२७ ॥

[दरदस्य वैक्रान्तसमगुणता, मलादिराहित्यं, सर्वयोगोपयोज्यता च]

वैक्रान्त इव सर्वत्र दरदो जायते गुणी ।
मलदोषादिकं नास्ति सर्वयोगेषु युज्यते ॥ १२८ ॥

[सस्यकोत्पत्तिः, तस्य पञ्चविधता, तन्नामानि, तद्गुणाः, तदुपयोगाश्च]

सस्यकस्तु समायुक्तो भेदैः पञ्चभिरीरितैः ।
पुरा देवसुधापानकाले पञ्चप्रभा[1]न्वितः ॥ १२९ ॥

भूतले पतितो देवि! सुधाया विन्दुजालकः ।
ततः सस्यकनामाभूत्पञ्चभेदसमन्वितः ॥ १३० ॥

[सस्यकप्रभेदनामानि, तद्गुणाः, तदुपयोगाश्च]

धवलो मेचकः पीतो हरितश्चापि लोहितः ।
रसस्य रागदो लेशमात्रेण न हि संशयः ॥ १३१ ॥

शतं सहस्रं लक्षं वा वेधयेन्नात्र संशयः ।
धवलो हरितश्चैव तारकर्मणि शस्यते ॥ १३२ ॥

---

[1] युतः—मु.

लोहितो मेचकः पीतः स्वर्णं तु विनियुज्यते ।
माषमात्रं प्रदातव्यं नाधिकं धीमता सदा ॥ १३३ ॥

[1] नागवद्द्रवति क्षिप्रं स्थिररागस्वभावतः ।

[शिलाजतुप्रभेदावान्तरप्रभेदाः, तद्गुणाः, हिमगिरेस्तदुत्पत्तिक्रमश्च]

शिलाजतुर्धातुविद्भिर्द्विविधः परिकीर्तितः ॥ १३४ ॥

गोमूत्राभस्तत्र पूर्वो रसायनमिति स्मृतः ।
कर्पूरपूर्वकश्चान्त्यस्तत्राद्यो द्विविधः स्मृतः ॥ १३५ ॥

ससत्वश्चैव निःसत्वस्तयोः पूर्वो गुणाधिकः ।
ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः ॥ १३६ ॥

[2] स्वर्णरूप्यार्कगर्भेभ्यः शिलाधातुर्विनिस्सरेत् ।

[स्वर्णगिरिजशिलाजतुः तद्गुणाः तस्य रसायनोत्तमत्वं च]

स्वर्णगर्भगिरौ जातो जपापुष्पनिभो गुरुः ॥ १३७ ॥

स्वल्पतिक्तश्च सुस्वादुः परमश्च रसायनः ।

[रूप्यगर्भगिरिजः शिलाजतुः, तद्वर्णगुणादिकं च]

[3] रूप्यगर्भगिरेर्जातो मधुरः पाण्डुरो गुरुः ॥ १३८ ॥

[ताम्रगर्भगिरिजः शिलाजतुः, तद्वर्णस्तदीयगुणाश्च]

ताम्रगर्भ[4]गिरौ जातो नीलवर्णो घनो गुरुः ।
शिलाजित्कफवातघ्नस्तिक्तोष्णश्च प्रमेहजित् ॥ १३९ ॥

---

[1] नागः म द्रवति क्षिप्रम्–मु. [2] स्वर्णरूपार्कदर्भेभ्यः–मु. [3] इतः पूर्वं–शिलाजं पित्तरोगघ्नं विशेषात्पाण्डुरोगहृत्–इति रससि. पाठः । [4] शिलाजातो–रससि.

[सिद्धशिलाजतुलक्षणम्]

वह्नौ क्षिप्तो भवेद्योऽसौ लिङ्गाकारो ह्यधूमकः ।
सलिलेऽप्यविलीनश्च स [1] सिद्धो हि शिलाजतुः ॥ १४० ॥

[अग्निजारोत्पत्तिः, रसोपरसभेदनिरूपणोपसंहारश्च]

समुद्रेणाग्निनक्रस्य जरायुर्बहिरुज्झितः ।
संशुष्को भानुतापेन सोऽग्निजार इति स्मृतः ॥ १४१ ॥

रसाश्चोपरसास्तेषां भेदाश्चैवं समीरिताः ।

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले रसोपरसोत्पत्त्यादिवर्णनं नाम त्रयोविंशस्तरङ्गः

---

## षष्ठकल्लोले चतुर्विंशस्तरङ्गः

### रससंस्कारादिनिरूपणम्

[रसक्रियाकरणौषध्यादिनिरूपणप्रतिज्ञा]

रसोपरसमुख्यानि प्रोक्तान्येवं मयाधुना ।
रसक्रियायां करणमोषध्यादि निरूप्यते ॥ १ ॥

[ईश्वर्यादिदिव्यौषधिगणः]

ईश्वरी भूतकेशी च क्षत्रिणी ताम्रवल्लिका ।
ज्योतिर्लता च गोशृङ्गी रुदन्ती देव[2]दालिका ॥ २ ॥

पद्मिनी काकिनी रक्तलता लशुनवल्लरी ।
भूतुम्बी तुम्बिनी पीतवल्ली गरुडवल्लिका ॥ ३ ॥

[3] त्रिशूलिनी चमरिका गोमारी भग्नवल्लिका ।
महौषधी व्याघ्रपादी गान्धर्वी कृष्णवल्लरी ॥ ४ ॥

---

[1] शुद्धो-रससि. [2] दारिका-रससि. ग. [3] त्रिशूलिनी-रससि.

चण्डाली वीरवल्ली च रोहिणी मुनिवल्लिका ।
बिल्विनी लोचनलता मण्डूकी मूलकन्दकम् ॥ ५ ॥

तिलकन्दोऽतसीवल्ली महामाषः करीरकम् ।
ब्रह्माणी माधवी [1] निम्बा वल्ली कूर्मलता तथा ॥ ६ ॥

करीरवल्लरी चेति रसबन्धं वितन्वते ।

[जलोत्पलादिवनौषधिगणः]

जलोत्पला समङ्गा च [2] रसा ज्ञाजलपिप्पली ॥ ७ ॥

स्थलप्रसारिणी [3] चिन्त्या जालिनी जलमूलकम् ।
[4] चन्द्रिका चार्धचन्द्रश्च जलहेमागमस्तथा ॥ ८ ॥

तुशाम्बुः काकमाची च जलकुम्भी तथा परा ।
उत्तमा हेमपुष्पी च दुर्गन्धा शीतगन्धिनी ॥ ९ ॥

[5] मण्डूकी रोहिणी मांसी पाषाणी वायसी शिखा ।
शारिबाऽलम्बुसा मेघानाडी च शुकनासिका ॥ १० ॥

[6] पताकी क्षीरिणी वज्री तण्डकारापराजिका* ।
नन्दिनी शिखिपादा च कपोती तुलसी तथा ॥ ११ ॥

वनकूष्माण्डवल्ली च वृश्चिकाली च वेणुका ।
मुसली चित्रपत्रा च कर्णिस्फोटी तथा परा ॥ १२ ॥

अष्टषष्टिरिति प्रोक्ता वनौषध्यो महाबलाः ।

---

[1] निम्बा लता—रससि. मु. [2] रसालजलवल्लरी—रससि. [3] चिञ्चा जारिणी—रससि. [4] चन्द्रोदकार्धचन्द्रश्च जलागमार्गकस्तथा—रससि. [5] मण्डूकामोदिनी—रससि. [6] पोतकी क्षीरिणी वज्रतन्द्रिका (हन्दिका) चापराजिता—रससि.

* एतदुपरि रससिद्धान्तशासने सार्धमिदं पद्यं अधिकं वर्तते—

वनमाली वदारी च कुक्कुटी हरिणी करी ।
वाराही बृहती तद्वत्सर्पाक्षी यवचिञ्चिका ॥
........नसगोजिह्वा गरुडी हंसपादिका ॥

[सूतबन्धनादौ वनौषध्युपयोगः]

बन्धने मारणे तत्वज्जारणे च नियामने ॥ १३ ।

बन्धदाने च सूतस्य सर्वदोषापकर्षणे

[वनौषध्युद्भवपर्वताः, तद्रूपनामादीनां गोपादिभ्यः परिज्ञानं च]

विन्ध्याद्रौ हिमपर्वते च मलये गोमन्तके श्रीगिरौ ।
सह्याद्रावथ पारियात्रकगिरौ किष्किन्धनामाचले
माहेन्द्रेऽप्यथ माल्यवत्क्षितिधरे तद्रूपनामादिकम् ।
गोपाभीरकसिद्धवैद्यमुखतः सम्यक्समावेद्यताम् ॥ १४ ॥

[सर्पाक्ष्यादिगणः, विधानतः ओषधिपञ्चाङ्गग्रहणं, तद्विनियोगश्च]

सर्पाक्षी वन्ध्यकर्कोटी जलबिम्बी च कञ्चुकी ।
पुनर्नवा च मत्स्याक्षी भृङ्गराजः शतावरी ॥ १५ ॥

[1]शरपङ्खी च मण्डूकपर्णिका ब्रह्मदण्डिका ।
अनन्ता काकमाची च काकजङ्घा शिखण्डिका ॥ १६ ॥

सहदेवी कपोती च विष्णुक्रान्ता कुरण्डका ।
महाबला बला नागबला मूर्वा [2]कुरण्डिनी ॥ १७ ॥

क्षीरनाली प्रपुन्नाटमल्लक्यामलकी तथा ।
जालिनी मेघनादश्च गोजिह्वा पद्मचारिणी ॥ १८ ॥

घोण्टा च कोकिलाक्षश्च त्रिपुटा [3]चाखुकर्णिका ।
एकपर्णी द्विपर्णी च त्रिपर्णी क्षीरिणी तथा ॥ १९ ॥

[4]तित्तिरी मेघसङ्गी च तुलसी [5]कामचारिणी ।
श्वेता द्विकर्णिका चेति सर्पाक्ष्यादिर्गणोत्तमः ॥ २० ॥

---

[1] सितशङ्खी—मु. [2] कुरङ्गिणी—रससि. [3] चम्पुक—मु. [4] तित्तिरिर्मेषशृङ्गी च—रससि. [5] श्यामपर्णिका—रससि.

षट्चत्वारिं[1]शदाख्याताः पारदस्य नियामकाः ।
इत्यौषधीनां पञ्चाङ्गं ग्रहीतव्यं विधानतः ॥ २१ ॥

रसाद्रिस्वेदने मूषालेपने शोधने तथा ।
अग्नौपरि यथालाभं ग्राह्यं प्रोक्तेषु कर्मसु ॥ २२ ॥

[व्याघ्रिकादिगणः, तस्य रसभस्मकरगणान्तरत्वं च]

व्याघ्रिका [2]राजसी वह्निश्चण्डाली गजकर्णिका ।
फट्कारी शङ्खपुष्पी च बृहती बाल[3]मोटिका ॥ २३ ॥

सृगालजिह्वका वह्निधमनी लाङ्गली तथा ।
[4]चक्रिणी वज्रिणी व्याघ्री [5]नाकुली पुत्रजीविका ॥ २४ ॥

कञ्चुकी चैव कर्कोटी कुमारी पद्मचारिणी ।
एकवीरा रुदन्ती च लक्ष्मीर्नरक[6]साधिका ॥ २५ ॥

उज्झटा रक्तचित्रश्च नागिनी नागवल्लिका ।
[7]ससकं रक्तशृङ्गी च रक्तस्नुग्वज्रवल्लिका ॥ २६ ॥

शाकोटी मेषशृङ्गी च हिमारी व्याघ्रपा[8]दिका ।
शमी [9]व्याघ्रपदी सोमवल्लरी चार्कपुष्पिका ॥ २७ ॥

कोशिनी काकमाची च वृक्षराजोऽजमारिका ।
कोटराक्षी हनूमन्ती नरजीवाङ्गनायिका ॥ २८ ॥

मालिका काकतुण्डी च मेषपुष्पी च कुङ्कुणी ।
अन्या तु वरवल्ली च [10]गजरी हंसपादिका ॥ २९ ॥

कुसुम्भी वह्नीमाची(ली) च सूर्यभक्ता च वाकुची ।
रसना जीवकारा च भूतुम्बी कटुतुम्बिका ॥ ३० ॥

---

[1] शको नाम—रससि. [2] राक्षसी वह्निचण्डाली—रससि. [3] मोचकः—रससि.
[4] चक्रिका—रससि. [5] कङ्कती पुत्रजालिका—रससि. [6] सा तथा—रससि.
[7] सन्धुकं—मु. [8] लिका—मु. [9] व्याघ्रनखी—रससि. [10] गोजारी—रससि.

देवदाली विशाला च [1]कर्षास्थि ब्रह्मबीजकम् ।
कृष्णजीरं तथा कृष्णं दत्तूरो वर्णपीलुकम् ॥ ३१ ॥

श्वेतार्को यवचिञ्चा च कारवल्ली रुदन्तिका ।
गोजिह्वा काकजङ्घा च श्वेतगुञ्जा च शर्करा ॥ ३२॥

[2]महाकाली सिताङ्कोलो माल्लूरश्च पटोलिका ।
व्याघ्रिकादिगणश्चायं रसभस्मकरोऽपरः ॥ ३३ ॥

[गन्धाभ्रकासहायेन लोहपाषाणशोधने सुलभोपायकथनप्रतिज्ञा]

सर्वासां लोहजातीनां पाषाणानां विशुद्धये ।
एकैकं सुलभं मार्गं वक्ष्ये गन्धाभ्रके विना ॥ ३४ ॥

[स्वर्णादिलोहशोधनोपायः]

अम्लक्षाररविक्षीरस्नुहीदुग्धसमन्वितैः
दत्तूरचिञ्चत्रिफलास्वरसैर्गोजलान्वितैः ॥ ३५ ॥

अग्नौ पुनः पुनस्ताप्य सप्त वाराणि डोलयेत् ।
स्वर्णादिसर्वलोहानां सिद्धिरेवं विनिश्चिता ॥ ३६ ॥

[पाषाणशोधनोपायः]

कुमारीमेघनादादित्रिकटुत्रिफलानि च ।
कूश्माण्डकदलीशिग्रुगुञ्जासोमार्गलारमाः ॥ ३७ ॥

पञ्चत्वङ्मुनिपुष्पाणि कञ्जवृक्षद्रुमार्द्रकाः ।
एतेषां [3]स्वरसे सम्यग्भावयेदेकविंशतिम् ॥ ३८ ॥

वारान्समस्तपाषाण[4]शुद्धिस्तेन प्रकीर्तिता ।

---

[1] कर्षासी–रससि. करास्थि–मु. [2] महाङ्कोलः–मु. [3] स्वरसं–रससि.
[4] शुद्धिरेवं–मु.

[गन्धकशुद्ध्युपायः]

भृङ्गीकुमारीस्वरसमारनालेन पूरितम् ॥ ३९ ॥

भाण्डवक्त्रे पुटं बध्वा गन्धचूर्णं विनिक्षिपेत् ।
पुनर्भाण्डं तदाच्छाद्य पुटं दत्वा ततः परम् ॥ ४० ॥

स्वाङ्गशीतलकं कृत्वा पुनरुद्धृत्य शुद्धये ।
पश्चात्पुनश्च गोक्षीरैराज्येन च विशोधयेत् ॥ ४१ ॥

इति गन्धकसंशुद्धिः शास्त्रज्ञैः परिकीर्तिता ।

[अभ्रकशोधनक्रमः, शोधितस्य तस्य रसायनता च]

पीताकृष्णाभ्रकं सम्यग्गोक्षीरैर्भावयेद्दृढम् ॥ ४२ ॥

सर्वदोषविनिर्मुक्तं रसायनकरं भवेत् ।
उदुम्बरवटाश्वत्थन्यग्रोधार्कस्नुहिद्रुमाः ॥ ४३ ॥

[1]कुरण्टिका क्षीरकर्णी कण्टकी च सुगन्धिका ।
एतेषां सर्ववृक्षाणां क्षीरैर्बहु विभावयेत् ॥ ४४ ॥

एकविंशतिवारं तदेकैकं भावयेन्मुहुः ।
क्षीरकन्दं कण्डुकन्दं रम्भाकन्दं च सूरणम् ॥ ४५ ॥

गुडं गुग्गुलगुञ्जाज्यमधुटङ्कणसंयुतम् ।
सम्मर्द्याञ्जनतुल्यं च विशाले चाथ मूषके ॥ ४६ ॥

अधरोत्तरकं क्षिप्त्वा पाषाणं [2]चारयेत्ततः ।
मृत्तिकापट्टसंयुक्तं सप्त वारान् [3]प्रकारयेत् ॥ ४७ ॥

ध्यात्वा गाढं खराङ्गारे काचबन्धमयं ततः ।
[4]स्वाङ्गशीतलकं कृत्वा समुद्धृत्य निरीक्षयेत् ॥ ४८ ॥

---

[1] कुराटका—ग. [2] छादये—ग. [3] प्रकाशये—ग. [4] साङ्ग—मु.

सर्वतः सूक्ष्मरूपाणि मौक्तिकानि यथा [1]तथा ।
सर्वपाषाणसत्त्वानि [2]पतन्ति द्दग्विधक्रमे ॥ ४९ ॥

[रसस्य अष्टादशसंस्काराः, तत्स्वरूपाणि च]

अष्टादश स्युः संस्कारा रसस्य परमेश्वरि ! । *
[3]तत्राद्यं स्वेदनं कर्म द्वितीयं मर्दनं प्रिये ! ॥ ५० ॥

मूर्च्छा तृतीयमुत्थानं चतुर्थं पातनं प्रिये ! ।
पञ्चमं रोधनं षष्ठं नियामः सप्तमं [4]स्मृतम् ॥ ५१ ॥

दीपनं चाष्टमं देवि ! नवमं चानुवासनम् ।
दशमं चारणं देवि ! जारणं रुद्रसङ्ख्यकम् ॥ ५२ ॥

गर्भद्रुतिर्द्वाद(शी)शं स्याद्द्रुतिर्बाह्या त्रयोद(शी)शम् ।
चतुर्दशं स्याद्रागाख्यं सारणं तिथिसङ्ख्यकम् ॥ ५३ ॥

अनुसार(रः)णं षोड(शः)शं स्याद्विख्यातं क्रामणं ततः ।
सप्तदशं चाष्टदशं [5]वेधनं देहलोहयोः ॥ ५४ ॥

[रससंस्कारतः पूर्वतनकर्माणि]

अथ वक्ष्यामि संस्कारान् रसराजस्य पार्वति ! ।
ताम्रजं कान्तजं वापि खल्वं तु स्वर्णरेचितम् ॥ ५५ ॥

तन्मध्ये रसराजं तु पलानां शतमात्रकम् ।
तदर्धं वा तदर्धं वा क्षिप्त्वा भक्त्या प्रपूजयेत् ॥ ५६ ॥

साधको रसराजस्य [6]ततः संस्कारमाचरेत् ।

---

* इतः परं रससिद्धान्तशासने—तान् सिद्धसाधकाभ्यर्च्य यथावत्कथयामि ते इदं अधिकं वर्तते ।

[1] यथा—मु. [2] बदन्ति—मु. [3] तत्रादौ—रससि. [4] ततः—मु. [5] वेदनं—रससि. [6] तत्र—मु.

[रसस्वेदादिसंस्कारोपयोगिधान्याम्लनिर्माणक्रमः]

यवगोधूमकल्माषमाषमुद्गचणादिभिः ॥ ५७ ॥

श्यामाक[1]कोद्रवैश्चैव नानाधान्यैश्च निस्तुषैः ।
धान्या[2]च्चतुर्गुणजले मृद्घटे निक्षिपेत्प्रिये ! ॥ ५८ ॥

प्राप्नोति यावदम्लत्वं तावद्यत्नेन रक्षयेत् ।
तन्मध्ये हंसपादीं च मीनाक्षीं च पुनर्नवाम् ॥ ५९ ॥

द्विचित्रकं भृङ्गराजं विष्णुकान्तं शतावरीम् ।
सर्पाक्षीं गिरिकर्णीं च मुण्डीं च सहदेविकाम् ॥ ६० ॥

त्रिफलां खण्डशः [3]कृत्वा सर्वानेतान् विनिक्षिपेत् ।
[4]धान्यस्य तु चतुर्थांशं धान्याम्लमिदमुत्तमम् ॥ ६१ ॥

स्वेदनादिषु कार्येषु पारदस्य विशिष्यते ।

[सूतस्वेदसंस्काराङ्गक्रियान्तराणि, तत्र धान्याम्लोपयोगेन सूतसंस्कारक्रमश्च]

आतपे काञ्जिके खल्वे रसराजं विनिक्षिपेत् ॥ ६२ ॥

चूर्णं च [5]गृहधूमं च चित्रकं त्रिफलं गुडम् ।
दग्धोर्णामिष्टकां कन्यां लवणं बृहतीद्वयम् ॥ ६३ ॥

मागधीं राजिकां चैव वन्ध्यां कर्कोटकीं तथा ।
एतान् कलांशान्सूतस्य तस्मिन् क्षिप्त्वा विमर्दयेत् ॥ ६४ ॥

दत्वा दत्वाथ धान्याम्लमेवं कृत्वा दिनत्रयम् ।
सम्यक्कोष्णारनालेन रसं प्रक्षालयेत्प्रिये ! ॥ ६५ ॥

पटुराजित्रिकटुकं मूलकं चित्रकं वराम् ।
पुनर्नवां मेषशृङ्गीं मेघनादं महाबलाम् ॥ ६६ ॥

आर्द्रकं रजनीं नागवल्लीं च नवसारकम् ।
समं धान्याम्लकैः पिष्ट्वा श्लक्ष्णं वस्त्रं प्रलेपयेत् ॥ ६७ ॥

---

[1] कोद्रवाद्यैश्च–रससि. [2] च्चतुर्गुणं तोयं मृ–मु. [3] छित्वा–रससि. मु.
[4] धान्यस्य पञ्चतुर्थाङ्कं–रससि. मु. [5] गृहधूपं–मु.

यावदङ्गुलमात्रं च तस्मिन् पश्चाद्रसं क्षिपेत् ।
तद्बध्वा ताम्रजे पात्रे क्षिप्त्वा धान्याम्लपूरिते ॥ ६८ ॥

[1] कुट्टडोलाख्ययन्त्रे च स्वेदयेत्तमहर्निशम् ।
[2] समुद्धृत्य पुनश्चोष्णे सारनाले शरावके ॥ ६९ ॥

प्रक्षालयेत्सूतराजमेवं [3] कृत्वा त्रिसप्तधा ।
[4] प्रस्वेदयेत्सूतराजं ततः सम्मर्दयेत्प्रिये ! ॥ ७० ॥

[धान्याम्लोपयोगेन सूतमर्दनसंस्कारक्रमः]

अथातो मर्दनं कर्म वक्ष्यामि शृणु पार्वति ! ।
चूर्णादिपूर्वद्रव्यं च विशालां राजवृक्षकम् ॥ ७१ ॥

अङ्कोलं कृष्णधत्तूरं त्रिकटुं च समं समम् ।
सर्वं सूत[5]कलांशेन सतप्तखल्वे रसं क्षिपेत् ॥ ७२ ॥

अजाशकृत्तुषाग्निं च खात्वा भूमौ विनिक्षिपेत् ।
तस्योपरि स्थितं खल्वं तप्तखल्वमुदाहृतम् ॥ ७३ ॥

मर्दयेत्पूर्वधान्याम्लैर्दिवारात्रं पुनश्च तम् ।
क्षालयेन्मृण्मये पात्रे [6] ततश्चोष्णारनालकैः ॥ ७४ ॥

मर्दनं क्षालनं चैवमेकविंशतिवारकम् ।
एवं विमर्दितं सूतं समादायाथ मूर्छयेत् [7] ॥ ७५ ॥

[रसमूर्छनसंस्कारक्रमः]

अथ मूर्छां प्रवक्ष्यामि शृणु त्वं सावधानतः ।
राजिका मेषशृङ्गी च चित्रकं च फलत्रयम् ॥ ७६ ॥

---

[1] कटिचोलाख्य-मु. [2] तमुद्धृत्य पुनश्चोष्णैरारनालैः शरावके-रससि. [3] कुर्यात्-रससि. [4] प्रस्वेदितं सूतराजं-रससि. [5] कलांशं च तप्ते-रससि. [6] ततः सोष्णार-रससि. [7] एतदनन्तरं—अभ्रजीर्णोऽथवा बीजजीर्णः सूतो विमर्द्यते ।
चूर्णादिपूर्वद्रव्यैश्च रागान् गृह्णाति निर्मलः ॥
र. ल. शा. पाठः

क्षीरकन्दं सूरणं च सर्पाक्षी काकमाचिका ।
नीली बला वचा कन्या कृष्णोन्मत्तस्त[1]थाऽकुला ॥ ७७ ॥

श्वेतापराजिताङ्कोलगोजिह्वा गरुडी तथा ।
एतेषां स्वरसैर्मर्द्यो रविक्षीरेण पारदः ॥ ७८ ॥

व्यस्तानां वा समस्तानां रसैरेषां दिनावधि ।
मर्दयेत्तप्तखल्वे च मूषायां तं रसं क्षिपेत् ॥ ७९ ॥

निरुध्य भूधरे यन्त्रे विपचेत्तं पुनः प्रिये ! ।
राजिकाद्यौषधभवैर्द्रवैस्त्रिःसप्त[2]वासरम् ॥ ८० ॥

मर्दनं भूधरे पाकं[3] कृत्वा संमूर्छयेद्रसम् ।

[सूतोत्थापनसंस्कारः]

एवं सम्मूर्छितं सूतं क्षालयेत्काञ्जिकेन च ॥ ८१ ॥

सोष्णेन वारिणा वापि सूतमुत्थापयेत्प्रिये ! ।
पातनायन्त्रयोगे वा न रसस्योत्थापनं भवेत् ॥ ८२ ॥

[रसपातनसंस्कारे ऊर्ध्वपातनसंस्कारः]

रसस्य पातनां वक्ष्ये पाराब्रह्मे च चित्रकम् ।
शार्ङ्गिरी काकमाची च मण्डूकी गिरिकर्णिका ॥ ८३ ॥

कुमारी च जया भृङ्गी गोजिह्वा शङ्खपुष्पिका[4] ।
आर्द्रकं देवदाली च तिलपर्णी च नीलिका ॥ ८४ ॥

आरग्वधः क्षीरकन्दमङ्कोलो देवदारु च ।
एतै रसैः समस्तानां व्यस्तानां वा दिनं रसम् ॥ ८५ ॥

मर्दयेत्तप्तखल्वे तु शुल्बं सूतचतुर्थकम् ।
तत्पिष्टं पातयेद्यन्त्र ऊर्ध्वपातनके दिनम् ॥ ८६ ॥

---

[1] दा कुवि–मु. [2] वारकम्–मु. [3] कुर्यात्संमूर्च्छितो रसः–रससि. [4] इतः परं–भूपाटली च निर्गुण्डी काकजङ्घा शतावरी–रससि. पाठः ।

ऊर्ध्वलग्नं रसं शुद्धं तमादायाथ मर्दयेत् ।
पूर्वोदितौषधरसैः पूर्ववच्छुल्बसंयुतम् ॥ ८७ ॥

पातयेन्मर्दयेदेवं सप्तवारं पुनः पुनः ।
ऊर्ध्वपातनसंशुद्धं पारदं पातयेदधः ॥ ८८ ॥

[रसाधःपातनसंस्कारक्रमः]

अथाधःपातनं वक्ष्ये [1]त्र्यूषणं लवणं पराम् ।
चित्रकं राजिकां शिग्रुं सर्वं सूतसमं क्षिपेत् ॥ ८९ ॥

मर्दयेत्तप्तखल्वे तु रसं धान्याम्लकेन च ।
तत्कल्केन लिपे(हे)दूर्ध्वभाण्डं सम्यङ्निरोधयेत् ॥ ९० ॥

ऊर्ध्वं भाण्डस्य पृष्ठे तु दद्याल्लघुपुटं ततः ।
इत्यधः पातनं कुर्यात्सप्तवारं पुनः पुनः ॥ ९१ ॥

[रसतिर्यक्पातनसंस्कारक्रमः]

अधःपातनशुद्धस्य तिर्यक्पातनमाचरेत् ।
वक्ष्यामि तिर्यक्पतनं सूतं धान्याभ्रकं समम् ॥ ९२ ॥

धान्याम्लैर्मर्दयेद्यामं तिर्यक्पातनयन्त्रके ।
[2]चण्डाग्निना पचेदेवं सप्तवारं पुनः पुनः ॥ ९३ ॥

एवं त्रिधा [3]प्रतीतं च पुनः सूतं निरोधयेत् ।
अभ्रकं वाऽथ गन्धं वा माक्षिकं [4]विमलं तथा ॥ ९४ ॥

स्वर्णं वा रजतं वापि कान्तं वा तीक्ष्णमेव वा ।
प्रत्येकं शुद्धिकृद्देयं ताम्रवत्पादमात्रकम् ॥ ९५ ॥

[5]पादार्द्रकरसैः कुर्यान्मर्दनं पातनं क्रमात् ।
यद्यद्द्रव्यान्वितः सूतस्तत्तद्द्रव्यगुणप्रदः ॥ ९६ ॥

---

[1] चूषणं—रससि. [2] भाण्डाग्निना—मु. [3] पातितं च ततः सूतं—रससि., प्रपीतं—मु. [4] विमलामपि—रससि. [5] पाठादिकरसैः—रससि.

[1]पातनात्ताम्रयोगाच्च नागवङ्गौ त्यजेद्रसः ।
अथवा दीपिकायन्त्रे शुद्धः स्यात्पातितो रसः ॥ ९७ ॥

[2]कदर्थितो भवेत्सूतः स्वेदाद्यैः पञ्चकर्मभिः ।

[रसनिरोधनसंस्कारक्रमः]

[3]आप्यायना(र्थ)ख्यं सूतस्य कर्म कुर्यान्निरोधनम् ॥ ९८ ॥

अथ कर्म [4]निरोधाख्यं पेषयेल्लवणं जलैः ।
स्थालीमध्ये रसं क्षिप्त्वा तदूर्ध्वं लवणं क्षिपेत् ॥ ९९ ॥

किञ्चिज्जलं च निवपेत्तं शरावेण रोधयेत् ।
कुर्यात्सम्यक्सन्धिलेपं तदूर्ध्वं च [5]घटे लघु ॥ १०० ॥

एवं निरोधनं कर्म विदध्यात्सप्तधा प्रिये ! ।
आप्यायितो भवेत्सूतस्तेन षण्डत्ववर्जितः ॥ १०१ ॥

निरोधकर्मशुद्धोऽसौ वीर्यवान् सन्नियस्यते ।

[रसनियमनसंस्कारक्रमः]

अथो नियमनं कर्म कथयामि वरानने ! ॥ १०२ ॥

यवचिञ्चाक्षीरकन्दं सर्पाक्षी पटुभृङ्गराट् ।
वन्ध्याककोंटकीनिम्बः सर्वं धान्याम्लपेषितम् ॥ १०३ ॥

[6]काञ्जिकेन समालोड्य तद्द्रवैः [7]स्वेदयेद्दिनम् ।
यन्त्रे नियामके सप्त वासरांस्तं च दीपयेत् ॥ १०४ ॥

[रसदीपनसंस्कारक्रमः]

अथातो दीपनं कर्म [8]वक्ष्यामि श्रृणु पार्वति ! ।
[9]स्वर्णपुष्पी च मरिचं त्रिक्षारं [10]कटुपञ्चकम् ॥ १०५ ॥

---

[1] पातने ताम्रयोगत्वं—रससि. [2] कदादीरोधने सूतः—मु. [3] अर्धमिदं मुद्रितकोशे नास्ति. [4] निरोधोत्थं—रससि. निरोधार्थं—मु. [5] वटे—रससि. पुटे—मु. [6] कृत्वालोड्या रसालेन—रससि. [7] शोधये—रससि. [8] वदामि तव पार्वति—रससि. [9] स्वर्णपुष्टी समरिचं—रससि. [10] पटु—मु.

भूखगं पञ्चलवणं राजिका शिग्रुमूलकम् ।
कासीसं च जया कन्या पातालगरुडी कणा ॥ १०६ ॥

क्षीरकन्दं च कर्कोटी गिरिकर्णी जया मधु ।
चित्रकं काकजङ्घा च [1]सर्वमम्लगुणेन च ॥ १०७ ॥

कल्कयेत्पारदं तेन मर्दयेत्तद्द्रवैरपि ।
डोलायन्त्रे पचेदेकादिनमित्थं च सप्तधा ॥ १०८ ॥

मर्दनं पातनं कुर्याद्रसार्थे [2]दीपितं भवेत् ।
एवं [3]प्रदीपितं सूतं शुद्धं तमनुवासयेत् ॥ १०९ ॥

[रसानुवासनसंस्कारक्रमः]

अथानुवासनं कर्म मृत्पात्रे दीपिते रसम् ।
क्षिप्त्वा जम्बीरजद्रावैस्तीव्रघर्मेऽनुवासयेत् ॥ ११० ॥

एवं सप्तदिनं [4]कृत्वा तत(तो जारण)श्चारणमाचरेत्* ।

रसजारणसंस्कारतो रसस्य शुद्धिः]

नवभिः स्वेदनाद्यैश्च शुद्धः स्यात्कर्मभिः प्रिये ! ॥ १११ ॥

पारदः सर्वरोगघ्नः सप्तकञ्चुकवर्जितः ।

रसस्य संस्कारभेदेन दिव्यासुरभेदेन मुखद्वयनिष्पत्तिः]

अथ कुर्याद्रसेन्द्रस्य विशुद्धस्य मुखं ततः ॥ ११२ ॥

दिव्यासुरविभेदेन तन्मुखं द्विविधं प्रिये ! ।
तत्राद्यं बलिनोत्पाद्यं द्वितीयं भूलताजलैः ॥ ११३ ॥

---

* एतदुपरि रससिद्धान्तशासने—

अथातः सम्प्रवक्ष्यामि सुकरं बलिजारणम् ॥

पूर्वशुद्धरसं लात्वा क्षिपेद्यन्त्रेश्वरे ततः ॥ अयं श्लोकः अधिको वर्तते ।

[1] स्वर्णम–मु. [2] दीपितो रसः–रससि. [3] प्रजापितं–मु. [4] कुर्याद–रससि.

[रसचारणसंस्कारक्रम:, तेन तस्य दिव्यमुखत्वादिसिद्धिश्च

शुद्धं सूतं समादाय यन्त्रे सोमानले क्षिपेत् ।
एवं शतगुणैर्जीर्णे सम्यग्दिव्यमुखो भवेत् ॥ ११४ ॥

भूनागवारिणा तप्तखल्वके मर्दयेद्रसम् ।
एकविंशत्यहोरात्रं *सम्यग्दिव्यमुखो भवेत् ॥ ११५ ॥

दशांशं [1]गन्धकं तत्र कर्पूरं वल्लमात्रकम् ।
पिष्ट्वा पिधानतः सन्धिं बन्धयेदतियत्नतः ॥ ११६ ॥

तद्यन्त्रं चुल्लिकामध्ये निधाय विधिना पचेत् ।
पुनस्तन्मुखमुद्घाट्य जीर्णे पूर्वप्रमाणतः ॥ ११७ ॥

दैत्यराजं च कर्पूरं दत्वा तद्वच्च चारयेत ।
एवं शतगुणे जीर्णे निर्धूताशेषकल्मषः ॥ ११८ ॥

[जारणद्वैविध्यं, तन्नामभेद:, जारणप्रयोजनं च]

जारणा द्विधा बालजारणा वृद्धजारणा ।
तज्जारणाद्वयं सम्यग्जीवन्मुक्तिकरं परम् ॥ ११९ ॥

जारितोरुग्जरामृत्युविध्वंसनकरो भवेत् ।

[पौर्वापर्येण गन्धकबीजजारणादिकम्]

गन्धकं जारयेदादौ ततो बीजं च जारयेत् ॥ १२० ॥
द्रुतिं च चारयेत्पश्चाद्रञ्जकेन सुरञ्जयेत् ।
सारणं क्रामणं कृत्वा ततो वेधे प्रयोजयेत् ॥ १२१ ॥
जारणापूजितः सूतः साधकाय प्रसीदति ।

[बीजजारणसंस्कारः, प्रतिग्रासं तत्क्रियासमभिहारश्च]

अतः परं प्रवक्ष्यामि बीजजारणमुत्तमम् ॥ १२२ ॥

---

* अत्र आसुरमुखोक्तिर्युज्यते ।

[1] गन्धकं चित्रकर्मारं—रससि.

तत्रैकमुखमादाय रसं वस्त्रेण गालितम् ।
तप्तखल्वे विनिक्षिप्य चतुःषष्ट्यंशबीजकम् ॥ १२३ ॥

दत्वाम्लैर्मर्दयेत्तस्मिन्नथ चारणयन्त्रके ।
निम्बाम्बुसहिते क्षिप्त्वा तद्यन्त्रं तीव्र आतपे ॥ १२४ ॥

धारयेद्दिनमेकं तु [1]जारितो जायते रसः ।
जारितं तं रसं पिण्डं दत्वा सोमानले दिनम् ॥ १२५ ॥

पचेज्जीर्णे पुनर्बीजं दत्वा चार्यं च पूर्ववत् ।
अजीर्णं चेत्पुनः पच्यात्तस्मिन् सोमानले दिनम् ॥ १२६ ॥

अष्टमांशं विडं दत्वा जीर्णो भवति निश्चितम् ।
एवमेव प्रतिग्रासे कुर्याच्चारणजारणे ॥ १२७ ॥

[रसस्य ग्रासग्रहणसंस्कारक्रमः]

अथ जारितसूतस्य कुर्याद्ग्रासग्रहक्रियाम् ।
राजीसैन्धवदग्धोर्णागृहधूमेष्टिकागुडम् ॥ १२८ ॥

सर्वं सूतकलांशेन दत्वा घर्मेऽम्लवर्गतः ।
मर्दयित्वा दिनैकं तद्राजिकाद्यम्लवर्गके ॥ १२९ ॥

[2]डोलायन्त्रादिना पच्याद्ग्रासग्राही भवेद्रसः ।
जीर्णे जीर्णे प्रतिग्रासे [3]कुर्याद्ग्रासस्य च ग्रहम् ॥ १३० ॥

[ग्रासप्रमाणानि तत्पौनःपुन्यं च]

अथ ग्रासप्रमाणानि कथयामि यथाक्रमम् ।
चतुष्षष्ट्यंशको बीजग्रासस्तु प्रथमः प्रिये ! ॥ १३१ ॥

चत्वारिंशांशकं बीजं द्वितीयो ग्रास उच्यते ।
त्रिंशांशकस्तृतीयः स्याद्विंशांशस्तु चतुर्थकः ॥ १३२ ॥

---

[1] चारितो—मु. [2] दोलायन्त्रे दिनं—रससि. [3] कुर्याद्रागस्य—मु

पञ्चमः षोडशांशस्तु षष्ठः स्यादष्टमांशकः ।
सप्तमस्तु चतुर्थांशस्त्वष्टमो द्व्यंशसम्मितः ॥ १३३ ॥

नवमस्तु समांशश्च दशमो द्विगुणांशकः
रुद्रश्चतुर्गुणः पश्चाद्द्वादशोऽष्टगुणो भवेत् ॥ १३४ ॥

कलागुणश्च त्रिदशो द्वात्रिंशद्गुणितो मनुः ।
ततः पञ्चदशो ग्रासश्चतुष्षष्टिगुणान्वितः ॥ १३५ ॥

एतान् पञ्चदश ग्रासान् जीर्णे जीर्णे प्रदापयेत् ।
चारयेज्जारयेत्तं च रञ्जयेच्च ततः परम् ॥ १३६ ॥

[रसगर्भद्रुतिसंस्कारक्रमः]

अथ जारितसूतस्य वक्ष्ये गर्भद्रुतिक्रियाम् ।
जारितं सूतमादाय स्थापयेत्तप्तखल्वके ॥ १३७ ॥

तत्र पादांशकं सूतं निक्षिप्य रुचकं बलम् ।
शिलामाक्षिककासीसटङ्कान् सूतकलांशकान् ॥ १३८ ॥

मर्दयेच्चणकाम्लेन सर्वमेकदिनावधि ।
अपामार्गपलाशोत्थभस्मक्षारं सुवर्चलम् ॥ १३९ ॥

कासीसं टङ्कणं राजीयवक्षारं च माक्षिकम् ।
नवसारं च सामुद्रं मणि[1]मन्धं सकाञ्जिकम् ॥ १४० ॥

कर्पूरं सममादाय स्नुह्यर्कक्षीरमर्दितम् ।
अनेन बिडकल्केन यन्त्रे सोमानलोदरे ॥ १४१ ॥

अङ्गुलोत्सेधमात्रेण तत्र पूर्वं रसं क्षिपेत् ।
रुध्वा दिनं पचेत्सम्यग्गर्भो द्रवति निश्चितम् ॥ १४२ ॥

द्रावितं जारयेदेवं यावद्बीजं च षड्गुणम् ।

---

[1] मण्डं–रससि.

[रसबाह्यद्रुतिसंस्कारक्रमः]

अथ वक्ष्ये क्रमाद्बाह्यद्रुतिमेलापजारणे ॥ १४३ ॥

तप्तखल्वे विनिक्षिप्य पारदं तत्समां द्रुतिम् ।
माक्षिकं चामृतं हिङ्गु कृष्णागरु च सैन्धवम् ॥ १४४ ॥

सर्वं कलांशकं क्षिप्त्वा गुडूचीमुसलीबिलाः ।
चित्रकं नीलिनी पाठा गुञ्जा स्त्रीस्तन्यमार्द्रकम् ॥ १४५ ॥

मकरन्दं क्षीरकन्दं वन्ध्या निम्बस्य पल्लवम् ।
द्विफणिज्यासोमवल्लीहयलालाः समं समम् ॥ १४६ ॥

एतेषां ग्रासयेत्स्वच्छरसं वस्त्रेण गालितम् ।
एतद्द्रुतियुते सूते क्षिप्त्वा क्षिप्त्वा विमर्दयेत् ॥ १४७ ॥

मिलन्ति द्रुतयः सर्वाः पारदेन न संशयः ।
अथ मेलापकल्केन लिम्पेत् सोमानलोदरम् ॥ १४८ ॥

मिलितं पारदं तत्र निक्षिप्य बिडयोगतः ।
जारयेदनया युक्त्या षड्गुणं जारयेद्द्रुतिम् ॥ १४९ ॥

[द्रुतिजारितरसरञ्जनक्रमः]

द्रुतिजारितसूतस्य प्रवक्ष्ये रञ्जनक्रियाम् ।
पूर्वोक्तं रञ्जितं बीजं पादांशद्रुतिजारिते ॥ १५० ॥

तप्तखल्वे [1]स्थिते सूते निक्षिप्य चणकाम्लतः ।
मर्दयेद्बिडयोगेन जारयेत्पूर्ववत्प्रिये ! ॥ १५१ ॥

एवं षड्गुणबीजस्य जारणाद्रञ्जितो भवेत् ।

[सूतसारणसंस्कारक्रमः]

अथ रञ्जितसूतस्य सारणात्रयमाचरेत् ॥ १५२ ॥

---

[1] स्थले—मु.

मण्डूकमत्स्यकच्छपमेषजलूकाहिसूकरादीनाम् ।
संयोज्यैकत्र वसां तया पचेत्सारणातैलम् ॥ १५३ ॥

पूर्वोक्तसारणातैलं सारणायन्त्रके क्षिपेत् ।
तत्र सूतान्वितं बीजं [1]द्रावितं परिडालयेत् ॥ १५४ ॥

एवं डालितमात्रेण सारितो जायते रसः ।
सारितं सममादाय तप्तखल्वे विनिक्षिपेत् ॥ १५५ ॥

मर्दयेदम्लयोगेन जारयेत्पूर्ववत्प्रिये ! ।
पूर्ववत्सारणायन्त्रे बीजेन द्विगुणेन च ॥ १५६ ॥

[सूतानुसारणसंस्कारः]

[2]डालयेज्जारयेत्तद्वत् एवं स्यादनुसारणा ।
अथानुसारितं ज्ञात्वा सारणायन्त्रके क्षिपेत् ॥ १५७ ॥

तद्वत्त्रिगुणबीजेन डालयेज्जारयेत्प्रिये ! ।

[अनुसारितसूतस्य मुखबन्धनक्रमः]

अथ सारितसूतस्य कुर्वीत मुखबन्धनम् ॥ १५८ ॥

तं रसं तत्समं तालं दिव्यौषधिगणद्रवम् ।
[3]द(ध)त्तूरतैलं तत्सर्वं दिनमेकं तु मर्दयेत् ॥ १५९ ॥

वज्रमूषागतं रुध्वा दिनैकं भूधरे घटे ।
एवमेव त्रिधा कुर्यात्सूतो बद्धमुखो भवेत् ॥ १६० ॥

[प्रतिसारणम्]

अथ बद्धमुखं सूतं धौतं तीक्ष्णार्कजं रजः ।
तारं ताप्यं समांशेन देवदालीद्रवैर्दिनम् ॥ १६१ ॥

त्रिदिनं मधुसर्पिर्भ्यां मर्दितं गोलकं चरेत् ।
तद्गोलं वज्रमूषायां क्षिप्त्वा सम्यङ्निरोधयेत् ॥ १६२ ॥

---

[1] द्रावितुं—मु. [2] लाल—मु. [3] दत्तूरशैलं—मु.

शोषयित्वा धमेद्गाढं खादिराङ्गारयोगतः ।
घोटबद्धो भवेत्सूतः तद्घोटं शोधयेत्प्रिये ! ॥ १६३ ॥

घोटं निक्षिप्य मूषायां शोषयेत्काचटङ्कणैः ।
धमिते तु रसः साक्षाद्बालार्कसदृशो भवेत् ॥ १६४ ॥

[चूर्णितसूतस्य लोहे देहे च परीक्षणम्]

अथ तं चूर्णतं श्लक्ष्णमादौ लोहे परीक्षयेत् ।
पश्चाद्देहे नियुञ्जीत तयोर्वेधक्रमं ब्रुवे ॥ १६५ ॥

[लोहे वेधक्रमः]

अष्टानवतिभागानां प्रत्येकं लोहवेधकम् ।
[1]एकैकांशं शतादीनामेवं वेधक्रमो भवेत् ॥ १६६ ॥

एवं वेधकबीजाख्यं वेधयेत्क्रामणान्वितम् ।
सर्वलोहानि कुर्वीत सुवर्णं तारमेव वा ॥ १६७ ॥

[पञ्चवेधनामानि]

तस्य वेधस्य नामानि कथयामि यथाक्रमम् ।
लेपः क्षेपश्च कुन्तश्च धूमः शब्दश्च पञ्चधा ॥ १६८ ॥

वेधप्रकारो लोहानां वार्तिकैः परिकीर्तितः ।

[लेपवेधपरीक्षाक्रमः]

लोहं शुद्धरसालिप्तं पुटतो याति हेमताम् ॥ १६९ ॥

तारतां वापि निर्दिष्टो लेपो वेधविदुत्तमैः ।

[क्षेपवेधप्रयोगः]

प्रक्षेपणाद्द्रुते लोहे शुद्धसूतस्य हेमता ॥ १७० ॥

क्षेपवेधः सुविज्ञेयो[2]वेधविद्याविशारदैः ।

---

[1] एकैकांशं सतां दीनामेवं—ग. [2] वेदविद्या—मु.

[कुन्तवेधक्रमः]

[1]तदंशतस्तु सूतेन युक्तो लोहस्तु विध्यते ॥ १७१ ॥

स्वर्णरूप्यत्वमायाति यत्रासौ कुन्तवेधकः ।

[धूमवेधक्रमः]

वह्नौ धूमायमानेऽन्तः प्रक्षि[2]प्तो रसधूमतः ॥ १७२ ॥

स्वर्णत्वोत्पादनं लोहे धूमवेधः स उच्यते ।

[शब्दवेधक्रमः]

मुखस्थिते रसे सर्वलोहस्य धमने सति ॥ १७३ ॥

स्वर्णरूप्यत्वसम्पत्तिः शब्दवेधः स उच्यते ।

[देहे वेधपरीक्षणं, तत्प्रयोजनं च]

लोहे परीक्षितं सूतं पश्चाद्देहे नियोजयेत् ॥ १७४ ॥

शतवेधकरं सूतं गुञ्जामात्रं तु भक्षयेत् ।
गुञ्जार्धं दशसाहस्रं तस्यार्धं लक्षवेधकम् ॥ १७५ ॥

तस्यार्धं दशलक्षार्धं तदर्धं कोटिवेधकम् ।
रसायनविधानेन सेव्यमानो दिने दिने ॥ १७६ ॥

ब्रह्मत्वं चापि विष्णुत्वं मत्साम्यं चापि स व्रजेत् ।

[स्वेदाद्यष्टादशसंस्काराणां फलानि]

तीव्रत्वं जायते स्वेदादमलत्वं च मर्दनात् ॥ १७७ ॥

मूर्छनाद्दोषराहित्यमुत्थानात्पूतिनाशनम् ।
रसायनं पातनेन रोधादाप्यायनं भवेत् ॥ १७८ ॥

अचापल्यं नियमना[3]द्दीपनात्सुमुखोदयः ।
प्रमाणाद्योगसाङ्गत्यं चारणाद्बलशालिता ॥ १७९ ॥

---

[1] तदंशशस्तु—ग. [2] प्ररस—मु. [3] त्सुखोदय उच्यते—मु.

जारणाद्बन्धनं प्रोक्तमेकत्वं द्रावणात्तथा।
रक्तत्वं रञ्जनात्तस्य व्यापित्वं च [1]प्रसारणात् ॥ १८० ॥

क्रामित्वं क्रामणाद्देहलोहादिष्वपि वेधनात्।
वेधकत्वं च संशुद्धौ रसराजस्ततो भवेत् ॥ १८१ ॥

इत्यष्टादश कर्माणि रसस्योक्तानि शम्भुना।

[ताम्रवङ्गाभ्यां क्रमात् सुवर्णरजतसाधनक्रमाः]

ताम्रेण [2]साधयेत्स्वर्णं रूप्यं वङ्गेन साधयेत् ॥ १८२ ॥

शुक्लपक्षपलाशस्य पुष्पं संशोष्य चूर्णयेत्।
छागदुग्धेन तच्चूर्णं त्रीन् वारान् परिकल्पयेत् ॥ १८३ ॥

वङ्गषष्ठांशचूर्णेन पिष्टेनैतत्प्रलेपयेत्।
पुटपाकेन तद्दग्धं तारं भवति शोभनम् ॥ १८४ ॥

श्वेतब्रह्मतरोः पुष्पं स्वरसेन विभावयेत्।
तारं द्वात्रिंशतं वारान् तेन वङ्गं प्रलेपयेत् ॥ १८५ ॥

पुटपाकेन तद्दग्धं वङ्गं व्रजति तारताम्।
मार्दवं कालिमागन्धं वङ्गं त्यजति निश्चितम् ॥ १८६ ॥

श्वेतब्रह्मतरोर्बीजं तैलेन परिभावयेत्।
गन्धकं सप्तकृत्वोऽथ तेन ताम्रदलानि च ॥ १८७ ॥

प्रलिप्तं तत्पुटे दग्धं शुल्बं काञ्चनतां व्रजेत्।
दाहच्छेदनिकर्षादिकर्मयोग्यं भवेत्ततः ॥ १८८ ॥

तस्य तैलेन दरदं गन्धकं पारदं तथा।
मर्दयेत्खल्वपाषाणे यावत्तत्कल्कतां व्रजेत् ॥ १८९ ॥

लेपयेत्तेन कल्केन वङ्गपत्राणि सर्वतः।
दग्ध्वा दग्ध्वा पुनर्लिम्पेद्वारान् द्वात्रिंशतं क्रमात् ॥१९०॥

---

[1] त्रिसा–मु. [2] शोधयेत्–रससि.

ततो वङ्गं भवेत्स्वर्णं रजतं दरदादिभिः ।
व्यवहारक्षमं शुद्धं कर्मयोग्यं भवेच्च तत् ॥ १९१ ॥

निर्यासं शाकवृक्षस्य श्लक्ष्णवस्त्रेण गालयेत् ।
समूलशिग्रुचूर्णेन निर्याससहितेन च ॥ १९२ ॥

परितस्ताम्रपत्राणि दग्ध्वा दग्ध्वा विलेपयेत् ।
दाहैः पञ्चभिरेतत्तु काञ्चनं जायते भृशम् ॥ १९३ ॥

[1]सञ्चूर्ण्य वल्कं शाकेयं तद्रसेन विभावितम् ।
करवीररसैर्युक्तं तेन पत्रं विलेपयेत् ॥ १९४ ॥

ताम्रं सञ्जायते तारं [2]पुटपाकेन तापितम् ।
एतत्तारं भवेत्सम्यग्व्यवहारक्रियोचितम् ॥ १९५ ॥

एवमादिभिरन्यैश्च स्वर्णतारक्रिया भवेत् ।

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले रससंस्कारादिनिरूपणं नाम चतुर्विंशस्तरङ्गः

---

## षष्ठकल्लोले पञ्चविंशस्तरङ्गः

### रसशालायन्त्रादिनिरूपणम्

[रसशालादिनिरूपणप्रतिज्ञा]

एवं प्राग्रससंस्काराः सङ्ग्रहेण [3]प्रदर्शिताः ।
रसक्रियोपयुक्तानि शालादीन्यभिदध्महे ॥ १ ॥

[रसशालानिर्माणं, तदुचितो देशश्च]

रसशालां प्रकुर्वीत सर्वबाधा[4]विवर्जिताम् ।
[5]सर्वौषधमये देशे रम्यकूपसमन्विते ॥ २ ॥

---

[1] सचूर्णवल्कं–मु. [2] घटपा–मु. [3] निरूपिताः–रससि. [4] विवर्जिते–रससि.
[5] सर्वौषधसमे–मु.

यक्षत्र्यक्षसहस्राक्षदिग्भागेषु सुशोभने।
नानोपकरणोपेतां प्राकारेण सुशोभिताम् ॥ ३ ॥

[रसदेवतास्थापनदिग्भागः]

शालायाः पूर्वदिग्भागे स्थापयेद्रस[1]देवताः।

[रसशालाया आग्नेययाम्यदिग्भागयोः वह्निकर्मात् पाषाणकार्यम्]

वह्निकर्माणि चाग्नेये याम्ये पाषाणकर्म च ॥ ४ ॥

[नैरृत्यवारुणदिग्भागयोः क्रमात् शस्त्रक्षालनकर्माणि]

नैरृत्यां शस्त्रकर्माणि वारुण्यां क्षालनादिकम्।

[वायूत्तरदिग्भागयोः क्रमात् शोषणक्राथकर्माणि]

शोषणं वायुकोणे च [2]क्राथकर्म तथोत्तरे ॥ ५ ॥

[ईशदिग्भागे सिद्धवस्तुस्थापनम्]

स्थापनं सिद्धवस्तूनां प्रकुर्यादीशकोणके।

[रससाधनपदार्थसंग्रहणम्]

पदार्थसंग्रहः कार्यो रससाधनहेतुकः ॥ ६ ॥

सत्त्वपातनकोष्ठी च गारकोष्ठी सुशोभना।
भूमिकोष्ठी ज्वलत्कोष्ठी जलद्रोण्योऽप्यनेकशः ॥ ७ ॥

भस्त्रिकायुगलं तद्वन्नलिके वंशलोहयोः।
स्वर्णायो[3]घोषशुल्बा कुड्यचर्मकृता तथा ॥ ८ ॥

करणानि विचित्राणि सर्वाण्यपि समाहरेत्।
मन्थानपेषिणी खल्वा द्रोणीरूपाश्च वर्तुलाः ॥ ९ ॥

---

[1] दैवतं—रससि. [2] वेधकर्मोत्तरे तथा—रससि. [3] घोषयोः शुल्बा कुड्यकर्म—मु.

आयसाः सप्तखल्वाश्च मर्दकाश्च तथाविधाः ।
सूक्ष्मछिद्रसहस्राढ्या द्रव्यचालनहेतवे ॥ १० ॥

[1]चालनी करपत्राणि शिलालोहसखण्डने ।
तत्रोपयोगि यच्चान्यत्तत्सर्वं तत्र निक्षिपेत् ॥ ११ ॥

[खल्वलक्षणम्]

उत्सेधेन नवाङ्गुलः खलु कलासङ्ख्याङ्गुलायामको
विस्तारेण दशाङ्गुलो [2]मुनिमितैर्निम्नस्तथैवाङ्गुलैः ।
[3] पालिर्द्यङ्गुलविस्तृता च मसृणा द्रोण्यर्ध[4]चन्द्रोपमा
घर्षी द्वादशकाङ्गुली च तदयं खल्वो मतः सिद्धये ॥१२॥

[5]षोडशाङ्गुलविस्तारः खल्वो भवति वर्तुलः ।
चतुरङ्गुलनिम्नश्च मध्ये तु मसृणाकृति ॥ १३ ॥

मर्दनी चिपिटाधस्तात्सुग्रहा च [6]शिखोपरि ।
अयं हि वर्तुलः खल्वो मर्दनेऽतिसुखावहः ॥ १४ ॥

आयसाः कान्तलोहा वा लोहखल्वा अपीदृशाः ।
अधस्ताद्द्रोणिका कार्या वह्निप्रज्वालनोचिता ॥ १५ ॥

[रसस्वेदादिकरणे यन्त्रोक्तिप्रतिज्ञा]

अथ यन्त्राणि वक्ष्यन्ते रसतन्त्राण्यनेकशः ।
समालोक्य समासेन [7] स्वेदादिकरणाय च ॥ १६ ॥

[यन्त्रशब्दार्थः]

यन्त्र्यते पारदो यस्मात्तस्माद्यन्त्रमिति स्मृतम् ।

---

[1] चालिनी च कटत्राणि–रससि. [2] रसमतैः–ग. [3] कण्ठे द्व्यङ्गुलविस्तृतातिमसृणा–रससि. [4] चन्द्राकृतिः–रससि. [5] द्वादशाङ्गुल–रससि. [6] मुखोपरि–मु.
[7] देवदेवेन साम्प्रतम्–रससि

[दोलायन्त्रं, तत्र पोटलिकाविधानेन रसस्वेदनक्रमश्च

निबद्धमौषधं सूतं सभूर्जे [1]त्रिगुणान्तरे ॥ १७ ॥
रसपोटलिका कार्या दृढं बध्वा [2]गुणैरपि ।
सन्धानपूर्णकुम्भान्तमवल[3]म्ब्य च संस्थिता ॥ १८ ॥
अधस्ताज्ज्वलयेदग्निं तत्र उक्तक्रमेण हि ।
दोलायन्त्रमिति प्रोक्तं स्वेदनाख्यं तदेव हि ॥ १९ ॥

[अधःपातनयन्त्रं, तत्रत्यसंस्कारक्रमश्च]

*उपर्यधःस्थितस्थाल्यां क्षिपेदन्यामधोमुखीम् ।
स्थालिकां चिपिटी[4]भूतां तत्र संलिप्तपारदाम् ॥ २० ॥
क्षिप्त्वा तां पङ्किले गर्ते ज्वालयेन्मूर्ध्नि पावकम् ।
अधःपातनयन्त्रं हि [5]वार्तिकैरभिधीयते ॥ २१ ॥

---

(* क्षिपेद्रसं घटे दीर्घनवाधोनालसंयुते ।
तन्नालं निक्षिपेदन्यघटकुड्यान्तरे खलु ॥
तत्र रुध्वा मृदा सम्यग्वदने घटयोरधः ।
अधस्ताद्रसकुम्भस्य ज्वालयेत्तीव्रपावकम् ॥
इतरस्मिन् घटे तोयं प्रक्षिपेत्स्वादु शीतलम् ।
तिर्यक्पातनयन्त्रं हि वार्तिकैरभिधीयते ॥)

—अयं भागो मुद्रितकोशेऽधिको वर्तते ।

(पातनात्रितयं प्रोक्तं यन्त्राणां त्रितयं खलु ।
विभागेन विपाकेन द्रव्ये वान्योन्ययोगतः ॥
यन्त्रानर्तपरिक्षेपाद्गुणाः स्युर्विविधाः खलु ।
खण्डान्युलूखलाम्भोमिस्तण्डुलाः स्युर्मलोज्झिताः ॥
पातेनैव महासिद्धिः शिवेन परिकीर्तिता ।) इति रससि. पाठः ।

[1] त्रिगुणाम्बरे–रससि. त्रिगुणान्तरे–मु. [2] गुणेन हि–रससि. [3]लम्बनतः स्थिता–रससि. [4] भूततलान्तर्लिप्तपारदाम्–रससि. [5] तदेतत्परिकीर्तितम्–रससि.

[तिर्यक्पातनयन्त्रं, तन्त्रत्यसंस्कारक्रमश्च]

पातनैश्च विना सूतो नितरां [1]दोषभाग्भवेत् ॥
त्रिभिरेवोर्ध्वपातेन तस्माद्दोषान् [2]विमुञ्चति ॥ २२ ॥

[कच्छपयन्त्रं, तन्त्रत्यसंस्कारश्च]

विशालवदने भाण्डे तोयपूर्णे निवेशयेत् ।
खर्परं मृदुलं सम्यग्विस्तृतं तस्य मध्यमे ॥ २३ ॥

आलवालं बिडैः कृत्वा तन्मध्ये पारदं क्षिपेत् ।
ऊर्ध्वाधश्च बिडं दत्वा [3]मल्लेनारुध्य यत्नतः ॥ २४ ॥

[4]घटमौचित्ययोगेन [5]पीयते चेन्निगद्यते ।
यन्त्रं कच्छपसंज्ञं हि [6]यदुक्तं रसजारणे ॥ २५ ॥

[ऊर्ध्वपातनयन्त्रविवरणम् ]

अर्धाङ्गुलमिता सम्यग्वर्तुला त्रिपिटा [7] तले ।
चतुरङ्गुलतः कण्ठादधो द्रोण्या समन्विता ॥ २६ ॥

चतुरङ्गुल[8]विस्तारनिम्ना च दृढबन्धना ।
तत्पिधानघटीमूले षोडशाङ्गुलविस्तरा ॥ २७ ॥

नवाङ्गुलकविस्तारकण्ठेन च समन्विता ।
पूर्वघट्यां रसं क्षिप्त्वा ततो दद्यात्परां घटीम् ॥ २८ ॥

[9]सार्धनिम्ना च परितो दृढपालिकयान्विता ।
पाल्या द्रोण्यां क्षिपेत्तोयं पावकं ज्वालयेदधः ॥ २९ ॥

ऊर्ध्वपातनयन्त्रं हि तदेतत्परिकीर्तितम् ।

---

[1] दोषमुज्झति–रससि. [2] न मुञ्चति–रससि. [3] मूलेनारुध्य–रससि.
[4] पुट–रससि. [5] जीर्यते तन्निगद्यते–रससि. [6] तदुक्तं–रससि. [7] दले–मु.
[8] विस्तारा निम्नया दृढबद्धया–रससि. [9] सोऽर्धनिम्ना–रससि.

[आन्तरालिकयन्त्रविवरणं, तत्साध्यक्रिया च]

कृत्वा लोहमयीं मूषां वृन्ताकाकारधारिणीम् ॥ ३० ॥

वितस्तिसम्मितां कान्तलोहेन परिनिर्मिताम् ।
[1]काललोहोद्भवां वापि कण्ठाधो द्व्यङ्गु[2]लान्तरे ॥ ३१ ॥

द्व्यङ्गुलं वलयं दद्यान्मध्यदेशे च कण्ठतः ।
[3]पिधानाद्धारकं चिञ्चापत्रविस्तीर्णकङ्कणम् ॥ ३२ ॥

पिधानमन्तराविष्टं स शिक्यं [4]क्लिष्टसन्धिकम् ।
तल्लपविहितच्छिद्रं भाण्डं कृत्वाप्यधोमुखम् ॥ ३३ ॥

तत्रैवालम्बयेन्मूर्ध्नि निरुध्य च विशोष्य च ।
स्थालीकण्ठं ततो दद्यात्पुटानल[5]विधानकम् ॥ ३४ ॥

[6]एवम्भूतं भवेद्यन्त्रमान्तरालिकसंज्ञकम् ।
अनेन जारयेद्गन्धं [7]द्रुतिं गर्भकृतामपि ॥ ३५ ॥

[तापिकायन्त्रविधानं, तत्साध्यरसक्रिया च]

[8]तापिं मूषां मृदा कृत्वा दृढां चारत्नि[9]मात्रकाम् ।
सुदृढां मध्यदेशे च द्व्यङ्गुलच्छिद्रसंयुताम् ॥ ३६ ॥

कान्तलोहमयीं [10]खोरीं दद्याद्गन्धस्य चोपरि ।
तापिकां पूरयेच्छुद्धसिकताभिः समन्ततः ॥ ३७ ॥

तां च चुल्ल्यां समारोप्य [11]क्षेपे क्षेपे विडद्रवम् ।
पादाङ्गुष्ठमितं जातं ज्वालयेदनलं ततः ॥ ३८ ॥

लोहाभ्रकादिकं सर्वं रसस्योपरि जारयेत् ।
तापिकायन्त्रमित्युक्तं सुकरं रससजारणे ॥ ३९ ॥

---

[1] तालमण्डो–रससि. [2] लादधः–रससि. [3] पिधानाधारकं–रससि.
[4] श्लिष्टसन्धिकम्–रससि. [5] विधारकम्–रससि. [6] एवंरूपं–रससि.
[7] धृतिं–मु. [8] तापांमूषां–रससि. [9] मात्रिकाम्–रससि. मु. [10] भूरि दद्याद्गन्धस्य–रससि. [11] क्षिपं क्षेपं विडंद्रवम्-रससि.

[प्रतिगर्भयन्त्रस्वरूपं, तत्कार्यं च]

स्थाल्यां विनिक्षिप्य रसादिवस्तु
[1]स्वर्णादिकार्याय पिधाय भूयः ।
मल्लेन चोर्ध्वे लवणादिवस्तु
चुल्ल्यां पचेत्तत्प्रतिगर्भयन्त्रम् ॥ ४० ॥

[द्विपालिकायन्त्रविधिः, तदुपयोगश्च]

खोर्यां मल्लं ततः स्थालीं निरुन्ध्याददतियत्नतः ।
स्थाल्या मल्लेन वा खोर्यां क्षिप्त्वा वस्तु निरुध्य च ॥ ४१ ॥

क्षिप्त्वा [2]पक्वादिकं रुध्वा [3]पातयेद्गर्भयन्त्रके ।
चशकं वर्तुलं लोहं विनताग्रोर्ध्वदण्डकम् ॥ ४२ ॥

एतद्द्विपालिकायन्त्रं बलिचारणहेतवे ।

[पुटयन्त्रस्वरूपं, तदुपयोगश्च]

चतुःप्रस्थजलाधारं चतुरङ्गुलकाननम् ॥ ४३ ॥
पुटयन्त्रमिति [4]प्रोक्तमेतदाप्यायने मतम् ।

[विद्याधरयन्त्रं, तत्कृत्यं च]

स्थालिकोपरि विन्यस्य स्थालीं सम्यङ्निरुध्य च ॥ ४४ ॥

ऊर्ध्वस्थाल्यां [5]रसं क्षिप्त्वा वह्निं प्रज्वालयेदधः ।
एतद्विद्याधरं यन्त्रं हिङ्गुलाकृष्टिहेतवे ॥ ४५ ॥

[डमरुकयन्त्रं, तदुपयोगश्च]

यन्त्रस्थाल्युपरि स्थालीमन्यां दत्वा निरुध्य च ।
यन्त्रं डमरुगाख्यं [6]हि रसभस्मकृते हितम् ॥ ४६ ॥

---

[1] स्वर्णादिखोर्यां प्रपिधाय भूयः–रससि. [2] खट्वादिकम्–रससि. [3] पातः स्याद्गर्भः--रससि. [4] प्रोक्तं तदाप्यायनकेहितम्–रससि. [5] जलं–रससि.
[6] तद्रसभस्महिते कृतम्–रससि.

[नाभियन्त्रं, तदुपयोगिजलमृत्स्नादिकं, तदुपयोगश्च]

मल्लमध्ये चरेद्गर्तं तत्र सूतं सगन्धकम् ।
[1]मल्लस्य परितः कुर्यात्प्रकुर्यात्त्र्यङ्गुलोच्छ्रयम् ॥ ४७ ॥

ततस्तां छादयेत्सम्यग्गोस्तनाकारमूषया ।
[2]भस्मतोयमृदा रुध्वा [3]सम्यगत्रोच्यमानया ॥ ४८ ॥

[जलमृत्स्ना]

[4]जङ्घावत्कृतखर्जूरक्काथेन परिमर्दितम् ।
जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ॥ ४९ ॥

इयं हि जलमृत्प्रोक्ता [5]दुर्भिद्या सलिलैः खलु ।

[वह्निमृत्स्ना, नाभियन्त्रं च]

घटिकापटुकिट्टैश्च महिषी दुग्धमर्दितैः ॥ ५० ॥

वह्निमृत्स्ना भवेद्घोरवह्नितापसहा खलु ।
एतया मृत्स्नया रुद्धो न गन्तुं क्षमते रसः ॥ ५१ ॥

ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियन्त्रमिदं नाम्ना शिवेन परिकीर्तितम् ॥ ५२ ॥

अनेन जीर्यते सूतो [6]विधूमः शुद्धगन्धकः ।

[गर्त(ग्रस्त)यन्त्रम्]

मूषा माषो[7]दराद्दिष्टा अत्यन्तमतिवर्तुला ॥ ५३ ॥

चिपिटा च तले [8]प्रोक्ता गर्तयन्त्रं मनीषिभिः ।
सूतेन्द्रबन्धनार्थं हि रसविद्भिरुदीरितम् ॥ ५४ ॥

---

[1] गर्तस्य परितः कुब्जां प्रकुर्यात्त्र्यङ्गुलोच्छ्रयाम्—रससि. [2] सम्यक्तोय—रससि. [3] सम्यग्गर्तोच्चमानया—रससि. [4] लेहवत्कृत—रससि. [5] दुर्भेद्या—रससि. [6] निर्धूमः—रससि. [7] दरान्विष्टा आद्यन्तसमवर्तुला—रससि. [8] प्रोक्तं ग्रस्तयन्त्रं—रससि.

[डेङ्कियन्त्रम्]

भाण्डं कण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत् ।
कांस्यपात्रद्वयं कृत्वा सम्पुटं जलगर्भितम् ॥ ५५ ॥

नालं च तत्र संयोज्य दृढं तच्चापि कारयेत् ।
[1]युक्तं द्रव्यं विनिक्षिप्य [2]पूर्वं तत्र रसे घटम् ॥ ५६ ।

अग्निना तापिते नाले तोयं [3]तस्मात्पतत्यधः ।
जायते रससन्धाने डेङ्कियन्त्रमिदं भवेत् ॥ ५७ ॥

[सोमानलयन्त्रम्]

ऊर्ध्वं वह्निरधश्चापो मध्ये तु रससङ्ग्रहः ।
सोमानलमिदं प्रोक्तं जारयेद्गन्धकादिकम् ॥ ५८ ॥

[नालिकायन्त्रम्]

लोहनालगतं सूतं भाण्डे लवणपूरिते ।
निरुद्धं विपचेत्पाकं नालिकायन्त्रमीरितम् ॥ ५९ ॥

[यन्त्रराजेश्वरः]

एतस्मिन् यन्त्रराजे कृतसुकृतशतैर्देशिकेन्द्रप्रसादा-
[4]ल्लब्धे सूतस्य वह्निः सहभुवमुभयोः शात्रवं मोचयित्वा ।
सख्यं कर्तुं प्रवीणे स्थिरसुखकरणे जारणे भस्मबन्धे
[5]प्रोक्ते ऽन्यैर्यन्त्रपाकैः किमु [6]भवति फलं क्लेशदैर्युक्तिसाध्यैः ॥ ६० ॥

---

[1] युक्तद्रव्यं—रससि. [2] पूर्वं तत्र घटे रसः—रससि. [3] तस्मिन्पतत्यधः—रससि. [4] लब्धं सूतं सवह्निः—मु. [5] प्रौढे—रससि. [6] वहति विक्लेशदैरल्पसाध्यैः—रससि.

[यन्त्रान्तराणि]

वडवानलयन्त्रं तु धूपकन्दुकनामके ।
खेचरस्थालिकायन्त्रे तुलालवणयन्त्रके ॥ ६१ ॥ *

---

* अत्र रससि. पाठः—

[इष्टिकायन्त्रस्वरूपं, तदुपयोगश्च]

विधाय वर्तुलं गर्तं मल्लमत्र विधाय च ।
विनिधायेष्टिकान्तस्थमध्यगर्तवर्तीं शुभाम् ॥

गर्तस्य परितः कुर्यात्पातिकामङ्गुलोच्छ्रयाम् ।
गर्ते सूतं विनिक्षिप्य हर्तास्ये वसनं क्षिपेत् ॥

निक्षिपेद्गन्धकं तत्र मल्लेनान्यं निरुध्य च ।
मल्लपालितयोर्मध्ये मृदा सम्यङ्निरुध्य च ॥

वनोत्पलैः पुटं देयं कपोताख्यं न चाधिकम् ।
इष्टिकायन्त्रमेतद्धि गन्धकं तेन जारयेत् ॥

[तुलायन्त्रस्वरूपं, तदुपयोगश्च]

वृन्ताकाकारमूषे द्वे द्वयोः कण्ठादधः खलु: ।
प्रादेशमात्रा नलिका मृदा लग्नससन्धिका ॥

तत्रैकस्यां क्षिपेत्सूतमन्यस्यां गन्धचूर्णकम् ।
निरुध्य मूषयोर्वक्त्रं वालुकायन्त्रके क्षिपेत् ॥

अधोऽग्निं ज्वालयेदेतत् तुलायन्त्रमुदाहृतम् ।
शिलातालकगन्धाश्मजारणाय प्रकीर्तितम् ॥

[स्थालीयन्त्रस्वरूपम्]

स्थाल्यां ताम्रादि निक्षिप्य मल्लेनास्यं निरुध्य च ।
पच्यते स्थालिकासंस्थं स्थालीयन्त्रमिति स्मृतम् ॥

इष्टकाकोष्ठयन्त्रे च पुटगर्भाख्ययन्त्रके ।
प्रतिगर्भकयन्त्रं चेत्यादि यन्त्राणि सन्ति हि ॥ ६२ ॥

---

[कोष्ठिकायन्त्रम्]

स्थूलभाण्डोदरस्यान्तर्वालुकां निक्षिपेच्छुभाम् ।
वितस्तिप्रमितोत्सेधां ततस्तत्र निवेशयेत् ॥

सुपक्वां मृण्मयीं कोष्ठीं द्वादशाङ्गुलकोच्छ्रयाम् ।
षडङ्गुलकविस्तीर्णां मध्ये तु मसृणीकृताम् ॥

पञ्चाङ्गुलपिधानां च तीक्ष्णाग्रां मकुटाकृतिम् ।
न न्यूनां नाधिकां कोष्ठीं कण्ठतो मसृणा बहिः ॥

कोष्ठ्यां च निक्षिपेद्गन्धं षट्पलं श्लक्ष्णचूर्णितम् ।
ततस्त्रिपादिकां लोहीं विनिवेश्य स्थिरीकृताम् ॥

तस्यां च विन्यसेत्खोरिलोहि वा कान्तलोहजम् ।
तस्यां सूतं क्षिपेच्छुद्धं पलविंशतिमानतः ॥

जीर्णगन्धकसूतं च भावयेल्लशुनद्रवैः ।
अन्धःशिखेन पूर्वोक्तविधानेन पिधाय च ॥

सन्धिबन्धं प्रकुर्वीत सुधामृत्स्नागुडादिभिः ।
सन्धिबन्धे विशुष्के च क्षिपेदुपरि वालुकाम् ॥

भाण्डवक्त्रं निरुध्याथ ज्वालयेत्तदधोऽनलम् ।
खरयं? यामत्रयं यावत्ततो गन्धकसम्भवः ॥

वि(पि)धाने लग्नधूमोऽसौ गलित्वा निपतेद्रसे ।
एवं हि षड्गुणं गन्धं मत्वा सूतोऽरुणो भवेत् ॥

करोति कल्पनिर्दिष्टान् विशिष्टानखिलान् गुणान् ।
कोष्ठिकायन्त्रमेतद्धि शिवेन परिकीर्तितम् ॥

[मूषाविधानादिकीर्तनम्]

[1] मूषाविधानं मृत्स्ना च संस्थानं विविधाकृतिः ।
विधानं विनियोगाश्च देवदेवेन [2] कीर्तिताः ॥ ६३ ॥

---

[वालुकायन्त्रम्]

पश्चाथ वालुकावर्णं भाण्डे निक्षिप्य यत्नतः ।
पच्यते रसगोलाद्यं वालुकायन्त्रणं हि तत् ॥

[लवणयन्त्रम्]

एवं लवणनिक्षेपात्प्रोक्तं लवणयन्त्रकम् ॥

[धूपयन्त्रम्]

विधायाष्टाङ्गुलं पात्रं लोहमष्टाङ्गुलोच्छ्रयम् ।
कण्ठाधो द्व्यङ्गुलो देशे जाताधारं हि तत्र च ॥

तिर्यग्लोहशलाकाश्च तन्वीस्तिर्यग्विनिक्षिपेत् ।
तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत् ॥

पत्राधो निक्षिपेद्धूपं वक्ष्यमाणमिहैव हि ।
तन्मात्राण्यब्जपत्रेण छादयेत्खर्परेण हि

मृदा विलिप्य सन्धिं च वह्निं प्रज्वालयेदधः ॥
तेन कृष्णेन पात्राणि हतान्युक्तं विधानतः ॥

रसश्चरति वर्गे च द्रुतं गर्भे द्रवन्ति च ॥
गन्धालतशिलानां ? हि कज्जल्या वा मृताहिना ॥

धूपेन स्वर्णपत्राणां परमं परिकीर्तितम् ॥
ताराधं तारपत्राणि मृतवङ्गेन धूपयेत् ॥

धूपयेच्च यथायोग्यै रसैरुपरसैरपि ॥
धूपयन्त्रमिदं प्रोक्तं जारणाद्रव्यदाहने ॥

---

[1] अथ मूषाभिधा मृत्स्ना स-रससि. [2] कीर्त्यते-रससि.

[मूषानामानि]

मूषा हि कोविका प्रोक्ता कुमुदी करहाटका ।
पाचनी वह्निमित्रा च रसवादिभिरिष्यते ॥ ६४ ॥

---

[खेचरयन्त्रम्]

द्वादशाङ्गुलविस्तारा षडङ्गुलसमुन्नता ।
स्थाली तदन्तःसंजूर्ण्य विषं निक्षिप्य तन्मुखम् ॥

वह्निश्छिद्रेण चक्रेण रुध्वा तदुपरि न्यसेत् ।
मुकुटाकृति छिद्राग्रं पिधानं लेपयेन्मृदा ॥

द्वादशाङ्गुलविस्तारां दीर्घस्थालीमधोमुखीम् ।
गर्भीकृतपिधानाग्रां मध्यसंलिप्तपारदाम् ॥

अधः स्थालीमुखे न्यस्य तत्सन्धिं लेपयेद्दृढम् ।
चुल्ल्यामङ्गारसन्तापः सूतोपरि जलेशयः ॥

खेचराख्यमिदं यन्त्रं विषधूपं पिबेद्रसः ।

[कन्दुकयन्त्रं स्वेदनयन्त्रं वा]

स्थूलस्थाल्यां द्रवं क्षिप्त्वा वासो बध्वा दृढं मुखम् ॥

तत्र स्वेद्यं विनिक्षिप्य पिधान्या प्रपिधाय च ।
अधोऽग्निं ज्वालयेत्तत्र तत्स्यात्कन्दुकयन्त्रकम् ॥

स्वेदनं यन्त्रमित्येतत्प्राहुरन्ये मनीषिणः ।

[कन्दुकयन्त्रप्रकारान्तरम्]

यद्वा स्थाल्यां जले क्षिप्त्वा तृणं दत्वा तृणोपरि ॥

स्वेद्यद्रव्यं विनिक्षिप्य पिधान्या प्रपिधाय च ।
अधस्थाज्ज्वालयेदग्निमेतद्वा कन्दुयन्त्रकम् ॥

कल्लोले

[मूषापदार्थः, तदुपादानद्रव्यं च]

[1]मुष्णाति दोषान् सकलान् तन्मूषेति निगद्यते ।
[2]उपादानं भवेत्तस्याः मृत्तिका लोहमेव च ॥ ६५ ॥

मूषामुखाविनिष्क्रा[3]न्तवरमृत्स्नादिकारिते ।
मूषाविधानयोर्मध्ये [4]रन्ध्राणां संविलेपनम् ॥ ६६ ॥*

---

उत्सेधेन रविद्वयाङ्गुलमितो विस्तारतोऽष्टाङ्गुलं
तद्दीर्घश्चतुरङ्गुलामलिजलोद्गारं पिधानान्वितम् ।
उक्तार्धेन तदर्धतोऽपि च विदे लोहेन यन्त्रं प्रिये !
श्रीयन्त्रेश्वरलक्ष्म सम्यगुदितं सर्वार्थसिद्ध्यै सताम् ॥

सोमानलो भैरवश्च तथा कमलनालकः ।
यन्त्रेश्वरस्य नामानि बडबानल इत्यपि ॥

इति यन्त्रप्रकरणं समाप्तम्

---

* अत्र रससि. पाठः—

[अथ पुटप्रशंसा]

रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम् ॥

[अथ पुटप्रकरणम्]

लोहादेरपुनर्भावो गुणाधिक्यं तथाग्रता ।
अनप्सु मज्जनं रेखा पूर्णता पुटतो भवेत् ॥

पुटाङ्गाण्णो लघुत्वं च शीघ्रव्याप्तिश्च दीपनम् ।
जारितादपि सूतेन्द्रात् लोहानामाधिको गुणः ॥

---

[1] मुष्णाति दोषान् मूषेयं सा मूषेति निगद्यते—रससि. [2] उदुपानं—रससि.
[3] न्ता वरमेका विकारिणी—रससि. [4] रन्ध्रणं संविलेपनम्—रससि.

[मूषाप्रभेदाः]

सत्त्वपातनमूषा च गोस्तन्याख्यायनी तथा ।
पाकस्वेदनमञ्जूषा मूषल्यो वज्रिमूषिका ॥ ६७ ॥

---

यथाश्मनि विशेद्वह्निर्बहिष्ठः पुटयोगतः ।
पूर्णत्वादिगुणावाप्तिस्तथा लोहेषु निश्चितम् ॥
आन्ध्रनं रन्ध्रनं चैव सुश्लिष्टं सनबन्धनम् ।
मृत्तिका पाण्डुरस्थूलशर्करा शोणपाण्डुरा ॥
चिरध्मानसहा सा हि मूषार्थमिति गम्यते ।
तदभावे च वाल्मीकी कौलाली वा समीर्यते ॥
या मृत्तिका दग्धतुषी शणेन शिखित्रकैर्वा हयलद्दिणा च ।
लोहेन दण्डेन च कुट्टिता सा साधारणा स्यात्खलु मूषिकार्थम् ॥
श्वेताश्मानस्तुषादग्धा शिखित्राशणकर्पटे । ?
लद्दिकिट्टं यथा योग्यं संयोज्या मूषिकामृदि ।
मृदुस्त्रिभागं शणलक्षिभागौ भागश्चनिर्दग्धतुषात्तदर्धः ।
किट्टार्धभागं परिखण्ड्य वज्रे मूषां विदध्यात्खलु सत्त्वपाते ।
दग्धाङ्गारतुषोपेता मृत्स्ना वाल्मीकिसम्भवा ।
तत्तद्विडसमायुक्ता तत्तद्विडविलेपिता ।
तया या विहिता मूषा योगमूषेति कथ्यते ।
अनया साधितः सूतो जायते गुणवत्तरः ।
गैरभूनागदौताख्यां शणैर्दग्धतुषैरपि ।
समैः समाश्च मूषामृण्महिषीदुग्धमर्दिता ।
कोत्रिका वक्ष्यमाणा हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा वज्रद्रावणिकेरिता ।
दुग्धषड्गुणगौराख्या विष्ठाङ्गारसमन्विता ।
कृष्णमृद्भिः कृता मूषा गौरमूषेत्युदाहृता ।
यामयुग्मपरिध्माना न सा द्रवति वह्निना ।
वस्त्राङ्गारतुषातुल्या तच्चतुर्गुणमृत्तिका ।

वर्णयोगाह्वये चान्ये गोलाद्यास्सन्ति भूरिशः ।
कोष्ठिकाभारकोष्ठे च यन्त्रं पातालकोष्ठकम् ॥ ६८ ॥

---

गौराश्ममृत्तिकातुल्या सर्वैरेतैर्विमर्दिता ।
वज्रमूषेति निर्दिष्टा याममग्निं सहेत वै ।

रक्तवर्णरजोयुक्ता रक्तवर्ण[1]विराजिता ।
मृदया लेपिता मूषा क्षितिखेचरलेपिता ।

वर्णमूषेति सा प्रोक्ता वर्णोत्कर्षे नियुज्यते ।
एवं हि श्वेतवर्गेण रूप्यमूषा प्रकीर्तिता ।

तत्तद्विडमृदोद्भूता तत्तद्विडविलेपिता ।
देहलोहार्थयोगार्थं विडमूषेत्युदाहृता ।

गौरभूनागधौताभ्यां तुषमष्या शणेन च ।
समैः समा च मूषा मृण्महिषीदुग्धमर्दिता ।

कोविकापक्षमालं हि बहुधा परिकीर्तिता ।
तयोर्विरचिता मूषा लिप्ता मत्कुणशोणितैः ।

जलाग्निधाविनी मूलैर्वज्रद्रावणकोविका ।
सहतेह्नि चतुर्यामं द्रवेण व्यापिताश्च ता ।

द्रवीभावमुपेयुश्च मूषा या द्रावयोगतः ।
क्षणमुद्धरणं यत्तन्मूषाप्यायनमुच्यते ।

वृन्ताकाकारमूषायां नालं दत्वा दशाङ्गुलम् ।
द(ध)त्तूरपुष्पवच्चोर्ध्वं सुदृढं श्लिष्टपुष्पवत् ।

अष्टाङ्गुलं च सच्छिद्रं सा स्याद्वृन्ताकमूषिका ।
अनया खर्परादीनां मृदूनां सत्त्वमाहरेत् ।

मूषा या गोस्तनाकारा शिखयायुक्तपिधानका ।
सत्वानां द्रावणे शुद्धा सा मूषा गोस्तनी भवेत् ।

निर्दिष्टा मल्लमूषा या मल्लद्वितयसंपुटा ।
पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्तिता ।

---

[1] विभाविता इति स्यात् ।

[महापुटनिरूपणम्]

निम्नविस्तरतः कुण्डे द्विहस्तचतुरश्रके ।
वनोत्पलसहस्रेण परीते पुटनौषधम् ॥ ६९ ॥

---

कुलालभाण्डरूपा या दृढा च परिपाचिता ।
पक्वमूषेति सा प्रोक्ता पोटल्यादिविपाचनी ।
निर्वक्त्रा गोलकाकारा पुटनद्रव्यगर्भिणी ।
गोलमूषेति सा प्रोक्ता सत्वरद्रव्यरोधिनी ।
तले या शूर्पकाकारा क्रमादुपरि विस्तृता ।
स्थूलवृन्ताकवत्स्थूला महामूषेत्यसौ मता ।
सच्छायोऽभ्रकसत्वादेः पुटाय द्रावणाय च ।
मञ्जूषाकार मूषा या निम्नतायामविस्तरा ।
षडङ्गुलप्रमाणेन मूषा मञ्जूषसंज्ञिता ।
भूमौ निखन्य तां मूषां दद्यात्पुटमथोपरि ।
मूषायाश्चिपिटं मूले वर्तुलोऽष्टाङ्गुलोच्छ्रया ।
मूषा सा मुसलाख्या स्याच्छक्तिबद्धरसे हिता ।
सत्त्वानां पातनार्थाय पतितानां विशुद्धये ।

[कोष्टिकालक्षणम्]

कोष्टिका विविधाकारास्तासां लक्षणमुच्यते ।
राजहस्तसमुत्सेधा तदर्धायामविस्तरा ।
चतुरश्रा च कुड्येन वेष्टिता मृण्मयेन हि ।
एकभित्तौ चरेद्वर्तं वितस्त्याभोगसंयुतम् ।
द्वारं सार्धं वितस्त्या च संमितं सुदृढं शुभम् ।
देहल्याधो विधातव्यं धमनाय यथोचितम् ।
प्रादेशप्रमिता भित्तिरुत्तराङ्गस्य चोर्ध्वतः ।
द्वारं चोपरि कर्तव्यं प्रादेशप्रमितं खलु ।
ततश्चेष्टकया रुध्वा द्वारसन्धिं विलिप्य च ।
शिखित्रैस्तां समापूर्य समैर्भस्त्राद्वयेन च ।

कह्लोले

कोष्ठ्यां रुद्ध्वं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ।
वनोत्पलसहस्रार्धं कोष्टिकोपरि निक्षिपेत् ॥ ७० ॥
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ।

---

शिखित्रां दमनद्रव्यमूर्ध्वद्वारेण निक्षिपेत् ।
सत्वपातनगोलां च पञ्च पञ्च पुनः पुनः ।
भवेदाकाशकोष्टीयं खराणां सत्त्वपातिनी ।
दृढभूमौ चरेद्गर्तं वितस्त्या संमितं शुभम् ।
वर्तुलं चारु तन्मध्ये गर्तमन्यं प्रकल्पयेत् ।
चतुरङ्गुलविस्तारनिम्नत्वेन समन्वितम् ।
गर्ताद्धरणिपर्यन्तं तिर्यङ्नालसमन्वितम् ।
किञ्चित्समुन्नतं साध्यं गर्ताभिमुखनिम्नकम् ।
मन्त्रकीपञ्चरलाढ्यं गर्भगर्तोपरि क्षिपेत् ।
आपूर्यकोविकैः कोष्ठीं प्रथमेदेकभस्त्रया ।
पातालकोष्टिका ह्येषा मृदूनां सत्त्वपातनी ।
ध्मानसाध्यपदार्थानां देवदेवेन कीर्तिता ।
द्वादशाङ्गुलनिम्ना या आदेशप्रमिता शुभा ।
चतुरङ्गुलतश्चोर्ध्वं वलयेन समन्विता ।
भूरि चेद्द्रवति चन्त्रवलयोपरि निक्षिपेत् ।
शिखित्वायस्तुनिक्षिप्य प्रथमेद्वङ्कनालतः ।
मूषा मृद्भिर्विधातव्या अरत्निप्रमितं दृढम् ।
अधोमुखं च तद्वक्त्रनालं पञ्चाङ्गुलं खलु ।
वक्त्रनालमिदं प्रोक्तं दृढध्मानाय कीर्तितम् ।
गारकोष्टीसमुद्दिष्टा सृष्टा लोलविनाशिनी ।
कोष्टीबद्धरसादीनां विधानाय विधीयते ।
द्वादशाङ्गुलकोत्सेधा सारुद्याचतुरङ्गुला ।
तिर्यग्दमनायरसा मृदुद्रव्यविशोधिनी ।

इति मूषाप्रकरणम्

---

[गजपुटस्वरूपं, तद्गुणश्च]

राजहस्तप्रमाणेन चतुरश्रं च निम्नकम् ॥ ७१ ॥
चूर्णं चोत्पलसाहस्रं [1]कण्ठावधि विनिक्षिपेत् ।
[2]विन्यसेत्कुमुदं तत्र पुटद्रव्येण पूरितम् ॥ ७२ ॥
पूर्णाच्च गुणतोऽर्धानि [3]परिधानानि निक्षिपेत् ।
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ ७३ ॥

[वराहपुटस्वरूपम्]

इत्थं [4]चारत्निकाकुण्डे पुटं वाराहमुच्यते ।

[कुक्कुटपुटरीतिः]

पुटं भूमितले [5]यत्तु वितस्तिद्वितयोच्छ्रिते ॥ ७४ ॥
तावच्च तलविस्तीर्णं तत् स्यात्कुक्कुटकं पुटम् ।

[कपोतपुटक्रमः]

यत्पुटं दीयते भूमावष्टसङ्ख्यैर्वनोत्पलैः ॥ ७५ ॥
तद्बालसूतभस्मार्थं कपोतपुटमुच्यते ।

[गोर्वरपुटम्]

गोष्ठान्तर्गोक्षुरक्षुण्णं शुष्कं चूर्णित [6]गोर्वरम् ॥ ७६ ॥
[7]पुटं च तत्समुद्दिष्टं [8]पक्वेष्टं रसशोधने ।

[गोर्वरपुटस्वरूपम्]

गोर्वरैर्वा तुषैर्वापि पुटं [9]यत्तत्प्रतीयते ॥ ७७ ॥
तद्गोर्वरपुटं प्रोक्तं [10]रसभस्मकरं च तत् ।

---

[1] कण्ठावध्यधिनिक्षिपेत्–रससि. [2] विन्यसेत्कुमुदीं पत्रपुटनद्रव्यपूरितात्–रससि. [3] करिण्डानि विनिक्षिपेत्–रससि. [4] चारत्निके कुण्डे–रससि. [5] यत्नाव्–रससि. [6] गोमयम्–रससि. [7] गोर्वरं–रससि. [8] वरिष्ठं–रससि. [9] यत्र दीयते–रससि. [10] रसभस्मप्रसिद्धये–रससि.

कल्लोले

[भाण्डपुटरीतिः]

स्थूलभाण्डे तुषैः पूर्णे [1]मध्ये मूषासमन्विते ॥ ७८ ॥

वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ।

[वालुकापुटक्रमः]

अधस्तादुपरिष्टाच्च कोविका च्छाद्यते खलु ॥ ७९ ॥

वालुकाभिः प्रतप्ताभिः [2]यदेतद्वालुकापुटम् ।

[भूधरपुटाकारः]

वह्निमित्रं क्षितौ सम्यङ्निखन्याद्द्व्यङ्गुलादधः ॥ ८० ॥

उपरिष्टात्पुटं [3]यत्तु पुटं तद्भूधराभिधम् ।

[लावकपुटरीतिः]

ऊर्ध्वं षोडशिकामात्रैस्तुषैर्वा गोर्वरैः पुटम् ॥ ८१ ॥

यन्त्रं [4]तल्लावकाख्यं स्यात्सुमृदुद्रव्य[5]शोधने ।

[साध्यद्रव्यबलाबलानुरोधेनोहापोहाभ्यां पुटसङ्ग्रहः]

[6]अनुक्तं द्रव्यमात्रे तु साध्यद्रव्यबलाबलात् ॥ ८२ ॥

पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः ।

[रसेन्द्रसंस्कारस्सेश्वरपूजारूपता, तत्साफल्यं च]

खल्वं तु पीठिका देवि ! रसेन्द्रो लिङ्गमुच्यते ॥ ८३ ॥

मर्दनं मार्जनं स्नानं दिव्यौषधिगणद्रवैः ।

पूजनं पक्वबीजेन रत्नजालोपचारकम् ॥ ८४ ॥

---

[1] मुषामध्ये समन्विते—रससि. [2] यन्त्रं तद्वाल—रससि. [3] यन्त्रं तत्पुटं भूधराह्वयम्—रससि. [4] तल्लावकाख्यं—रससि. [5] साधने—रससि. [6] अनुक्त-द्रव्यमाने—रससि.

[1]नैवेद्यं रञ्जनद्रावैः सारणा स्याद्विसर्जनम् ।
वेधनं देहलोहानां सम्यक्पूजाविधेः फलम् ॥ ८५ ॥

इत्यष्टादशसंस्कारैः विशुद्धलोहवेधके ।
निषेविते रसेन्द्रे तु प्रमाणेन दिने दिने । ८६ ।

सर्वरोगविनिर्मुक्तो वलीपलितवर्जितः ।
जीवेच्च सुचिरं कालं वज्रकायो महाबलः ।
स्थावरं जङ्गमं तस्मिन् विषं नैव प्रवर्तते ॥ ८७ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले रसशालायन्त्रादिनिरूपणं नाम पञ्चविंशस्तरङ्गः

---

## षष्ठकल्लोले षड्विंशस्तरङ्गः

### विषनिरूपणे सर्पादिदूतान्तलक्षणवर्णनम्

[विषस्वरूपादिप्रश्नः; तदुत्तरकथनप्रतिज्ञा च]

विषं न सम्भवेत्तस्य यः कुर्याद्रससेवनम् ।
इत्याख्यातमभूत्तत्किं विषं कीदृग्विधं भवेत् ॥ १ ॥

तत्स्वरूपं समाचक्ष्व स्वामिन् मयि कृपाबलात् ।
कुमार! वर्णये सर्वं यच्छ्रोतुमभिकाङ्क्षसे ॥ २ ॥

अतः परं प्रवक्ष्यामि विषमोक्षं समासतः ।

[स्थावरजङ्गमभेदेन विषद्वैविध्यं, तदाश्रयश्च]

स्थावरं जङ्गमं चेति मूर्तद्रव्याश्रयं विषम् ॥ ३ ॥

[सौम्याग्नेयभागाश्रययोः तयोः क्रमात् स्थूलसूक्ष्मरूपता]

सौम्यभागाश्रयं सूक्ष्मं स्थूलमाग्नेयभागकम् ।

[सौम्यानां स्थिरता, वीरुदादिस्वरूपता च]

सौम्याः स्थिराः समाख्याता वीरुद्वृक्षोदकादयः ॥ ४ ॥

---

[1] नेपथ्यं-रससि.

[आग्नेयस्वरूपं, तस्य चरत्वं च]

अग्नेयाः प्राणिनः सर्वे महानागादयश्चराः ।

[सौम्यांशविषाभिव्यञ्जकानि]

त्वक्पत्रफलमूलाग्रपुष्पच्छायापयोरसैः ॥ ५ ॥

विषं सौम्यांशसम्भूतं प्रयोगाद्व्यज्यते स्फुटम् ।

[आग्नेयविषाभिव्यञ्जकानि]

दंष्ट्रादशनशृङ्गाग्रशिश्नरेतोऽनवस्नानखैः ॥ ६ ॥

वालाग्रनेत्रमूत्रैश्च विषं वह्न्यंशसंश्रितम् ।

[उरगविषस्य दिव्यत्वं, तदाद्यारम्भोक्तिश्च]

तत्रोरगविषं दिव्यमारभ्यादावुदीर्यते ॥ ७ ॥

[अष्टौ महोरगाः, तन्नामानि च]

कार्कोटकमहापद्मशेषवासुकितक्षकाः ।
अम्बुजः शङ्खपालश्च गुलिकोऽष्टौ महोरगाः ॥ ८ ॥

[महोरगजातिवर्णोद्भवाः]

विप्रौ वह्निभवावनन्तगुलिकौ सन्ध्यारुणाभ्रप्रभौ
पीतौ वासुकिशङ्खपालभुजगाविन्द्रोद्भवौ भूभृतौ ।
वैश्यौ वायुभवौ तु तक्षकमहापद्मावही श्यामलौ
शूद्रावम्बुधिसम्भवौ हिमनिभौ पद्माख्यकार्कोटकौ ॥ ९ ॥

[फणिनां क्रमाद्वह्न्यादिसमुद्भवस्तेषां फणसङ्ख्या च]

वह्नीन्द्रवायुवरुणसम्भूता फणिनः क्रमात् ।
[1]दशाष्टपञ्चैकशतसङ्ख्याकफणभूषिताः ॥ १० ॥

---

[1] दशाष्टपञ्चत्रिगुणस—काश्यपसंहिता.

[नागसन्ततिः, तत्सङ्ख्या, तेषां स्थानानि च]

पृथक्पृथक्पन्नगपुङ्गवानामासन् सुताः पञ्चशतं क्रमेण ।
रसातले वारिनिधौ धरायां त्रिविष्टपे ते च वसन्ति नागाः ॥ ११॥

[नागान्वयजा दर्वीकरादयस्तेषामसङ्ख्यता च]

तदन्वयेष्वसङ्ख्येयाः सर्पाः सञ्जज्ञिरे पृथक् ।
गुणदोषत्रयात्मानः सत्ववन्तो महाबलाः ॥ १२ ॥

दर्वीकराः मण्डलिनो राजिलाश्चेति विश्रुताः ।

[दर्वीकरलक्षणम्]

कृशानु काश्यपिर्वायुपाथोविस्वैर्विलक्षणैः ॥ १३ ॥

अथवा शक्तिकुलिशकेतुशूलैः शिरोपरि ।
मुद्रिताः फणिनः शीघ्राः सर्पा दर्वीकराः स्मृताः ॥ १४ ॥

[विप्रादिनागानां निवासस्थानानि]

शैलोद्यान[1]तटाककोटरगुहासस्यालयेषु द्विजाः
प्राकारादिचतुष्कतोरणमहाहर्म्येषु नागा नृपाः ।
शालागोकुलयन्त्रकेषु बहुशो वैश्या रमन्तेऽधिकं
[2]कान्ताराम्बुतटाश्मकूटविषमस्थानेषु शूद्राः स्मृताः ॥ १५॥

[मण्डलिलक्षणम्]

ते च कुमण्डलिनो मन्दा नानाबिन्दुविराजिताः
चपलाः प्राणिनो रूक्षाश्शीतलाऽनूपचारिणः ॥ १६ ॥

[राजिललक्षणम्]

राजिला राजिभिश्चित्राः पांसुप्रस्निग्धभोगिनः ।
स्थूलाश्च समसन्नाश्च सोष्णजाङ्गलभूचराः ॥ १७ ॥

---

[1] सरोजकोटर–मु. [2] कासाराम्बु–मु.

[दर्वीकरादीनां क्रमाद्विषोल्बणकालः]

बाल्ययौवनवृद्धत्व वंशीतोष्णसङ्गमे ।
विषोल्बणाः क्रमादेते सर्पा दर्वीकरादयः ॥ १८ ॥

[व्यन्तराः सर्पाः, तेषां प्रभेदाः, तत्सङ्ख्याश्च]

ये विपर्यस्तजिह्वाः स्युः सर्पास्ते व्यन्तराः स्मृताः ।
षट्त्रिंशत्फणिनां भेदा गोनसानां तु षोडश ॥ १९ ॥

त्रयोदश तथान्येषां मिश्राणामेकविंशतिः ।

[नागीगर्भोत्पत्तिकालः, प्रसवकालश्च]

आषाढे श्रावणे वापि नागी गर्भेण संयुता ॥ २० ॥

कार्तिके मार्गशीर्षे वा प्रसूते स्वदिनोदये ।

[सर्पाण्डसङ्ख्या, अण्डभेदकालः, तत्रत्यशिश्वाकारश्च]

[1] अण्डानां नव वा सप्त भिन्नेष्वेष्वर्धमासतः ॥ २१ ॥

शिशवस्तत्र दृश्यन्ते रक्तोर्णातन्तुसन्निभाः ।

[निर्विषशिशूनां क्रमात्पन्नग्या भक्षणमवशिष्टानां त्रयाणां क्रमात्स्त्रीपुन्नपुंसकता च]

निश्चेष्टान् निर्विषांस्तांस्तु क्रमाद्ग्रसति पन्नगी ॥ २२ ॥

त्रयस्त्रयोऽवशिष्यन्ते ते च पुंस्त्रीनपुंसकाः ।

[सर्वशिशूनां वर्णविपर्ययकालः, संज्ञालब्धिकालश्च]

सितेतरा भवन्त्येते सप्तभिर्दिवसैः पुनः ॥ २३ ॥

तैः संज्ञा लभ्यते भूयः परस्तात्सप्तमे दिने ।

---

[1] अण्डानि स्युर्नवदिनम्—मु. पा.

[सर्पशिशूनां दन्तोद्गमकालः, चक्षुरुन्मीलनकालश्च]

दन्तोद्गमो भवेदेषामेकविंशतमे दिने ॥ २४ ॥

मासाच्छनैः शनैश्चक्षुरुन्मील्यालोलतारकम् ।

[सर्पशिशूनां विषोद्गमकालः, जनिमासभेदेन विषतारतम्यं च]

ते पश्यन्ति यदा चित्रं भवन्ति सविषास्तदा ॥ २५ ॥

ये जाताः कार्तिके मासि स्वल्पवीर्यविषान्विताः ।
मार्गशीर्षे बलोद्रिक्ता [1]विषातिशयसंयुताः ॥ २६ ॥

[सर्पशिशूनां मात्रा सह विहरणकालः, ततः स्वच्छन्दविहरणं च]

मासं मात्रा समं नागा विहरन्ति ततस्ततः ।
ततश्चरन्ति स्वच्छन्दं क्रमेण बलशालिनः ॥ २७ ॥

[सर्पशिशूनां त्वग्विमोककालः, तदातनदेहायामश्च]

त्वचं मुञ्चन्ति षण्मासाद्धस्तायामा यदा मताः ।

[सर्पाणां मृतिकारणानि, स्वतश्चिरजीविता च]

मयूरश्येननकुलविडालवृकसूकरैः ॥ २८ ॥

गोखुराशनिदावैश्च हेतुभिर्वाऽथवा परैः ।
न यदि स्यान्मृतिस्तेषां [2]जीवन्ति शरदां शतम् । २९ ॥

[सर्पाणां दन्तसङ्ख्याः, तत्र सविषदन्तास्तदाकारश्च]

विंशोत्तरशतद्वन्द्वं तेषां दन्ताश्च कीर्तिताः ।

---

[1] अत्र काश्यपसंहितायां 'पौषे दीर्घा विषोल्बणाः' इति पाठो दृश्यते ।

[2] जीवेयुः-मु. पा.

[1] नवैव सविषास्तेषां दंष्ट्रास्ताश्चेति कीर्तिताः ॥ ३० ॥

[सविषदन्तनामानि]

कालरात्रिः कराली च यमदूती विभीषणी ।
भद्रकाली च मकरी शिवदूत्यु[2]ग्रभीषणी ॥ ३१ ॥

अत्युग्रभाषिणी चेति दंष्ट्रास्ता नामभिः श्रुताः ।

[विषदन्तस्थानानि, दंशनक्रमः, तद्विज्ञानोपायाश्च]

वामदक्षिणपार्श्वस्थास्तदन्तश्चाग्रतः स्थिताः ॥ ३२ ॥

आसां कतिपयाभिस्तु दंष्ट्राभिरुरगा भृशम् ।
दशन्ति तत्कथं विद्यादन्वेष्टव्यं चतुर्विधम् ॥ ३३ ॥

[नामतो दंशभेदास्तत्स्वरूपाणि च]

अवलुप्तं च दष्टं च विद्धं खण्डितमित्यपि ।
अदंशमवलुप्तं स्याद्दष्टमेकक्षतं तथा ॥ ३४ ॥

विद्धं क्षतद्वयं प्रोक्तं खण्डितं तु बहुक्षतम् ।

[अष्टौ सर्पदंशनहेतवः]

भीतिरुन्मत्तता क्षुच्च पूर्ववैरं च हृतता ॥ ३५ ॥

आक्रान्तस्थानकामित्वं कालचोदनमित्यपि ।
भुजङ्गमानां दशने हेतवः परिकीर्तिताः ॥ ३६ ॥

[विद्धादिसर्पदंशनचिह्नानि, तत्साध्यासाध्यकथनं च]

ऋजुवक्त्रक्षतं विद्धं निर्विषं भीतसर्पजम् ।
ऋजुक्षतद्वयं विद्धं नानाकलिलपिच्छिलम् ॥ ३७ ॥

---

[1] सदैव—का. सं. काश्यपसंहितायां चतस्रो दंष्ट्राः सविषाः इत्युक्तम् । [2] ग्रभाषिणी—मु.

उन्मत्तसर्पसञ्जातं मनाक्तत्र विषं भवे ।
लालाक्तं खण्डितं विद्यात्क्षुधार्तभुजगोद्भवम् ॥ ३८ ॥

कृच्छ्रसाध्यं विषं तत्र विषमं किल जायते ।
वक्रैकक्षतसंयुक्तं खण्डितं पूर्ववैरिणा ॥ ३९ ॥

कृतं नागेन तत् क्ष्वेलमसाध्यमिह लक्ष्यते ।
लालाकीलालसंयुक्तं खण्डितं यत्र दृश्यते ॥ ४० ॥

तद्दृप्तनागसम्भूतं तद्विषं नैव बाधते ।
यत्र वा खण्डितं रक्तं मांसासङ्गीव लक्ष्यते ॥ ४१ ॥

तदाक्रान्ताहिसञ्जातं क्षिप्रसाध्यं विनिर्दिशेत् ।
खण्डितं मांसमध्यस्थं यदा लालासृगन्वितम् ॥ ४२ ॥

स्थानार्थिना कृतं विद्यान्नागेन सुकरक्रियम् ।
दष्टं वा खण्डितं वापि रुधिरोद्गारभीषणम् ॥ ४३ ॥

यत्र वा दृश्यते तत्तु कालोत्थेनाहिना कृतम् ।
[1]दाही पिपीलिकास्पर्शी कण्डू[2]शोफरुजान्वितः ॥ ४४ ॥

[3]सविषः सर्वथा दंशस्तस्मादन्यस्तु निर्विषः ।
दंष्ट्रावालाग्रसंरोधाद्यत्राङ्कं जायते स्फुटम् ॥ ४५ ॥

आनीलमथवा रक्तमवलुप्तं तदुच्यते ।
तच्च हेतुभिरष्टाभिः सम्भूतैर्वोपजायते ॥ ४६ ॥

तत्साध्यासाध्यभावस्तु चेष्टितैरेव लक्ष्यते ।

[दर्वीकरादिदंशपरिज्ञानं, मर्मदंशनस्यातिकृच्छ्रसाध्यता च]

शुष्कः [4]सितेतरो रूक्षो दंशो दर्वीकरोद्भवः ॥ ४७ ॥

---

[1] पिपासिकादाहस्पर्शी—मु. [2] रोगरुजा—का. सं. [3] सन्तापग्रथितो दंशः सविषोऽन्यस्तु निर्विषः—का. सं. [4] पीतेतरः—का. सं.

कल्लोले

पीतः सशोषः सोष्णश्च दंशो मण्डलिकाश्रितः ।
स्निग्धोऽतिशोफः शीतासृग्दंशो राजिलसम्भवः ॥ ४८ ॥

व्यन्तराभिगतो दंशो विज्ञेयो मिश्रलक्षणः ।
[1]मर्मावयवसंस्थाने यदा दंशो भविष्यति ॥ ४९ ॥

तत्रातिकृच्छ्रसाध्यं याद्विषं वीर्याधिकोद्धतम् ।

[मर्मस्थानानि, तद्दंशने देहविकारश्च]

हृद्गुह्यतालुवदनोदरकर्णनेत्र-
भ्रूमध्यशङ्खगुदमण्डलसंज्ञितानि ।
मर्माणि तेषु दशसु क्षतमाहितं चे-
न्नागेन यद्यवशतां क्षणमेति मर्त्यः ॥ ५० ॥

[विषव्याप्तिजाः सप्त चेष्टास्तत्स्वरूपाणि च]

विषे व्याप्ते तु तद्वेगात्सप्त चेष्टाः प्रकीर्तिताः ।
यथा रोमोद्गमः स्वेदो वैवर्ण्यं वेपथुस्तथा ॥ ५१ ॥

हिक्काश्वासोन्नतिर्मूर्छा मरणं चेति ता विदुः ।

[कालसर्पदष्टस्य चेष्टाः]

गात्रोद्वेगः श्वयथुजडतानेत्रवैवर्ण्य[2]कार्ण्यम्
ग्रीवाभङ्गो रुधिरवमनं रोमकूपेषु चास्ये ।
पित्तश्लेष्मोद्गमनमवशाद्धारतीसन्धिभङ्गो
दन्तोष्ठादेरपि च घटना कालदष्टस्य चेष्टा ॥ ५२ ॥

[सर्पदष्टस्य मृत्युचिह्नानि]

दक्फुल्ला विवृतं सवायुवदनं सन्दर्शनं पृष्ठतः
प्रोक्ते मर्मतले च [3]दंश उदकस्पर्शेऽप्यरोमोद्गमः ।

---

[1] वर्मावयव—ग. [2] कार्श्यम्—मु. [3] वंश—मु.

कीलालोद्गमनं न ताडनपदं यष्ट्या न शस्त्रक्षता-
द्रक्ताविष्करणं च यस्य नियतं दष्टः स मृत्युं गतः ॥५३॥

[अनन्तादिनागानां रव्यादिवारेषु विषोदयः, तत्कालादिकं च]

रवेर्वारे द्विजोऽनन्तो नागः पद्म[1]शिरास्ततः ।
वायवीयविषो यामार्धमात्रमुदयी भवेत् ॥ ५४ ॥

वासुकिः सोमवारे तु क्षत्रियः शुभ्रविग्रहः ।
नीलोत्पलाङ्क आग्नेये गरलोऽभ्युदयं व्रजेत् ॥ ५५ ॥

भवत्यभ्युदयी भौमे तक्षको विश्वरक्षकः ।
आरक्तः पार्थिवविषो वैश्यः स्वस्तिकलाञ्छनः ॥ ५६ ॥

बुधे लब्धोदयः शुद्रः कार्कोटोऽञ्जनसन्निभः ।
सवारुणविषो रेखात्रितयाश्रितमूर्तिमान् ॥ ५७ ॥

गुरुवारोदयः पद्मः स्वर्णवर्णसमद्युतिः ।
शूद्रो माहेन्द्रगरलः पिञ्छचन्द्राभबिन्दुकः ॥ ५८ ॥

शुक्रवारोदितो वैश्यो महापद्मो घनच्छविः ।
लक्षिताङ्गस्त्रिशूलेन दधानो वारुणं विषम् ॥ ५९ ॥

धत्ते शङ्खः शनौ शक्तिं समुदेत्यरुणारुणः ।
क्षत्रियो गरमाग्नेयं बिभ्रद्रेखां सितां गले ॥ ६० ॥

[2]राहुः स्याद्गुलिकः श्वेतो वायवीयविषो द्विजः ।
सर्ववारेषु यामार्धसन्धिष्वस्योदयो मतः ॥ ६१ ॥

अहर्निशमियं वेला ख्याता विषवती किल ।

---

[1] शिराः सितः—मु. [2] रामः—मु.

कल्लोले

[अनन्तादिनागानां तिथिवारनक्षत्रयोगविशेषतः विषोदयातिशयः]

रविरोहिण्यमावास्याश्चेद्द्वौ यामौ [1]तथा विषम् ॥ ६२ ॥

चन्द्राश्लेषाष्टमीयोगे चतुर्यामं तथा विषम् ।
भौमोत्तराभनवमी यामाः षट् सततं विषम् ॥ ६३ ॥

चतुर्थ्यामनुराधा चेद्बुधे यामाष्टकं विषम् ।
गुरौ च प्रतिपज्ज्येष्ठा षोडश प्रहरा विषम् ॥ ६४ ॥

शुक्रे माघतृतीयायां द्वात्रिंशत्प्रहरा विषम् ।
शनावार्द्राचतुर्दश्योः षड्दिनान्तं महाविषम् ॥ ६५ ॥

कालदष्टोऽपि सूर्यस्य दिने द्वाविंशतिं घटीः ।
जीवत्यतो मृतो नो चेद्दलितं कालममं तत् ॥ ६६ ॥

दिनेऽर्कस्यापरान्तोऽपि स्वास्थ्यकृद्विंशतिं घटीः ।
पश्चादष्टादशघटैर्मोहो भवति निश्चितम् । ॥ ६७ ॥

[सोमादिवारेषु कालापरान्तनागयोर्विषोदयकालक्रमः]

सोमादीनां दिनेष्वेषु घट्यः कालापरान्तयोः ।
कालस्य प्रथमा पश्चादपरास्तस्य च क्रमात् ॥ ६८ ॥

सोमस्य दिवसे [2]कालस्त्वष्टौ घट्यो जनैः समाः ।
स्वास्थ्याय षोडश ततो मोहायाष्टादश स्फुटाः ॥ ६९ ॥

भौमस्य दिवसे कालो घटिका विंशतिर्भवेत् ।
घटिका द्वादश स्वास्थ्ये षट्त्रिंशन्मोहनाडिकाः ॥ ७० ॥

बुधस्य दिवसे ज्ञेया घट्यः कालस्य षोडश ।
स्वास्थ्यस्य घटिका अष्टौ मोहे सार्धं दिनं ततः ॥ ७१ ॥

बृहस्पतिदिने कालघटिका द्वादश स्मृताः ।
चतस्रो घटिकाः स्वास्थ्ये द्व्यहं मोहे घटी तथा ॥ ७२ ॥

---

[1] महाविषम्–ग.  [2] कालो घटिकाविंशतिः क्रमात्–मु.

शुक्रस्य दिवसे कालघटिका अष्ट निश्चिताः ।
घट्योऽष्टाविंशतिः स्वास्थ्ये मोहे [1]दिनचतुष्टयम् ॥ ७३ ॥

शनैश्चरदिने काले घटिकानां चतुष्टयम् ।
घट्यो जनैः समाः स्वास्थ्ये मोहे षट्साधिकं दिनम् ॥ ७४॥

कालोन्तेऽर्धे शनेरन्त्या घटी जीवे परान्तकः ।

[कालदंशने नाभौ स्फोटचिह्नम्]

([2]काल एव भवेन्नित्यं सर्वप्रहरकान्तरे ॥ ७५ ॥

नाभिदेशतले स्पृष्टो निर्दग्धस्येव वह्निना ।
दष्टस्य जायते स्फोटो ज्ञेयोऽनेन परान्तकः ॥ ७६ ॥)

[अनन्तादिनागानामसाधारणस्वरूपम्]

अनन्तो दक्षिणाङ्केऽक्षो वासुकिर्वामवीक्षकः ।
तक्षकः श्रवणस्पर्शी नासां कार्कोटकः स्पृशेत् ॥ ७७ ॥

पद्मः कण्ठतलस्पर्शी महापद्मः श्वसित्यलम् ।
शङ्खो हसति भ्रुप्रेक्षो गुलिको [3]नागचेष्टितम् ॥ ७८ ॥

[विषदंशोपलब्धिकाल:]

विषदंशो द्विपञ्चाशन्मात्रा[4]स्तिष्ठेत्ततोऽलिके ।

[धातुभेदेन विषकृत्यम्]

नेत्रयोर्वदने नाडीष्वथ धातुषु सप्तसु ॥ ७९ ॥

रसस्थं कुरुते कण्डूं रक्तस्थं [5]बाह्यतापकृत् ।
मांसस्थं जनयेच्छर्दिं मेदस्थं हन्ति लोचने ॥ ८० ॥

---

[1] का दिनाः । [2] अयं धनुरङ्कितो भागो मुद्रितपुस्तके नास्ति । [3] नगचेष्टकः–मु. [4] ष्वत्र तौलिके–मु. [5] दाहतापकृत–मु.

अस्थिस्थं [1]मर्मपीडां च मज्जास्थं [2]दाहमान्तरम् ।
शुक्रस्थमानयेन्मृत्युं विषं धातून् क्रमाद्दहेत् ॥ ८१ ॥

[रसादिधातुचतुष्टये विषस्य साध्यता, इतरत्रासाध्यता च]

निराकर्तुं विषं शक्यं पूर्वं स्थानचतुष्टये ।
अतः परमसाध्यं तु कष्टात्कष्टतरं भवेत् ॥ ८२ ॥

[आग्नेयादित्रिविधविषचिह्नानि]

आग्नेये स्याद्विषे तापो जडता वारुणेऽधिका ।
प्रलापो वायवीये तु त्रिविधं विषलक्षणम् ॥ ८३ ॥

[नागदष्टस्य जीवनपरीक्षाविधिः]

निक्षिप्ते मारिचे चूर्णे दृशोर्यस्य पयः क्षरेत् ।
तदा जीवति दष्टः सन्नन्यथा तु न जीवति ॥ ८४ ॥

[शुक्लप्रतिपदादिक्रमेण नृणामङ्गेषु पीयूषकलावस्थानं, कृष्णपक्षे तद्विपर्ययश्च]

पादाङ्गुष्ठेऽपि तत्पृष्ठे गुल्फे [3]जानुनि लिङ्गके ।
नाभौ हृदि कुचे कण्ठे नासादृक्छ्रुतिषु भ्रुवोः ॥ ८५ ॥

शङ्खे मूर्ध्नि नृणां तिष्ठेत्पीयूषस्य कलान्वहम् ।
शुक्लप्रतिपदाद्ये तु कृष्णपक्षे विपर्ययः ॥ ८६ ॥

[स्त्रीपुरुषयोः वामदक्षिणभागभेदेन सुधाकलादित्रयावस्थितिः]

सुधाकला स्मरो जीवस्त्रयाणामेकवासिता ।
पुंसो दक्षिणभागे स्याद्वामभागे तु योषितः ॥ ८७ ॥

[विषस्थानपरिचयः, तत्रत्यसर्पदंशनस्य मृत्युहेतुता च]

शुक्रस्थानाद्विषस्थानं सप्तमं ज्ञेयमन्वहम् ।
सुधा विषस्थानमाद्यं विषघ्नं वृद्धिकृत्परम् ॥ ८८ ॥

---

[1] मांसपीडां–मु. [2] दाहमङ्कुरम्–मु. [3] जानूरुलिङ्गके–मु.

सुधास्थानेषु नैव [1]स्यात्कालदंशोऽपि मृत्यवे ।
विषस्थानेषु दंशस्तु नैव जायेत मृत्यवे ॥ ८९ ॥

[दंशकाललक्षणविमर्शनोक्तिः]

विषार्तस्याङ्गिनः पूर्वं विमृश्यं काललक्षणम् ।

[कुजभानुमन्दवारेषु सन्ध्ययोः सङ्क्रान्तौ च सर्पदंशने फलम्]

भौमभास्करमन्दानां दिने सन्ध्याद्वये तथा ॥ ९० ॥
सङ्क्रान्तिकाले दष्टो यः स क्रीडति सुरस्त्रिया ।

[पञ्चम्यादितिथिविशेषेषु सर्पदंशनफलम्]

पञ्चमी षष्ठिकाष्टम्यौ नवमी च चतुर्दशी ॥ ९१ ॥
अमावास्याप्यवश्यं स्याद्दष्टानां मृतिदायिनी ।

[मीनादिमासविशेषेषु दग्धतिथिषु सितचन्द्रे च सर्पदंशने जीवितसंशयः]

मीने चापद्वये कुम्भवृषयोः कर्कटाजयोः ॥ ९२ ॥
[2]कन्यामिथुनयोः सिंहालिनोर्मृगतुलाख्ययोः ।
एकान्तरा द्वितीयाद्या दग्धाः स्युस्तिथयः क्रमात् ॥ ९३ ॥
सितचन्द्रे तु दष्टानां भवेज्जीवितसंशयः ।

[मूलादिनक्षत्रविशेषेषु सर्पदंशने फलम्]

मूलाश्लेषा मघा पूर्वात्रयं भरणिकाश्विनी ॥ ९४ ॥
कृत्तिकार्द्रा विशाखा च रोहिणी दष्टमृत्युदा ।

---

[1] स्याद्विषदं—मु.    [2] कन्यावृश्चिकयोः सिंहे तथा मृगतुलाख्ययोः—मु.

[दिग्भेदेन विषावेदनाय समागतदूतत्यागस्वीकारौ]

नैर्ऋत्याग्नेयिका याम्या दिशस्तिस्रो विवर्जयेत् ॥ ९५ ॥
अन्यदिग्भ्यः समायातो दष्टो जीवत्यसंशयम् ।

[अन्ये च वर्जनीयदूताः]

तैलाक्तो मुक्तकेशश्च सशस्त्रः प्रस्खलद्वचाः ॥ ९६ ॥
ऊर्ध्वीकृतकरद्वन्द्वो रोगग्रस्तो विहस्तकः ।
रासभं करभं मत्तमाहिषं चाधिरूढवान् ॥ ९७ ॥
अपद्वारसमायातः कान्दिशीकत्वलक्षणः ।
एकवस्त्रो विवस्त्रश्च व्रतस्थो जीर्णचीवरः ॥ ९८ ॥
वाहिनीविवृतः क्रुद्धो दूतो नूतनजन्मने ।
स्थिरो मधुरवाक् पुष्टो क्षतपाणिर्दिशि स्थितः ॥ ९९ ॥
एकजाति[1]वृतो दूतो धूतोरगविषव्यथः ।
विषमः शस्यते दूतः स्त्री स्त्रीणां तु नरो नृणाम् ॥ १०० ॥
एवं सर्वेषु कार्येषु वर्जनीयो विपर्ययः ।

[दष्टनामग्रहणेन दूतपादविन्यासविशेषतश्च दष्टस्य स्त्रीपुरुषविवेकः]

दष्टस्य नाम प्रथमं गृह्णंस्तदनु मन्त्रिणः ॥ १०१ ॥
वक्ति दूतोऽयमाहूतो दष्टोऽयं मुच्यतामिति ।
दूतस्य यदि पादः स्याद्दक्षिणोऽग्रे स्थितस्तदा ॥ १०२ ॥
पुमान् दष्टोऽथ वामे तु स्त्री दष्टेत्यपि निश्चयः ।

[दूतस्याङ्गविशेषस्पर्शादिना अन्यान्यपि ज्ञेयपरिज्ञानानि]

मन्त्रिणोऽग्रे स्थितो दूतो यदङ्गं किमपि स्पृशेत् ॥ १०३ ॥
तस्मिन्नङ्गेऽस्ति दंशोऽपि ज्ञानिना ज्ञेयमित्यपि ।
अग्रतस्स्थे यदा दूते वामा वहति नासिका ॥ १०४ ॥

[1] वृतो–मु.

तदा सुखासिका देश्या दष्टस्यागदकारिणा ।
वामायामपि नासायां यदि वायोः प्रवेशने ॥ १०५ ॥
दूतः समागतः शस्यस्तदन्ये चान्यथा [1]पुनः ।
दूतोक्तगुणसङ्ख्याङ्को द्विगुणो भज्यते त्रिभिः ॥ १०६ ॥
यद्येकः शेषतां याति तच्छुभं नान्यथा पुनः ।

[वल्मीकादिस्थलसन्ध्यादिकालयोः सर्पदष्टस्य जीवितसंशयः, अन्यत्र क्लेशजीवनं च]

वल्मीकोद्यानचैत्येषु श्मशाने देवतालये ॥ १०७ ॥
शृङ्गाटके सरित्सङ्गे शून्यागारे चतुष्पथे ।
यदि सर्पेण सन्ध्यायां दष्टो जीवितसंशयः ॥ १०८ ॥
द्वयोर्दशम्योरष्टम्योस्तथा रिक्तासु च क्रमात् ।
भुजङ्गमेन दष्टश्चेन्नरः क्लेशेन जीवति ॥ १०९ ॥

इति शिवतत्त्वरत्नाकरे षष्ठकल्लोले विषनिरूपणे सर्पादिदूतान्त-लक्षणवर्णनं नाम षड्विंशस्तरङ्गः

---

## षष्ठकल्लोले सप्तविंशस्तरङ्गः

### विषचिकित्सायां मन्त्रद्रव्यागदवीरभद्रनायकचरित्रवर्णनम्

[विषचिकित्सायां मन्त्रागदे गारुडपञ्चाक्षरीमन्त्रः, तत्सिद्धिक्रमश्च]

अथातः सम्प्रवक्ष्यामि मन्त्रागदमनुत्तमम् ।
क्षिपप्रणववह्निस्त्रीमन्त्रो गारुड उच्यते ॥ १ ॥
पञ्चभूतात्मकः साक्षात्प्रत्यक्षगरुडात्मकः ।
आराध्यात्मज्ञमाचार्यं लब्धाभिज्ञो जितेन्द्रियः ॥ २ ॥
साङ्गं मन्त्रं जपेल्लक्षं [2]पूर्वमेवात्मसिद्धये ।
आत्मानं [3]सकलीकृत्य सृष्टिक्रमविधानतः ॥ ३ ॥

---

[1] धनः -मु. [2] पूर्वमेवेष्टसि—मु. [3] सङ्कली—मु.

ओंबिन्दुसंयुतोर्ध्वाधो वह्निरुद्धान्त्यकर्णिकम् ।
भावयेन्मातृकाम्भोजं हृदये हंसपाण्डरम् ॥ ४ ॥

तत्रात्मानं समाधाय परमानन्दमीश्वरम् ।
ततः पादोरुहृदयवक्त्रमूर्धसु विन्यसेत् ॥ ५ ॥
क्षिपादिपञ्चबीजानि गरुत्मन्तं ततः स्मरेत् ।

[गरुडध्यानम्]

आजानूत्तप्तहेमप्रभममलहिमप्रख्यमानाभि साक्षा-
दाकर्णात्कुङ्कुमाभं भ्रमरकुलमिव श्याममामूर्धकेशम् ।
व्याप्तब्रह्माण्डगर्भं द्विभुजमभयदं पिङ्गनेत्रोर्ध्वतारं
तार्क्ष्यं नीलाभ्र[1]नासं द्युतिविविधमहापक्षलक्ष्यं नमामि ॥६॥

एवं ध्यात्वा प्रभुं तार्क्ष्यमात्माभेदेन तत्त्ववित् ।

[सर्पदष्टे मन्त्रचिकित्साक्रमः]

दष्टं प्रति वदेन्मन्त्री विषं नास्तीति चिन्तयन् ॥ ७ ॥
सद्यो निर्विषतां याति तार्क्ष्यतादात्म्यभावतः ।
अथ तन्मन्त्रबीजानि स्वाङ्गुष्ठाद्यङ्गुलिक्रमात् ॥ ८ ॥
क्षित्यादिवर्णवेश्मानि मध्यपर्वसु निक्षिपेत् ।
कलागुणाख्यातन्मात्रब्रह्मभेदाननुक्रमात् ॥ ९ ॥
यथावद्भूतनागानामाद्यवर्णांश्च निक्षिपेत् ।
न्यस्तेनानेन वामेन हस्तेनाक्षरमूर्तिना ।
स्पर्शनं सर्वरोगघ्नं का कथा विषमोक्षणे ॥ १० ॥
मुष्टिमन्तःस्थिताङ्गुष्ठां दर्शयेच्च विषापहाम् ।
हृत्पद्मकोशे शशिमण्डलान्त-
विंष्टस्य नामार्णवृतं सबीजम् ।
संस्तभ्य [2]कण्ठे वरुणं च बिन्दु-
स्थाने स्मरेत्स्यादिति जीवरक्षा ॥ ११ ॥

---

[1] वासं–मु. [2] कन्दे–मु.

[1] भूव्योमव्यत्ययं कृत्वा खगराणमन्त्रमुच्चरेत् ।
संस्तम्भयेति चाङ्गुष्ठचालनात्स्तम्भयेद्विषम् ॥ १२ ॥

हृत्पद्म शशिनिरुद्धं
शिरसि सुधास्राविं वारुणं ध्यायेत् ।
विषदुरितपलितरोग-
ध्वंसि चिराभ्यासतो दिशेदायुः ॥ १३ ॥

[सर्पदष्टे द्रव्यागदक्रमः]

अतः परं क्रमेणैव वक्ष्ये द्रव्यागदं यथा ।
दष्टाङ्गं छेदयेत्सद्यो दहेद्वा कनकादिभिः ॥ १४ ॥

चूषयेत्तत्क्षणाद्दंशं सिरां वा वेधयेत्सुधीः ।
दंशकार्हिं दशेद्दंशोपरिष्टाद्बन्धयेद्दृढम् ॥ १५ ॥

अवो मलेन वा चाद्भिर्दंशं सम्पूरयेच्च तम् ।
शीतोदैरभिषिञ्चेद्वा सर्वस्रोतो विसारिभिः ॥ १६ ॥

गोमयाम्बु पिबेत्साज्यमाज्यं वा जीवरक्षणम् ।
हृदयावरणं नाम तदवश्यं प्रयोजयेत् ॥ १७ ॥

शिरीषबीजपुष्पार्कक्षीरबीजकटुत्रयम् ।
विषं विनाशयेत्पाननस्यलेपाञ्जनान्तरे ॥ १८ ॥

रसोनराजसिन्धूत्थविलाक्षानिशाद्वयैः ।
हिङ्गुमातुलसंयुक्तं हरेत्पानादिना विषम् ॥ १९ ॥

गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
पाननस्यक्रियायोगाद्विषं हरति तत्क्षणात् ॥ २० ॥

अश्वगन्धावचाव्यूषशिरीषैस्तुल्यभागतः ।
समं रम्भाम्भसा पिष्टैर्विषं पानादिना हरेत् ॥ २१ ॥

रामठोषणशिग्रुत्वक्समं द्रोणोद्भवाम्भसा ।
सगुञ्जाहिङ्गुवकुलशिग्रुत्वग्रससंयुतम् ॥ २२ ॥

---

[1] इदमर्धं मुद्रितकोशे नास्ति ।

हिङ्ग्वग्रवारिजोपेतं कारवल्लीरसान्वितम् ।
निशाद्वयं च मरिचं शिरीषरसभावितम् ॥ २३ ॥

[1]स्नुहिहिङ्गुवचागुञ्जनरमूत्रसमन्वितम् ।
सोग्रां सचित्रकां गुञ्जां पिष्ट्वा खार्यां समाहिताम् ॥ २४ ॥

मागधीं मरिचं विश्वं वस्तमूत्रेण संयुतम् ।
सप्तैते कीर्तिता योगा विषयोगातुरेऽष्टमी ॥ २५ ॥

पानादिना प्रयोक्तव्या दर्वीकरविषापहाः ।
मांसीचन्दनसिन्धूत्थकृष्णयष्ट्योषणोत्पलैः ॥ २६ ॥

समूत्रै रञ्जनात्सद्यो विषसुप्तप्रबोधनम् ।
हिङ्ग्वग्रालशुनव्यूषैः करञ्जामयहिङ्गुकैः ॥ २७ ॥

हिङ्गुश्लेष्मातकनखैः [2]कर्णिव्याघूतहिङ्गुभिः ।
शिरीषोद्भवपञ्चाङ्गैः पिष्ट्वा गोमूत्रसंयुतम् ॥ २८ ॥

यथावद्गुटिकाः कृत्वा छायायामेव शोषयेत् ।
ताभिर्नस्याञ्जनं कुर्याद्दह्याय विषशान्तये ॥ २९ ॥

तगरं केसरं कुष्ठं वचोन्मत्तास्थिचन्दनम् ।
तण्डुलाम्बु च तल्लेपो भवेद्द्विषविसर्पहा ॥ ३० ॥

हरिद्रायूषकल्केन शकृता माहिषेण वा ।
द(ध)त्तूरकल्कयुक्तेन शोफघ्नमुपलेपतः ॥ ३१ ॥

विभीतकीलतावेरीमुसलीवेगजां शिफाम् ।
लिम्पेदाज्येन तक्रेण हरेन्मण्डलिकाविषम् ॥ ३२ ॥

नवनीतं निशालोध्रचूर्णैरालेपनं हरेत् ।
क्ष्वेलं मण्डलिनां क्षीरसर्पिर्भ्यामञ्जनं तथा ॥ ३३ ॥

---

[1] सहाहि—ग.  [2] कर्णिव्याघात—मु.

नवनीतं दधि मधु सैन्धवं च कटुत्रिकम् ।
लिहेन्मण्डलिदष्टानां रुधिरोद्गारशान्तये ॥ ३४ ॥

नीलीबीजं सनीपत्वग्रुधिरोद्गारशान्तिदम् ।
वक्रस्थमथवा नीपत्वक्काथं पयसा पिबेत् ॥ ३५ ॥

सक्षीरं क्षीरवृक्षाणां कषायं ससिताकणम् ।
शीतलं पिबतो न स्यात्सद्यो मण्डलिनां विषम् ॥ ३६ ॥

वृषस्य तण्डुलाम्बेन लिम्पेन्नाभेरधः सकृत् ।
विण्मूत्रस्तम्भनात्सद्यः शाम्यते क्ष्वेलकारिता ॥ ३७ ॥

विडालपत्रिकामूलं शीताद्भिः कुक्षिमालिपेत् ।
स्रंसते क्ष्वेलसंस्तब्धं पुरीषं मूत्रमेव वा ॥ ३८ ॥

कोशातकीकटुकक्रामुकदेवदालीं
पिष्ट्वा पिबेदुत वचां लवणोदकेन ।
क्राथं मनोभवपलस्य पिबेत्सतैलं
विष्टब्धमुद्गिरति हृद्गतमन्नजातम् ॥ ३९ ॥

सदेवदारुमहिषीशकृत्तन्मूत्रपेषितम् ।
मण्डलिक्ष्वेलशोफघ्नमुपलेपाय शस्यते ॥ ४० ॥

निशात्रिशूलीकल्काभ्यां सौवीरेणानुलेपयेत् ।
हन्ति मण्डलिनां क्ष्वेलमतिशोफसमन्वितम् ॥ ४१ ॥

सिन्धूत्थत्रिफलाव्योषमाक्षिकारिष्टवत्सकम् ।
नवनीतान्वितं लिम्पेन्मण्डलिक्ष्वेलशान्तये ॥ ४२ ॥

कोशातकीलवणवायुविडङ्गयोषा-
पथ्याशिरीषशरपुङ्खवचाहरिद्राः ।
बस्ताण्डसूकरशकृत्कदलीफलानि
सस्फोटमण्डलिविषोपशमाय लिम्पेत् ॥ ४३ ॥

दुरालभाद्रोणनिशातुषाणि
सतण्डुलाधिष्ठितकाञ्जिकानि ।
[1]विष्ठाकटुष्णोपहितेन लिम्पे-
त्कण्डूतिशोकार्तिषु मण्डलीनाम् ॥ ४४ ॥

कोशातकीकिंशुककारवल्ली-
दुग्धाहरिद्रासुरसाखुलिङ्गैः ।
अद्भिः कटुष्णैरसकृन्निषिञ्चे-
च्छान्त्यै मतं मण्डलिनिः क्षतानाम् ॥ ४५ ॥

ब्रह्मीसुवर्णसुरसामधुकारवल्ली-
पिञ्छप्रवालतुषवत्सकशिग्रुबीजैः [2] ।
धान्याम्लमस्तुमहिषीनवनीतपिष्टै-
रालेपनं हरति मण्डलिनां विषार्तिम् ॥ ४६ ॥

[3]सितमागधिमाक्षिकाणि पिष्ट्वा
सह सर्पिःपयसा पिबेल्लिहेद्वा ।
शरपुङ्खशिफां सतन्दुलतोये
शमयेद्राजिलसम्भवां विषार्तिम् ॥ ४७ ॥

कृष्णासिन्धूद्भवागोशकृदुदकघृतक्षौद्रमिश्रं पिबेद्वा
तैलाक्तं द्रोणपुष्पप्रभवरसयुतालोड्य चिञ्चाम्लतैलैः ।
दार्वीगोरोचनाभ्यां सह लवणमिथो नूतनागस्त्यपुष्पं
पिष्ट्वा क्षीरान्वितं वा शमयति तरसा राजिलानां विषार्तिम् ॥

वेश्मधूमविषवक्त्रमागधी-
विश्वकुष्ठमरिचान्यरेणुकम् ।
लेपयेत्समधुपिष्टमञ्जसा
राजिलोत्थविषशान्तये ध्रुवम् ॥ ४९ ॥

---

[1] दुष्टकटुष्णोपहितेन—मु. [2] पिण्डैः—मु. [3] कृपेतमागध—मु.

नकुलास्थिसुमनितोषण-
गृहधूमैर्लेपनादिना शमयेत् ।
मूत्रेण राजिलविषं
पयसा सिक्तं तथा समुद्रफलम् ॥ ५० ॥

कृत्वा प्रभञ्जयित्वा
भसितं विश्वं च भव्यनन्द्याकम् ।
तत्कृतघुटिकानस्या-
त्प्रशान्तिमुपयाति राजिलक्ष्वेलम् ॥ ५१ ॥

अलाबुबीजं सकरञ्जबीजं
कोशातकीबीजशिफासमेतम् ।
गोमूत्रपिष्टं परमेतदिष्टं
पानादिना सर्वविषापहारि ॥ ५२ ॥

अर्कस्य कृत्वा पयसा समेतं
कोशातकीहिङ्गुवचाशिरीषम् ॥
आजेन मूत्रेण कटुत्रयं च
पिष्टं विषं हन्त्यपि कालकूटम् ॥ ५३ ॥

क्षौद्रान्वितं नकुलखड्गकपोतगोधा-
मार्जारमर्कटमयूरवराहपित्तम् ।
शृङ्गे गवां विनिहितं विषमाशु हन्या-
न्नागेन्द्रमुक्तमपि सर्वविषे कथा का ॥ ५४ ॥

विषवृक्षशिरीषकारवल्ली-
सितगुञ्जागिरिकर्णिकामधूकाः ।
मदनामयरामठार्कपाठाः
सह कोशातकिना विषापहाः स्युः ॥ ५५ ॥

तैलेन चेत्तत्सिद्धेन तत्सिद्धेन तथाम्बुना ।
स्नापयेच्च कृताभ्यङ्गं विषशान्त्यै विषापहम् ॥ ५६ ॥

शिरीषास्थिसहागौरीदेवीनिर्गुण्डिकान्वितैः ।
अम्भोभिः स्नापयेद्दष्टमभ्यक्तं पयसा शनैः ॥ ५७ ॥

एरण्डचिञ्चार्कतमालनिम्बैः
सकेसराङ्कोलशिरीषलम्बैः ।
समातुलुङ्गत्रितयैर्विषार्तिं
कोष्णैर्विषं चाच्छजलैः प्रसिद्धैः ॥ ५८ ॥

कटुशेलुफलं भेकद्विमुखाहिवसायुतम् ।
एतल्लिप्तकरस्पर्शाद्विषं सर्पस्य नश्यति ॥ ५९ ॥

द्विमुखाहिफलास्थीनि रक्तचित्रकसर्पिषी ।
स्नुहिक्षीरं च तल्लिप्तं तूर्या[1]नादो विषापहाः ॥ ६० ॥

[मन्त्रेणा गृहात् सर्पोच्चाटनम्]

ॐ स्वः सर्पकुलायेति स्वाहान्तं मन्त्रमुच्चरन् ।
सप्त जप्त्वा [2]मृदं क्षिप्त्वा सर्पानुच्चाटयेद्गृहात् ॥ ६१ ॥

[सामान्यतः सर्वविषागदप्रतिज्ञा]

अतः परं समासेन सर्वागदमुदीर्यते ।

[कुलचन्द्रादयः षोडश आखुभेदाः]

कुलचन्द्रः कुलघ्नश्च विषघाती भयानकः ॥ ६२ ॥

क्रूरोऽप्युग्रश्च कुमुदो मेघनादश्च भूतकः ।
तीक्ष्णः सनासः सिंहास्यः सुदन्तः सुबलस्तथा ॥ ६३ ॥

एकचारी सुगर्भश्च कीर्तिताः षोडशाखवः ।

---

[1] नादो–मु.  [2] मर्द–ग.

[मूषिकविषापहरणमन्त्रः, साधितेन तेन तद्विषापहरणं च]

तेषां सामान्यतो ज्ञेया चिकित्सेह विवेकिना ॥ ६४ ॥

आदौ रे रे पदं [1] प्रोच्य श्वेतमूषिकपूर्वतः ।
कपिले धूः कपिलजं [2] आरुद्रपदमुच्यते ॥ ६५ ॥

भूयः पिङ्गलपूःशब्दमुक्त्वा हर विषं पुनः ।
हरद्वन्द्वं संहरेद्वे द्वे पूर्वमन्त्रक्रमोदितः ॥ ६६ ॥

मूषिकोत्थविषध्वंसी ख्यातोऽयं रुद्रदैवतः ।
अनेन लक्षजप्तेन मन्त्री भैरवविग्रहः ॥ ६७ ॥
साधयेन्मूषिकान् वाचा किमु तत्क्ष्वेलमोक्षणे ।

[मूषिकविषे द्रव्यानहंक्रमः, तत्प्रभेदाश्च]

साम्याया वनमालायाः प्रतीच्यां पर्णसप्तकम् ॥ ६८ ॥

पिबेच्चामरलोध्रत्वक्पयसा वा वसुत्रयम् ।
मूषिकाक्ष्वेलनाशाय सिद्धा योगास्त्रयः स्मृताः ॥ ६९ ॥

मुस्ता मधुघृतोपेता लीढाखुविषनाशिनी ।

कार्पासपत्रस्य रसं सतैलं
मूत्रेण कान्ताकुसुमं पिबेद्वा ।
तापिञ्छवृक्षप्रभवां शिफां वा
ख्याता विषभ्रान्तिषु मूषिकाणाम् ॥ ७० ॥

कारस्करोद्भूतनिशालवङ्ग-
प्रियङ्गुनिष्पावदलं निपीड्य ।
प्रलेपयेदाखुविषोपशान्त्यै
सपाटलीमूलनिशां च क्षाराम् ॥ ७१ ॥

दुग्धामातुलकोशातीमूलं सरजनीद्वयम् ।
पीत्वा तुषाम्बुना हन्यादचिरान्मूषिकाविषम् ॥ ७२ ॥

---

[1] प्रोक्ता—ग. [2] तावद्—क.

शिरीषपर्णकाथोत्थां यवागूं पाययेत्पुनः।
मलसङ्गशिरोरोगच्छर्दिकुष्ठारुचिज्वरैः ॥ ७३ ॥

शोफकुक्षिरुजाभ्यां च पीडितं तु विरेचयेत्।
रेचनं सागरैरण्डबीजताम्बूलखादनम् ॥ ७४ ॥

कपित्थाङ्कोलकार्पासशिरीषार्कदलान्वितैः।
विधिक्तं स्नापयेत्काथैर्मूषिकक्ष्वेलशान्तये ॥ ७५ ॥

[लूताप्रभेदः, तत्र चतुर्णां विषस्य दुर्जयत्वं, विषसम्पर्कक्रमः, तद्विकारः, सर्वेषां मन्त्रौषधसाध्यता च]

लूतास्तु विंशतिः प्रोक्ताश्चतस्रस्ताः सुदुर्जयाः।
दर्शनाच्छायया चात्मदशनाद्गन्धसम्भवात् ॥ ७६ ॥

हन्युस्ताः किल तच्चेष्टाः साध्या मन्त्रौषधोद्यमैः।

[लूताविषसम्भवक्रमः, तद्धरणमन्त्रश्च]

सर्पाशनोदकस्रावदंशैः स्याल्लूतिकाविषम् ॥ ७७ ॥

सहस्ररश्मिरादित्योऽग्नि[1]र्हुं फडिति मन्त्रतः।

[लूताविषे द्रव्यागदक्रमः]

निर्गुण्डी[2]शारिभोशीरकुष्ठाम्बुनवचन्दनाः ॥ ७८ ॥

[3]शेलुपद्मरूपाटल्यो लूताविषहरा इमे।
उग्रारसोनरजनीसमहिङ्ग्ववर्धनागरम् ॥ ७९ ॥

पानादिना सगोमूत्रं हरेल्लूताविषं क्षणात्।
ताम्बूलं साङ्गमाचर्व्य निष्ठीवेत्सर्वतो रसम् ॥ ८० ॥

लूताविषव्रणं हन्यात्तथा व्याघ्रपदीरसः।
गुञ्जानिर्गुण्डिकाङ्कोलपर्णशुण्ठीनिशाद्वयैः ॥ ८१ ॥

---

[1] ह्रीं फडिति मन्त्रकः—स. [2] मरीचोशीर—मु. [3] पाटलः पद्मरूपशेलुः—मु.

सकरञ्जास्थिभिः सिद्धै[1]र्लूतां तां सेचयेज्जलैः ।
हिङ्गुतालवचाकुष्ठदेवीव्याघ्रपदीगणैः॥ ८२ ॥

सराजिभिः कृतो धूपः सर्वलूतार्तिभञ्जनः ।

[विषवृश्चिकोद्भवः, तदीयविकाराश्च]

सर्पाभ्यन्तरलालाभ्यो भवन्ति विषवृश्चिकाः ॥ ८३ ॥

मोहं कम्पं ज्वरं शोफं सादं खेदं मलं तथा ।
[2]लिङ्गस्तब्धिमधोघातं मूत्रं कुर्वन्ति देहिनाम् ॥ ८४ ॥

हरन्ति जीवितं केचिद्विषमास्ते महाविषाः ।
हेमाभश्चारुणः पीतो हरिद्राभः सितोऽसितः ॥ ८५ ॥

रेखाराजीस्थिरश्चेति ते त्रयोदशधा मताः ।

[एकाद्येकोनविंशमणिभिर्वृश्चिकप्रभेदः एकमणिवृश्चिकस्य वृश्चिकेश्वरता च]

[3]सङ्ख्या त्वेकादिरेकोनविंशत्यन्ता मणेः क्रमात् ॥ ८६ ॥

यस्त्वेकमणिना युक्तः सितः स तु तदीश्वरः ।

[ईश्वरवृश्चिकस्पर्शमात्रेण प्राणहानिः, विषममणिवृश्चिकानां कष्टसाध्यता च]

तस्य संस्पर्शमात्रेण नरः प्राणान् विमुञ्चति ॥ ८७ ॥
विषमैर्मणिभिर्युक्ताः कष्टसाध्या उदीरिताः ।

[वृश्चिकविषे द्रव्यागदक्रमः]

[4]मञ्जिष्ठचन्दनौ द्वौ
पुष्येशैलिषकौ मुदेऽप्यथवा ।
शार्ङ्गेष्ठां वा लिम्पे-
द्वृश्चिकविषशान्तये सजलम् ॥ ८८ ॥

---

[1] लूतोत्थं—मु. [2] स्तब्धलिङ्गम—ग. [3] रेखास्त्वेकादि—मु. [4] मुद्रितपुस्तकेऽयं श्लोकोऽन्यथा दृश्यते.

कल्लोले

घृताक्तदुग्धलेपेन मधूकस्वेदतोऽथवा ।
सैन्धवोष्णाज्यपानेन वृश्चिकस्य विषं हरेत् ॥ ८९ ॥

मुखेन दशनैः क्षुण्णा कार्पासस्य जटा धृता ।
कर्णफूत्कारतो हन्ति विषं वृश्चिकसम्भवम् ॥ ९० ॥

[गौलिकाविषहरणक्रमः]

नक्तमालानिशाद्वन्द्वं पूतीकार्कास्थिभिः समैः ।
सव्योषैर्विषनाशाय गौलिकायाः प्रलेपयेत् ॥ ९१ ॥

[अनस्थिविषहरणक्रमः]

पतितं [1]पानसंपूर्णं [2]द्रोणस्वरसपेषितम् ।
लिम्पेत्सचूर्णं तैलं वानस्थिकाविषशान्तये ॥९२ ॥

[शतपदीजलूकाविषहरणक्रमः]

पञ्चाङ्गं शैरीषं
सव्योषं शतपदीविषं हरति ।
गोपीनसी च सर्पि-
र्लेपेन विषं हरेज्जलूकायाः ॥ ९३ ॥

[दर्दुरमत्स्यविषहरणक्रमः]

सस्नुक्क्षीरं बीजं
शैरीषं दार्दुरं विषं हन्यात् ।
पाठामूलं व्योषं
ससर्पिरालेपनाच्च मत्स्यविषम् ॥ ९४ ॥

[कीटविषहरणक्रमः]

उग्राविलङ्गरजनी-
व्योषनताम्बष्ठसैन्धवक्षारैः ।
सविषं सहिङ्गु लिम्पे-
द्धरति विषं कीटजातीनाम् ॥ ९५ ॥

---

[1] पापतं—मु. [2] द्रोणस्पन्दं सुपेषि—मु.

[अलर्कमार्जारयोर्विषे मन्त्रद्वयागदक्रमः]

अलर्काधिपते! यक्ष! सारमेयगणाधिप!।
अलर्कदष्टमेतं मां निर्विषं कुरु मा चिरम् ॥ ९६ ॥

स्वाहामन्त्रश्च मार्जारशिवाख्याग्रपदोदितम्।
मन्त्राभिमन्त्रणात्सिद्धतैलाभ्यङ्गाच्च तद्विषम् ॥ ९७ ॥

शाम्येद्व्याघ्रपदीव्योषपानाच्च घृतदुग्धयुक्।
अर्कक्षीरतिलव्योषं सयष्टिव्योषमेव वा ॥ ९८ ॥

सहेमयष्टि व्याघ्रत्वग्व्योषं वापि सवत्सकम्।
जातीमूलं सकोशातवीजं सव्योषमालिपेत् ॥ ९९ ॥

सगुडं पयसा पिष्टं पिबेच्छ्वादिविषं हरेत्।

[मत्तश्वाविषहरणागदक्रमः]

सयष्टि माधवीमूलं सधान्यं वा कटुत्रयम् ॥ १०० ॥

सगुडं पयसा पिष्टं दष्टो मत्तशुना पिबेत्।
स्वार्याकरञ्जसर्वाङ्गक्वाथेन स्नात आतपे ॥ १०१ ॥

तिष्ठन् तप्तस्तु मत्तेन शुना दष्टविषं हरेत्।

[मत्तश्वासन्दंशव्रणविरोपणौषधम्]

आलुपीयं लिहेच्छूलं सन्दंशव्रणरोपणम् ॥ १०२ ॥

[सूकरसन्दंशव्रणविरोपणौषधम्]

तत्पिष्टेन गुडाक्तेन लिप्तं दग्धशलाकया।
सगुडं शर्करां लिम्पेत्सूकरव्रणशान्तये ॥ १०३ ॥

[स्थावरविषहरणमन्त्र]

नमो वैडूर्यवर्णान्ते माते हुलुयुगं ततः।
रक्ष मां सर्वसङ्गृह्य विषेभ्यः पुनरुच्चरेत् ॥ १०४ ॥

गौरिगान्धारिचण्डाली मातङ्गी दशनप्रिया।
[1]अरिमायिपुनस्स्वाहा मन्त्रोऽयं सिद्धपूजितः ॥ १०५ ॥

स्थावरक्ष्वेलनाशाय ख्यातोऽयं सर्वकर्मसु।

[स्थावरविषहरणे द्रव्यचिकित्साक्रमः]

भुक्तमात्रे स्थिरे क्ष्वेले शीतेन स्नाप्य वारिणा ॥ १०६ ॥

पाययेत्सघृतं क्षौद्रं ततः सद्यो विरेचयेत्।
पथ्या कोशातकी पाठा सूर्यवल्ल्यग्निकामृता ॥ १०७ ॥

स[2]शरीरङ्क्रिणीशेलुकाश्मरीयामनीद्वयम्।
पुनर्नवीबृहत्यौ द्वे [3]शारिजे च कटुत्रयम् ॥ १०८ ॥

एतत्क्वाथेन संसिद्धां यवागूं च समाक्षिकाम्।
शीतलां पाययेत्सद्यः स्थावरक्ष्वेलशान्तये ॥ १०९ ॥

सिन्धूत्थदोषाघृतमाक्षिकाणां
पानाद्विषं स्थावरमाशु [4]हन्यात्।
श्लक्ष्णीकृतं ताम्रसुवर्णचूर्णं
लीढं सिताक्षौद्रयुतं तथैव ॥ ११० ॥

सर्जकामधुकलोध्रमागधी-
शारिकामलयजत्रुटीजटाः।
सामयाः समधुलेहनाद्विषं
स्थावरं प्रशमयन्ति देहिनाम् ॥ १११ ॥

मुस्तापथ्याविश्वकोशातकीभिः
सिद्धः क्वाथः साश्वमारत्रपुष्पिः।
हन्ति क्ष्वेलं स्थावरं विश्वमेला-
कार्पासैर्वा सैन्धवक्षौद्रयुक्तः ॥ ११२ ॥

---

[1] अयि मायि—मु. [2] ङ्क्षिणी—मु. [3] शलि—मु. [4] हन्ति—मु.

मञ्जिष्ठोत्पलकुष्ठयष्टिफलिनी द्वे शारिके च स्थिरा
दार्वीचन्दननागशेलुबृहतीव्योषेन्द्रनामा निशा ।
कीटघ्नामरदारुपत्रकुसुमं तक्रं च तैः साधितं-
तैलं हन्ति तथा च साधु विहितं सर्पिर्विषं स्थावरम् ॥ ११३ ॥

[दिव्यौषध्युद्धरणे मन्त्रः]

नम ओषधीभ्यः ऊर्जावन्तो भविष्यथ ।
तद्वीर्यैः कृत्स्नां कुरुध्वं पच पच हन हन दह दह
मारय मराय तुभ्यं नमः

रक्षार्थं जगतः सृजन्नभिमता दिव्यौषधीरादरा-
त्तासामप्यधिदेवतां भगवतीं सृष्ट्वाऽसृजत्सुप्रभाम् ।
देवीमोषधिसन्निधावथ यवानाकीर्य नत्वामुना
मन्त्रेणैकतमां कुतश्चिदुदितां दिव्यौषधीमुद्धरेत् ॥ ११४ ॥

[विषचिकित्सोपसंहारः]

सङ्क्षेपादिति गदिता यथा चिकित्सा
क्ष्वेलार्थं प्रतिपुरुषस्य सायुक्षः स्यात् ।
पर्याप्तं ननु फलमेतयाऽन्यथा तै-
र्विस्तीर्णैः किमु विविधार्थहृद्यवाक्यैः ॥ ११५ ॥

[आयुर्वेदविधानेन राज्ञा शरीरसंरक्षणम्]

आयुर्वेदोक्तमार्गेण रसायननिषेवणात् ।
रोगैरशेषैर्निर्मुक्तो दूरीकृतविषश्रुतिः ॥ ११६ ॥

नृपतिर्दृढगात्रः सन् भोगान् भूपालकोचितान् ।

[वेंकटपतिभूभृता स्वपौत्रवीरभद्रनायकस्य राज्याभिषेकः, तदनु
विरक्तया शिवयोगस्वीकारश्च]

बहुधानुभवेत्युक्त्वा वेङ्कटक्षितिपालकः ॥ ११७ ॥

कल्लोले

पौत्रं राज्येऽभिषिच्याथ वीरभद्राख्यनायकम् ।
ततः स्वयं च विरतः शिवयोगपरोऽभवत् ॥ ११८ ॥

[वीरभद्रनायकेन सर्वोपभोगतः स्वपितृव्यसाम्येन महीपालनम् ]

अनन्तरं वीरभद्रनामधेयोऽथ भूपतिः ।
विधानमनतिक्रम्य संसेवितरसायनः ॥ ११९ ॥

दृढगात्रो महीपालयोग्यान् भोगान् समाश्रयन् ।
अवन्नवनिमार्याभ्यां पितृव्याभ्यां समं व्यभात् ॥ १२० ॥

[तदा वीरभद्रनायकेन युद्धाय समागतदायादवधः]

शिववेङ्कटभूपाभ्यां वीरभद्रमहीपतिः ।
बहुकालमवत्यस्मिन् साकं ताभ्यां वसुन्धराम् ॥ १२१ ।

दायादाः प्रबलैः सार्धमाजग्मुर्योद्धुमुद्यताः ।
तानुद्धतानयं युद्धे विद्विषः समुपागतान् ॥ १२२ ॥

धार्तराष्ट्रानशेषेण भीमसेन इवावधीत् ।

[बसवापट्टणाधिपपूवलवंशस्थहनुमनायकेनेक्केर्यां प्रयुध्य स्वपुरनिर्गमः]

जातु याते तु बसवापट्टणाख्यपुराधिपे ॥ १२३ ॥

नृपे पूवलवंशस्थे दृप्ते हनुमनामके ।
आदाय यावतीं सेनामिक्केरीनगरावधि ॥ १२४ ॥

आगत्य योधयित्वा तु प्रयाते स्वपुरीं प्रति ।

[वीरभद्रमहीपतिना हनुमनायकजयः, तदीयसप्ताङ्गराज्यप्राप्तिश्च]

तदा निजबलैः सार्धं वीरभद्रमहीपतिः ॥ १२५ ॥

ततः परं तु बसवापट्टणाख्यं निरुध्य च ।
तत्प्राकारं समाक्रम्य सद्य एव समं बलैः ॥ १२६ ॥

हनुमन्नामकं तं च निर्जित्य निजतेजसा ।
तद्राज्यलक्ष्मीं तत्काले परिणीय ततः परम् ॥ १२७ ॥
ससाङ्गं यौतकमिव ततोऽगृह्णान्महीपतिः ।

[वीरभद्रमहीपतेः पुत्राजन्मसंतापस्तदनु शाश्वतफलाय शिवभजननिश्चयश्च]

ततोऽभीप्सितदायिन्या श्रितनन्दनसम्पदः ॥ १२८ ॥

सन्तानवल्ल्या नापश्यदङ्कितं तनुजाङ्कुरम् ।
एवं [1]सञ्चिन्तयामास तदानीं मानसे नृपः ॥ १२९ ॥

किं राज्येन विधातव्यं किं बलेन महीयसा ।
किं भोगैरखिलैर्बाह्यैः फलं पुत्रं विना नृणाम् ॥ १३० ॥

नयनानन्दनो नैव नन्दनोऽद्याभिवीक्षितः ।
अदर्शितात्मबोधं नो जन्म शास्त्रमिवाफलम् ॥ १३१ ॥

यत्प्रसादेन लभ्यन्ते नृणामिष्टान्वितं शिवम् ।
उपास्य नश्वरं मुक्त्वा शाश्वतं फलमश्नुमः ॥ १३२ ॥

[तदनु तेन स्वपितृव्ययोः शिववेङ्कटक्षोणिपालयोस्तन्निवेदनेन राज्य-
स्वीकाराभ्यर्थनं, ताभ्यां तन्निराकरणं च]

इत्यालोच्य निजं राज्यं निधित्सुः स्वपितृव्ययोः ।
आहूय तौ शिवक्ष्मापवेङ्कटक्षोणिपालकौ ॥ १३३ ॥

युवां पितृव्यौ शृणुतं युवयोरुचितां महीम् ।
युवां पालयतं नीत्येत्युदीरयति तावुभौ ॥ १३४ ॥
अवोचतां भवानेव पालयत्ववनीमिमाम् ।

[पुनश्च वैराग्यप्रदर्शनेन पितृव्ययोरेव राज्यसमर्पणेन शिवभूपते
राज्याभिषेचनं, तस्य शिवपरायणता च]

इत्युदीरितमाकर्ण्य ताभ्यां प्रत्युत्तरं ददौ ॥ १३५ ॥

---

[1]स चिन्तयामास—मु.

आयुस्तरङ्गचपलं श्रीश्च सौदामिनीचला ।
यौवनं त्रिदिनं नृणां कुतः सौख्ये स्थिरत्वधीः ॥ १३६ ॥

कुलाचला इव जनाः किं स्थिरत्वमुपागताः ।
तेऽपि सन्ति कियत्कालं किमुतास्मादृशो जनः ॥ १३७ ॥

किं तेन जन्मनाऽस्माकं येन शम्भुर्न भावितः ।
शाश्वतं च पदं लब्धुं पुनरावृत्तिवर्जितम् ॥ १३८ ॥

तस्माद्युवां पालयतं क्षोणीं नीतिमनोहराम् ।
वयं भवामः सततं शिवयोगपरायणाः ॥ १३९ ॥

इति निश्चित्य स परम्परया समुपागते ।
सिंहासने सभासद्भिरशेषैः परिवारिते ॥ १४० ॥

आस्थानमण्टपे रम्ये सभालक्षणलक्षिते ।
धार्मिकैरपि नीतिज्ञैः क्रियानिर्वहणक्षमैः ॥ १४१ ॥

सुधर्माख्यामपि स्वस्मिन् समर्पयति योगतः ।
युवमारोपयामास प्रेम्णा स शिवभूपतिम् ॥ १४२ ॥

इति श्रीनन्दनाथनन्तनकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-
परमेश्वरप्रसादसम्पादितशिवाद्वैतविद्याविशारदश्रीमत्केलदिबसवराजेन्द्रविरचित-
वेदागमान्तर्गतविविधविद्यातत्त्वसारभूते शिवतत्त्वरत्नाकरे षष्ठकल्लोले
विषचिकित्सायां मन्त्र-द्रव्यागद-वीरभद्रनायकचरित्रवर्णनं
नाम सप्तविंशस्तरङ्गः

---

[षष्ठकल्लोलीयविषयाकरग्रन्थाः, षष्ठकल्लोलोपसंहारश्च]

दत्तिलेन कृतं नन्दिभृङ्गिकोहलकादिभिः ।
भरतं चादिभरतं गीतरत्नाकरं तथा ।

उत्पलाद्यं परिमलं कृतं शार्ङ्गधरस्य च ।
विश्वकर्माख्यमययोर्मतं च वरुणार्गलम् ।

वात्स्यायनीयं नन्दीशगौणिकापुत्रयोर्मतं ।
मतं शुक्रबृहस्पत्यो रत्नशास्त्रं च सर्वतः ।

मतं नलस्य गौर्याश्च धन्वन्तर्यश्विनोस्तथा ।
रसरत्नाकरं तद्वद्रसादिहृदयं तथा ।

खनिशास्त्र मन्त्रशास्त्र योगरत्नावलीं तथा ।
प्रयोगसारं च तथा विहगेन्द्रस्य संहिताम् ।

आलोक्यायं संगृहीतः कल्लोलः परिपूरितः ।
त्रिसाहस्री सप्तशती द्वाविंशतिरितः परम् ।

ग्रन्थानां दृश्यतां सङ्ख्या षष्ठे कल्लोलके त्विह ।
विचित्रार्थाश्रयास्त्वत्र तरङ्गाः सप्तविंशतिः ।

श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचन्नवीरकरसञ्जातेन गौरीपतेः ।
हेचाकेन पदाम्बुजे च बसवक्षोणीभृता निर्मिते
कल्लोलः परिपूरितः कृतिवरे त्वस्मिन्नभूत् षष्ठकः ॥

---

# सप्तमकल्लोले

## प्रथमस्तरङ्गः

### आस्थानोपभोगवर्णनम्

[कुमारस्य राजसिंहासनालङ्कारादिप्रश्नः, महीपतेस्तदुत्तरकथनप्रतिज्ञा च]

कुम्भौ किं मम मूर्ध्नि वक्षसि कथं मातस्तव स्तस्तयो-
र्दृष्टिं प्रेमयुतां पिता वितनुते सम्मृद्य तौ मोदते।
नैवं मामककुम्भयोः किमिदमित्युक्ता सुतेन ह्रिया
नम्रां वीक्ष्य हसन्निजप्रियतमां नः पातु गौरीपतिः ॥ १ ॥

स्वामिन्ननन्यसामान्यधिषणाकृतभूषण !।
सूक्तानि भवदुक्तानि हर्षयन्ति मनो मम ॥ २ ॥

इहान्यच्छ्रोतुमिच्छामि भवद्वचनगोचरम्।
सिंहासनं महीपार्हं कीदृग्लक्षण[1]संयुतम् ॥ ३ ॥

सभा च कीदृशी राज्ञां कैर्वा स्थेयं तदन्तरे।
कीदृग्विद्यासु कुशलैः कीदृगाकल्पधारिभिः ॥ ४ ॥

कीदृग्गुणसमायुक्तैरेतद्ब्रूहि गुरोऽधुना।
शृणु नन्दन! तत्सर्वं यदर्थो भवदुद्यमः ॥ ५ ॥

[राजसिंहासनलक्षणं, राज्ञस्तदुपवेशनं च]

रुचिरेण सुवर्णेन निर्मितं रत्नरक्षितम्।
अष्टभिः स्फाटिकैः सिंहमूर्धभिश्च विराजितम् ॥ ६ ॥

अधः काञ्चनसंयुक्तरत्नवेदिकयान्वितम्।
आस्थानमण्डपे राज्ञां सिंम्हासनमुदीरितम् ॥ ७ ॥

---

[1] कक्षितम्—मु.

अभ्यासीतासनं चैतद्राजा विभवभूषितः।
आस्थानमण्टपे रम्ये विशाले सुखशीतले ॥ ८ ॥
विन्यस्तरत्नशोभाढ्ये रत्नस्तम्भविराजिते।
चित्रभित्तिमनोरम्ये नानावर्णवितानके ॥ ९ ॥
सुधाकुट्टिमके चित्रे सिंहपीठे स्थितं नृपम्।

[सिंहासनोपविष्टस्य राज्ञः छत्रचामराद्युपचाराः]

शरच्छशाङ्कसङ्काशैर्यशःपुञ्जनिभैः शुभैः। १० ॥
मण्डितैर्हेमदण्डैश्च रत्नकान्तिविराजितैः।
मयूरपिञ्छसम्भूतैश्चमरीपुच्छसम्भवैः ॥ ११ ॥
चामरैर्हस्तविन्यस्तैर्वीजयेयुर्वराङ्गनाः।
वालव्यजनकै रम्यैः सौरभेण मनोहरैः ॥ १२ ॥
चन्द्रमण्डलसङ्काशैर्नानारत्नविराजितैः।
तालपत्रसमुद्भूतैरभ्रकालङ्कृतैः शुभैः ॥ १३ ॥
चामरैर्व्यजनैरेवं वीज्यमानो महीपतिः।
आस्थानमण्टपन्यस्तवरसिंहासने स्थितः ॥ १४ ॥

[प्रतीहारमुखेन नृपमन्दिरप्रवेशः]

समाहूय प्रतीहारान् सर्वाह्वानं समादिशेत्।
ततो दौवारिकाहूता विशेयुर्नृपमन्दिरम् ॥ १५ ॥

[नृपास्थानस्था राजसभायोषितः, तासामाभरणानि च]

पटापिनद्धडोलान्तस्स्थिताः शुद्धान्तयोषितः।
विचित्रचित्रसम्पन्नच्छायाश्चामरवीजिताः ॥ १६ ॥
सौविदल्लकरोद्दण्डवेत्रदण्डनिवारणैः।
अपसर्पापसर्पेति गच्छ गच्छेति गर्जनैः ॥ १७ ॥
सुदूरोत्सारिताशेषमार्गस्थजनसञ्चयाः।
प्रविशेयुर्नृपास्थानं सर्वाभरणभूषिताः ॥ १८ ॥

नानारत्नसमाकीर्णचूडामण्डनमण्डिताः ।
सीमन्ताभ्यन्तरे हंसतिलकेन विराजिताः ॥ १९ ॥

मुक्तामरकताकीर्णैर्नीलमाणिक्यलम्बनैः ।
कर्णावतंसैर्मुकुलैः कुण्डलैर्मणिमण्डितैः ॥ २० ॥

अलकाभरणैर्युक्ताः कनत्काञ्चननिर्मितैः ।
कण्ठभूषणकैर्दिव्यैर्मुक्तामाणिक्यसम्भवैः ॥ २१ ॥

पदकै रत्नशोभाढ्यैर्दिव्यरत्नयुतैः सरैः ।
हारैर्मुक्तामयैः शुभ्रैर्वक्षस्स्थलविभूषणैः ॥ २२ ॥

विचित्ररत्नरचितैरङ्गदैर्बाहुभूषणैः ।
सन्धिभूषणकैर्दीप्तैश्चूडकै रत्नराजितैः ॥ २३ ॥

कटकै रत्नखचितैर्नासिकाभरणैरपि ।
रत्नकाञ्चीकलापैश्च जङ्घाभरणकैरपि ॥ २४ ॥

नूपुरैः पादकटकैर्दिव्यरत्नविभूषितैः ।
पादपट्टकधाराभिः किङ्किणीजालकैरपि ॥ २५ ॥

अङ्घ्रिशाखाविभूषाभिः क्वणन्तीभिः पदे पदे ।
मुद्रिकाभिर्विचित्राभिर्भूषिता नृपयोषितः ॥ २६ ॥

[राजसभायोषितां वस्त्राद्यलङ्काराः, तासां यथास्थानं राजोपासनं च]

दिव्यवस्त्रपरीधानाः पट्टकञ्चुकसंवृताः ।
श्रीखण्डक्षोदशुभ्राङ्ग्यः कुङ्कुमद्रवरञ्जिताः ॥ २७ ॥

सान्द्रकस्तूरिकापत्रवल्लीभिः परिरञ्जिताः ।
तिलकैर्विविधै रम्यैर्नानावर्णैरलङ्कृताः ॥ २८ ॥

मनोरमा रमण्यस्तु तरुण्यः सुखभूमयः ।
यथायोगं यथास्थानमुपासीरन्महीपतिम् ॥ २९ ॥

[राजसभायां अश्वाद्यारूढाभी राजस्त्रीभिः स्वस्वविलासैः जनमनोरञ्जनम्]

काश्चित्तुरङ्गमारूढाः काश्चिदश्वतरीस्थिताः।
काश्चिच्चरणसञ्चारैश्चालयन्त्यो मनो नृणाम् ॥ ३० ॥

काश्चित्तु रक्तवस्त्रैश्च रञ्जयन्त्यो मनो नृणाम्।
हरितैर्वसनैः काश्चिद्धरन्त्यो हृदयं नृणाम् ॥ ३१ ॥

नीलाम्बरवरैः काश्चिन्निगिरन्त्यो दृशौ नृणाम्।
श्वेताम्बरवरैः काश्चित्संविशन्त्यो मनो नृणाम् ॥३२ ॥

मल्लिकामालिकाः काश्चित्काश्चिच्चम्पकमालिकाः।
मालतीमालिकाः काश्चित्काश्चिद्दर्णकमालिकाः ॥ ३३ ॥

काश्चिदुत्पलमालाभिर्भूषिताश्चोत्पलेक्षणाः।
काश्चित्कुन्तलकामिन्यः कुटिलीकृतकुन्तलाः ॥३४॥

काश्चिद्द्रविडकासिन्यः प्रकाशितपयोधराः।
काश्चिच्च लाटललनाः सिन्दूरारुणमस्तकाः ॥ ३५ ॥

महाराष्ट्रस्त्रियः काश्चिल्लम्बलम्बनभूषिताः।
गुर्जर्यो वनिताः काश्चिदापाणि कृतकञ्चुकाः ॥ ३६ ॥

काश्चिद्बाला विलासिन्यः काश्चिन्मुग्धाः वरस्त्रियः।
मध्या मनोहराः काश्चित् काश्चित्प्रौढा विचक्षणाः ॥ ३७ ॥

आस्थानभूषणाः सर्वाः समागत्य नृपालयम्।

[सभायोषिद्भी राजपार्श्वपृष्ठभागेऽवस्थाय कटाक्षादिभी राजहर्षजननम्]

प्रविश्योभयपार्श्वे च पृष्ठभागे च संस्थिताः ॥ ३८ ॥

कटाक्षैर्वीक्ष्य राजानं हर्षयेयुर्मुहुर्मुहुः।
प्रतिरूपगुणाकारैरलङ्कारैरलङ्कृताः ॥ ३९ ॥

[सभायां राज्ञां पुरतः सविनयं कुमारोपवेशः]

कुमारा विनयोपेताः प्रणम्य विनयान्नृपम्।
आसने च यथोद्दिष्टे यथार्हं पृथिवीभुजा ॥ ४० ॥

उपविष्टाः पुरोभागे नातिदूरे मनस्विनः।

[राजसभायां कुमाराभ्याशे पुरोधस उपवेशः]

पुरोधाः शुद्धवसनो रत्नकुण्डलमण्डितः ॥ ४१ ॥

कुमाराभ्याशदेशे च निवसेदुचितासने ।

[राजसभायां अमात्यमन्त्रिसचिवानामुचितासनोपवेशः]

अमात्यमन्त्रिसचिवा भूषिता वस्त्रभूषणैः ॥ ४२ ॥

निवसेयुर्यथास्थानं नृपादिष्टासने क्रमात् ।

[राजसभायां सामन्तस्थानानि]

मण्डलाधीश्वराः शूराः सामन्ताः साधका अपि ॥ ४३ ॥

उदारभूषणैर्युक्ताः पट्टचेलविराजिताः
वामदक्षिणपङ्क्तिस्थाः पुरोभागे महीभुजः ॥ ४४ ॥

निवसेयुर्यथास्थानमासनेषु नृपाज्ञया ।

[राजसभायां देशाधिकारिप्रभृतीनां स्थानानि]

देशाधिकारिणः केचित्केचिद्ग्रामाधिकारिणः ॥ ४५ ॥

धर्माधिकारिणः केचित्केचिदर्थाधिकारिणः ।
कामाधिकारिणः केचित्केचिद्भूषाधिकारिणः ॥ ४६ ॥

निष्काधिकारिणः केचित्केचिद्व्रणाधिकारिणः ।
बलाधिकारिणः केचित्केचिच्छद्राधिकारिणः ॥४७ ॥

क्षीराधिकारिणः केचित्केचित्कर्माधिकारिणः ।
शय्याधिकारिणः केचित्केचित्कान्ताधिकारिणः ॥ ४८ ॥

पुत्राधिकारिणः केचित्केचिद्विद्याधिकारिणः ।
वाद्याधिकारिणः केचित्केचिद्दानाधिकारिणः ॥ ४९ ॥

नृत्याधिकारिणः केचित्केचिच्चित्राधिकारिणः ।
स्वर्णाधिकारिणः केचित्केचिद्द्रव्याधिकारिणः ॥ ५० ॥

शुल्काधिकारिणः केचित्केचिद्द्वाराऽधिकारिणः ।
सत्राधिकारिणः केचित्केचिद्देवाधिकारिणः ॥ ५१ ॥

दानाधिकारिणः केचित्केचिन्मल्लाधिकारिणः ।
गजाधिकारिणः केचित्केचिदश्वाधिकारिणः ॥ ५२ ॥

रथाधिकारिणः केचित्केचित्पत्त्यधिकारिणः ।
अश्माधिकारिणः केचित्केचिद्दुर्गाधिकारिणः ॥ ५३ ॥

वर्णपट्टाङ्ककाश्लिष्टा दीर्घबाहुसमन्विताः ।
धारयन्तः शुभोष्णीषं हेमाभरणभूषिताः ॥ ५४ ॥

निविशेयुर्यथास्थानं भक्तिनम्रा नरेश्वरे ।
कृताञ्जलिपुटाः सर्वे मुखालोकनतत्पराः ॥ ५५ ॥

ताम्बूलधारिणो भक्ता विश्वस्ताः खड्गपाणयः ।
राज्ञः सकाशे तिष्ठेयुः सावधाना जितेन्द्रियाः ॥ ५६ ॥

[राजसभायां सेवकवर्तनम्]

सेवकः सुगुणो नम्रः स्वाम्याहूतो विशेत्सदः ।
सुमार्गेणोचिते स्थाने गत्वा चासीत संवृतः ॥ ५७ ॥

आसीनः स्वामिनः पार्श्वे तन्मुखे स्वीकृताञ्जलिः ।
स्वभावं चास्य विज्ञाय दक्षः कार्याणि साधयेत् ॥ ५८ ॥

नात्यासन्नो न दूरस्थो न समोच्चासने स्थितः ।
न रस्स्थो न पृष्ठस्थस्तिष्ठेत्सदसि तु प्रभोः ॥ ५९ ॥

आसन्ने स्यात्प्रभोर्बाधा दूरस्थेऽप्यप्रगल्भता ।
पुरः स्थितेऽस्य कोपोऽपि तस्मिन् पश्चाददर्शनम् ॥ ६० ॥

प्रभुप्रिये प्रियत्वं च तद्वैरिणि च वैरिता ।
तस्यैवाव्यभिचारेण नित्यं वर्तेत सेवकः ॥ ६१ ॥

कल्लोले

[राजसभायां राजसेवककर्तव्याकर्तव्यानि]

प्रसादात्स्वामिना दत्तं वस्त्रालङ्करणादिकम् ।
प्रीत्या धार्यं स्वयं देयं न चान्यस्मै तदग्रतः ॥ ६२ ॥

स्वामिनो ह्यधिको वेषः समानो वा न युज्यते ।
शस्त्रं वस्त्रं क्षुतं जृम्भां नेक्षेतास्य स्त्रियं तथा ॥ ६३ ॥

विजृम्भणक्षुतोद्गारहास्यादीनि वृताननः ।
कुर्यात्सभासु नो नासाशोधनं हस्तमोटनम् ॥ ६४ ॥

कुर्यात्पर्यासिकां नैव न च पादप्रसारिकाम् ।
न निद्रां विकथां वापि सभायां कुक्रियां न च ॥ ६५ ॥

श्रोतव्या सावधानेन स्वामिवागनुजीविना ।
भाषितः स्वामिना जल्पेन्न चैकवचनादिभिः ॥ ६६ ॥

आज्ञालाभादयः सर्वे यस्मिन् सर्वोत्तरा गुणाः ।
स्वामिनं नावजानीयात्सेवकस्तं कदाचन ॥ ६७ ॥

[1]एकाकी मधुरैर्वाक्यैः सान्त्वयन्निहितात्प्रभुम् ।
वारयेदन्यथा हि स्यादेष स्वयमुपेक्षकः ॥ ६८ ॥

प्रभोरग्रे न कुर्वीत वैरिणां गुणकीर्तनम् ।
प्रभोः प्रसादे राज्येऽपि प्रकृतिं नैव रोपयेत ॥ ६९ ॥

व्यापारितश्च कार्येषु यावेताध्यक्षपूर्वकम् ।
कोपप्रसादजैश्चिह्नैरुक्तिभिः संज्ञयाऽथ वा ॥ ७० ॥

अनुरक्तं विरक्तं वा विजानीयात्प्रभोर्मनः ।
एतादृग्लक्षणोपेता वसेयुस्तत्र सेवकाः ॥ ७१ ॥

[राजसभायां कविगमकादीनां वर्तनम्]

कवयो गमकाश्चैव वादिनो वाग्मिनस्तथा ।
वादकाः कथका भट्टाः सूतमागधवन्दिनः ॥ ७२ ॥

---

[1] एकान्तैः—मु.

वाग्गेयकाराश्चतुरा गायका वंशका अपि ।
वैणिका वाद्यकाराश्च नर्तकाश्चारणा नटाः ॥ ७३ ॥

वैतालिकाश्चाटुकाराः प्रहासचतुरादयः ।
हरमेखलिकातन्त्रप्रयोगादिविधायिनः ॥ ७४ ॥

विचित्रवर्णैः सौवर्णैर्भूषणैर्भूषिता नराः ।
दिव्यपट्टांशुकाश्लेषभ्राजिता भव्यमूर्तयः ॥ ७५ ॥

शौर्यौदार्यतपोयुक्ता नृपचित्तानुरञ्जकाः ।
वारं वारं समन्तात्ते जय जीवेति वादिनः ॥ ७६ ॥

उपासीरन् नृपश्रेष्ठं सेवाधर्मविशारदाः ।
तच्चित्तवेदिनः सर्वे विनयानतमस्तकाः ॥ ७७ ॥

आस्थानमण्टपान्तस्थैः सर्वैः सेवागतं नृपम् ।
वीक्षमाणैर्नरैर्भाव्यं नवं चन्द्रमिवोदितम् ॥ ७८ ॥

[ शरणागतानां राज्ञां भूपतौ, तेषु भूपतेश्च वर्तनम् ]

नानादेशाधिपान् भूपान् स्वात्मरक्षार्थमागतान् ।
प्रवेशने प्रतीहारमादिशेत महीपतिः ॥ ७९ ॥

प्रवेशितान् प्रतीहारैः प्रणतान् दण्डवद्भुवि ।
सप्रसादमिति ब्रूयादुत्तिष्ठत न सीदत ॥ ८० ॥

नृपाणामासनं योग्यं दापयेन्मानपूर्वकम् ।
आसनेषूपविष्टानां दृष्ट्या सन्तोषमावहेत् ॥ ८१ ॥

वचनेन महाप्रीतिं जनयित्वा गतक्लमान् ।
दिव्यैर्वस्त्रैः पट्टमुख्यैः विचित्रैः स्वर्णभूषणैः ॥ ८२ ॥

सुरत्नाभरणैर्दिव्यैर्वाजिभिर्वरवारणैः ।
ग्रामैः पुरैस्तथा देशैस्तोषयेत्पार्थिवान् नृपः ॥ ८३ ॥

आवासेषु च रम्येषु स्थापयेत्तान्महीपतिः ।
कांश्चित्प्रसन्नया दृष्ट्या कांश्चिन्मधुरभाषणैः ॥ ८४ ॥

[राज्ञा कुमारादीनां तत्तद्योग्यैश्वर्यप्रदानेन माननम्]

कांश्चित्प्रभूतदानेन कांश्चिन्मानेन हर्षयेत् ।
कुमारान्मन्त्रिणोऽमात्यान् सचिवान्मण्डलाधिपान् ॥ ८५ ॥

सुभगान् सेवकान् दक्षान् सर्वानप्यधिकारिणः ।
तोषयेच्च यथायोग्यं तत्तद्योगैश्च माननैः ॥ ८६ ॥

[तरुण्यादिस्त्रीणां राजसंभावनाप्रकाराः, राज्ञस्तन्त्रविद्यादर्शनं च]

तरुणीः प्रेमदृष्ट्या च मुग्धा मुग्धावलोकनैः ।
प्रौढाश्च चतुरालापैः प्रियवाक्यैर्मनःप्रियान् ॥ ८७ ॥

हरमेखलिकातन्त्रप्रोक्ता बहुविधाः क्रियाः ।
पश्येदाश्चर्यजनिकाः सभामध्ये महीपतिः ॥ ८८ ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले आस्थानोपभोगवर्णनं नाम प्रथमस्तरङ्गः

---

## सप्तमकल्लोले द्वितीयस्तरङ्गः

### इन्द्रजालादिविद्याप्रदर्शनम्

[कुमारस्य हरमेखलिकातन्त्रक्रियाविवरणप्रश्नः, भूपतेस्तदुत्तरकथनप्रतिज्ञा च]

स्वामिन्नास्थानमध्ये तु महाश्चर्यविधायिका ।
हरमेखलिकातन्त्रक्रिया वृत्तेति वर्णिता ॥ १ ॥

इदमश्रुतपूर्वं मे तनुते श्रवणे मतिम् ।
तद्विवृत्याधुना ब्रूहि मयि भूरिकृपावशात् ॥ २ ॥

शृणु नन्दन ! तत्सर्वं कथयामि सविस्तरम् ।

[हरमेखलिकातन्त्रप्रतिपाद्यानि]

वञ्चनं परदृष्टीनामग्निस्तम्भनमेव च ॥ ३ ॥

ततो जलस्तम्भनं च वचसस्तम्भनं तथा ।
हरमेखलिकातन्त्रे त्वेवमाद्याः क्रियाः शुभाः ॥ ४ ॥

[तान्त्रिकस्य आत्मरक्षायाः प्रथमकर्तव्यता, तद्विधानं च]

पूर्वं रक्षाविधिं कृत्वा पश्चात्कौतुक[1]मारभेत् ।
विना रक्षाविधानेन यत्करोति न सिध्यति ॥ ५ ॥

नासारन्ध्रद्वयं लिप्त्वा गोघृतेन ततो मुखे ।
क्षिपेद्बिम्बीफलं यस्तु कुयोगैर्न स बाध्यते ॥ ६ ॥

[परदृष्टिबन्धनोपायः]

तगराञ्चितनेत्रोऽसौ तगरेण च धूपितः ।
श्मशानतरुमूलेन कुर्यात्पादाङ्गुलीयकम् ॥ ७ ॥

मृतनिर्माल्यसंयुक्तं रक्तसूत्रेण वेष्टयेत् ।
तेन निःशेषलोकस्य दृष्टिबन्धः प्रजायते ॥ ८ ॥

घृणाकनकपञ्चाङ्गतालकेन युता तथा ।
मुद्रिका सर्वलोकस्य करस्था दृष्टिबन्धकृत् ॥ ९ ॥

स्वपादे धारयेदेनां पश्चात्सिध्यति कौतुकम् ।

[कृकलासीसंस्कारः, तस्यास्तान्त्रिकसर्वकर्मप्राशस्त्यं च]

भौमपुष्ये तु सङ्गृह्य कृकलासीं मनोहराम् ॥ १० ॥

स्थापयेन्नवभाण्डे तु रक्तपुष्पेण पूजयेत् ।
धूपदीपाक्षतैर्गन्धैर्नैवेद्यैर्मन्त्रसंयुतैः ॥ ११ ॥

वामहस्तकनिष्ठायाः स्वस्य रक्तेन सेचयेत् ।
सप्ताहं पूजयेदेवं शस्ता सा सर्वकर्मसु ॥ १२ ॥

मन्त्रः—[2]ओं ह्रां ह्रीं ह्रूं स्वाहा ।

---

[1] आरभेदिति रूपं चिन्त्यम् । आचरेदिति स्यात् । [2] ओं ह्रीं ह्रीं स्वाहा—ग.

कक्षोले

[ कटौ कृकलासचूर्णलेपनेन सवस्त्रस्यापि नग्नत्वप्रदर्शनम् ]

तं मृतं छायया शुष्कं चूर्णयित्वा कटिं लिपेत् ।
सवस्त्रमपि तं लोको नग्नमालोकयेद्ध्रुवम् ॥ १३ ॥

[ कूर्परादेः कृकलासचूर्णलेपनेन काकत्वप्रदर्शनम् ]

वलयीकृत्य तच्चूर्णं कूर्परे मणिबन्धके ।
काकवद्दृश्यते लोकैस्तत्क्षणान्नात्र संशयः ॥ १४ ॥

[ कृकलासीचूर्णेन तालपत्रसर्पीकरणम् ]

तच्चूर्णैस्तालपत्रं तु लेपितं सर्पवद्भवेत् ।

[ कृकलासचूर्णलिप्तक्षिप्तस्य नागवल्लीदलस्योत्पतनम् ]

नागवल्लीदलं लिप्तं भूमौ क्षिप्तं समुत्पतेत् ॥ १५ ॥

[ कृकलासचूर्णलेपेन भाण्डे जलप्रवेशप्रतिबन्धकरणम् ]

तच्चूर्णं कौमुदं कन्दं नागवल्लीदलान्वितम् ।
पेषयित्वा लिपेद्भाण्डं तद्भाण्डे न विशेज्जलम् ॥ १६ ॥

[ मायूरविष्ठाविशेषलेपेन हस्तस्थितद्रव्यस्यादृश्यत्वकरणम् ]

मयूरं तु शिलां तालं भोजयेद्दिनसप्तकम् ।
तद्विष्ठालिप्तहस्तस्थं द्रव्यं शक्रोऽपि नेक्षते ॥ १७ ॥

[अङ्कोलतैलनिर्माणप्रकारः]

सप्ताहं तिलतैलेन भावयेदातपे खरे ।
अङ्कोलबीजचूर्णं तु शोष्यं पेष्यं पुनः पुनः ॥ १८ ॥

तत्तैलं ग्राहयेद्यत्नात्तैलकारस्य यन्त्रतः ।
अथवा कांस्यपात्रे द्वे तेन कल्केन लेपयेत् ॥ १९ ॥

उत्थाप्य स्थापयेद्द्वौ सम्मुखं तु परस्परम् ।
तयोरधः कांस्यपात्रे पतितं तैलमाहरेत् ॥ २० ॥

इदमेवाङ्कोलीतैलं सर्वयोगेषु योजयेत् ।

[ अङ्कोलतैललेपेन मुण्डितशिरसस्सद्य एव सकेशत्वप्रदर्शनम् ]

लिप्तमङ्कोलतैलेन मुण्डितं तत्क्षणाच्छिरः ॥ २१ ॥
पूर्ववत् पूर्यते केशैः सद्य एव न संशयः ।

[अङ्कोलतैलं विलिप्य भूमौ रोपिताम्रबीजात् तदानीमेव सफलवृक्षप्रदर्शनम् ]

तत्तैललिप्तमाम्राण्डं रोपितं भुवि तत्क्षणात् ॥ २२ ॥
सफलो जायते वृक्षस्तत्क्षणान्नात्र संशयः ।

[जलक्षिप्तपद्मचूर्णैरङ्कोलतैलसम्पर्कतः पद्मसम्भवप्रदर्शनम् ]

पद्मिनीबीजचूर्णं तु भाव्यमङ्कोल[1]तैलतः ॥ २३ ॥
न्यस्तं जले महाश्चर्यं तत्क्षणात्पद्मसम्भवः ।

[जले क्षिप्तनीलोत्पलबीजचूर्णादङ्कोलतैलयोगतः पुष्पसंभवप्रदर्शनम् ]

बीजं नीलोत्पलोद्भूतं सिक्तमङ्कोलतैलतः ॥ २४ ॥
न्यस्तं जले महाश्चर्यं जायते पुष्पसञ्चयः ।

[अङ्कोलतैलयोगात् बीजान्तरेभ्योऽपि तत्तपुष्पाद्युत्पत्तिप्रदर्शनम् ]

यानि कानि च बीजानि जलजस्थलजानि च ॥ २५ ॥
अङ्कोलतैललिप्तानि तानि तान्युद्भवन्ति हि ।

---

[1] तैलके-मु.

कल्लोले

[अङ्कोलतैललिप्तजलक्षिप्तजीवपित्तात्तद्रूपसम्भवप्रदर्शनम्]

यस्य कस्यापि जीवस्य पित्तं तत्तैल[1]लेपितम्। २६॥
बलिशस्तं जले क्षिप्तं तद्रूपं स्यात्समुद्भृतम्।

[अङ्कोलतैललिप्तधातुमूलफलपुष्पादीनामन्यरूपदर्शनम्]

यत्किञ्चिद्धातुमूलाश्मपत्रपुष्पफलादिकम्।। २७॥
अङ्कोलतैललिप्तं तदन्यरूपं भवेद्ध्रुवम्।

[कुमुदनालमृत्तिकयोः क्रमात् सर्पाकारत्वकाकाकारत्वप्रदर्शनोपायः]

छत्राकमङ्कुलीतैलं स्नुक्पत्रं शशजं मलम्॥ २८॥
तालकं कांस्यविस्फोटं शशपित्तेन संयुतम्।
रवौ कन्यकया पिष्टं छायाशुष्कं वटीकृतम्॥ २९॥
तया कुमुदनालस्य स्पर्शात्सर्पाकृतिर्भवेत्।
घुटिकास्पर्शमात्रेण मृत्तिका काकवद्भवेत्॥ ३०॥

[पूर्वोक्तोपायेन ताम्रपात्राणां हेममयत्वप्रदर्शनं पूर्वावस्था-
प्राप्त्युपायकथनं च]

ताम्रभाण्डानि सर्वाणि तया लिप्तानि हेमवत्।
दृश्यन्ते तप्ततोयेन क्षालितं तच्च पूर्ववत्॥ ३१॥

[अनेनैवोपायेन रक्तगुञ्जायाः श्वेतरूपत्वप्रदर्शनम्]

दृश्यन्ते रक्तगुञ्जास्तु श्वेतास्तल्लेपतो ध्रुवम्।

[अनेनैव प्रयोगेण अयःपात्रस्य कांस्यरूपत्वप्रदर्शनम्]

अयःपात्रं तया लिप्तं दृश्यते कांस्यभाजनम्॥ ३२॥

---

[1] भावितम्—मु.

[अनेनैव योगेन स्नुहिपत्रस्य शुकवद्दर्शनम्]

स्नुहिपत्रं तया लिप्तं शुकवद्दृश्यते जनैः।

[अनेनैव विधानेन ब्रह्मपत्रकपित्थयोरपूपलड्डुकाकारः]

अपूपवद्ब्रह्मपत्रं कपित्थं लड्डुकाकृति ॥ ३३ ॥

[अनेनैव विधिना नारिकेलस्य नृमुण्डवद्दर्शनम्]

नृमुण्डवन्नारिकेलमाश्चर्यं दृश्यते जनैः।

[अस्यैव कण्ठलेपे शिरश्छेददर्शनम्]

[1]तया लिप्ते तु कण्ठे तु शीर्षच्छेदः प्रदृश्यते ॥ ३४ ॥

[दर्पणे एतल्लेपने रवीन्दुग्रहणदर्शनम्]

रवीन्दुग्रहणं दृश्यं तया लिप्तेऽथ दर्पणे।

[एतल्लेपने एकस्या अङ्गुल्या द्विधा दर्शनम्]

अङ्गुली च तया लिप्ता द्विधा सन्दृश्यते जनैः। ३५ ॥

[समुद्रदर्शनोपायः]

भाण्डपाकस्थलाद्भस्म कुम्भकारगृहाद्धरेत्।
तद्भस्म घुटिकासार्धं मुष्टिबन्धं विनिक्षिपेत् ॥ ३६ ॥

समुद्रो दृश्यते लोकैश्चित्रं सत्यं शिवोदितम्।

[वृन्तं विना क्रोशं पादुकया गमनोपायः]

गुञ्जाफलं श्लक्ष्णपिष्टं लेपयेत्काष्ठपादुके ॥ ३७ ॥

विना वृन्तं नरो याति क्रोशमेकं न संशयः।

---

[1] इदमर्धं मुद्रिते नास्ति।

[दारुपीठनिषण्णस्य पुनरविमोकोपायः]

लघु दारुमयं पीठं गुञ्जापिष्टेन लेपयेत् ॥ ३८ ॥
शुष्कमेतज्जलैः [1]सान्द्रमुपविष्टो न मुञ्चति ।

[पादुकागमने प्रकारान्तरम्]

गुञ्जाबीजं त्वचा त्यक्तं चूर्णं भाव्यं नृमूत्रके ॥ ३९ ॥
सप्तवारं ततः कांस्ये लिप्तमङ्कोलवद्भवेत् ।
तैलमादाय तल्लिप्तं पूर्ववत्पादुकागतिः ॥ ४० ॥

[अन्यथा पादुकागतिः]

कोरण्टकस्य बीजानि निम्बनिर्याससंयुतम् ।
पिष्ट्वा प्रलेपयेत्पादौ पूर्ववत्पादुकागतिः ॥ ४१ ॥

[ज्वलिताया वर्तिकाया दीपवदवस्थनोपायः]

वज्रीदुग्धेन सम्मिश्रा तैलार्द्रा वर्तिका जले ।
ज्वालिता दीपवत्तिष्ठेत्फेनैर्वा सागरोद्भवैः ॥ ४२ ॥

[तत्रैव प्रकारान्तरम्]

वर्तिः सर्जरसैः पूर्णा तैले लिप्ता जले स्थिता ।
ज्वालिता दीपवत्तिष्ठेद्यावद्वर्तिं न संशयः ॥ ४३ ॥

[भित्तौ चित्रप्ररोहणादिदिव्याश्चर्यप्रदर्शनोपायः]

स्त्रीजरायुप्रधूपेन भित्तौ चित्रं प्ररोहति ।
गुग्गुलेन पुनः साम्ये दिव्याश्चर्यपरम्परा ॥ ४४ ॥

[पुत्तलिकारोदनोपायः]

पिष्टकं कज्जलं लाक्षा चैभिः पुत्तलिका कृता ।
स्त्रीजरायुप्रधूपेन रोदितीह किमद्भुतम् ॥ ४५ ॥

---

[1] सार्द्रं—मु.

[नटानां नृत्यान्निवर्तनोपायः]

शिलातालकसिन्दूररोचनाञ्जनहिङ्गुले ।
कूर्मभुक्ते ततः पश्चात्तद्विष्ठां लेपयेत्करे ॥ ४६ ॥

नटा नृत्यान्निवर्तन्ते मुष्टिबन्धस्य दर्शनात् ।

[नाटकसभानर्तनप्रदर्शनोपायः]

वनकूर्मं तु सप्ताहं भोजयेत्तालकं शुभम् ॥ ४७ ॥

तन्मलं लेपयेत्पाणौ मुष्टिं बध्वा नटान्तरे ।
निवर्तन्ते नटाः सर्वे सभा नृत्यति कौतुकम् ॥ ४८ ॥

[रात्रौ पुस्तकपठनोपायः]

उलूकस्य कपाले तु घृतेनाहृतकज्जलम् ।
तेनाञ्जितेक्षणश्चित्रं रात्रौ पठति पुस्तकम् ॥ ४९ ॥

[रात्रौ दिवसवत्सञ्चरणोपायः]

उलूकहृदयं पित्तं काकपित्तं च शोणितम् ।
एतद्धृत्यैऽ[1]ञ्जने रात्रौ विचरेद्दिवसे यथा ॥ ५० ॥

[दिवेव रात्रौ दर्शनानुकूलाञ्जनम्]

रजनीचरजीवानां कारयेदक्षि[2]चूर्णितम् ।
अञ्जिताक्षो नरस्तेन कृष्णरात्रौ च पश्यति ॥ ५१ ॥

करस्थानीव वस्तूनि यथा सूर्योदये ध्रुवम् ।

[तालयन्त्रभेदनोपायः]

शिखिपारावतध्वाङ्क्षखञ्जरीटपुरीषजा ॥ ५२ ॥

घुटिका स्पर्शमात्रेण तालयन्त्रं भिनत्त्यलम् ।

---

[1] अनादात्रौ–मु. [2] चूर्णकम्–मु.

[शिलोत्थापनोपायः]

सतुषाग्निं शिलापृष्ठे शरावेण निरोधयेत् ॥ ५३ ॥

गोमयै रोधयेत्सन्धिं क्षणार्धेन तु तत्पुनः ।
उत्तिष्ठति शिलाश्चर्यं समाकृष्टे शरावके ॥ ५४ ॥

[निशायां दिवसवद्दर्शनोपायः]

भल्लूकव्याघ्रमहिषबालागृध्रविलोचने ।
स्रोतोऽञ्जनयुते चाञ्जन् दिवावत्पश्यते निशाम् ॥ ५५ ॥

[पूर्वोक्ताञ्जनदापने मन्त्रः]

अत्र मन्त्रः— ओं नमो रुद्राय ज्योतिषां पतये ।
दातव्यं ते बीजं मे देहि देहि स्वाहा ।
अञ्जनानि च सर्वाणि मन्त्रेणानेन [1] दापयेत् ।

[भाण्डस्थक्षीरस्य सद्यो दधित्वप्राप्त्युपायः]

पाठामू(ले)लं गले बद्धे क्षीरं भाण्डस्य तद्दधि ॥ ५६ ॥

जायते तत्क्षणाच्चित्रं सत्यमेतन्न संशयः ।

[पुष्पाणामन्यवर्णतापादनोपायः]

गन्धकोत्थेन धूमेन पुष्पाणामन्यवर्णकम् ॥ ५७ ॥

[भोज्यान्नस्य कृमित्वप्रदर्शनोपायः, तत्प्रदर्शयितुर्दर्शनेनेतरेषां पलायनादिकं च]

कृष्णश्वानं मृतं रक्षेद्यावत्क्रिमिकुलोच्चयः ।
श्वेतस्योपोषितस्यैव कुक्कुटस्य च तान् क्रमीन् ॥ ५८ ॥

यथेष्टं भक्षणे दद्याद्विष्ठां तस्य समाहरेत् ।
ततो ललाटे तिलकं कृत्वा यं वीक्षते तु सः ॥ ५९ ॥

---

[1] लेपयेत्–मु.

तदन्नं कृमिवल्लोकैर्भक्षयद्भिर्विलोक्यते ।
पलायन्ते च तं दृष्ट्वा मूर्च्छन्ति च पतन्ति च ॥ ६० ॥

[दशास्यवद्दर्शनोपायः]

कटुतुम्ब्युत्थतैलेन पारावतवकोद्भवम् ।
मलं च शिखिमूलं च पेषितं गर्दभास्थि च ॥ ६१ ॥

ललाटे तिलकं तेन कृत्वासौ दृश्यते जनैः ।
दशास्यो नात्र सन्देहो यथा लङ्केश्वरो नृपः ॥ ६२ ॥

[पञ्चवक्त्रवद्दर्शनोपायः]

शिग्रुबीजोद्भवं तैलं पारावतपुरीषकम् ।
वराहस्य वसायुक्तं शिखिमूलं समं समम् ॥ ६३ ॥

ललाटे तिलकं तेन यः करोति स वै जनैः ।
दृश्यते पञ्चवक्त्रोऽसौ यथा साक्षात्सदाशिवः ॥ ६४ ॥

[अनेकरूपप्रदर्शनोपायः]

सद्यो हतस्य वीरस्य ग्राह्यं चोरस्य वा शिरः ।
तद्वक्त्रे कृष्णद(ध)त्तूरबीजं वाप्यं समृत्तिकम् ॥ ६५ ॥

रात्रौ कृष्णचतुर्दश्यां बलिं दत्वा तु कुक्कुटम् ।
अलिवल्युपहारेण पुष्पधूपाक्षतादिभिः ॥ ६६ ॥

शिरः खनेत्कृष्णभूमौ भुक्तोच्छिष्टेन सेचयेत् ।
दीपं रात्रौ सदा दद्याद्रक्तवर्त्याज्यसंयुतम् ॥ ६७ ॥

सफलं तु भवेद्यावत्तावद्रक्षेच्च पूरयेत् ।
ग्राह्यं कृष्णचतुर्दश्यां बलिं दत्त्वा तु कुक्कुटम् ॥ ६८ ॥

पञ्चाङ्गं पेषयेत्सार्धं घुटिकां कारयेद्दृढाम् ।
ललाटे तिलकं [1]कुर्यान्न नरो दृश्यते जनैः ॥ ६९ ॥
तादृक्छतसहस्रैस्तु रूपैः परिवृतो ध्रुवम् ।

[नरस्य मयूरस्वरूपप्रदर्शनोपायः]

रात्रौ कृष्णचतुर्दश्यां मयूरास्ये विनिक्षिपेत् ॥ ७० ॥
भङ्गीबीजं मृदा कृष्णं कृष्णभूमौ निवापयेत् ।
तज्जातभङ्गीत्वग्ग्राह्या तया कुर्याच्च रज्जुकाम् ॥ ७१ ॥
तद्बद्धकण्ठपुरुषो मयूरो दृश्यते जनैः ।

[नरस्य मार्जारादिस्वरूपप्रदर्शनयोगः]

तद्योगे कृष्णमार्जारवक्त्रे चैरण्डबीजकम् ॥ ७२ ॥
तज्जातैरण्डबीजानामेकं वक्त्रे विधारयेत् ।
तं पश्यन्ति च मार्जारं मनुष्या नात्र संशयः ॥ ७३ ॥

[नरस्य मेषादिस्वरूपप्रदर्शनोपायाः]

मेषाजाश्वसृगालानां वदने वापयेत्पृथक् ।
मयूरास्ये यथा भङ्गी जाता सिद्धिश्च तादृशी ॥ ७४ ॥

[श्वपचनारीरूपप्रदर्शनयोगः]

मृता या श्वपचा नारी तस्या योनौ च खादिरम् ।
कीलकं निक्षिपेत्तत्र दग्ध्वा चान्तः समाहरेत् ॥ ७५ ॥
तेनैव तिलकं कृत्वा श्वपचारूपभाग्भवेत् ।

[पुंसः स्त्रीरूपप्रदर्शनोपायः]

रक्तगुञ्जाफलं वाप्यं स्त्रीकपालेन सेचयेत् ॥ ७६ ॥
जातं फलं क्षिपेद्वक्त्रे स्त्रीरूपो दृश्यते पुमान् ।

---

[1] कुर्यात्स नरो—ब.

[पुरुषस्य मयूरवद्दर्शनयोगः]

विषमुष्टयुत्थितं तैलं सर्पपित्तं च रोचनाम् ॥ ७७ ॥
सकुष्ठं तिलकं यस्य तं पश्यति मयूरवत् ।

[विषमुष्टितैलस्य पाण्यादिलेपनेन कुञ्जरादिप्रदर्शनम्]

विषमुष्टयुत्थतैलेन पाणिलिप्तेन कुञ्जरः ॥ ७८ ॥
भल्लूकः पादलिप्तेन नाभिलिप्तेन चन्द्रमाः ।
गणेशः कुक्षिलिप्तेन स्त्रीवत्सर्वाङ्गलेपतः ॥ ७९ ॥
कपोतो मुखलेपेन दृश्यते नात्र संशयः ।

[रात्रौ नरस्य रौद्ररूपप्रदर्शनोपायः]

रात्रावङ्कोलतैलेन लिप्ताङ्गो दृश्यते नरः ॥ ८० ॥
दीर्घदंष्ट्रोर्ध्वरोमाङ्कं रूपं रौद्रावहं वहन् ।

[नरस्य नासाच्छेदप्रदर्शनोपायः, तन्निवर्तनोपायश्च]

नवभाण्डे विनिक्षिप्य छिन्ननासां तु मूषिकाम् ॥ ८१ ॥
सनासं कृकलासं च पृथग्भाण्डे विनिक्षिपेत् ।
उपवासत्रये जाते तयोर्दद्याच्च भोजनम् ॥ ८२ ॥
मलं तयोः पृथग्ग्राह्यं तेन नासां प्रलेपयेत् ।
भिन्ननासः स दृश्येत क्षीरलेपान्निवर्तते ॥ ८३ ॥

[बालादियोगनिदानम्]

षड्दिनीयं मृतं बालं गृहीत्वा तस्य चोदरे ।
हरिद्राः खण्डशः कृत्वा क्षिपेद्यावत्प्रपूर्यते ॥ ८४ ॥
तं रात्रौ निखनेद्भूमौ मन्त्रेणानेन पूजयेत् ।
पश्चाद्दान्ते समुद्धृत्य रजनीं शोष्य पेष्य च ॥ ८५ ॥

कल्लोले

मन्त्रः—अमुकं रूपं कुरु कुरु स्वाहा ।

मन्त्रेणानेन बालादियोगान् कुर्याद्विचक्षणः ।

[बालादियोगेषु पुरुषस्यैकस्य पञ्चधा दर्शनोपायः]

श्वेतदूर्वारनालैश्च हरिद्रां तां प्रपेषयेत् ॥ ८६ ॥

तल्लिप्तदेहः पुरुषः पञ्चधा दृश्यते जनैः ।

[तत्रैवैकस्य सप्तधा दर्शनोपायः]

तां निशां सर्षपं श्वेतं पिष्ट्वा चाङ्कोलतैलतः ॥ ८७ ॥

तल्लिप्ताङ्गा नराः सर्वे [1]संदृश्यन्ते च सप्तधा ।

[पूर्वोक्तभेददर्शनयोर्निवर्तनोपायः]

गोमूत्रेण पुनः स्नानादेक एव प्रदृश्यते ॥ ८८ ॥

[बालादियोगे छिन्नसन्धिकत्वतदभावदर्शनोपायौ]

शालिकां तां निशां पिष्ट्वा देहसन्धिं प्रलेपयेत् ।
छिन्नसन्धिः प्रदृश्येत पुनः स्नानान्निवर्तते ॥ ८९ ॥

[बालादियोगे अङ्कोलतैलयोगेन रात्रौ नरस्य राक्षसवद्दर्शनं, तन्निवृत्त्युपायश्च]

[2]हरिद्राङ्कोलतैलाभ्यां लिप्ताङ्गो दृश्यते नरः ।
राक्षसोऽतिमहारौद्रो घृतस्नानान्निवर्तते ॥ ९० ॥

[कञ्चनाश्चर्यंकरप्रयोगः]

नरादिसर्वजीवानां ग्राह्यं सद्यो हृतं शिरः ।
तत्र कृष्णचतुर्दश्यां शणबीजानि वापयेत् ॥ ९१ ॥

---

[1] तं पश्यन्ति—ख.  [2] श्लोकोऽयं मुद्रितपुस्तके नास्ति ।

भङ्गीद(ध)त्तूरवातारिबीजानां चैकसंयुतम् ।
निखनेत्कृष्णभूम्यां तद्वलिपूजासमन्वितम् ॥ ९२ ॥

सेचयेत्फलपर्यन्तं तत्तद्बीजानि चाहरेत् ।
यद्यद्बीजं क्षिपेद्वृक्षे तत्तद्रूपं भवत्यलम् ॥ ९३ ॥

[नालिकेरस्फोटनप्रयोगः]

खरस्य नासिकादन्तचूर्णं पाण्योः प्रलेपयेत् ।
हस्तस्पर्शं स्फुटन्त्येव नालिकेराणि निश्चितम् ॥ ९४ ॥

भल्लूकास्थिभवैस्तैलैः सर्वसन्धि प्रलेपयेत् ।
सन्धौ सन्धौ नालिकेरं दारयेद्यस्तु कौतुकी ॥ ९५ ॥

तथैवाङ्कोलतैलेन स्फुटन्तीह न संशयः ।

[मत्स्यसर्पयोरितरेतरभावे स्वभावे च प्रयोगः]

कृष्णसर्पं रवौ गृह्य तद्वक्त्रे कृष्णमृत्तिकाम् ॥ ९६ ॥

दत्वाथ वापयेत्तत्र कृष्णद(ध)त्तूरबीजकम् ।
तथा मत्स्यमुखे मृच्च तद्बीजं च प्रवापयेत् ॥ ९७ ॥

पृथक् पृथक् क्षिपेद्भूमौ तयोः शाखां समाहरेत् ।
[1] सर्पस्य शाखया मत्स्यः स्पर्शात्सर्पो भवेद्ध्रुवम् ॥ ९८ ॥

मत्स्यस्य शाखया स्पर्शे पुनर्मत्स्या भवन्ति ते ।

[कश्चित्कौतुकप्रयोगः]

सफले चणकक्षेत्रे धौतवस्त्रं विलोलयेत् ॥ ९९ ॥

प्रातः प्रातः प्रयत्नेन दिनानामेकविंशतिम् ।
ततस्तद्वस्त्रखण्डानि जले सिक्तानि पीडयेत् ॥ १०० ॥

---

[1] इदमर्धं मुद्रितपुस्तके न दृश्यते ।

कह्लोले

मृत्तिकायां ततो धान्यं वापयेत्तत्प्ररोहति ।
तत्तद्वस्त्राम्बुतः शीघ्रं सर्वधान्यानि कौतुकम् ॥ १०१ ॥

निक्षिपेत्सर्वधान्यानि सार्द्रगर्दभचर्मणि ।

[दुश्छेद्यछेदकायुधनिर्माणप्रयोगः]

स्नुह्यश्वत्थादिवृक्षाणां क्षीरमौदुम्बरस्य च ॥ १०२॥

काष्ठौदुम्बरकाक्षीरं लोहचूर्णं तु गन्धकम् ।
इष्टकाभिः सर्जरसं तिलतैलविमिश्रितम् ॥ १०३ ॥

क्रमोत्तरगुणं मर्द्यं कुर्यात्तेन कुठारकम् ।
छुरिकेषुफलं कुन्तं यमदंष्ट्रादिकायुधम् ॥ १०४ ॥

छेदयेदपि दुश्छेदं खेटकं कङ्कटादिकम् ।

[कृकलासपित्तेन ग्रहणदर्शनोपायः]

कृकलासस्य पित्तेन अधो लिप्ते तु दर्पणे ॥ १०५ ॥

संस्थापिते गिरेर्मूर्ध्नि ग्रहणं दृश्यते जनैः ।

[नरस्याग्निवद्दर्शनोपायः]

हरितालशिलाचूर्णमङ्कोलीतैलभावितम् ॥ १०६ ॥

तद्वस्त्रं शिरसि स्थाप्य स्थितं पश्यति चाग्निवत् ।
सिन्दूरं गन्धकं तालं समं पिष्ट्वा मनश्शिलाम् ॥ १०७ ॥

तल्लिप्तवस्त्रछन्नाङ्गो लोकैः सन्दृश्यतेऽग्निवत् ।

[रात्रौ ललाटे ज्योतिर्दर्शनोपायः]

खद्योतभूलताचूर्णं ललाटे [1] तिलकीकृते ॥ १०८ ॥

रात्रौ सन्दृश्यते ज्योतिः तास्मिंस्थानेऽतिकौतुकम् ।

---

[1] तिलके कृते—ग.

[केशानामदहनेन ज्वलनोपायः]

त्र्यूषणं चर्वयेदादौ तत्कल्कं नरमूत्रकम् ॥ १०९ ॥

एकीकृत्य लिपेच्छीर्षे वर्तिं तत्रैव धारयेत् ।
ज्वलन्ति न दहन्त्येते केशमात्रं न संशयः ॥ ११० ॥

[सर्पकरण्डे सर्पस्यादर्शनदर्शनोपायौ]

वदने कृष्णसर्पस्य यवबीजानि वापयेत् ।
फलितानि सुबीजानि समादायाथ रक्षयेत् ॥ १११ ॥

क्षिपेत्सर्पकरण्डे तु फणी तत्र न दृश्यते ।
मुक्तेऽसौ दृश्यते सर्प इत्येतन्महदद्भुतम् ॥ ११२ ॥

[पाषाणखण्डस्य चणकवद्भक्षणोपायः]

पाषाणभेदमूले तु चर्चिते सति भक्षयेत् ।
पाषाणान् खदिराण्डाभान् चणकानिव कौतुकम् ॥ ११३ ॥

[तुम्बिनीफलस्योत्पतनोपायः]

तुम्बिनीफलपृष्ठे तु छिद्रं कृत्वा तु पारदम् ।
निक्षिपेत् क्षणमात्रं तु वर्तिं गन्धकपूरिताम् ॥ ११४ ॥

ज्वलन्तीं निक्षिपेत्तत्र सद्योऽभ्रंलिहमुत्पतेत् ।

[सगणरुद्रदर्शनोपायः]

मातुलुङ्गस्य बीजानि पुष्पैः सौवीरमञ्जनम् ॥ ११५ ॥

एकीकृत्यैव जुहुयाद्धात्रीकाष्ठान्वितेऽनले ।
दृश्यते सगणो रुद्रो लम्बमाने सिते पटे ॥ ११६ ॥

[ मध्याह्ने तारकादर्शनसाधनाञ्जनविधानम् ]

मुनिपुष्परसैः पुष्पे घृष्ट्वा स्रोतोऽञ्जनं ततः ।
अञ्जिताक्षो नरः पश्येन्मध्याह्ने तारकागणम् ॥ ११७ ॥

[मध्याह्ने सरथस्य रवेर्दर्शनोपायः]

मातुलुङ्गस्य बीजोत्थं तैलं ताम्रस्य भाजने ।
स्थापयेदातपे पश्येन्मध्याह्ने सरथं रविम् ॥ ११८ ॥

[पिशाचदर्शनोपायः]

अक्षपत्ररसैः पिष्ट्वा गुञ्जामूलं दिनान्तरे ।
अञ्जिताक्षो नरः पश्येत्पिशाचानतिकौतुकम् ॥ ११९ ॥

[वह्निज्वालामध्ये नरस्य दर्शनोपायः]

अङ्गारं शिखिपित्तेन पिष्ट्वा चात्र [1] गले लिपेत् ।
पावकं तन्मुखे धृत्वा वह्निज्वालासु दृश्यते ॥ १२० ॥

[धत्तूरतैलज्वलिताया वर्त्याः पुष्पवद्दर्शनम्]

दु(ध)त्तूरतैलसंसिक्ता विषचूर्णेन लोलिता ।
वर्ती सा ज्वलिता लोकैः पुष्पवद्दृश्यते ध्रुवम् ॥ १२१ ॥

[रात्रौ विहगस्योल्कावद्दर्शनोपायः]

रात्रौ विहगपुच्छे तु निबध्य शिखिदीपकम् ।
उल्का इव प्रदृश्यन्ते सञ्चरन्ती नभस्स्थले ॥ १२२ ॥

[रतौ भगे लिङ्गस्तम्भनमोचनोपायौ]

कृतं गवयविष्ठाया गोलकं कृमिना रतौ ।
स्थापयेच्छयनस्याधो बद्धं लिङ्गं भगे भवेत् ॥ १२३ ॥
मुक्ते त्वस्मिन् भवेन्मुक्तिश्चित्रं हास्यं महाद्भुतम् ।

[मृतमत्स्यजीवनोपायः]

भल्लातकोद्भवं तैलं मृतमत्स्येषु लेपयेत् ॥ १२४ ॥
ते जीवन्ति जले क्षिप्ताः सद्यः सद्योभवा इव ।

---

[1] दले–मु.

[निश्यरण्ये सागरदर्शनोपायः]

मण्डूकवसया दीपमरण्ये ज्वालयेन्निशि ॥ १२५ ॥

चतुर्दिक्षु च तन्मध्ये सागरो दृश्यते जनैः ।

[निशि गृहस्योपरि ज्वलदग्निदर्शनोपायः]

लघुखर्जूरखद्योतभूलताश्वेतमभ्रकम् ॥ १२६ ॥

पेषयेच्छिखिपित्तेन मुष्ट्या बध्वा तु तन्निशि ।
गृहोपरि विनिक्षिप्तं दृश्यते ज्वलदग्निवत् ॥ १२७ ॥

[नरस्यायुतहस्तकुञ्जराकृतिप्रदर्शनोपायः]

रक्तार्जुनस्य मूलेन तिलके जलपेषिते ।
कृते त्वयुतहस्तोऽसौ दृश्यते कुञ्जराकृतिः ॥ १२८ ॥

[नरस्यानन्तरूपवद्दर्शनोपायः, तत्र मन्त्रः, तत्सिद्धिक्रमश्च]

कृकलासस्य संगृह्य शल्यं दक्षिणपार्श्वतः ।
त्रिलोहवेष्टितं वक्त्रे कृतं चानन्तरूपभृत् ॥ १२९ ॥

ॐ सङ्कोचय स्वाहा ।

अष्टोत्तरजपात्सिद्धिर्मन्त्रेणानेन जायते ।

[यस्य कस्यापि वस्तुनः स्वर्णवद्भानप्रदर्शनोपायः]

सिन्दूरपूर्णभूनागवर्तिदीपस्य तेजसा ॥ १३० ॥

यद्वस्तु दृश्यते तेन तद्वस्तु स्वर्णवद्भवेत् ।

[रात्रौ गृहे सर्वस्यापि वस्तुनः सर्पवद्दर्शनोपायाः]

कार्पासबीजं सर्पस्य वक्त्रे क्षिप्त्वा खनेद्भुवि ॥ १३१ ॥

तज्जाततूलिकावर्तिः सर्पतैलेन दीपिता ।
गृहे पश्यति यद्रात्रौ तत्तत्सर्पोपमं भवेत् ॥ १३२ ॥

कल्लोले

उन्मत्ततैलजं दीपं शमीपुष्पाहिकञ्चुकम् ।
सकार्पासा भवेद्वर्तिश्चित्रं भवति पूर्ववत् ॥ १३३ ॥

श्वेतार्कतूलजां वर्तिं सर्पतैलयुतां निशि ।
प्रज्वाल्य सर्पवत्सर्वं गृहं पश्यति कौतुकम् ॥ १३४ ॥

मण्डूकवसया दीपे सर्वं पश्यति सर्पवत् ।
स चक्षुःश्रवतायुक्तं तदेवं कौतुकं भवेत् ॥ १३५ ॥

[स्पर्शनतो बन्धविच्छेदनम्]

हस्तर्क्षे सिन्धुवारस्य मूलं चोद्गतं हरेत् ।
स्पर्शने बन्धविच्छेदं कुरुते शीघ्रमद्भुतम् । ॥ १३६ ॥

[तालयन्त्रच्छेदनोपायः]

मांसं रक्तोत्पलं तुल्यं कृकलासेन भोजयेत् ।
तन्मलैर्घुटिकास्पर्शात्तालयन्त्रं छिनत्त्यलम् ॥ १३७ ॥

[बद्धलोहभेदनोपायः]

सुपक्कामिष्टकां पिष्ट्वा लोहकिट्टमथापि वा ।
[1] सूत्ररज्जुं [2] दृढां कृत्वा तिलतैलेन लेपिताम् ॥ १३८॥

तच्चूर्णलोलितां कृत्वा बद्धलोहं भिनत्त्यलम् ।

[लोहनाराचस्य भूमौ प्रवेशनं, तस्यानुद्धार्यता च]

द्विहस्तं लोहनाराचं यन्त्रान्माहिषशृङ्गजात् ॥ १३९ ॥

प्रवेशयेन्महीं क्षिप्रमुद्धर्तुं कोऽपि नो बली ।

[दर्शनमात्रात्स्वनहननोपायः]

कच्छपस्य शिरो ग्राह्यं लज्जालुं चन्द्रगोपकम् ॥ १४० ॥

---

[1] सूत्र–मु.     [2] द्विधा–मु.

काकजङ्घोत्करं कीटं तथा शनपदं कृमिम् ।
पञ्चभिर्घुटिका कार्या नासिकामध्यवर्तिनी ॥ १४१ ॥

सन्दर्शनात्स्वनं हन्ति [1]स्फुटैवाथ महाद्भुतम् ।

[लिङ्गसङ्कोचपूर्वस्थितिसंपादनोपायौ]

कनिष्ठानामिका मध्ये दर्शनाद्याति तत्पुनः ॥ १४२ ॥

तया घुटिकया लेपाल्लिङ्गसंकोचनं भवेत् ।
निर्लिङ्गो दृश्यते मर्त्यः क्षालिते पूर्ववद्भवेत् ॥ १४३ ॥

[भूमौ क्षिप्तस्य निर्गुण्डीपत्रस्य निम्बपत्रस्य च वृश्चिकवद्दर्शनोपायः]

अङ्कोलोत्थेन तैलेन लिप्तहस्तेन मर्दयेत् ।
निर्गुण्डीपत्रकं भूमौ क्षिप्तं भवति वृश्चिकः ॥ १४४ ॥

तद्वच्च शिखिपित्तेन निम्बपत्राणि वृश्चिकः ।

[कौतुकप्रदर्शनसर्वयोगसाधारणमन्त्राः, तदभिमन्त्रणेन कार्यसिद्धिश्च]

इत्येवं [2]सर्वयोगानां मन्त्रराजः शिवोदितः ॥ १४५ ॥

पूर्वमेवायुतं जप्त्वा ततः सिध्यति कौतुकम् ।

मन्त्रः—

ॐ नमो भगवते रुद्राय ओड्डामरेश्वराय बहुरूपाय नानारूपधराय हस हस नृत्य नृत्य मद मद नानाकौतुकेन्द्रजालदर्शनाय हुं फट् स्वाहा ।

मन्त्रेणानेन सर्वेषां सिद्धिः स्यादभिमन्त्रणात् ॥ १४६ ॥

[वादविवादजयोपायाः, चण्डमन्त्रत एतत्सिद्धिसम्भवश्च]

गोजिह्वां शिखिमूलं वा मुखे शिरसि धारयेत् ।
कुरुते सर्ववादेषु जयं पुष्ये समुद्धृतम् ॥ १४७ ॥

---

[1] स्फुटैवाथ–मु. [2] स्पर्शयो–मु.

मार्गशीर्षे तु पूर्णायां शिखिमूलं समुद्धरेत् ।
बाहौ शिरसि वा धार्यं विवादे विजयी भवेत् ॥ १४८ ॥

मेघनादस्य मूलं तु मुखस्थं तारवेष्टितम् ।
परवादी भवेन्मूढोऽथवा याति दिगन्तरम् ॥ १४९ ॥

निशि कृष्णचतुर्दश्यां महानीलीं श्मशानजाम् ।
आदाय बन्धयेद्धस्ते विवादे विजयी भवेत् ॥ १५० ॥

श्वेतगुञ्जोत्थितं मूलं मुखस्थं दुष्टतुण्डजित् ।
एतेषामुक्तयोगानां चण्डमन्त्रेण सिद्धयः ॥ १५१ ॥

[ चोरादिभयनाशनोपायाः ]

शुक्लपक्षयुते पुष्ये गुञ्जामूलं समुद्धरेत् ।
बद्धं शिरसि तत्सत्यं चोरभीनाशनं भवेत् ॥ १५२ ॥

धात्र्यास्तु बन्धकं ग्राह्यमाश्लेषायां प्रयत्नतः ।
हस्ते बद्धे भयं हन्ति चोरव्याघ्रारिराजजम् ॥ १५३ ॥

[ युद्धजयोपायः ]

आर्द्रायामाहृतं वंशवन्धकं कर्णधारितम् ।
विजयं प्राप्नुयाद्युद्धे शत्रुमध्ये न संशयः ॥ १५४ ॥

[ मत्तहस्तिवशीकरणोपायाः ]

अङ्कोलतैलसंभिन्नं कुर्यात्क्रोडस्य चूर्णकम् ।
अनेन स्पृष्टमात्रेण महाहस्ती वशो भवेत् ॥ १५५ ॥

[1] गृहीत्वा हस्तनक्षत्रे चूर्णयित्वा चुचुन्दरीम् ।
तल्लेपेन गजो याति दूरं न खलु सम्मुखम् ॥ १५६ ॥

---

[1] इतः श्लोकद्वयं मुद्रितपुस्तके नास्ति ।

वराहकर्णं सञ्चूर्ण्यमङ्कलीतैलभावितम् ।
तेनैव स्पृष्टमात्रेण महाहस्ती वशो भवेत् ॥ १५७ ॥

बिल्वपुष्पं तु संचूर्ण्य चुचुन्दर्या तु तत्समम् ।
तल्लिप्ताङ्गं नरं दृष्ट्वा दूरं गच्छति कुञ्जरः ॥ १५८ ॥

[युद्धादिभयनाशनोपायः]

मूलं मर्कटवल्ल्याश्च बाहौ बद्धं च मूर्धनि ।
दुष्टदन्तिहरं दूराद्युद्धादिभयनाशनम् ॥ १५९ ॥
श्वेतापराजितामूलं हस्तस्थं वारयेद्गजम् ।

[व्याघ्रभीतिनोदनोपायः]

सुश्वेतबृहतीमूलं हस्तस्थं व्याघ्रभीतिनुत् ॥ १६० ॥

[गतिस्तम्भनोपायः]

रजन्या हरितालैर्वा भूर्जपत्रे समालिखेत् ।
यन्त्रं हरितसूत्रेण वेष्टयित्वा ततः पुनः ॥ १६१ ॥
शिलायां स्तम्भयेत्तच्च गतिस्तम्भकरं भवेत् ।

[उत्थानस्तम्भनोपायः]

चर्मकारस्य कुण्डाच्च रजकस्य तथैव च ॥ १६२ ॥
कुण्डान्मृदं [1]समुद्धृत्य चण्डालीयकुवाससा ।
बन्धयेत्पोटलीं प्राज्ञो यस्याग्रे तां विनिक्षिपेत् ॥ १६३ ॥
तस्योत्थाने भवेत्स्तम्भः सिद्धयोगोऽयमीरितः ।

[वाक्स्तम्भनोपायः]

सितगुञ्जाफलं वाप्यं नृपात्रे [2]पीतमृत्स्नया ॥ १६४ ॥
क्षिपेद्य[3]स्यासने तं तु तस्य वाक्स्तम्भनं भवेत् ।

---

[1] समाहृत्य—मु. [2] प्रेत—मु. [3] स्यानने—मु.

[ वह्न्यादिभ्यो भयहरणोपायः ]

अङ्कुली लक्ष्मणा पुङ्खी सर्पाक्षी शिखिचूलिका ॥ १६५ ॥

विष्णुक्रान्ता हरा नीली पाठा श्वेतापराजिता ।
पाटली सहदेवी च मूलं चेत्काकजङ्घिका ॥ १६६ ॥

पुष्यर्क्षे च समुद्धृत्य मुखे शिरसि धारयेत् ।
एकैकधारणेनैव शस्त्रं स्रंसेद्रणे रिपोः ॥ १६७ ॥

[1] वह्न्यम्बुव्याघ्रभूपालचोरेभ्यश्च भयं हरेत् ।

[ सर्वशस्त्रनिवारणोपायः

श्वेतगुञ्जोत्थमूलं तु उत्तराभाद्रकक्षके ॥ १६८ ॥

उत्तराभिमुखं ग्राह्यं रोपयेद्धारणानने ।
मूलं शुक्लत्रयोदश्यां ग्राह्यं कम्पिल्लकन्ययोः ॥ १६९ ॥

बलामूलं तथा ग्राह्यं पिष्ट्वा च तिलकीकृतम् ।
धार्यं मूर्ध्नि गले बाह्वौ सर्वशस्त्रनिवारणम् ॥ १७० ॥

[ शस्त्रस्तम्भनोपायः ]

गोजिह्वा कदली द्राक्षा वटः श्वेतापराजिते ।
विष्णुक्रान्ता हस्तिकर्णी सुश्वेता कण्टकारिका ॥ १७१ ॥

मूलान्यादाय पुष्यार्के रम्भासूत्रेण वेष्टयेत् ।
स्वहस्ते कर्णयोर्धार्यं शस्त्रस्तम्भकरं भवेत् ॥ १७२ ॥

[ दिव्यशोधनोपायः ]

शिरीषमूलमादाय रविवारे तु पूर्वगम् ।
तच्च तण्डुलतोयेन पिष्ट्वा पिष्ट्वा दिनत्रयम् ॥ १७३ ॥

---

[1] अश्वम्बु–मु.

ललाटदेशे तस्मिंश्च तिलकत्वेन धारिते ।
[1]तप्तदिव्यं तथा सर्गकृत[2]दिव्यं विशुध्यति ॥ १७४ ॥

[ दिव्यस्तम्भनोपायः ]

उत्तराभिमुखं ग्राह्यं मेघनादस्य मूलकम् ।
भक्षयेद्धारयेद्धस्ते दिव्यस्तम्भकरं भवेत् ॥ १७५ ॥

आर्द्रकं च शिखामूलं पिष्ट्वा क्षीरेण तत्पिबेत् ।
स्तम्भयेत्तण्डुलं दिव्यमपराधः कृतः पचेत् ॥ १७६ ॥

चूर्णयेद्रोचनं भृङ्गराजसर्पाक्षिके समम् ।
प्रातराज्येन तत्पीतं दिव्यस्तम्भनमुत्तमम् ॥ १७७ ॥

[ द्विषद्दिव्यजयोपायः ]

सद्यः सञ्जातगोवत्सविष्ठा ग्राह्यान्तरिक्षतः ।
भक्षयित्वा विषं खादेद्द्विषद्दिव्यजयो भवेत् ॥ १७८ ॥

[ अग्निस्तम्भनोपायः ]

क्षीरजो बालमोटिं च [3]पिष्ट्वा हस्ते प्रलेपयेत् ।
[4]तप्तलोहान्विते दिव्ये कृतदोषो विनश्यति ॥ १७९ ॥

कुमारीसूरणं पिष्ट्वा लिप्तहस्तो भवेन्नरः ।
दीप्ताङ्गारान् करे कुर्वन्नपि तेन न दह्यते ॥ १८० ॥

उलूकमेषमण्डूकवसामादाय मेलयेत् ।
अनया लिप्तगात्रस्तु नाग्निना दह्यते नरः ॥ १८१ ॥

---

[1] तप्तदिव्ये–ख. [2] दिव्ये--ख. [3] विष्ठां–मु. [4] मृद्वग्निना ततो लिप्तपादो वह्निषु सञ्चरेत्–मु.

मण्डूकवसया पिष्ट्वा पारिभद्रत्वचं ततः।
लिप्तगात्रो नरो वह्निं स्तम्भयत्येव स ध्रुवम् ॥ १८२॥

विद्युदाहतकाष्ठेन कलिते विहगे तथा।
निरालम्बस्थिते वह्निर्न [1]दहत्यभिवीक्षिते ॥ १८३॥

कुमारीतैललिप्तस्तु हस्तो लोहैर्न दह्यते।
जलूकापाटलीमूलैः शैवालकुसुमं समम् ॥ १८४॥

मण्डूकवसया पिष्ट्वा लिप्तगात्रो न दह्यति।
उत्क्रान्तपत्रनिर्माल्यमेरण्डं पारिभद्रकम् ॥ १८५॥

मण्डूकवसया सार्धं पिष्ट्वा मृद्वग्निना पचेत्।
तेन पादप्रलेपेन भ्रमेदङ्गारपर्वते ॥ १८६॥

[2]यवनाण्डं समाहृत्य मण्डू सया सह।
घुटिकां कारयेत्तेन क्षिपेद्वह्नौ ततो भ्रमेत् ॥ १८७॥

भृङ्गराट्कदलीकन्दं मण्डूकवसया पचेत्।
मृद्वग्निना ततो लिप्तपादो वह्निषु सञ्चरेत् ॥ १८८॥

अङ्गारराशिमध्ये तु भ्रममाणो न दह्यते।
रसमेरण्डपत्रस्य शिरीषस्य च पत्रजम् ॥ १८९॥

ताभ्यां च लेपयेच्छीर्षं नरतैलेन कम्बलम्।
लिप्तं प्रज्वलितं धार्यं शिरस्थोऽग्निर्न दाहयेत् ॥ १९०॥

आषाढोद्भवमण्डूकवसया लेपयेत्करम्।
धारयेत्तप्तलोहं तु अग्निस्तम्भनमुत्तमम् ॥ १९१॥

[ जलस्तम्भनोपायाः ]

पद्मकं नाम यद्द्रव्यं सूक्ष्मचूर्णं तु कारयेत्।
वापीकूपतटाकेषु निक्षिपेद्बध्यते जलम् ॥ १९२॥

---

[1] दहत्यपि वी–मु. [2] यवकाण्डं–मु.

अत्र मन्त्रः

ॐ नमो भगवते रुद्राय जलमहेन्द्रकलहप्रिय कुमारि हंसध्वनिं जनय हंसध्वनिं स्वाहा।

अगस्त्यपुष्पनिर्यासं महिषीपयसा पिबेत् ॥ १९३ ॥

खादयेन्नवनीतं च [1]जलधौ नावसिच्यते ॥
मकरस्य सृगालस्य नकुलस्य वसायुतम् ॥ १९४ ॥

जलसर्पशिरोयुक्तमक्षतैलेन पाचयेत्।
तेन नस्यं कर्णलेपं कृत्वा संस्तम्भयेज्जलम् ॥ १९५ ॥

त्रिलोहवेष्टितं हस्तं कृकलासस्य दक्षिणम्।
समन्ताद्धारयेद्वक्त्रे स्वेच्छया सञ्चरेज्जले ॥ १९६ ॥

समुद्रेऽपि न सन्देहो नरस्तोयैर्न बाध्यते।
मूलं च श्वेतगुञ्जायाः कुसुम्भरसपेषितम् ॥ १९७ ॥

तेनैव रञ्जयेद्वस्तु तद्वस्त्रं स्वाङ्गवेष्टितम्।
गम्भीरजलमध्ये तु संस्थातुं यावदिच्छति ॥ १९८ ॥

जलस्तम्भमिति ख्यातं मन्त्रेणानेन मन्त्रयेत्।
अलाबुफलचूर्णं तु पक्वं श्लेष्मातकं जलम् ॥ १९९ ॥

पिष्ट्वा तेनाजिनं लिप्त्वा घनं द्व्यङ्गुलमात्रकम्।
तच्छुष्कं निक्षिपेत्तोये महाब्धौ च नदे ह्रदे ॥ २०० ॥

तस्योपरि स्थितो योऽसौ न कदापि निमज्जति।
पिष्ट्वा श्लेष्मातकालाबू कर्तव्यं पादुकाद्वयम् ॥ २०१ ॥

गोधाचर्ममयं छत्रं कृत्वाऽऽरूढश्चरेज्जले ॥ २०२ ॥

श्लेष्मातफलचूर्णं तु लेप्यं शुष्के च मृद्घटे।
घनमङ्गुलमात्रं स्याच्छोषयेत्पूरयेज्जलैः ॥ २०३ ॥

क्षणार्धे भिद्यते कुम्भं जलं बद्धं तु तिष्ठति।

---

[1] जलदो नावसिञ्चति—मु.

[जलस्तम्भोपयोगिमन्त्रः, तस्योक्तमर्दजलस्तम्भोपयोगश्च]

अत्र मन्त्रः
ॐ नमो भगवते रुद्राय जलं स्तम्भय स्तम्भय व व स्वाहा ।
उक्तेषु जलयोगेषु मन्त्रमेवं जपेद्बुध ॥ २०४ ॥

पातालगारुडं पत्रं जलेन सह मर्दयेत् ।
तज्जलैः पूरयेत्कुम्भं तत्क्षणाद्बध्यते जलम् ॥ २०५ ॥

[विद्युत्पातनिवारणोपायाः]

कदम्बवृक्षसारस्तु विद्युत्पातनिवारणः ।
विद्युत्पातस्य नो भीतिर्देवराजस्य कीर्तनात् ॥ २०६ ॥

जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च ।
पुलस्त्यः पुलहो विष्णुः षडेते वज्रवारणाः ॥ २०७ ॥

मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्तनात् ।
विद्युदग्निभयं नास्ति लिखिते च गृहोदरे ॥ २०८

[गमनादिस्तम्भानां शम्भूक्तनिरूपणोपसंहारः]

गमनोत्थानवाग्बाणखड्गदिव्याग्निवारिणाम् ।
शत्रुसैन्याशनीनां च स्तम्भनं शम्भुनोदितम् ॥ २०९ ॥

[इन्द्रजालप्रयोगोपसंहारः, तदभिज्ञानां शिवभूपसभासदत्वं च]

इन्द्रजालप्रयोगास्ते विचित्रास्त इतीरिताः ॥
इत्येवमादिविद्यानां परिज्ञानप्रयोगयोः ॥ २१० ॥

कुशलास्तत्कलाभूरिप्रयोगकृतनिश्चयाः ।
अनन्यलभ्यविरुदाभरणैश्च परिष्कृताः ॥ २११ ॥

[1] श्चा इति दर्शिताः—मु.

अवर्तन्त क्वचित्क्वापि शिवभूपसभान्तरे।
भव्यकाव्यमनोहारिनाटकालङ्क्रियाविदः ॥ २१२ ॥

तदास्थानपुरोभागे तिष्ठन्ति स्म कवीश्वराः ॥ २१३ ॥

इति श्रीशिवतत्त्वरत्नाकरे सप्तमकल्लोले इन्द्रजालादिविद्याप्रदर्शनं नाम द्वितीयस्तरङ्गः

---

## सप्तमकल्लोले तृतीयस्तरङ्गः

### काव्यलक्षणादिरसान्तवर्णनम्

[कुमारस्य काव्यस्वरूपादिप्रश्नः]

*स्वामिन्! प्रकाशितं सर्वं कौतुकं विविधं महत्।
विना गुरूपदेशेन दुर्विज्ञेयतरं नृणाम् ॥ १ ॥

श्रुत्वा प्रहृष्टमभवन्ममान्तःकरणं विभो!।
काव्यज्ञा नाटकविदोऽलङ्कारज्ञाः सभान्तरे ॥ २ ॥

स्थिता इति समाख्यातं तत्र किं काव्यशब्दितम्।
तन्निर्माणप्रकारश्च को वा वर्ण्यं च कीदृशम् ॥ ३ ॥

काव्यस्य कति वा भेदास्तत्र कर्ता च कीदृशः।
एतत्सर्वं ममाख्याहि गुरो! मयि कृपावशात् ॥ ४ ॥

[राज्ञः काव्यकारणस्वरूपादिनिरूपणप्रतिज्ञा]

पुत्र! तत्ते प्रवक्ष्यामि काव्यनिष्पत्तिसाधनम्।
वर्णशुद्धिं काव्यवृत्तिं रसान् भावाननन्तरम् ॥ ५ ॥

नेतृभेदानलङ्कारान् दोषानपि च तद्गुणान्।
नाट्यधर्मान् रूपकोपरूपकाणां भिदा अपि ॥ ६ ॥

---

* ख. मातृकायां तृतीयतरङ्गादिरष्टमतरङ्गान्तो ग्रन्थो नोपलभ्यते।

चाटुप्रबन्धभेदांश्च विकीर्णांस्तत्र तत्र तु ।
सञ्चिन्त्यैकत्र कथये सौकर्याय सतामहम् ॥ ७ ॥

[पदस्वरूपं, तद्विभागः, वाक्यस्वरूपं च]

अकारादिक्षकारान्ता वर्णास्तु पदतां गताः ।
पदानि द्विविधानि स्युः तिङ्सुबन्तविभेदतः ॥ ८ ॥
सञ्चयं तिङ्सुबन्तानां वाक्यमाहुर्विपश्चितः ।

[ काव्यलक्षणम् ]

तान्येव कविक्लृप्तानि सार्थानि सरसानि च ॥ ९ ॥
सालङ्काराणि निर्दोषाण्याहुः काव्यं मनीषिणः ।

[ पद्यादिभेदेन काव्यत्रैविध्यम् ]

पद्यं गद्यं च मिश्रं च त्रिविधं काव्यमुच्यते ॥ १० ॥

[पद्यगद्यमिश्राणां स्वरूपाणि]

पद्यं तु छन्दसा बद्धं गद्यं वाक्यकदम्बकम् ।
गद्यपद्यात्मकं मिश्रं नाटकादिकमुच्यते ॥ ११ ॥

[संस्कृतप्राकृतयोर्महाकाव्यत्वनिर्देशः, तदुदाहरणं च]

सर्गबद्धं संस्कृतेन साश्वासं प्राकृतेन च ।
तद्द्वयं च महाकाव्यं सेतुरामायणादिकम् ॥ १२ ॥

[कथाख्यायिकारूपेण गद्यभेदः, तत्प्रतिपाद्यप्रभेदश्च]

गद्यं तु गदितं द्वेधा कथेत्याख्यायिकेति च ।
कथा कल्पितवृत्तान्ता सत्यार्थाऽऽख्यायिका मता ॥ १३ ॥

[काव्यमुखप्रतिपाद्यानि]

आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम् ।

[काव्यलक्षणं, तदुद्देश्यं च]

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ॥ १४ ॥

उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ॥ १५ ॥

मन्त्रद्यूतप्रयाणादिनायकाभ्युदयैरपि ।
अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् ॥ १६ ॥

काव्यं कल्पान्तरस्थायि कल्पतेऽनवरभूतये ।

[याद्यष्टौ गणास्तत्स्वरूपं च]

छन्दो यरतमैर्व्याप्तं तथा भजसनैरपि ॥ १७ ॥

गुरुणा लघुना चाष्टौ गणास्तल्लक्षणं यथा ।
आदिमध्यावसानेषु यरता यान्ति लाघवम् ॥ १८ ॥

भजसा गौरवं यान्ति मनौ तु गुरुलाघवे ।

[गणानां मात्राभिर्वर्णतश्च द्वैविध्यं, तद्विवरणं च]

गणास्ते द्विविधाः प्रोक्ता मात्रावर्णविभेदतः ॥ १९ ॥

आद्याश्चतसृभिस्तत्र मात्राभिरुपवर्णिताः ।
लघुगुर्वात्मकैर्वर्णैर्द्वितीया स्यात्त्रिभिस्त्रिभिः ॥ २० ॥

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्तस्त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लजुः ॥ २१ ॥

पादादाविह वर्णस्य संयोगः क्रमसंज्ञिकः ।
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥ २२ ॥

[यादिगणानां प्रत्येकं स्वरूपं, फलानि च]

गणानां तु फलं ज्ञेयं प्रत्येकं प्रोच्यते यथा ।
यो वारिरूपो धनकृद्रोऽग्निर्दाहभयप्रदः ॥ २३ ॥

ऐश्वर्यहृन्नाभसस्तो भः सौम्यः सुखदायकः ।
जस्सौरो रोगदः प्रोक्तः सो वायव्यः प्रवासकृत् ॥ २४ ॥

शुभदो मो भूमिमयो दिङ्मयो नः शुभप्रदः ।

[काव्यादौ शुभप्रदवर्णगणयोरावश्यकता, ततः कर्तृनायकयोः शुभाप्तिश्च]

वर्णं गणं च काव्यस्य मुखे कुर्यात्सुशोभनम् ॥ २५ ॥

कर्तृनायकयोस्तेन कल्याणमुपजायते ।

[अकारादिवर्णफलानि]

आभ्यां भवति संप्रीतिरिदीभ्द्यां धनमुद्धयात् ॥ २६ ॥

ऋभ्यां लभ्यामपख्यातिरेचः सुखकरा मताः ।
[1]चतुर्भ्यः कादिवर्णेभ्यो लक्ष्मीरपयशस्तु चात् ॥ २७ ॥

प्रीतिः सौख्यं च छान्मित्रलाभो ज्ञेयश्च मृत्युकृत् ।
टठाभ्यां खेदसम्प्राप्तिः शोभाशोभाकरौ डढौ ॥ २८ ॥

भ्रमणं णात्सुखं तात्तु थाद्युद्धं सुखदौ दधौ ।
नः प्रतापी भयसुखमरणक्लेशदाहकृत् ॥ २९ ॥

पवर्गो यस्तु लक्ष्मीदो रो दाहं व्यसनं लवौ ।
शः सुखं तनुते षस्तु खेदं सः सुखदायकः ॥ ३० ॥

हो दाहकृद्व्यसनदो ळक्षौ सर्वसमृद्धिदौ ।
एवं प्रत्येकतः प्रोक्तं वर्णानां वास्तवं फलम् ॥ ३१ ॥

---

[1] ङञयोः फलं नोक्तम् ।

[काव्यमुखे त्याज्यवर्णाः, त्यागकारणं च]

संयोगः सर्वथा त्याज्यो वर्णानां क्षं विना मुखे ।
शुद्धमप्यन्यसंयुक्तमशुद्धमुपजायते ॥ ३२ ॥
यथा मधु घृतोन्मिश्रं विषतामेति वीर्यतः ।

[काव्यादौ वर्णतो गणतश्च देवतावाचकादिशब्दानामनिन्द्यता]

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ॥ ३३ ॥
ते सर्वे नैव निन्द्याः स्युः वर्णतो गणतोऽपि वा ।

[छन्दसां संज्ञाः, तेषां क्रमशो वृद्धिगतैरेकाक्षरादिचतुर्विंशत्यक्षरान्तवर्णैः वृत्तमात्रानुसारतो भेदाश्च]

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ॥ ३४ ॥
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ।
त्रिष्टुप्च जगती चैव तथाऽतिजगती तथा ॥ ३५ ॥
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी तथा मते ।
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ॥ ३६ ॥
विकृतिः सङ्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः ।
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ॥ ३७ ॥
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ।
आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ॥ ३८ ॥
पृथक्छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतैः ।

[चण्डवृष्ट्यादिदण्डकव्यवस्था]

तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः ॥ ३९ ॥

[गाथाव्यवस्था, तद्भेदाः, तच्चरणसङ्ख्या च]

शेषा गाथास्त्रिभिः षड्भिश्चरणैरुपलक्षिताः ।

[समादिवृत्तभेदास्तल्लक्षणं च]

सममर्धसमं वृत्तं विषमं च तथापरम् ॥ ४० ॥

अङ्घ्रयो यस्य चत्वारः समलक्षणलक्षिताः ।
तच्छन्दः शास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते ॥ ४१ ॥

प्रथमाङ्घ्रिसमो यत्र तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ ४२ ॥

यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दश्शास्त्रविशारदाः ॥ ४३ ॥

[प्रस्ताराद्यध्वयोगान्तषट्प्रत्ययानामुद्देशः]

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
सङ्ख्या चैवाध्वयोगश्च प्रत्ययाः षट् प्रकीर्तिताः ॥ ४४ ॥

[प्रस्तारलक्षणम्]

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथाशेषं भूयः कुर्यादमुं विधिम् ॥ ४५ ॥

ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातः छन्दोविचितवेदिभिः ॥ ४६ ॥

[नष्टलक्षणम्]

नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः ।
विषमे चैकमादाय तदर्धेऽर्धे गुरुर्भवेत् ॥ ४७ ॥

[ उद्दिष्टलक्षणम् ]

उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान् समालिखेत् ।
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ४८ ॥

[ लगक्रियालक्षणम् ]

वर्णान् वृत्तभवान् सैकानुत्तराधरतः स्थितान् ।
एकादिक्रमतश्चैतानुत्तरोत्तरतः क्षिपेत् ॥ ४९ ॥

उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ।
उपर्याद्याद्गुरोरेवमेकद्व्यादिलगक्रिया ॥ ५० ॥

[सङ्ख्यारीतिः]

लगक्रियाङ्कसन्दोहे भवेत्सङ्ख्या विमिश्रिता ।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ५१ ॥

[ अध्वस्वरूपम् ]

सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ।
वृत्तस्य ङ्गुलकी व्याप्तिरधः कुर्यात्तथ ङ्गुलम् ॥ ५२ ॥

[कवित्वकारणानि, तत्सम्पन्नस्य कविशब्दवाच्यता च]

एवं वर्णगणच्छन्दोविचारणविचक्षण ।
कवित्वकारणस्तोमसम्पन्नः कविरुच्यते ॥ ५३ ॥

[काचिकादयः सप्त कविभेदास्तल्लक्षणानि च]

[1]काचिको वाचिकश्चार्थः शिल्पको मार्दवानुगः ।
विवेकी भूषणार्थी च कवयः सप्त कीर्तिताः ॥ ५४ ॥

अन्यापोह्यापकृत्य स्वमनसो ह्याचरात्मनः ।
काचिको वाचकः शुद्धवागाडम्बरकारकः ॥ ५५ ॥

---

[1] काथिको—मु.

आर्थोऽभिधेयचित्रार्थी शिल्पको ह्यचित्रकृत् ।
शब्दार्थमार्दवापेक्षी कविः स्यान्मार्दवानुगः ॥ ५६ ॥

[1] श्लेषार्थगुणदोषज्ञो महाकविमतानुगः ।
शास्त्रालङ्कारसंस्कारी विवेकी [2] कविपुङ्गवः ॥ ५७ ॥

अलङ्कारैकनिष्ठस्तु भूषणार्थी बुधैर्मतः ।

[काव्यनिदानम्]

शक्तिर्निदानं काव्यस्य कथ्यते काव्यवेदिभिः ॥ ५८ ॥

[काव्यकारणानि, तत्संख्या च]

शब्दच्छन्दोऽभिधानादिशास्त्रालोकावलोकनम् ।
नैपुण्यं कविशिक्षा च त्रितयं काव्यकारणम् ॥ ५९ ॥

[शक्तेः काव्यादिकरत्वम्]

न जातु जायते काव्यं यां विना करणैरपि ।
शब्दच्छन्दोऽभिधानाद्यैः सा शक्तिरभिधीयते ॥ ६० ॥

जातमप्यपहासाय कल्पते कविसन्ततेः ।

[काव्यकारणशब्दादिस्वरूपाणामन्यतोऽवगन्तव्यता]

शब्दच्छन्दोऽभिधानानां न विधिः सङ्ग्रहादिह ॥ ६१ ॥

तेषां स्वरूपमन्यत्र बोद्धव्यं बुद्धिशालिभिः ।

[काव्यानां मुख्याद्यर्थचतुष्टयम्]

काव्यानां कविक्लृप्तानामर्थाः प्रोक्ताश्चतुर्विधाः ॥ ६२ ॥

मुख्यो लक्ष्यस्तथा गौणो व्यङ्ग्यश्चेतीह कथ्यते ।

---

[1] श्लेषार्थ–मु. [2] कविरूच्यते–मु.

[मुख्यार्थः, तत्प्रभेदास्तदुदाहरणानि च]

स मुख्यः कथितः साक्षात्सङ्केतेनाभिधीयते ॥ ६३ ॥

जातिक्रियागुणद्रव्यभेदात्सोऽपि चतुर्विधः ।
गौश्चलो धवलो डित्थ इत्युदाहरणं मतम् ॥ ६४ ॥

[लक्ष्यार्थग्रहणं, लक्षणात्रैविध्यं च]

[1] वाच्यार्थानुपपत्तौ यस्तत्सम्बन्धी प्रतीयते ।
प्रयोजनवशादन्यो लक्ष्योऽर्थो लक्षणा त्रिधा ॥ ६५ ॥

[जहल्लक्षणास्वरूपं, तदुदाहरणं च]

वाच्यार्थस्य परित्यागादन्योऽर्थो यत्र लक्ष्यते ।
सा जहल्लक्षणा ज्ञेया गङ्गायां घोष इत्यसौ ॥ ६६ ॥

[अजहल्लक्षणास्वरूपं, तदुदाहरणं च]

वाच्यार्थस्यापरित्यागादन्योऽर्थो यत्र लक्ष्यते ।
अजहल्लक्षणा कुन्ताः प्रविशन्तीति सा मता ॥ ६७ ॥

[जहदजहल्लक्षणास्वरूपं, तदुदाहरणं च]

जहती चाप्यजहती स्वार्थं या तूभयात्मिका ।
स्याच्छत्रिणो व्रजन्तीति तत्रोदाहरणं मतम् ॥ ६८ ॥

एकेन छत्रिणाऽन्येषां छत्रित्वमिह लक्ष्यते ।

[गौणार्थस्तदुदाहरणं च]

स गौणो गुणसादृश्यादन्योऽर्थो यः प्रतीयते ॥ ६९ ॥

उदाहरणमेतस्य सिंहो माणवको यथा ।

---

[1] वाक्यार्थानुपपत्तौ—मुद्रिते पाठांतरम् ।

[व्यङ्ग्यार्थस्य मुख्यलक्ष्यार्थातिरिक्तता, तदुदाहरणं च]

मुख्यार्थबाधे तद्योगाद्व्यङ्ग्यो लक्ष्यस्य यत्फलम् ॥ ७० ॥

नायं मुख्यो नापि लक्ष्यो लक्षणायां फलं यतः ।
गङ्गा मुख्यस्तटो लक्ष्यो व्यङ्ग्यः शीतलतादिकः ॥ ७१ ॥

[व्यञ्जनस्वरूपं, तन्मूलं च]

अनेकवाचकः शब्दो यत्र वाच्यं व्यनक्ति तत् ।
व्यञ्जनं त्वभिधामूलं संयोगादिभिरुच्यते ॥ ७२ ॥

[व्यञ्जनोपपादकसंयोगादयः]

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ ७३ ॥

सामर्थ्यमौचिती देशः कालो व्यक्तिस्स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ ७४ ॥

[संयोगोदाहरणम्]

स वज्रो हरिरित्यत्र योगादिन्द्रः प्रतीयते ।

[विप्रयोगोदाहरणम्]

अवज्रो हरिरित्यत्र वियोगादपि वासवः ॥ ७५ ॥

[साहचर्योदाहरणम्]

साहचर्याद्दाशरथी रामलक्ष्मणयोरिति ।

[विरोधोदाहरणम्]

रामोऽर्जुनविरोधीति विरोधाद्भार्गवो मतः ॥ ७६ ॥

[अर्थोदाहरणम]

स्थाणुं भज जगद्वन्द्यमित्यर्थेन शिवो मतः ।

[प्रकरणोदाहरणम्]

युष्मदर्थः प्रकरणाद्देवो जानाति मामिति ॥ ७७ ॥

[लिङ्गोदाहरणम्]

कन्तुर्मीनध्वज इति लिङ्गात्कामः प्रतीयते ।

[अन्यशब्दसन्निध्युदाहरणम्]

देवः पुरारिरित्यत्र शब्दसन्निधितः शिवे ॥ ७८ ॥

[सामर्थ्योदाहरणम्]

मत्तः पिको विरौतीति सामर्थ्यात्सुरभावृतौ ।

[औचित्योदाहरणम्]

औचित्यात्पातु वः शम्भुरिति सम्मुख इष्यते ॥ ७९ ॥

[देशोदाहरणम्]

अत्र देवो राजतीति देशाद्राजावगम्यते ।

[कालोदाहरणम्]

चित्रभानुर्विभातीति कालेनार्थोऽवसीयते ॥ ८० ॥

[व्यक्त्युदाहरणम्]

रात्रौ चेदनलो ज्ञेयो दिवा चेत्तिग्मदीधितिः ।
मित्रं विभातीति सुहृन्मित्रो भातीति भास्करः ॥ ८१ ॥

पुन्नपुंसकव्यक्त्या वा व्यज्येते तौ यथाक्रमम् ।

[स्वरोदाहरणम्]

स्वरेण व्यक्तिरर्थस्य वेदे काव्येषु न क्वचित् ॥ ८२ ॥

[चेष्टोदाहरणम्]

एतावन्मात्रमेवेति चेष्टयार्थो विभाव्यते ।

[अर्थानामपि व्यञ्जनसहकारित्वम्]

अर्थाश्च व्यञ्जकास्तस्य सहकारितया मताः ॥ ८३ ॥

[रसस्य विभावाद्यभिव्यक्तस्वरूपत्वम् ]

जायमानैर्विभावाद्यैर्व्यक्तः स्थायी रसः स्मृतः।

[भावस्वरूपम् ]

भावस्तु मनसो वृत्तिभेदः स्थैर्यमुपेयिवान् ॥ ८४ ॥

[नव स्थायिभावाः]

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावा नव क्रमात ॥ ८५ ॥

पोष्यमाणा रतिर्भावैः शृङ्गार इति कथ्यते।
भावमेव स्थायिनोऽन्ये रसतां प्राप्नुवन्ति हि ॥ ८६ ॥

नवनीतं यथा पाकाद्घृतत्वं प्रतिपद्यते।

[श्रूयमाणविभावानां काव्येषु रसोत्पादकत्वम्]

श्रूयमाणैर्विभावाद्यैः काव्येषु रससम्भवाः ॥ ८७ ॥

[नाटकेषु दृश्यमानविभावाद्यै रसोदयः]

दृश्यमानैः सदस्यानां नाटकेषु रसोदयः।

[काव्यनाटकयो रसपोषकाः]

विभावा अनुभावाश्च सात्त्विकाः व्यभिचारिणः ॥ ८८ ॥

श्रोतॄणां प्रेक्षकाणां च ते सर्वे रसपोषकाः।

[विभावद्वैविध्यं, विभावादीनां विशिष्य रसाभिव्यञ्जकता च]

आलम्बनत्वेनोद्दीपनत्वेन द्विविधा मताः ॥ ८९ ॥

विभावाद्यैर्विशेषेण रसव्यक्तिस्तु भाव्यते।

[आलम्बनोद्दीपनशब्दार्थः, तयोर्भावत्वोपपादनं च]

आलम्बनविभावः स यमालम्ब्य रसोदयः ॥ ९० ॥

उद्दीप्यते रसो भावैर्यैस्त उद्दीपना मताः ।
उत्पन्नो यै रसो भावैर्भावकैरनुभूयते ॥ ९१ ॥

तेन भावाः प्रकीर्त्यन्ते विकारा [1]लिङ्गसम्भवाः ।

[भावेषु सात्त्विकत्वविवरणं, सात्त्विकभावसंख्या च]

सत्त्वं नाम मनोवृत्तिः सात्त्विकास्तत्समुद्भवाः ॥ ९२ ॥

स्तम्भः स्वेदोऽथ रोमाञ्चो लयो वैस्वर्यवेपथू ।
अश्रु वैवर्ण्यमित्यष्टौ भावाः प्रोक्तास्तु सात्त्विकाः ॥ ९३ ॥

[स्तम्भादीनां विवरणं, तत्कारणं च]

स्तम्भः स्यान्निष्क्रियाङ्गत्वं रागभीत्यादिसम्भवम् ।
[2]प्रलयः सुखदुःखाद्यै[3]र्बाधमिन्द्रियमूर्छनम् ॥ ९४ ॥

सुखाद्यतिशयाज्जातो रोमाञ्चो रोमविक्रिया ।
रागद्वेषभयादिभ्यो वेपथुर्गात्रकम्पनम् ॥ ९५ ॥

वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमा[4]दिभिः ।
विषादमदरोषादेर्वर्णान्यत्वं विवर्णता ॥ ९६ ॥

अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ।
मतं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ॥ ९७ ॥

[भावानां व्यभिचारित्वं, तत्रोपमानं च]

भावाः स्थायिन्यनैकान्त्याच्चरन्तो व्यभिचारिणः ।
उत्पद्यन्ते विलीयन्ते वारिधाविव वीचयः ॥ ९८ ॥

---

[1] अङ्ग-मु. [2] प्रलयस्तु मनः खेदैर्गाढ-मु. [3] गाढमि—नञ्जराजयशोभूषणे.
[4] दिजः-मु.

[निर्वेदादयो व्यभिचारिभावास्तेषां संख्या च]

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ९९ ॥

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ १०० ॥

सुप्तिर्विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १०१ ॥

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावास्तेषां लक्षणमुच्यते ॥ १०२ ॥

[निर्वेदादीनां विवरणं, तत्कारणानि, तत्रत्यविकाराश्च]

दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः ।
तत्र चिन्ताश्रुनिश्श्वासदीनताः सम्भवन्ति च ॥ १०३ ॥

ग्लानिर्बलस्यापचयो वैवर्ण्यारतिकारकः ।
अनिष्टाभ्यागमोत्प्रेक्षा शङ्कारोषादिकारणम् ॥ १०४ ॥

परोत्कर्षासहिष्णुत्वमसूया परिकीर्तिता ।
मदिरादिकृतो मोहहर्षव्यतिकरो मदः ॥ १०५ ॥

श्रमः खेदोऽध्वरत्यादेर्जातः स्वेदातिभूमिकृत् ।
मन्दोद्यमत्वमालस्यं कर्तव्येषु प्रकीर्तितम् ॥ १०६ ॥

सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसम्भवम् ।
इष्टानभिगमाद्ध्यानं चिन्ता शून्यत्वतापकृत् ॥ १०७ ॥

मोहस्तु मोहनं [1]भीतिदुःखावेशानुचिन्तनैः ।
पूर्वानुभूत[2]विषयज्ञानं स्मृतिरुदाहृता ॥ १०८ ॥

धृतिश्चित्तस्य नैस्पृह्यं ज्ञानाभीष्टागमादिभिः ।
चेतस्सङ्कोचनं व्रीडाऽनङ्गरागस्तवादिभिः ॥ १०९ ॥

---

[1] भीतिचिन्तादुःखानु—मु. [2] विषयाचिन्ता—मु.

चापल्यं त्वनवस्थानं रागद्वेषादिसम्भवम् ।
प्रसक्तिरुत्सवादिभ्यो हर्षः [1]स्वेदाश्रुकम्पकृत् ॥ ११० ॥

इष्टानिष्टागमाज्जात आवेगश्चित्तविभ्रमः ।
जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमोद्भवम् ॥ १११ ॥

अन्यधिकरणादात्मोत्कर्षो गर्वो [2]बलादिजः ।
विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः ॥ ११२ ॥

कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत् ।
इन्द्रियव्याप्तिराहित्यं निद्रा चित्तनिमीलनम् ॥ ११३ ॥

आवेगो मोहदुःखाद्यैरपस्मारोऽङ्गतापकृत् ।
सुप्तिर्निद्रासमुद्रेको मनोवृत्तिविवर्जितः ॥ ११४ ॥

विबोधश्चेतनाव्याप्तिर्जृम्भा[3]क्षिपरिमार्गकृत् ।
अमर्षः सापराधेषु चेतःप्रज्वलनं मतम् ॥ ११५ ॥

हर्षाद्याकारसङ्गुप्तिरवहित्थेति कथ्यते ।
दृष्टेऽपराधे चण्डत्वमुग्रता तर्जनादिकृत् ॥ ११६ ॥

तत्त्वमार्गानुसन्धानादर्थनिर्धारणं मतिः ।
मनस्तापाद्यभिभवाज्ज्वरादिर्व्याधिरिष्यते ॥ ११७ ॥

उन्मादः समवृत्तित्वं चेतनाचेतनेष्वपि ।
मरणं मरणार्थस्तु प्रयत्नः परिकीर्तितः ॥ ११८ ॥

आकस्मिकभयाच्चित्तक्षोभस्त्रासः प्रकीर्तितः ।
सन्देहात्कल्पनानन्त्यं वितर्कः परिकीर्तितः ॥ ११९ ॥

[रसभेदेन विभावभेदाः, शृङ्गारे आलम्बनादिविभावस्वरूपनिर्देशश्च]

विभावाद्याः पृथग्भावाः कीर्त्यन्तेऽथ रसाश्रयाः ।
आलम्बनास्तु शृङ्गारे नायिकानायकादयः ॥ १२० ॥

उद्दीपनास्तु कथिताश्चन्द्रिकोपवनादयः ।
अनुभावाः प्रकीर्त्यन्ते कटाक्षक्षेपणादयः ॥ १२१ ॥

---

[1] स्वेदादिक—मु. [2] बलोदितः—मु. [3] क्षेपविभागकृत—मु.

स्तम्भादयः सात्त्विकाः स्युर्दर्शनस्पर्शनादयः ।
निर्वेदाद्या यथायोगं योग्याः सञ्चारिणोऽपि च ॥ १२२ ॥

[सम्भोगविप्रलम्भभेदेन शृङ्गारस्य द्वैविध्यं, तयोर्निमित्तादयश्च]

सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ।
सम्भोगः सन्निकर्षे स्याद्भाषणाद्यैः परस्परम् ॥ १२३ ॥

विप्रलम्भोऽभिलाषेर्ष्याप्रवासाद्यैरनेकधा ।

[रत्युल्लासजाः स्मरदशाः, तत्संख्यास्वरूपाणि च]

रतेरुल्लाससम्भूता विद्यन्तेऽत्र दशा दश ॥ १२४ ॥

चक्षुःप्रीतिर्मनस्सङ्गः सङ्कल्पो जागरस्तथा ।
तनुता विषयद्वेषस्त्रपानाशस्ततः परम् ॥ १२५ ॥

मोहो मूर्छा मृतिरिति विज्ञेयास्ता यथाक्रमम् ।

[स्मरदशास्वरूपाणां विवरणम्]

आदराद्वीक्षणं यत्तु चक्षुःप्रीतिस्तु सा स्मृता ॥ १२६ ॥

निश्वासाकर्मिर्मनस्सङ्गः प्रतिकृत्यादिभिः स्मृतः ।
मनोरथैः प्रियावाप्तिः सङ्कल्पः समुदीरितः ॥ १२७ ॥

प्रियानवाप्तिचिन्ताभिरस्वापो जागरो मतः ।
कृशता तु तनोः कामज्वरेण तनुता मता ॥ १२८ ॥

अर्थान्तरासहिष्णुत्वं विषयद्वेषणं मतम् ।
मानत्यागस्त्रपानाशो गौरवागणनान्मतः ॥ १२९ ॥

उन्मादश्चित्तवैकल्यान्मोह इत्युच्यते बुधैः ।
मुहुरिन्द्रियवैकल्यान्मूर्छा ज्ञानक्षयो मतः ॥ १३० ॥

क्षणान्तरप्राणहानिर्मूर्छालाभो मृतिर्मता ।

---

[1] लाभः स्मृतिः—सु.

[हासस्यैव विभावादितो हास्यरसत्वं, तदीयालम्बनादिविभावस्वरूपाणि च]

हास एव विभावाद्यैः पुष्टो हास्यत्वमागतः ॥ १३१ ॥

विदूषकादिरालम्बभावो हास्यरसे भवेत् ।
उद्दीपनविभावाः स्युस्तद्भाषाकारविक्रियाः ॥ १३२ ॥

[^1]भावकाक्षिविकासाद्या अनुभावाः प्रकीर्तिताः ।
अश्रुवैवर्ण्यवैस्वर्यप्रमुखाः सात्त्विकाः स्मृताः ॥ १३३ ॥

अत्र हर्षावहित्थादिभावाः सञ्चारिणो मताः ।

[उत्तमादिभेदेन हास्यरसत्रैविध्यं, तत्रत्यविशेषाश्च]

उत्तमादिविभेदेन त्रिधा हास्यरसो मतः ॥ १३४ ॥

[^2]आद्यं विकासिगण्डं स्यादीषल्लक्ष्यरदं स्मितम् ।
मध्यमं स्याद्विहसितं तथाऽपहसितं परम् ॥ १३५ ॥

मृदुस्वनं स्यात्प्रथमं शिरःकम्पस्ततः परम् ।
अधमं चापहसितं तथाऽतिहसितं मतम् ॥ १३६ ॥

शिरःकम्पाश्रुमत्पूर्वं विक्षिप्ताङ्गं द्वितीयकम् ।

[शोकस्यैव करुणरसत्वं तत्प्रभेदः, तदीयालम्बनादिविभावस्वरूपाणि च]

शोक एव विभावाद्यैः पुष्टः करुणतां गतः ॥ १३७ ॥

इष्टनाशादनिष्टाप्तेः करुणोऽपि द्विधा मतः ।
उद्दीपनविभावाः स्युः स्वजनाक्रन्दनादयः ॥ १३८ ॥

अनुभावास्तु निःश्वासविलापरुदितादयः ।
स्तम्भाश्रुपातवैस्वर्यप्रमुखाः सात्त्विकाः स्फुटाः ॥ १३९ ॥

अत्रापस्मारदीनत्वमरणालस्यसम्भ्रमाः ।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ॥ १४० ॥

[^1]: भावकार्द विकासा—घ.

[^2]: आद्यं—मु. पा.

[क्रोधस्यैव रौद्ररसत्वं, तद्भेदः, तदीयालम्बनविभावस्वरूपाणि च]

क्रोध एव विभावाद्यैः पुष्टो रौद्रत्वमाप्नुयात् ।
मात्सर्याद्द्वेषतो रौद्रोऽपि द्विविधो मतः ॥ १५१ ॥

आलम्बनविभावौ द्वौ मात्सर्यद्वेषगोचरौ ।
उद्दीपनविभावाः स्युस्तद्व्यापारचेष्टितादयः ॥ १५२ ॥

अनुरागभ्रुकुट्यक्षिरागोष्ठस्पन्दनादयः ।
स्वेदवैवर्ण्यवैस्वर्यप्रमुखाः सात्त्विका मताः ॥ १५३ ॥

ईर्ष्यामर्षप्रतापगर्वमदाद्या व्यभिचारिणः ।

[उत्साहस्य वीररसत्वं, तद्भेदाः, तदीयालम्बनादिस्वरूपाणि च]

उत्साहस्तु विभावाद्यैः पुष्टो वीररसो भवेत् ॥ १५४ ॥

दानवीरो दयावीरो युद्धवीर इति त्रिधा ।
आद्ये सत्पात्रमालम्बो द्वितीये दीन उच्यते ॥ १५५ ॥

वैरी तृतीये विज्ञेयस्तत्र तूद्दीपनं क्रमात् ।
दानस्तुतिर्दीनवाक्यरणभेरीस्वनादयः ॥ १५६ ॥

अनुभावाः क्रमाद्दित्सा प्रसादबहुलाग्रहाः ।
अत्र ज्ञेयं यथायोग्यं सात्त्विकाः पुलकादयः ॥ १५७ ॥

सञ्चारिणो गर्वहर्षामर्षधृत्यादयोऽपि च ।

[भयस्यैव भयानकरसत्वं, तदीयालम्बनादिविभावस्वरूपाणि च]

भयमेव विभावाद्यैः भयानकरसो भवेत् ॥ १५८ ॥

आलम्बनविभावाः स्युः शत्रुव्याघ्रोरगादयः ।
उद्दीपनविभावाः स्युरत्र तद्गर्जनादयः ॥ १५९ ॥

अनुभावास्तु वैवर्ण्यकम्पस्वेदादयो मताः ।
तथैव सात्त्विका भावास्तत्राष्टौ स्पष्टलक्षणाः ॥ १६० ॥

सञ्चारिणो मोहदैन्यत्राससम्भ्रमणादयः ।

[जुगुप्साया बीभत्सरसत्वं, तद्भेदः, तदीयालम्बनविभावादिस्वरूपाणि च]

जुगुप्सैव विभावाद्यैर्याता बीभत्सतां द्विधा ॥ १५१ ॥

जुगुप्स्यदर्शनादेको वैराग्यादपरो भवेत् ।
आलम्बनविभावाः स्युरहृद्या ये जुगुप्सिताः ॥ १५२ ॥

उद्दीपनविभावास्तु पूतिगन्धादयो मताः ।
अत्रानुभावना सा स्यात्कूणना वेगपूर्विका ॥ १५३ ॥

ऊह्यास्तत्र यथायोगं सात्त्विकाः पुलकादयः ।
सञ्चारिणो यथायोगं निर्वेदोद्वेजनादयः ॥ १५४ ॥

[विस्मयस्याद्भुतरसत्वं, तदीयालम्बनविभावादिस्वरूपाणि च]

विस्मयस्तु विभावाद्यैः पुष्टः स्यादद्भुतो रसः ।
अलौकिकचमत्कारि वस्त्वालम्बनमिष्यते ॥ १५५ ॥

अनुभावा नेत्रवक्त्रगण्डविस्फुरणादयः ।
सात्त्विकाः स्वेदरोमाञ्चप्रमुखाः परिकीर्तिताः ॥ १५६ ॥

हर्षवेगादयो भावाश्चात्र सञ्चारिणो मताः ।

[शमस्य शान्तरसत्वे, तदीयालम्बनविभावादिस्वरूपाणि च]

शम एव विभावाद्यैः पुष्टः शान्तरसो भवेत् ॥ १५७ ॥

आलम्बनविभावः स्याच्छम्भोस्तच्छाश्वतं पदम् ।
उद्दीपनास्तु वेदान्तवाक्यसंश्रवणादयः ॥ १५८ ॥

अनुभावास्तु कथ्यन्ते समतादर्शनादयः ।
सात्त्विकाः स्तम्भरोमाञ्चप्रमुखाः परिकीर्तिताः ॥ १५९ ॥

सञ्चारिणोऽपि निर्वेदमतिधृत्यादयो मताः ।

---

[1] वेग—ग.

[शृङ्गारादिरसानां वर्णा देवताश्च]

शृङ्गार उत्पलाभः स्याद्विष्णुस्तस्याधिदेवता ॥ १६० ॥

हास्यः सुधांशुभ्रवर्णो हेरम्बोऽस्याधिदेवता ।
कपोतवर्णः करुणो यमस्तस्याधिदेवता ॥ १६१ ॥

रौद्रो जपारक्तवर्णो रुद्रस्तस्याधिदेवता ।
वीरो रसो गौरवर्णः शक्रस्तस्याधिदेवता ॥ १६२ ॥

धूम्रो भयानकस्तस्य महाकालोऽधिदेवता ।
बीभत्सो नीलमेघाभो नन्दी तस्याधिदेवता ॥ १६३ ॥

अद्भुतः कनकच्छायो ब्रह्मा तस्याधिदेवता ।
शान्तः स्फटिकवर्णः स्याच्छम्भुस्तस्याधिदेवता ॥ १६४ ॥

[हास्यकरुणाद्भुतभयानकरसानां क्रमात् शृङ्गाररौद्रवीरबीभत्सविकृतत्वम्]

हास्यः शृङ्गारसम्भूतः करुणो रौद्रसम्भवः ।
वीराद‍्भुत उत्पन्नो बीभत्सोत्थो भयानकः ॥ १६५ ॥

[मिथो विरोधिनो रसाः]

शृङ्गारबीभत्सरसौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥ १६६ ॥

[शान्तरसस्य सर्वरसोत्कर्षः, सर्वरसविरोधिता, रसभावविवरणोपसंहारश्च]

शान्तः सर्वरसोत्कृष्टस्तस्य सर्वविरोधिता ।
इत्थं रसानां प्रत्येकं विभावाद्य ईरिताः ॥ १६७ ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले साहित्यशास्त्रे काव्यलक्षणादिरसान्तवर्णनं
नाम तृतीयस्तरङ्गः

---

## सप्तमकल्लोले चतुर्थस्तरङ्गः

### नायिकानायकगुणरीतिवृत्तिशय्यागुणदोषनिरूपणम्

[कुमारस्य नायकभेदादिप्रश्नः, राज्ञस्तदुत्तरकथनप्रतिज्ञा च]

एवं वर्णगणच्छन्दःकाव्यशब्दार्थतद्रसाः ।
क्रमशो भगवन्! प्रोक्ताः सञ्जाता हृदयङ्गमाः ॥ १ ॥

अधुना भगवन्! ब्रूहि नेतृभेदांश्च तद्गुणान् ।
नायकानां विभेदांश्च गुणानपि तदाश्रितान् ॥ २ ॥

रीतिं वृत्तिं च काव्यस्य गुणान् दोषानपि क्रमात् ।
कुमार! भवतः प्रश्नस्तनोति मुदितं मनः ॥ ३ ॥

यस्य श्रवणमिष्टं ते तद्ब्रवीमि पुनः शृणु ।

[नायकसामान्यगुणाः]

कुलीनो धार्मिकः शूरः कृतज्ञो रूपवान् युवा ॥ ४ ॥
[1]तेजस्व्यैश्वर्यगाम्भीर्यदक्षतौदार्यसंश्रयः ।
प्राज्ञस्त्यागी महाभागो नायकः परिकीर्तितः ॥ ५ ॥

[नायकचातुर्विध्यं, तन्नामानि च]

एवंविधगुणोपेतो नायकः स चतुर्विधः ।
द्वौ धीरोदात्तललितौ धीरशान्तोद्धतावपि ॥ ६ ॥

[धीरोदात्तादीनां लक्षणानि]

क्षमावानतिगम्भीरो महासत्त्वोऽविकत्थनः ।
कृपालुरनहङ्कारो धीरोदात्तः प्रकीर्तितः ॥ ७ ॥

सचिवायत्तसिद्धिः स्यान्निश्चिन्तो भोगतत्परः ।
सुखी मृदुः कलासक्तः स धीरललितो मतः ॥ ८ ॥

---

[1] तेजस्वी संश्रयं—मु.

शुचिर्विवेकी सुभगः सुप्रसन्नः सुखी मृदुः ।
द्विजाधिको धीरशान्तो विलासी रसिको मतः ॥ ९ ॥

मायामात्सर्यवान् धृष्टश्चण्डश्चलमानसः ।
विकत्थनो वञ्चकोऽहङ्कारी धीरोद्धतो मतः ॥ १० ॥

[धीरोदात्तादीनामवस्थाभिः सर्वरससम्बन्धः]

नायकत्वमवस्थाभिरेषां सर्वरसेष्वपि ।

[शृङ्गारे प्रत्येकं चातुरात्म्यं, तन्नामानि च]

प्रत्येकमेषां शृङ्गारेऽवस्थाभिश्चतुरात्मता ॥ ११ ॥
दक्षिणश्च शठो धृष्टोऽनुकूलश्चेति [1]कीर्तिताः ।

[दक्षिणादीनां लक्षणानि, आहत्योदात्तादिनायकभेदाः, तत्सङ्ख्या च]

एकस्यां सक्तचित्तोऽपि कान्तास्वन्यासु यः समः ॥ १२ ॥
वर्तते गूढरागः सन् प्रोक्तोऽसौ दक्षिणो बुधैः ।
गूढविप्रियकारी तु शठ इत्यभिधीयते ॥ १३ ॥
व्यक्तान्यासङ्गचिह्नः स्याद्धृष्टो वितथवाङ्मतः ।
अनुकूलस्त्वेकरसोऽन्यासंसक्तधीर्यतः ॥ १४ ॥
इत्युदात्तादिनेतॄणां भेदाः षोडश कीर्तिताः ।

[उदात्तादीनामेव पूर्णगुणहानिक्रमतः श्रेष्ठादित्रैविध्यम्]

श्रेष्ठमध्याधमत्वेन तेषामेव त्रिरूपता ॥ १५ ॥
उक्तसर्वगुणोपेतः श्रेष्ठ इत्यभिधीयते ।
द्वित्रैर्वा पञ्चषैर्वापि गुणैर्हीनः स मध्यमः ॥ १६ ॥
हीनो गुणैश्च बहुभिरधमः परिकीर्तितः ।

---

[1] भेदतः—मु.

[पीठमर्दादयश्चत्वारः कामसचिवाः]

एतेषां कामसचिवाः पीठमर्दो विटस्तथा ॥ १७ ॥
विदूषकश्चेट इति चत्वारः परिकीर्तिताः ।

[पीठमर्दादीनां लक्षणानि]

पीठमध्यास्य सुरतप्रयोक्ता नायकादिषु ॥ १८ ॥

पीठमर्दः स [1]विश्वास्यः कुपितस्त्रीप्रसादकः ।
नैकविद्यो विटस्तत्र कामतन्त्रेषु बुद्धिमान् ॥ १९ ॥

कामशास्त्ररहस्यानामुपदेष्टा विटः स्मृतः ।
[2]विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ॥ २० ॥

चेटः सन्धानकुशलः कान्ताकामुकयोः [3]सदा ।

[पुंसां यौवनसत्त्वजाः शोभाद्यो गुणास्तेषां संख्या च]

यौवने सत्त्वजाः पुंसामष्टौ शोभादयो [4]गुणाः ॥ २१ ॥

शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।
ललितौदार्यमित्यष्टौ तेषां लक्ष्माभिधीयते ॥ २२ ॥

[शोभादीनां लक्षणानि]

नीचे [5]गुणाधिकैः स्पर्धा शोभायां शौर्यदक्षते ।
गतिः सधैर्या दृष्टिश्च विलासे सस्मितं वचः ॥ २३ ॥

स्वराविकारो माधुर्यं संक्षोभे सुमहत्यपि ।
गाम्भीर्यं यत्प्रभावेन विकारो नोपलक्ष्यते ॥ २४ ॥

व्यवसायादचलनं स्थैर्यं विघ्नशतेष्वपि ।
अधिक्षेपाद्यसहनं तेजः [6]प्राणात्ययेष्वपि ॥ २५ ॥

---

[1] विज्ञेयः–मु. [2] विकृताङ्गतया वेषै–मु. [3] तथा–मु. [4] मताः–मु.
[5] घृणादिकैः–बा. [6] प्राणान्तिकेष्वपि–मु.

शृङ्गाराकारचेष्टत्वं सहजं ललितं विदुः ।
प्रियोक्त्या जीवितस्यापि दानमौदार्यमिष्यते ॥ २६ ॥

[ नायिकाभेदास्तदवान्तरभेदाश्च ]

स्वान्या साधारणी चेति तद्गुणा नायिका त्रिधा ।
स्वीया शीलार्जवयुता लज्जायुक्ता सती मता ॥ २७ ॥

अन्यान्योढा कन्यका च द्वितीया द्विविधा मता ।
साधारणी स्याद्गणिका कलाप्रागल्भ्यधैर्ययुक् ॥ २८ ॥

[ प्रकारान्तरेण मुग्धादिनायिकात्रैविध्यं, तासां लक्षणानि च ]

मुग्धा मध्या प्रगल्भेति त्रिविधास्ताः प्रकीर्तिताः ।
मुग्धा नववयःकान्ता सुरते [1]वाम्यकारिणी ॥ २९ ॥

मध्योदितवयःकामा मोहान्तसुरतक्षमा ।
अन्यारूढवयःकामा प्रगल्भा प्रियवक्षसि ॥ ३० ॥

विलीयमानेव रतारम्भेऽप्यस्ववशा मता ।

[ धीरादिभेदेन मध्यायास्त्रैविध्यं, तत्स्वरूपं च ]

मध्या च त्रिविधा धीराधीरा धीरेतरेति च ॥ ३१ ॥

धीरा सोत्प्रासवक्रोक्त्या सागसं वेदयेत्पतिम् ।
साश्रु सोत्प्रासवक्रोक्त्या धीराधीरा वदेत् [2]प्रियम् ॥ ३२ ॥

साश्रुनिष्ठुरभाषाभिरधीरा वेदयेत्पतिम् ।

[धीरादिभेदेन प्रगल्भायास्त्रैविध्यं, तत्स्वरूपं च]

प्रगल्भापि त्रिधा धीराधीरा धीरेतरेति च ॥ ३३ ॥

सावहित्थादरोदास्ते सुरते विहितागसम् ।
प्रगल्भधीरा दयितं [3]खेदयेत्कुपिता स्वयम् ॥ ३४ ॥

---

[1] वाम्यकर्मिणि—श. [2] पतिम्—मु. [3] भेदये—मु.

प्रगल्भधीराधीरा तु वक्रसोल्लासवाग्गुना ।
अपि प्रगल्भाधीरा संतर्ज्य संताडयेत्पतिम् ॥ ३५ ॥

[ मध्याप्रगल्भयोः ज्येष्ठादिभेदेन षड्विधत्वम् ]

ज्येष्ठाकनिष्ठाभेदेन पुनर्मध्या तु षड्विधा ।
प्रगल्भापि पुनस्ताभ्यां भेदाभ्यां षड्विधा मता ॥ ३६ ॥

[नायीकानां स्वाधीनपतिकत्वादयोऽष्टावस्थाः, तल्लक्षणानि च]

[1] आसामष्टाववस्थाः स्युः स्वाधीनपतिकादिकाः ।
स्वाधीनपतिका [2] चैव तथा वासकसज्जिका ॥ ३७ ॥

कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
विरहोत्कण्ठिता चैव खण्डिता चाभिसारिका ॥ ३८ ॥

आसन्नो यत्र रमणः स्वाधीनपतिका तु सा ।
प्रियागमनवेलायां मण्डयन्ती मुहुर्मुहुः ॥ ३९ ॥

केलीगृहं तथाऽऽत्मानं सा स्याद्वासकसज्जिका ।
विधूय दयितं चार्ता कलहान्तरिता मता ॥ ४० ॥

क्वचित्सङ्केतकं [3] कृत्वा प्रेष्य दूतीं मुहुर्मुहुः ।
यां विप्रलभते प्रेयान्विप्रलब्धेति तां विदुः ॥ ४१ ॥

देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका ।
चिरयत्यधिकं कान्ते विरहोत्कण्ठिता मता ॥ ४२ ॥

ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्या कषायिता ।
याऽभिसारयते कान्तं स्वतः सा त्वभिसारिका ॥ ४३ ॥

[यौवनान्वयिनः स्त्रीणां सत्वजाः भावाद्यलङ्काराः, स्वाभाविकशृङ्गारचेष्टाश्च]

यौवने सत्त्वजाः स्त्रीणामलङ्कारास्तु विंशतिः ।
भावो हावश्च हेला च त्रयोऽप्यङ्गसमुद्भवाः ॥ ४४ ॥

---

[1] त्वासा–मु. [2] चावा–मु. [3] भुत्वा–मु.

शोभा कान्तिस्तथा दीप्तिर्माधुर्यं च प्रगल्भता।
औदार्यं धैर्यमित्येताः सप्तालङ्कृतयो मताः॥ ४५॥

लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम्।
मोट्टायितं कुट्टमितं विब्बोको ललितं तथा॥ ४६॥

विहृतं चेति विंशत्याः स्त्रीणां स्वाभाविका दश।

[सत्त्वविवरणं, तद्विक्रियाया अलङ्काररूपता च]

निर्विकारो मनोवृत्तिविशेषः सत्त्वमुच्यते॥ ४७॥

तस्याथ विक्रियाभावो भाव्यलङ्कारकल्पितः।

[भावाद्यलङ्कारस्वरूपाणि, तेषां नायकसाधारण्यं च]

भावो मानसशृङ्गारो हावोऽक्षिभ्रूादि[1]विक्रिया॥ ४८॥

स एव हेला सुव्यक्तः शृङ्गारद्योतको भवेत्।
रूपोपभोगतारुण्यैः शोभाङ्गालङ्कृतिर्भवेत्॥ ४९॥

शोभैव रागनिबिडा कान्तिरित्यभिधीयते।
कान्तेरेव हि विस्तारो दीप्तिरित्युच्यते बुधैः॥ ५०॥

अश्लाघ्यवस्तुयोगेऽपि माधुर्यं रम्यता[2]स्मृता।
व्रीडोत्थ[3]साध्वसत्यागः प्रागल्भ्यमिति गीयते॥ ५१॥

औदार्यं प्रश्रयोत्कर्षो वशायामेऽपि सम्मतः।
अचापलयुता चित्तवृत्तिर्धैर्यं निरूप्यते॥ ५२॥

प्रियानुकरणं लीला मधुरैरङ्गचेष्टितैः।
प्रिये दृष्टे विलासोऽङ्गक्रियाद्यतिशयो भवेत्॥ ५३॥

विच्छित्तिर्भूषणैरल्पैरङ्गानां तु प्रसाधनम्।
विभ्रमस्त्वरया काले भूषास्थानविपर्ययः॥ ५४॥

---

[1] वक्त्रा—मु. [2] भुवा—मु. [3] साहस—मु.

क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलिकिञ्चितम् ।
चित्रादावपि तत्त्वेन बुद्धिर्मोट्टायितं मतम् ॥ ५५ ॥

केशाधरादिग्रहणे मोदमानापि मानसे ।
दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं मतम् ॥ ५६ ॥

गर्वाभिमानावेशेन बिब्बोकोऽनादरो मतः ।
सुकुमाराङ्गविन्यासो रुचिरो ललितं मतम् ॥ ५७ ॥

वक्तव्यमपि यन्नोक्तं व्रीडया विहृतं तु तत् ।
इत्यलङ्कृतयः प्रोक्ता नायकेष्वपि सन्ति हि ॥ ५८ ॥

[रीतेः काव्यात्मत्वं, तस्या वैदर्भ्यादिभेदेन षड्विधत्वं च]

रीतिरात्मात्र काव्यस्य कथ्यते सा तु षड्विधा ।
वैदर्भी चाथ पाञ्चाली गौडीयावन्तिका तथा ॥ ५९ ॥

लाटीया मागधी चेति रीतिः षोढा निगद्यते* ।

[श्लेषादयो दश रीतिगुणाः]

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ॥ ६० ॥

अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ।

[श्लेषादीनां लक्षणं, वैदर्भ्या एतत्समग्रगुणवत्त्वं च]

अल्पप्राणाक्षरैः श्लेषः पदैरशिथिलैर्मतः ॥ ६१ ॥

---

* प्रतापरुद्रीये वैदर्भी गौडी पाञ्चाली चेति रीतेस्त्रैविध्यमुक्त्वा पाञ्चाल्या वैदर्भीगौडीरीत्युभयात्मकत्वमुपपाद्य रीतिरुपसंहृता । काव्यालङ्कारसूत्रेऽपि रीतिरात्मा काव्यस्येत्युक्त्वा सा त्रेधा वैदर्भी गौडीया पाञ्चाली चेति रीतेस्त्रैविध्यमुक्तम् । सरस्वतीकण्ठाभरणे तु आवन्तिकालाटीयामागधीविभागसंयोजनेन रीतेः षाड्विध्यमूरीकृतम् । तदेवात्र संगृहीतमिति प्रतिभाति ।

पदैः प्रसन्नो यत्रार्थः प्रसादोऽसौ निगद्यते ।
प्रक्रान्तबन्धो यत्र स्यात्समन्तात्समता मता ॥ ६२ ॥

सरसौ यत्र शब्दार्थौ माधुर्यं श्रुतिमोदकृत् ।
अनिष्ठुरैः श्रुतिसुखैर्वर्णैः स्यात्सुकुमारता ॥ ६३ ॥

अर्थव्यक्तिरनेयार्थः साक्षाद्यत्रा भिधीयते ।
शब्दार्थयोर्गुणोत्कर्षो यत्र सा स्यादुदारता ॥ ६४ ॥

वाक्ये समासबाहुल्यं ह्यमोजो निगद्यते ।
कमनीयोऽलौकिकोऽपि यत्रार्थः कान्तिरुच्यते ॥ ६५ ॥

समाधिरन्यधर्माणामध्यासादर्थगौरवम् ।
एतैः समग्रा वैदर्भी वर्ण्यते दशभिर्गुणैः ॥ ६६ ॥

[गौडीरीतिगुणाः]

असमस्तां द्वित्रिपदां समस्तां वा मनोहराम् ।
अल्पप्राणाक्षरप्रायपदबन्धसमन्विताम् ॥ ६७ ॥

समस्तात्युद्भटपदामोजःकान्तिसमन्विताम् ।
महाप्राणाक्षरवर्ती गौडीमाहुर्विपश्चितः ॥ ६८ ॥

माधुर्यसौकुमार्यौजःकान्तिभिः सहिता गुणैः ।

[पाञ्चालीरीतिगुणाः]

समस्तपञ्चषपदा पाञ्चाली परिकीर्तिता ॥ ६९ ॥

[लाटीरीतिस्वरूपम्]

समस्तरीतिसंमिश्रा लाटी मृदुसमासिनी ।

[आवन्तीरीतिस्वरूपम्]

प्रयुक्तवर्णभूयिष्ठा स्वल्पघोषाक्षरैर्युता ॥ ७० ॥

अन्तराले तु वैदर्भीपाञ्चाल्योर्यावतिष्ठते ।
साऽवन्तिका समस्तैः स्याद्द्वित्रिचतुरैः पदैः ॥ ७१ ॥

[मागधीरीतिस्वरूपम्]

लाटी[1]रीतिप्रतिद्वन्द्वरीतियुक्ता तु मागधी ।

[माधुर्यशालिनो रसाः]

शृङ्गारहास्यकरुणशान्ता माधुर्यशालिनः ॥ ७२ ॥

[ओजोयुक्ता रसाः]

वीररौद्राद्भुतभयबीभत्सेष्वोज उच्यते ।

[प्रसादस्य सर्वरसाश्रितत्वम्]

रसेष्वेतेषु सर्वेषु प्रसादः परिकीर्तितः ॥ ७३ ॥

[वृत्तेः स्वरूपं, तत्प्रभेदसंख्या च]

विकासे चाथ संक्षेपे या शब्दानां परस्परम् ।
चेतसो वर्तयित्री [2]स्यात्सा [3]वृत्तिः सा च षड्विधा ॥ ७४ ॥

[कैशिक्यादिवृत्तिप्रभेदाः]

कैशिक्यारभटी चैव सात्वती भारती तथा ।
मध्यमारभटी चैव तथा मध्यमकैशिकी ॥ ७५ ॥

[कैशिक्यादीनां लक्षणम्]

अत्यन्तसुकुमारार्थसन्दर्भा कैशिकी मता ।
अतिप्रौढार्थसन्दर्भा वृत्तिरारभटी मता ॥ ७६ ॥

ईषत्प्रौढार्थसन्दर्भा सात्वती वृत्तिरिष्यते ।
ईषन्मृद्वर्थसन्दर्भा भारती वृत्तिरिष्यते ॥ ७७ ॥

[शृङ्गारकरुणयोरत्यन्तसुकुमारत्वम्]

अत्यन्तसुकुमारौ द्वौ शृङ्गारकरुणौ मतौ ।

---

[1] रीतेः प्रति-मु. [2] च भा-मु. [3] वृत्तिरत्र-मु.

[ रौद्रबीभत्सयोरत्युद्धतरसत्वम् ]

अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्तितौ ॥ ७८ ॥

[ वीरभयानकयोरीषत्प्रौढत्वम् ]

ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ ।

[ हास्यशान्ताद्भुतानामीषत्सुकुमारत्वम् ]

हास्यशान्ताद्भुताः किञ्चित्सुकुमाराः प्रकीर्तिताः ॥ ७९ ॥

[ मध्यमारभटीमध्यमकैशिक्योः तीव्ररससाधारणत्वम् ]

मध्यमाऽऽरभटी त्वन्या तथा मध्यमकैशिकी ।
वृत्ती इमे उभे [1]तीव्ररससाधारणे मते ॥ ८० ॥

[ मध्यमकैशिकीमध्यमारभट्योः स्वरूपम् ]

मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी ।
मध्यमारभटी प्रौढेऽप्यर्थे नातिमृदुक्रमा ॥ ८१ ॥

[ शय्यालक्षणम् ]

या पदानां परान्योन्यमैत्री शय्येति कथ्यते ।

[ पाकलक्षणं, नाम्ना तद्विभागस्तद्विवरणं च ]

अर्थगम्भीरिमा पाकः स द्विधा हृदयङ्गमः ॥ ८२ ॥
द्राक्षापाको नालिकेरपाकश्च प्रस्फुटान्तरौ ।
द्राक्षापाकस्तु कथितो बहिरन्तःस्फुरद्रसः ॥ ८३ ॥
स [2]नालिकेरपाकः स्यादन्तर्गूढरसोदयः ।

[ काव्यगतपददोषाणां नाम्ना निर्देशः ]

अथ दोषाः प्रकीर्त्यन्ते पदानां प्रथमं क्रमात् ॥ ८४ ॥

---

[1] सर्वसाधा-मु. [2] नारिके-मु.

श्रुतिकट्वसमर्थं च च्युतसंस्कृत्यवाचकम् ।
निरर्थकं चाप्रयुक्तमश्लीलं ग्राम्यमेव च ॥ ८५ ॥

नेयार्थानुचितार्थौ च सन्दिग्धं क्लिष्टमेव च ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्तथा ॥ ८६ ॥

[काव्यदोषाः, तेषां लक्षणानि च]

[1] अप्रतीतमथैतेषां क्रमाल्लक्षणमुच्यते ।
परुषाक्षरविन्यासं श्रुतिकट्विति कीर्त्यते ॥ ८७ ॥

असमर्थमभिप्रेतं यद्वक्तुं न क्षमं भवेत् ।
शास्त्रोक्तलक्षणापेतं च्युतसंस्कृति कथ्यते ॥ ८८ ॥

अवाचकं न यत्रार्थे प्रयुक्तं वक्ति तन्मतम् ।
निरर्थकं भवेत्पादपूरणैकप्रयोजनम् ॥ ८९ ॥

आम्नातमप्यप्रयुक्तं कविभिर्नादृतं तु यत् ।
येनासभ्यः पदेनार्थो द्योत्यतेऽश्लीलमीरितम् ॥ ९० ॥

ग्रामीणयोग्यं ग्राम्यं स्यान्निन्द्यं नागरिकादिभिः ।
नेयार्थं यदसम्बन्धान्मूलार्थाद्योतकं भवेत् ॥ ९१ ॥

तदेवानुचितार्थं स्याद्यस्यार्थोऽनुचितो भवेत् ।
विवक्षितार्थादन्यच्च सन्दिग्धं द्योतयेच्च तत् ॥ ९२ ॥

[3] क्लिष्टं व्यवहितार्थस्य द्योतकं [2] यत्पदं भवेत् ।
अविमृष्टविधेयांशं प्रधानं यत्र भासते ॥ ९३ ॥

इष्टान्यदुष्टधीकारि विरुद्धमतिकृद्भवेत् ।
शास्त्रमात्रप्रयुक्तं यदप्रतीतं निगद्यते ॥ ९४ ॥

दोषात्र पदैकदेशेषु यथायोग्यं विलोकयेत् ।

[नामतो वाक्यदोषनिर्देशः, तेषां संख्या च]

शब्दहीनं [4] क्रमभ्रष्टं विसन्धि पुनरुक्तिमत् ॥ ९५ ॥

---

[1] प्रतिपित्क–मु. पा. [2] क्लिष्टं–मु. [3] क्लरं–मु. [4] क्रमाभ्रष्टं–मु.

व्याकीर्णं वाक्यसङ्कीर्णमपूर्णं वाक्यगर्भितम् ।
द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे ॥ ९६ ॥

भग्नच्छन्दो यतिभ्रष्टमशरीरमरीतिमत् ।
विसर्गलुप्तमस्थानसमासं वाच्यवर्जितम् ॥ ९७ ॥

समाप्तपुनरात्तं च तथा सम्बन्धवर्जितम् ।
पतत्प्रकर्षमधिकपदं प्रक्रमभङ्गवत् ॥ ९८ ॥

*पञ्चविंशतिरुच्यन्ते दोषा वाक्यसमाश्रिताः ।

[वाक्यदोषाणां लक्षणानि]

शब्दशास्त्रविरुद्धं यच्छब्दहीनं प्रकीर्तितम् ॥ ९९ ॥

क्रमभ्रष्टं भवेदर्थः शब्दो वा यत्र [2]विक्रमः ।
[3]विसंहितो विरूपो वा यत्र सन्धिर्विसन्धि तत् ॥ १०० ॥

शब्दार्थयोः पौनरुक्त्ये तद्वाक्यं पुनरुक्तमत् ।
व्याकीर्णं तद्विभक्तीनां व्याकीर्णं च मिथोऽन्वये ॥ १०१ ॥

वाक्यान्तरपदैः कीर्णं वाक्यसङ्कीर्णमुच्यते ।
अपूर्णं तद्भवेद्यत्र न सम्पूर्णः क्रियान्वयः ॥ १०२ ॥

तद्वाक्यगर्भितं यस्य मध्ये वाक्यान्तरं भवेत् ।
यत्रोपमा भवेद्भिन्नवचना भिन्नलिङ्गका ॥ १०३ ॥

तद्भिन्नवचनं भिन्नलिङ्गं चाहुर्मनीषिणः ।
यत्रोपमानमधिकं न्यूनं वा स्याद्विशेषणैः ॥ १०४ ॥

तत्राधिकोपमं पूर्वं न्यूनोपममतः परम् ।
छन्दो भग्नं यत्र वाक्यं तद्भग्नच्छन्द उच्यते ॥ १०५ ॥

---

*अत्र मुद्रितकोशे पञ्चविंशतिरिति पाठो दृश्यते। दोषोद्देशे तद्विवरणेषु च चतुर्विंशतेरेवोपलब्ध्या पञ्चविंशत्युक्तिश्चिन्त्या. [1] मार्दं–मु. पा. [2] न क्रमः–ग. [3] विसन्धितो–मु.

यतिस्थाने यतिभ्रंशे तद्यतिभ्रष्टमुच्यते ।
क्रियापदेन रहितमशरीरं तदुच्यते ॥ १०६ ॥

रसाननुगुणा रीतिर्यत्रारीति तदुच्यते ।
[1] ओत्वं लोपो विसर्गस्य स्यात्तल्लुप्तविसर्गकम् ॥ १०७ ॥

[2] अपदस्थसमासं तत्समासो यत्र नोचितः ।
नोक्तं स्याद्यत्र वक्तव्यं तदाहुर्वाच्यवर्जितम् ॥ १०८ ॥

समाप्य पुनरादाने समाप्तपुनरात्तकम् ।
पतत्प्रकर्षं तत्प्राहुः प्रकर्षो यत्र विश्लथः ॥ १०९ ॥

सम्बन्धवर्जितं तत् स्याद्यत्रेष्टेनान्वयो हतः ।
यत्राधिकपदोक्तिः स्यात्तच्चाधिकपदं मतम् ॥ ११० ॥
प्रक्रान्तनियमत्यागे भग्नप्रक्रममिष्यते ।

[अर्थदोषाणां नाम्ना उद्देशः, तत्संख्या च]

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ॥ १११ ॥

भिन्नं चैवातिमात्रं च परुषं विरसं तथा ।
हीनाधिकोपमे स्यातामसदृशोपमं ततः ॥ ११२ ॥

अप्रसिद्धोपमं हेतुशून्यं च निरलङ्कृति ।
अश्लीलं च विरुद्धं च तथा सहचरच्युतम् ॥ ११३ ॥
एवमष्टादश प्रोक्ता दोषा अर्थसमाश्रयाः ।

[अर्थदोषाणां लक्षणानि]

समुदायार्थशून्यं तदपार्थं परिकीर्तितम् ॥ ११४ ॥

यत्प्रयोजनशून्यं स्यात्तद्व्यर्थं परिकीर्तितम् ।
उक्ताभिन्नार्थकं यत्स्यादेकार्थं तं प्रगद्यते ॥ ११५ ॥

---

[1] 'आत्वलोपौ विसर्गस्यामङ्गलुप्तविसर्गकम्' इति प्रतापरुद्रीये. [2] अस्थानसमासमित्युद्देशे पठितम्. [3] र्थमित्यादिः—मु.

यत्र चार्थस्य सन्देहस्तत्सन्दिग्धार्थमुच्यते ।
यत्र पूर्वापरीभावव्यत्ययस्तदपक्रमम् ॥ ११६ ॥

सम्बन्धवर्जितं यस्या[1]च्छिन्नं परिकीर्तितम् ।
यत्सर्वलोकातीतं तदतिमात्रं प्रकीर्तितम् ॥ ११७ ॥

अतिक्रूरार्थसहितं परुषं परिकीर्तितम् ।
अप्रस्तुतरसं यच्च विरसं तत्प्रकीर्तितम् ॥ ११८ ॥

हीनं यत्रोपमानं स्यात् तद्धीनोपममीरितम् ।
यत्रोपमानमधिकं तद्भवेदधिकोपमम् ॥ ११९ ॥

यदतुल्योपमानं तद्भवेदसदृशोपमम् ।
अप्रसिद्धोपमानं यत्तदसिद्धोपमं मतम् * ॥ १२० ॥

अलङ्कारेण रहितं निरलङ्कारमुच्यते ॥ १२१ ॥

अश्लीलार्थस्य कथनमश्लीलं परिकीर्तितम् ।
विरुद्धं देशकालाभ्यां तद्विरुद्धमितीरितम् ॥ १२२ ॥

मतं सहचरभ्रष्टमतुल्यानां निबन्धने ।
इति दोषाः समुद्दिष्टाः पदवाक्यार्थगोचराः ॥ १२३ ॥

[दोषाणां काव्यविशेषेष्वदुष्टता]

उदाहरणकाव्येषु न दुष्टं श्रुतिकट्वपि ।
प्रहेलिकाद्यर्थबन्धैकाक्षरद्व्यक्षरादिषु ॥ १२४ ॥

क्लिष्टासमर्थनेयार्थावाचकाद्या न दूषिताः ।
निरर्थकमदुष्टं स्याद्वाक्ये छान्दसभाषिते ॥ १२५ ॥

---

* एतदनन्तरं अर्थदोषनिर्देशोक्तरीत्या हेतुशून्यत्वविवरणपरः पद्यभाग आवश्यकः। स चैतन्मातृकासु नोपलभ्यते। स च श्रीविद्यानाथेन प्रतापरुद्रीये दोषप्रकरणे इत्थं लिखित उपदृश्यते—"हेतुशून्यार्थकथने हेतुशून्यं प्रकीर्त्यते" इति। स चात्रानुसन्धेयः।

[1] च्छिन्नं प्रकीर्तितम्—मु.

व्रीडाश्लीलमपि ग्राह्यं कामतन्त्रे न दूषितम् ।
जुगुप्साश्लीलमप्यत्र विरक्तोक्तौ न दूषणम् ॥ १२६ ॥

सन्दिग्धमप्रतीतं च वक्तृभेदे न दूषितम् ।
विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे ॥ १२७ ॥

प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ।

[रसदोषाः, नायकादिनिरूपणोपसंहारश्च]

अभासो रसभावानां स्वशब्दग्रहणं ततः ॥ १२८ ॥

क्लिष्टकल्पनमप्यास्तरनुभावविभावयोः ।
प्रतिकूलविभावादिग्रहोऽङ्गस्यातिविस्मृतिः ॥ १२९ ॥

अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसदोषाः स्युरीदृशाः ॥ १३० ॥

इति साहित्यविषयाः केचिदर्थाः प्रकीर्तिताः ॥ १३१ ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले साहित्यशास्त्रे नायिकानायकगुणरीति-
वृत्तिशय्यागुणदोषनिरूपणं नाम चतुर्थस्तरङ्गः

---

## सप्तमकल्लोले पञ्चमस्तरङ्गः

### अलङ्कारनिरूपणम्

[कुमारस्य साहित्यशास्त्रीयालङ्कारप्रश्नः, भूपतेस्तदुत्तरकथनप्रतिज्ञा च]

स्वामिन् ! साहित्यशास्त्रोक्तान्पदार्थान् प्रतिपादितान् ।
श्रुत्वाऽभवं प्रमुदितः श्रोत्रानन्दविधायिनः ॥ १ ॥

अथान्यच्छ्रोतुमिच्छामि श्रीमत्संसूचितं पुरा ।
अलङ्काराभिधं शास्त्रं विचित्रार्थसमाश्रितम् ॥ २ ॥

पुत्र ! यद्भवता पृष्टमिदं साहित्यकाङ्क्षिणः ।
तद्वर्णयामि भवते समाकर्णय सम्प्रति ॥ ३ ॥

[ध्वन्यादिभेदेन काव्यत्रैविध्यम्]

काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा ।

[ध्वनिकाव्यलक्षणम्]

वाच्याभिधाविनाभावानपेक्षाप्रतिपत्तिमान् ॥ ४ ॥
इन्द्रियाविषयो योऽर्थो ध्वनिरित्यभिधीयते ।

[उपाधिभिरनेके ध्वनिभेदाः]

अविवक्षाविवक्षाभ्यां पदवाक्याश्रयादितः ॥ ५ ॥
स चानेकविधः प्रोक्तो लक्षणाशक्तिमूलकः ।

[गुणीभूतव्यङ्ग्यलक्षणम्]

व्यङ्ग्यं यत्र च वाच्यार्थानतिशायि प्रतीयते ॥ ६ ॥
तदेव हि गुणीभूतव्यङ्ग्यमित्यभिधीयते ।

[चित्रकाव्यस्वरूपं, तत्प्रभेदश्च]

व्यङ्ग्याप्रतीतावधमं चित्रकाव्यमितीर्यते ॥ ७ ॥
तच्चित्रं द्विविधं प्रोक्तं शब्दार्थाश्रयभेदतः ।

[अलङ्काराणां अङ्गेषु हारादिवत् काव्येपूपयोगः]

उपकुर्वन्ति सततं येऽङ्गद्वारेण संश्रिताः ॥ ८ ॥
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ।

[छेकानुप्रासलक्षणम्]

भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः ॥ ९ ॥

आवृत्तिर्यत्र स बुधैश्छेकानुप्रास इष्यते ।

[वृत्त्यनुप्रासलक्षणम्]

एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत् ॥ १० ॥

पुनरुक्तिरसौ नाम्ना वृत्त्यनुप्रास इष्यते ।

[यमकलक्षणम्]

यमकं पौनरुक्त्ये तु स्वरव्यञ्जनयुग्मयोः ॥ ११ ॥

आदिमध्यान्तमध्याद्या मध्यादाद्यन्तसर्वशः ।

[पुनरुक्तवदाभासलक्षणम्]

यत्रार्थः प्रमुखे किञ्चिद्भासते पुनरुक्तवत् ॥ १२ ॥

पुनरुक्तवदाभासः सोऽलङ्कारः सतां मतः ।

[लाटानुप्रासलक्षणम्]

शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्यभेदवत् ॥ १३ ॥

स काव्यतात्पर्यविदां लाटानुप्रास इष्यते ।

[चित्रालङ्कारलक्षणं, तद्भेदाश्च]

पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ॥ १४ ॥

चित्रभेदा इमे चक्रं पद्मं काकपदं तथा ।
गोमूत्रं सर्वतोभद्रं गतप्रत्यागतं बहु ॥ १५ ॥

वर्धमानाक्षरं तद्वत् क्षीयमाणाक्षरं तथा ।
शृङ्खला नागपाशं च विचित्रं शुद्धमेव च ॥ १६ ॥

प्रहेलिका तथा ह्यर्थं पद्गादार्थगूढकम् ।
स्तुतिर्निन्दा तथा द्व्यर्थं सहायच्युतबिन्दुमत् ॥ १७ ॥

क्रियाकारकसम्बन्धगुप्तान्यामन्त्रितस्य च ।
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥ १८ ॥

मात्राबिन्दुविसर्गाणां च्युतकान्यक्षरस्य च ।
स्थानव्यञ्जनयोश्चापि च्युतदत्ताक्षरं तथा ॥ १९ ॥

एवमादीनि चित्राणि सन्त्यन्यान्यपि भूरिशः ।

[चक्रचित्रलक्षणम्]

चत्वार्यराणि पादाभ्यां नेमिं पादद्वयेन च ॥ २० ॥

लिखितं दक्षिणावर्तं चक्र[1]चित्रमवेहि तत् ।

[पद्मचित्रलक्षणम्]

वर्णद्वयद्वयैकैकदलभूत[2]दलाष्टकम् ॥ २१ ॥
सर्वोत्तराद्यवर्णेन पद्मं स्यात्कुतकर्णिकम् ।

[काकपदचित्रलक्षणम्]

काकस्येव पदं यस्मिन् यत्तत्काकपदं मतम् ॥ २२ ॥

[गोमूत्रचित्रलक्षणम्]

तिर्यगन्योन्यरेखाभिर्गोमूत्री द्विपदी द्वयोः ।

[सर्वतोभद्रचित्रलक्षणम्]

वर्णैनेकेन च द्वाभ्यां सर्वैर्वा सर्वदिग्गतैः ॥ २३ ॥
उच्चारैः सर्वतोभद्रं दुष्करं तदिदं भवेत् ।

---

[1] प्रथम–मु. [2] दशाष्टकम्–मु.

[गतागतचित्रलक्षणं, तस्यानेकप्रकारता च]

प्रतिलोमानुलोमाभ्यामुच्चरेण गतागतम् ॥ २४ ॥

मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ।

[वर्धमानाक्षरचित्रलक्षणम्]

आदौ मध्ये तथा चान्ते वर्धन्ते वर्णजातयः ॥ २५ ॥

एकद्वित्र्यादयो यत्र वर्धमानाक्षरं हि तत् ।

[शृङ्खलाबद्धचित्रलक्षणम्]

अन्योन्याक्षरवर्तिन्या चैकान्तरतयाथ वा ॥ २६ ॥

शृङ्खलाबन्ध इत्युक्तो ग्रन्थिमान्नागपाशकः ।

[क्रियागुप्तादिचित्रलक्षणम्]

क्रियादिकं स्थितं यत्र पद्मसन्धानकौशलात् ॥ २७ ॥

स्फुटं न लक्ष्यते यत्र क्रियागुप्तादिकं तु तत् ।

[मात्राच्युतकादिचित्रलक्षणं शब्दालङ्कृत्युपसंहारश्च]

अन्योऽप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि ॥ २८ ॥

प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम् ।
शब्दालङ्कृतयः काश्चिदुक्ता ऊह्यास्तथा पराः ॥ २९ ॥

[अर्थालङ्काराणां नाम्ना निर्देशस्तत्संख्या च]

अथार्थनिष्ठालङ्काराः कीर्त्यन्ते क्रमशो मया ।
उपमानन्वयस्तद्वदुपमेयोपमा स्मृतिः ॥ ३० ॥

रूपकं परिणामश्च सन्देहो भ्रान्त्यपह्नुती ।
उल्लेखश्च तथोत्प्रेक्षाऽतिशयोक्तिसहोक्तयः ॥ ३१ ॥

विनोक्तिश्च समासोक्तिरुक्तिर्वक्रस्वभावयोः ।
व्याजोक्तिर्मीलनं चैव सामान्यं तद्गुणस्तथा ॥ ३२ ॥

अतद्गुणो [1]विरोधश्चाप्यधिकं च विभावना ।
[2]विशेषोक्तिर्विचित्रं चाप्यन्योन्यं विषमं समम् ॥ ३३ ॥

तुल्ययोगो दीपकं च प्रतिवस्तूपमा तथा ।
निदर्शना च दृष्टान्तः श्लेषश्च व्यतिरेककः ॥ ३४ ॥

तथा परिकराक्षेपौ व्याजस्तुतिरतः परम् ।
अप्रस्तुतप्रशंसा च पर्यायोक्तं प्रतीपकम् ॥ ३५ ॥

अनुमाकाव्यलिङ्गार्थान्तरन्यासास्ततः परम् ।
यथासङ्ख्यं तथार्थापत्तिः परिसङ्ख्या तथोत्तरम् ॥ ३६ ॥

समुच्चयो विकल्पश्च समाधिर्भाविकं तथा ।
स्यात्प्रत्यनीकं व्याघातः पर्यायः सूक्ष्ममेव च ॥ ३७ ॥

उदात्तं परिवृत्तिः कारणमाला ततः परम् ।
एकावली ततश्चैव मालादीपकसारकौ ॥ ३८ ॥

संसृष्टिः सङ्करश्चेति *सप्तषष्टिरलङ्क्रियाः ।

[उपमाद्यलङ्कारलक्षणोक्तिप्रतिज्ञा]

उदीरितानामेतासां क्रमाल्लक्षणमुच्यते ॥ ३९ ॥

[उपमालक्षणं, उपमाप्रभेदाश्च]

स्वतः सिद्धेन भिन्नेन सम्मतेन च धर्मतः ।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकधोपमा ॥ ४० ॥

---

* अलङ्कारगणनायामाहत्य अष्टषष्टिरलङ्क्रियन्ते ।

[1] एतदनन्तरं लक्षणप्रदर्शितरीत्या विशेषालंकारनिर्देश आवश्यकः । [2] एतदनन्तरं लक्षणोक्तरीत्या असंगत्यलंकारो निर्देष्टव्यः ।

सोपमा द्विविधा प्रोक्ता पूर्णलुप्ताविभेदतः ।
श्रौत्यार्थी चेति पूर्णापि द्विविधापि पुनस्त्रिधा ॥ ४१ ॥

समासे तद्धिते वाक्ये स्थितैवं सा तु षड्विधा ।
वर्ण्योपमानधर्माणामुपमावाचकस्य च ॥ ४२ ॥

एकद्वित्र्यनुपादानैर्भिन्ना लुप्तोपमाष्टधा ।

[ अनन्वयलक्षणम् ]

एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः ॥ ४३ ॥

[ उपमेयोपमालक्षणम् ]

पर्यायेण द्वयोस्तस्मिन्नुपमेयोपमा मता ।

[ स्मरणालङ्कारलक्षणम् ]

सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते ॥ ४४ ॥

[रूपकलक्षणं, तत्प्रभेदाश्च]

आरोपविषयस्य स्यादतिरोहितरूपिणः ।
उपरञ्जकमारोप्यमाणं तद्रूपकं मतम् ॥ ४५ ॥

तदादौ त्रिविधं प्रोक्तमाद्यं सावयवं परम् ।
तद्धीनं च तृतीयं स्यात्परम्परितनामकम् ॥ ४६ ॥

मालाकेवलरूपाभ्यां [1]द्वितीयं द्विविधं भवेत् ।
तृतीयमपि च द्वेधा [2]श्लिष्टाश्लिष्टनिबन्धनम् ॥ ४७ ॥

एवं रूपकभेदास्तु भवन्ति पुनरष्टधा ।

---

[1] सावयवरूपकस्यापि समस्तवस्तुविषयकत्वेन एकदेशविवर्तित्वेन च द्वैविध्यं द्रष्टव्यम् । [2] श्लिष्टाश्लिष्टयोरपि प्रत्येकं केवलमालारूपाभ्यां परंपरितस्य चातुर्विध्यं बोध्यम् । एवं च रूपकस्याष्टविधत्वमुक्तमुपपद्यते ।

[ परिणामलक्षणम् ]

आरोप्यमाणमारोपविषयात्मतया स्थितम् ॥ ४८ ॥

प्रकृतस्योपयोगित्वात्परिणाम उदाहृतः ।

[सन्देहलक्षणं, तत्प्रभेदाश्च]

विषयो विषयी यत्र सादृश्यात्कविसम्मतात् ॥ ४९ ॥

सन्देहगोचरौ स्यातां सन्देहालङ्कृतिस्तु सा ।
शुद्धा निश्चयगर्भा च निश्चयान्तेति सा त्रिधा ॥ ५० ॥

[ भ्रान्तिमदलङ्कारलक्षणम् ]

कविसम्मतसादृश्याद्विषये पिहितात्मनि ।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः ॥ ५१ ॥

[ अपह्नुतिलक्षणम् ]

निषिद्धे विषये साम्यादन्यारोपस्त्वपह्नुतिः* ।

[ उल्लेखलक्षणम् ]

अर्थयोगरुचिश्लेषैरुल्लेखनमनेकधा ॥ ५२ ॥

ग्रहीतृभेदादेकस्य स उल्लेखः सतां मतः ।

[ उत्प्रेक्षालक्षणम् ]

यत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम् ॥ ५३ ॥

प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ।†

[ अतिशयोक्तिलक्षणम् ]

विषयस्यानुपादानाद्विषय्युपनिबध्यते ॥ ५४ ॥

---

* अपह्नुत्यारोपारोपापह्नवच्छलादिशब्दसत्यत्वप्रतिपादनैः अपह्नुतेर्द्वैविध्यमपि बोध्यम् ।

† उत्प्रेक्षाया वाच्यत्वप्रतीयमानत्वतदवान्तरभेदा आकरे द्रष्टव्याः ।

यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिजीविता । *

[ सहोक्तिलक्षणम् ]

सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः ॥ ५५ ॥
कल्पितौपम्यपर्यन्ता सा सहोक्तिरितीष्यते ।

[ विनोक्तिलक्षणम ]

† विना सम्बन्धि यत्किञ्चिद्यत्रान्यस्य परापतेत् ॥ ५६ ॥
रम्यतारम्यता वापि सा विनोक्तिर्नुस्मृता ।

[ समासोक्तिलक्षणम् ]

विशेषणानां साम्येन यत्र प्रस्तुतवर्तिनाम् ॥ ५७ ॥
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते† ।

[ वक्रोक्तिलक्षणम् ]

अन्यथोक्तस्य वाक्यस्य चान्यथैव विवक्षया ॥ ५८ ॥
योजना क्रियते सा तु वक्रोक्तिरिति कीर्तिता ।

[ स्वभावोक्तिलक्षणम् ]

स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ॥ ५९ ॥

[ व्याजोक्तिलक्षणम् ]

व्याजोक्तिः सा समुद्भूतं यत्र वस्तु निगूह्यते ।

[ मीलनलक्षणम् ]

मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम् ‡ ॥ ६० ॥

---

* भेदाऽभेदादिचतुर्विधातिशयोक्तिभेदा आकरे द्रष्टव्याः । † समासोक्तेः श्लिष्टविशेषणमाम्यादिभेदा आकरे द्रष्टव्याः । ‡ अस्य सहजेनागन्तुकतिरोधानादिना द्वैविध्यमाकरे द्रष्टव्यम् ।

कक्षोले

[ सामान्यलक्षणम् ]

सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता ।

[ तद्गुणलक्षणम् ]

तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ॥ ६१ ॥

[ अतद्गुणलक्षणम् ]

सति हेतावतद्रूपस्वीकारः स्यादतद्गुणः ।

[ विरोधलक्षणम् ]

आभासत्वे विरोधस्य विरोधाभास इष्यते ॥ ६२ ॥

जातिक्रियागुणद्रव्यैर्विरुद्धैर्दशभेदवान्* ।

[ विशेषलक्षणम् ]

अधाररहिताधेयमेकं चानेकगोचरम् ॥ ६३ ॥

अशक्यवस्तुकरणं विशेषालङ्कृतिस्तथा† ।

[ अधिकलक्षणम् ]

आधाराधेययोरानुरूप्याभावोऽधिको मतः‡ ॥ ६४ ॥

[ विभावनालक्षणम् ]

कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना ।

[ विशेषोक्तिलक्षणम् ]

तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते ॥ ६५ ॥

---

* अत्र जात्यादिविरोधैर्दश विरोधभेदा आकरे द्रष्टव्याः । † अन्या विशेषभेदा आकरे द्रष्टव्याः । ‡ आश्रयस्याल्पत्वमहत्त्वाभ्यामधिकभेद आकरे द्रष्टव्यः ।

[असङ्गतिलक्षणम्]

कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः।

[विचित्रलक्षणम्]

विचित्रं स्वविरुद्धस्य फलस्यार्थमुद्यमः ॥ ॥६६॥

[अन्योन्यलक्षणम्]

तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्।

[विषमलक्षणम्]

विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् ॥ ६७ ॥

विरूपघटना वा स्याद्विषमालङ्कृतिस्त्रिधा।

[समालङ्कृतिलक्षणम्]

सा समालङ्कृतिर्योगे वस्तुनोरनुरूपयोः ॥ ६८ ॥

[तुल्ययोगितालक्षणम्]

प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः।
औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥ ६९ ॥

[दीपकलक्षणम्]

प्रस्तुताप्रस्तुतानां च वस्तूनां तुल्यधर्मतः।
औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥ ७० ॥

[प्रतिवस्तूपमालक्षणम्]

यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये सति।
गम्यौपम्याश्रिता सा स्या*त्प्रतिवस्तूपमा मता ॥ ७१ ॥

---

* अत्र साधर्म्यवैधर्म्याभ्यां द्वैविध्यमाकरे द्रष्टव्यम्।

[ दृष्टान्तलक्षणम् ]

यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते।
सामान्यधर्मो वाक्यज्ञैः स *दृष्टान्तो निगद्यते ॥ ७२ ॥

[ निदर्शनालक्षणम् ]

असम्भवद्धर्मयोगादुपमानोपमेययोः।
प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना† ॥ ७३ ॥

[ व्यतिरेकलक्षणम् ]

भेदप्रधानं साधर्म्यमुपमानोपमेययोः।
आधिक्याल्पत्वकथनाद्व्यतिरेकः स उच्यते ॥ ७४ ॥

[श्लेषलक्षणम्]

प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम्।
‡ श्लेषोऽयं श्लिष्टत्वं सर्वत्रापद्वये नान्त्ये ॥ ७५ ॥

[ परिकरलक्षणम् ]

यत्राभिप्रायगर्भा स्याद्विशेषणपरम्परा।
तत्राभिप्रायविदुषामसौ परिकरो मतः ॥ ७६ ॥

[ आक्षेपलक्षणम् ]

विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत्।
निषेधाभासकथनमाक्षेपः स उदाहृतः ॥ ७७ ॥

[ व्याजस्तुतिलक्षणम् ]

निन्दया वाच्यया यत्र स्तुतिरेवावगम्यते।
स्तुत्या वा ज्ञायते निन्दा व्याजस्तुतिरसौ मता ॥ ७८ ॥

---

* अत्रापि साधर्म्यवैधर्म्याभ्यां द्वैविध्यं द्रष्टव्यम्। † अत्रापि बिम्बप्रतिबिम्बकरणाक्षेपतदभावाभ्यां द्वैविध्यं द्रष्टव्यम्। ‡ श्लेषप्रकारा आकरे द्रष्टव्याः।

[अप्रस्तुतप्रशंसालक्षणम्]

अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते ।
अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता ॥ ७९ ॥

[पर्यायोक्तलक्षणम्]

कारणं गम्यते यत्र प्रस्तुतं कार्यवर्णनात् ।
अप्रस्तुतत्वेन बद्धं तत्पर्यायोक्तमुच्यते ॥ ८० ॥

[प्रतीपलक्षणम्]

आक्षेपमुपमानस्य कैमुतिक्येन कथ्यते ।
यदोपमेयभावः स्यात्तत्प्रतीपमुदाहृतम्[1] ॥ ८१ ॥

[अनुमानलक्षणम्]

साध्यसाधननिर्देशात्त्वनुमानमुदीर्यते ।

[काव्यलिङ्गलक्षणम्]

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं द्विधा मतम् ॥ ८२ ॥

[अर्थान्तरन्यासलक्षणम्]

कार्यकारणसामान्यविशेषाणां परस्परम् ।
समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः ॥ ८३ ॥

[यथासङ्ख्यलक्षणम्]

उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् ।
अनूद्देशो भवेद्यत्र तद्यथासङ्ख्यमुच्यते ॥ ८४ ॥

[अर्थापत्तिलक्षणम्]

एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा पतेत् ।
कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रिया ॥ ८५ ॥

---

[1] त्मुदाहृतम्–मु.

[ परिसङ्ख्यालक्षणम् ]

एकस्य वस्तुनः प्राप्तावनेकत्रैकदा यदा ।
एकत्र नियमः सा तु परिसङ्ख्या निगद्यते* ॥ ८६ ॥

[ उत्तरालङ्कारलक्षणम् ]

उत्तरात्प्रश्न उन्नेयो यत्र प्रश्नोत्तरे तथा ।
बहुधा सन्निबध्येते तदुत्तरमुदीर्यते† ॥ ८७ ॥

[ समुच्चयलक्षणम् ]

गुणक्रियायौगपद्यं समुच्चय उदाहृतः‡ ।

[ विकल्पलक्षणम् ]

विरोधे तुल्यबलयोर्विकल्पालङ्कृतिर्मता ॥ ८८ ॥

[ समाधिलक्षणम् ]

एकस्मिन् कारणे कार्यसाधकेऽन्यत्समापतेत् ।
काकतालीन्यायतस्तु स समाधिरुदीर्यते ॥ ८९ ॥

[ भाविकलक्षणम् ]

अतीतानागते यत्र प्रत्यक्ष इव लक्ष्यते ।
अत्यद्भुतार्थकथनाद्भाविकं तदुदाहृतम् ॥ ९० ॥

[ प्रत्यनीकलक्षणम् ]

बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे ।
यत्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते ॥ ९१ ॥

---

* परिसंख्यायाः प्रश्नपूर्वकत्वादिना चातुर्विध्यं द्रष्टव्यम् । † उत्तरस्योपाधिभेदेन द्वैविध्यमाकरतो द्रष्टव्यम् । ‡ अत्र "खले कपोतन्यायेन" इत्यादिनोक्तं समुच्चयान्तरमपि द्रष्टव्यम् ।

[व्याघातलक्षणम्]

येन यत्साधितं वस्तु तेनैव क्रियतेऽन्यथा ।
अन्येन तदलङ्कारो व्याघात इति कथ्यते ॥ ९२ ॥

[पर्यायलक्षणम्]

क्रमेणैकमनेकस्मिन्नाधारे वर्तते यदि ।
एकस्मिन्नथवाऽनेकं पर्यायालङ्कृतिर्द्विधा ॥ ९३ ॥

[सूक्ष्मलक्षणम्]

असंलक्षितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यते ।

[उदात्तलक्षणम्]

तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते ॥ ९४ ॥

[परिवृत्तिलक्षणम्]

[1]समं न्यूनाधिकाभ्यां च यथा विनिमयो भवेत् ।
साकं समाधिकन्यूनैः परिवृत्तिरसौ मता ॥ ९५ ॥

[कारणमालालक्षणम्]

पूर्वं पूर्वं प्रति यदा हेतुः स्यादुत्तरोत्तरम् ।
तदा कारणमालाख्यमलङ्करणमुच्यते ॥ ९६ ॥

[एकावलीलक्षणम्]

यत्रोत्तरोत्तरेषां स्यात्पूर्वं पूर्वं प्रति क्रमात् ।
विशेषणत्वकथनमसावेकावली मता ॥ ९७ ॥

---

[1] अत्र "समन्यूनाधिकानां" इति पाठः समुचितः प्रतिभाति ।

[मालादीपकलक्षणम्]

यदा तु पूर्वपूर्वस्य सम्भवेदुत्तरोत्तरम् ।
*प्रत्युत्कर्षावहं यत्तन्मालादीपकमुच्यते ॥ ९८ ॥

[सारलक्षणम्]

उत्तरोत्तरमुत्कर्षः सारालङ्कार उच्यते ।

[संसृष्टिलक्षणम्]

तिलतण्डुलसंश्लेषन्यायाद्यत्र परस्परम् ॥ ९९ ॥
संश्लिष्येयुरलङ्काराः सा संसृष्टिरुदीर्यते ।

[सङ्करलक्षणं, तच्चातुर्विध्यमलङ्कारोपसंहारश्च]

क्षीरनीरनयाद्यत्र सम्बन्धः स्यात्परस्परम् ॥ १०० ॥
अलङ्कृतीनामेतासां सङ्करः स उदाहृतः ।
अङ्गाङ्गिभावसन्देहैकवाक्यानुप्रवेशतः ॥ १०१ ॥
समप्राधान्यतश्चेति सङ्करः स चतुर्विधः ।
शब्दार्थसंश्रयास्त्वेवमलङ्काराः स्वरूपतः ॥ १०२ ॥
उदीरिता न दृष्टान्तैरस्माभिः [1]सङ्ग्रहीतृभिः ।

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले साहित्यशास्त्रे अलङ्कारनिरूपणं नाम पञ्चमस्तरङ्गः

---

* अत्र "प्रत्युत्कर्षावहत्वं तन्माला" इति पाठो युक्तः प्रतिभाति ।

[1] सङ्गृहेच्छुभिः—मु.

## सप्तमकल्लोले षष्ठस्तरङ्गः

### नाटकेतिहासस्वरूपनिरूपणम्

[कुमारसोमशेखरस्य नाटकप्रबन्धलक्षणप्रश्नः, महीपतेस्तदुत्तरकथनप्रतिज्ञा च]

अलङ्कारा जगदलङ्काराः स्वामिन्! प्रदर्शिताः।
आनन्दयन्ति हृदयं ममैते हृदयङ्गमाः ॥ १ ॥

अधुना नाटकाख्यस्य प्रबन्धस्य सुविस्तृतम्।
लक्षणं श्रोतुमीहा मे मानसे सम्प्रवर्तते ॥ २ ॥

एतन्मह्यं समाख्याहि विख्यातगुणवारिधे!।
पुत्र! यच्छ्रोतुमिष्टं ते वर्णयामि पुनः शृणु ॥ ३ ॥

[नाट्यस्वरूपम्]

चतुर्विधैरभिनयैः सात्त्विकाङ्गिकपूर्वकैः।
धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रयम् ॥ ४ ॥

[नृत्तनृत्ययोः स्वरूपं, तयोरवान्तरभेदश्च]

भावाश्रयं तु नृत्तं स्यान्नृत्यं ताललयाश्रयम्।
मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ॥ ५ ॥

[नृत्तनृत्ययोरुपयोगः]

लास्यताण्डवभेदेन नाटकाद्युपकारकम्।

[नाट्योपकृतानि दश रूपकाणि, तद्भेदकाश्च]

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ॥ ६ ॥

व्यायोगः समवाकारो वीथ्यङ्केहामृगा इति।
वस्तुनेतृरसास्तेषां रूपकाणां हि भेदकाः ॥ ७ ॥

[त्रिविधानि रूपकीयवस्तूनि]

प्रख्यातोत्पाद्यमिश्रत्वभेदाद्वस्तु त्रिधा मतम्।

[रूपकनिर्वाहकाः पञ्च सन्धयः, तत्स्वरूपं च]

मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः ॥ ८ ॥

इत्येवं सन्धयः पञ्च नाटके परिकीर्तिताः ।
बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ॥ ९ ॥

[आरम्भादयः पञ्च सन्ध्यवस्थाः]

आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।
अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ॥ १० ॥

यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ।

[आरम्भाद्यवस्थालक्षणानि]

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ॥ ११ ॥

प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः ।
उपायापायशङ्काभ्यां प्राप्त्याशा[1] कार्यसम्भवः ॥ १२ ॥

अपायाभावतः कार्यनिश्चयो नियताप्तिका ।
समग्रफलसम्पत्तिः फलागम उदाहृतः ॥ १३ ॥

[बीजादिपञ्चकविवरणम्]

स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा ।
अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ १४ ॥

प्रतिपाद्यकथाङ्गं स्यात्पताका व्यापिनी कथा ।
अव्यापिनी प्रकरिका कार्यं निर्वाहकृत्फले ॥ १५ ॥

[मुखसन्धिनिरूपणम्]

मुखं बीजसमुत्पत्तिर्नानार्थरससंश्रयः ।

---

[1] प्राप्तिसं–मु.

[द्वादश मुखसन्ध्यङ्गानि, तदुद्देशश्च]

अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥ १६ ॥
उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावनम् ॥ १७ ॥
उद्भेदभेदकरणान्यन्वर्थानि यथाक्रमम् ।

[उपक्षेपादीनां मुखसन्ध्यङ्गानां स्वरूपाणि]

[1] बीजन्यास उपक्षेपस्तद्बाहुल्यं परिक्रिया ॥ १८ ॥
तन्निष्पत्तिः परिन्यासो गुणाख्यानं विलोभनम् ।
सम्प्रधारणमर्थानां युक्तिः प्राप्तिः सुखागमः ॥ १९ ॥
बीजागमः समाधानं विधानं सुखदुःखकृत् ।
परिभावोऽद्भुतावेशः उद्भेदो गूढभेदनम् ॥ २० ॥
करणं प्रकृतारम्भो भेदः प्रोत्साहनं भवेत् ।
अङ्गानि द्वादशैतस्य मुखसन्ध्युदितानि हि ॥ २१ ॥

[प्रतिमुखसन्धिस्वरूपं, विलासादितदीयत्रयोदशाङ्गानि च]

लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् ।*
विलासः परिसर्पश्च विधूतं शमनर्मणी ॥ २२ ॥
नर्म द्युतिः प्रगमनं विरोधः पर्युपासनम् ।
वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ॥ २३ ॥

[प्रतिमुखसन्ध्यङ्गविलासादीनां स्वरूपाणि]

रत्यर्थेहा विलासः स्याद्दृष्टनष्टानुसर्पणम् ।
परिसर्पो विधूतं स्या†दरतिस्तच्छमः शमः ॥ २४ ॥

---

* इतः परं "बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश" इति प्रतिमुखसन्ध्यङ्ग-नामाहृत्य निर्देशपरो ग्रन्थः आकरानुरोधेनानुसन्धेयः. † अत्रारतिशब्देनाकरोक्ताभिष्टस्नु-विक्षेपो ग्राह्यः ।

[1] जीवन्यास–ग.

परिहासवचो नर्म, *धृतिस्तज्जा द्युतिर्मता ।
यथोत्तरा वाक्प्रगमो हितरोधो निरोधनम् ॥२५॥

†प्रसादस्स्यादुपन्यासो वज्रं निष्ठुरभाषणम् ।
पुष्पं वाक्यविशेषः स्यादनुरागप्रकाशकम् ‡ ॥ २६ ॥

चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।
एवं त्रयोदशाङ्गानि सन्धेः प्रतिमुखस्य हि ॥ २७ ॥

[गर्भसन्धिस्वरूपं, तदङ्गकल्पनक्रमश्च]

गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
अस्याप्त्याशापताकानुगुण्येनाङ्गोपकल्पनम् ॥ २८ ॥

[नाम्ना गर्भसन्ध्यङ्गोद्देशस्तत्सङ्ख्या च]

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
सङ्ग्रहश्चानुमानं च तोटका[1]धिबले तथा ॥ २९ ॥

उद्वेगसम्भ्रमाक्षेपा द्वादशाङ्गान्यनुक्रमात् ।

[गर्भसन्ध्यङ्गस्वरूपाणि]

अभूताहरणं छद्म मार्गस्तत्त्वार्थदर्शनम् ॥ ३० ॥

रूपं वितर्कवद्वाक्यं सोत्कर्षं स्यादुदाहृतिः ।
क्रमः सञ्चिन्त्यमानाप्तिः भावज्ञानमथापरे ॥ ३१ ॥

---

* अत्र "द्युतिस्तज्ज ध्यनिर्मिता" इति मुद्रितपाठः । वस्तुतस्तु आकरानुरोधेन "प्रीतिस्तज्जा द्युतिमेता" इति पाठो भवितुमर्हति । † अत्र "प्रसादनं पर्युपास्तिः" इति पाठो भवितुमर्हति । अत्र दशरूपकीयपाठः—पर्युपास्तिरनुनयः पुष्पं वाक्यं विशेषवत् । उपन्यासस्तु सोपायं वज्रं प्रत्यक्षनिष्ठुरम् ॥ इति । प्रसाधनं-मु. ‡ एतदनन्तरं रचनारूपोपन्यासस्वरूपबोधकः अनुरागहेतुवाक्यग्रन्थः अपेक्ष्यते ।

[1] अधिरदे—मु.

सङ्ग्रहः सामदानोक्तिरनुमानमथोहनम् ।
*अभिसन्धिस्त्वधिबलं संरब्धं तोटकं वचः ॥ ३२ ॥

उद्वेगो†ऽरिकृता भीतिः शङ्कात्रासौ च सम्भ्रमः ।
‡गर्भबीजसमुत्क्षेपादाक्षेपः परिकीर्तितः ॥ ३३ ॥

गर्भाख्यसन्धेरङ्गानि द्वादशैतानि चक्षते ।

[विमर्शसन्धिस्वरूपं, तदीयाङ्गोद्देशः, तत्सङ्ख्या च]

गर्भसन्धौ प्रसिद्धस्य [1]बीजस्यार्थावमर्शनम् ॥ ३४ ॥

हेतुना येन केनापि विमर्शः सन्धिरिष्यते ।
नियताप्तिप्रकर्षयुक्तेरङ्गान्यस्य त्रयोदश ॥ ३५ ॥

तत्रापवादः सम्फेटो विद्रवद्रवशक्तयः ।
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥ ३६ ॥
प्ररोचना विचलनमादानं च त्रयोदश ।

[विमर्शसन्ध्यङ्गस्वरूपाणि]

दोषप्रख्यापवादः स्यात् सम्फेटो रोषभाषणम् ॥ ३७ ॥

विद्रवो वधबन्धादिः द्रवो गुरुतिरस्कृतिः ।
विरोधशमनं शक्तिः तर्जनोद्वेजिने द्युतिः ॥ ३८ ॥

गुरुकीर्तिः प्रसङ्गः स्याच्छलनं चावमाननम् ।
व्यवसायः स्वशक्तयुक्तिः संरब्धोक्तिर्विरोधनम् ॥ ३९ ॥

---

* "तोटकस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः" इति दशरूपके । † अत्र— "ऽरिजनाद्भीतिः" इति पाठो भवितुमर्हति । रिकृतः–मु. ‡ इष्टार्थोपायानुसरणं आक्षेप इति प्रतापरुद्रीये ।

[1]बीजार्थस्यावमर्शनम्–प्रताप.

[1]सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना ।
[2]गुणोक्तिः स्याद्विचलनमादानं कार्यसङ्ग्रहः ॥ ४० ॥

अवमर्शाख्यसन्धौ स्यादङ्गान्येवं त्रयोदश ।

[निर्वहणसन्धिस्वरूपं, तदीयाङ्गानि, तत्संख्या च]

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ४१ ॥

ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।
फलागमकार्यानुगुण्यादङ्गान्यस्य चतुर्दश ॥ ४२ ॥

सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृतिर्भाषोपगूहने ॥ ४३ ॥

पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ।

[निर्वहणसन्ध्यङ्गस्वरूपाणि]

सन्धिर्बीजोपगमनं विरोधः कार्यमार्गणम् ॥ ४४ ॥

ग्रथनं तदुपक्षेपोऽनुभूताख्या तु निर्णयः ।
परिभाषा मिथो जल्पः प्रसादः पर्युपासनम् ॥ ४५ ॥

आनन्दो वाञ्छितावाप्तिः समयो दुःखनिर्गमः ।
कृतिर्लब्धार्थगमनं मानाद्याप्तिस्तु भाषणम् ॥ ४६ ॥

कार्यदृष्ट्यद्भुतप्राप्ती पूर्वभावोपगूहने ।
[3]फलाप्तिरुपसंहारः प्रशस्तिः शुभशंसनम् ॥ ४७ ॥

एवं चतुर्दशाङ्गानि भवेयुरुपसंहृतेः ।

[एतेषां सन्ध्यङ्गानां षोढा प्रयोजनानि]

उक्ताङ्गानां चतुष्षष्टिः षोढा चैषां प्रयोजनम् ॥ ४८ ॥

---

[1] सिद्धामन्त्रणता—मु. [2] विकत्थना विचलनं—इति दशरूपके. [3] वरासिरुप-संहारः—दश.

इष्टस्यार्थस्य रचना गोप्यगुप्तिः प्रकाशनम् ।
रागः प्रयोगस्याश्चर्यं [1]वृत्तान्तस्य च विस्तरः ॥ ४९ ॥

[सूच्यासूच्यभेदेन वस्तुद्वैविध्यं, दृश्यश्रव्यभेदेनासूच्यविभागश्च]

द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत्किञ्चिद्दृश्यं[2]श्रव्यं तथा[3]परम् ॥ ५० ॥

[दृश्यस्वरूपम्]

[4]दृश्यं तु मधुरोदात्तरसभावनिरन्तरम् ।

[सूच्यप्रतिपादकाः पञ्चप्रकाराः विष्कम्भादयः]

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ॥ ५१ ॥
विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारणैः ।

[विष्कम्भस्वरूपं, तत्प्रभेदश्च]

वृत्तवर्तिष्यमाणानां कथांशानां प्रदर्शकः ॥ ५२ ॥

सङ्क्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ।
स द्विधा कोविदैः प्रोक्तः शुद्धमिश्रविभेदतः ॥ ५३ ॥

संस्कृतप्रायिकः शुद्धो भाषामिश्रश्च मिश्रकः ।

[चूलिकास्वरूपम्]

[5]अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना ॥ ५४ ॥

[अङ्कास्यस्वरूपम्]

अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचनम् ।)

---

[1] वृत्तान्तस्यानुपक्षयः–द. श. [2] श्रव्यावान्तरभेदतदवान्तरभेदा नाट्यधर्ममित्यादिना उपरि वक्ष्यमाणा द्रष्टव्याः । [3] असूच्यमित्यर्थः । [4] इतः पूर्वं "नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः" इति सूच्यमधिकृत्योक्तमाकरे । [5] अयं धनुरङ्कितो भागो मुद्रितकोशे नास्ति ।

[प्रवेशकस्वरूपम्]

तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ॥ ५५ ॥

प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योप[1]सूचकः ।

[अङ्कावतारस्वरूपम्]

अङ्कावतारस्त्वङ्कान्ते [2]यतोऽङ्कस्य विभागतः ॥ ५६ ॥

एभिः सूच्यं सूचयित्वा दृश्यमङ्कैः [3]प्रदर्शयेत् ।

[पुनस्त्रेधा अन्यवस्तुविभागः, तत्स्वरूपं च]

नाट्यधर्ममवेक्ष्यैतत्पुनर्वस्तु त्रिधेष्यते ॥ ५७ ॥

सर्वेषां [4]नियतश्राव्यं श्राव्यमश्राव्य[5]मेव च ।
सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ॥ ५८ ॥

द्विधाऽन्यन्नाट्यधर्माख्यं जनान्तमपवारितम्[6] ।

[अपवारितस्वरूपम्]

त्रिपताका करेणान्यानपवार्यान्तरा कथाम् ॥ ५९ ॥

रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् ॥ ६० ॥

[आकाशभाषितस्वरूपम्]

किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकं त स्यादाकाशभाषितम् ॥ ६१ ॥

---

[1] पूरकः—मु. [2] पातोऽङ्कस्य विभागतः—ग. [3] प्रयोजयेत्-मु. [4] नियतस्यैव—द्र.श. [5] मेवतः—मु. [6] एतदनन्तरं "अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्" इति जनान्तिकबोधकोऽवशिष्टभागो ज्ञेयः ।

[अङ्कस्वरूपम्]

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ ६२ ॥

[आमुखस्वरूपम्]

सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥ ६३ ॥

[त्रीण्यामुखाङ्गानि]

प्रस्तावना वा तत्र स्यात्कथोद्घातः प्रवर्तकः ।
प्रयोगातिशयश्चेति त्रीण्यङ्गान्यामुखस्य तु ॥ ६४ ॥

[कथोद्घातादीनां आमुखाङ्गानां स्वरूपं, तदीयावान्तरभेदश्च]

स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधैव सः ॥ ६५ ॥

प्रस्तूयमानकालस्य गुणवर्णनया [1]स्वतः ।
प्रविशेत्सूचितं पात्रं यत्र स्यात्तत्प्रवर्तक(कः)म् ॥ ६६ ॥

एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥ ६७ ॥

[वीथ्यङ्गानामामुखाङ्गभेदादत्रोक्तिसङ्गमनम्]

वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्र स्वभावतः ।

[त्रीथ्यङ्गानि, आहत्य तत्सङ्ख्या च]

उद्घात्यका[2]वलगिते प्रपञ्चत्रिगते छलम् ॥ ६८ ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ६९ ॥

---

[1] स्थितः—मु. [2] वलिगते—मु.

[उद्घात्यकादिवीथ्यङ्गानां स्वरूपाणि, तदवान्तरभेदाश्च]

[1]गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य [2]वा ।
यत्रान्योन्यं समालापो [3]द्वयोरुद्घात्यकं मतम् ॥ ७० ॥

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रस्तुतेऽन्यत्र वाऽन्यत्स्यात्तच्चावलगितं द्विधा ॥ ७१ ॥

असद्भूतं मिथः [4]स्तोत्रं प्रपञ्चो हास्यकृन्मतः ।
श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम् ॥ ७२ ॥

प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनं छलम् ।
विनिवृत्तस्य वाक्केलिर्द्विस्त्रिः प्रत्युक्तितोऽपि वा ॥ ७३ ॥

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं मतम् ।
गण्डं प्रस्तुतसम्बन्धिभिन्नार्थं सहसोदितम् ॥ ७४ ॥

रसोक्तस्यान्यथा व्याख्या यत्रावस्कन्दितं हि तत् ।
सोपहासा निगूढार्था नालिकैव प्रहेलिका ॥ ७५ ॥

असम्बन्धकथाप्रायोऽसत्प्रलापो यथोत्तरम् ।
अन्यार्थमेव व्याहारो हास्यलोभकरं वचः ॥ ७६ ॥

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ।

[एतदङ्गाश्रयेण सूत्रधारकर्तव्यानि]

एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् ॥ ७७ ॥
प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत् ।

[दशरूपकेषु नाटकस्वरूपम्]

साङ्गैर्मुखप्रतिमुखगर्भामर्शोपसंहृतैः ॥ ७८ ॥

---

[1] अन्यार्थपद—मु. [2] च—मु. [3] द्वयोरुद्घात्यं तदुच्यते—दश. [4] स्तोत्रप्रपञ्चो—मु.

पूर्वं प्रकृतिरन्येषामाधिकारिक[1]वृत्तवत् ।
वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते ॥ ७९ ॥

प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ।

[नान्दीस्वरूपं, तत्प्रभेदाश्च]

अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम् ॥ ८० ॥

यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ।
द्वाविंशत्या पदैर्वापि सा नान्दी परिकीर्त्यते ॥ ८१ ॥

[नान्द्यनन्तरकर्तव्यसूत्रधारकर्मनिर्देशः]

रङ्गं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ ८२ ॥

[प्रकरणलक्षणम्]

उत्पाद्येनेतिवृत्तेन धीरशान्तप्रधानकम् ।
शेषं नाटकवच्चाङ्गं भवेत्प्रकरणं हि तत् ॥ ८३ ॥

[भाणलक्षणम्]

भारतीवृत्तिभूयिष्ठं शौर्यसौभाग्यसंस्तवैः ।
सूच्यते वीरशृङ्गारौ विटेन निपुणोक्तिना ॥ ८४ ॥

कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम् ।
[2]एकाङ्के मुखनिर्वाहौ यत्र भाणः स सम्मतः ॥ ८५ ॥

[प्रहसनलक्षणं, शुद्धादयस्तदीयास्त्रयः प्रभेदाश्च]

यत्र सन्ध्यङ्गवृत्त्यङ्गवर्णनं भाणवन्मतम् ।
हास्यो रसः प्रधानं स्याद्भवेत्प्रहसनं हि तत् ॥ ८६ ॥

---

[1] वृत्तितः—मु.   [2] एकोऽङ्को मुख—प्रताप.

पाषण्डविप्रप्रभृति[1]विटचेटसमाकुलम् ।
वेषभाषादिसहितं शुद्धं हास्यवचोऽन्वितम् ॥ ८७ ॥

कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ।
प्रहासाभिनयप्रायं वैकृतं तत्प्रकीर्तितम् ॥ ८८ ॥

यद्वीथ्यङ्गैः समाकीर्णैः सङ्कीर्णं धूर्तसङ्कुलम् ।

[ डिमलक्षणम् ]

यत्र वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ॥ ८९ ॥

नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ९० ॥

हास्यशृङ्गाररहिता रसा रौद्रप्रधानकाः ।
चत्वारोऽङ्काः सन्धयश्च चत्वारोऽमर्शवर्जिताः ॥ ९१ ॥

महेन्द्रजालसङ्ग्रामसूर्यचन्द्रग्रहादयः ।
शेषं नाटकवत्सर्वं स डिमः परिकीर्तितः ॥ ९२ ॥

[ व्यायोगलक्षणम् ]

[2]प्रख्यातमितिवृत्तं स्यादुद्धतो नायको मतः ।
गर्भविमर्शराहित्यं डिमवद्रसपोषणम् ॥ ९३ ॥

एकवासरकार्यं च स व्यायोगो महारणः ।

[ समवाकारलक्षणम् ]

यथामुखं नाटकवत्सन्धयोऽमर्शवर्जिताः ॥ ९४ ॥

नेतारो द्वादश [3]पृथङ्नरदेवासुरादयः ।
वीरप्रधानाश्च रसास्त्रयोऽङ्कास्तेषु च क्रमात् ॥ ९५ ॥

---

[1] चेटीचेट--प्रताप. [2] यत्र ख्यातेतिवृत्तं--प्रताप. [3] पृथक्फला देवासुरादयः--प्रताप.

वस्तुस्वभावदैवादिकृताः स्युः कपटास्त्रयः ।
पुररोधरणाग्न्यादि[1]निमित्तोपद्रवास्त्रयः ॥ ९६ ॥

धर्मार्थकामानुगुणास्तिस्रः श्रृङ्गाररीतयः ।
प्रथमेऽङ्के निबद्धव्या कथा यामत्रयावधिः ॥ ९७ ॥

यामावधिर्द्वितीयाङ्के तृतीये त्वर्धयामिका ।
असौ समवकारः स्याद्वीथ्यङ्गैः कैश्चिदन्वितः ॥ ९८ ॥

[ वीथीलक्षणम् ]

यत्र भाणवदङ्गानां क्लृप्तिर्वृत्तिस्तु कैशिकी ।
[2]श्रृङ्गारोऽपरिपूर्णत्वात्सूचनीयोऽतिभूयसा ॥ ९९ ॥

उद्घात्यादीनि चाङ्गानि सा वीथी वीथिवन्मता ॥

[ अङ्कलक्षणम् ]

यत्रेतिवृत्तं प्रख्यातं प्रधानं करुणो रसः ॥ १०० ॥

स्त्रीणां विलासो वाग्युद्धं नेतारः प्राकृता नराः ।
भाणवत्सन्धिवृत्त्यादि स उत्सृष्टोऽङ्कसंज्ञकः ॥ १०१ ॥

[ ईहामृगलक्षणं, रूपकलक्षणोक्त्युपसंहारश्च ]

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ॥ १०२ ॥

धीरोद्धतौ स्त्रियं दिव्यां हर्तुकामौ च कामुकीम् ।
अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥ १०३ ॥

इत्युक्तं दशसङ्ख्यानां रूपकाणां च लक्षणम् ।

---

[1] निमित्ता विद्रवास्त्रयः— प्रताप. [2] श्रृङ्गारः परिपूर्ण—प्रताप.

[ इतिहासनिर्देशः ]

व्यासवाल्मीकिमुख्यैस्तु प्रोक्ता भारतपूर्वकाः ॥ १०४ ॥

इतिहासास्तु बहवस्तत्स्वरूपं प्रचक्ष्महे ।

[ इतिहासस्वरूपम् ]

सत्वादिगुणभेदानां त्रिमूर्तीनां च लक्षणम् ॥ १०५ ॥

देवासुरादिजननक्रमाणामपि वर्णनम् ।
युधिष्ठिरादिवृत्तान्तकीर्तनं श्रुतिवर्तिनाम् ॥ १०६ ॥

धर्माणां भूयसां चैव साकल्येन दृढीकृतिः ।
एवमादीनि बहुधा प्रमेयानीतिहासके ॥ १०७ ॥

[ काव्यादिमुदितान्तःकरणस्य शिवभूपते राज्यपरिपालनम् ]

एवं सभासदां दृश्यैः श्राव्यैरपि मनोहरैः ।
कौतुकैर्विविधाकारैर्विनियोगैः पृथग्विधैः ॥ १०८ ॥

काव्यादीनां श्रुतिसुधावर्षकृद्भिर्वचोभरैः ।
आनन्दितान्तःकरणः सिंहासनवरे वसन् ॥ १०९ ॥

शशास धरणीं कृत्स्नां शिवनामा महीपतिः ।

[शिवनायकात् भद्रनायकोत्पत्तिः, ततो राज्ञः सुखपरम्परावाप्तिश्च]

एवं कतिपयेष्वस्य प्रयातेषु दिनेष्वभूत् ॥ ११० ॥

शिवस्य जगतीभर्तुः कुमारो भद्रनामकः ।
तत्तत्कालोचितैस्तैस्तैरुत्सवैस्तनुजस्य सः ॥ १११ ॥

अवर्तत महीपालो लब्ध्वानन्दपरम्पराम् ।

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले साहित्यशास्त्रे नाटकेतिहासस्वरूपनिरूपणं नाम षष्ठस्तरङ्गः

———

## सप्तमकल्लोले सप्तमस्तरङ्गः

### पुत्रोपभोगनिरूपणम्

[कुमारसोमशेखरस्य पुत्रोपभोगप्रश्नः, भूपतेस्तदुत्तरकथनप्रतिज्ञा च]

स्वामिन्! पुत्रोचितास्ते कथयस्व महोत्सवाः ।
यैरानन्दमसामान्यमवापेति प्रकीर्तितम् ॥ १ ॥

तेषां च श्रवणे प्रीतिरधिका वर्तते हृदि ।
पुत्र! यत्तेऽभिलषितं तद्ब्रवीमि पुनः शृणु ॥ २ ॥

पुत्राणामुपभोगोऽयमधुना परिकीर्त्यते ।

[स्त्रीणां गर्भचिह्नानि]

जाते गर्भे भवेत् स्त्रीणां पाण्डुरं गण्डमण्डलम् ॥ ३ ॥

कुचयोश्चूचुकं कृष्णं जठरं किञ्चिदुन्नतम् ।

[पुंसवनकालः, तन्नक्षत्रवारविशेषाः, तत्र कर्तव्यविशेषश्च]

तृतीये मासि सम्प्राप्ते कुर्यात्पुंसवनक्रियाम् ॥ ४ ॥

श्रवणे मृगशीर्षे च हस्ते पुष्ये पुनर्वसौ ।
मूले पुंसंज्ञिते धिष्ण्ये वारेऽङ्गारे बृहस्पतौ ॥ ५ ॥

माषद्वितयमध्यस्थं यवं घृतसमन्वितम् ।
प्राशयेत्तु पतिः पत्नीं वेदमन्त्रमनुस्मरन् ॥ ६ ॥

[सीमन्तोन्नयनकालः, तद्विधानक्रमसाधनतदीयोत्सवाश्च]

एवं पुंसवने जाते गर्भस्थः पुरुषो भवेत् ।
अष्टमे मासि षष्ठे वा धिष्ण्ये पुन्नामके नृपः ॥ ७ ॥

सीमन्तोन्नयनं कुर्यादष्टमङ्गलसंयुतम् ।
उदुम्बरफलैः क्लृप्तं कुर्यात्कण्ठविभूषणम् ॥ ८ ॥

कुशपुष्पविमिश्रणे शलल्यग्रेण मूर्धनि ।
सीमन्तोन्नयनं कुर्याद्भार्यायाः पृथिवीपतिः ॥ ९ ॥

वैणिकैर्वादयद्भिश्च सामगानं मनोहरम् ।
उच्चारयत्सु विप्रेषु साममन्त्रान् शुभाक्षरान् ॥ १० ॥

पटहादिभिरन्यैश्च तूर्यैः पञ्चमहास्वनैः ।
अष्टमङ्गलनामानं कुर्यादुत्सवमूर्जितम् ॥ ११ ॥

तोषयेद्विजमुख्यांश्च गोभूस्वर्णाम्बरादिभिः ।

[ जाते पुत्रे जातकर्मविधिः, तत्रत्यकर्तव्यविशेषाश्च ]

सम्पूर्णे नवमे मासि जाते पुत्रे मनोहरे ॥ १२ ॥

जातकर्म प्रकुर्वीत स्वगृह्योक्तविधानतः ।
सौवर्णमुद्रिकालिप्तं प्राशयेन्मधुसर्पिषी ॥ १३ ॥

बालकं तु ततो मातुः पाययेच्च पयोधरम् ।
तत्राभ्युदयिकं श्राद्धं हेम्ना कुर्वीत भूपतिः ॥ १४ ॥

[ नामकरणकालः, तदीयनक्षत्रादिविशेषाश्च ]

[1]दशमाद्दिवसादूर्ध्वमुत्तरात्रितये मृगे ।
अश्विन्यां रोहिणीस्वात्यो रेवत्यां पुष्यमूलयोः ॥ १५ ॥

चित्रानुराधाहस्तेषु श्रवणादित्रयेऽपि च ।
शुभे वारे तिथौ लग्ने पुत्रराश्यनुरूपतः ॥ १६ ॥

विख्यातं राजवं यानां नाम कुर्यान्महीपतिः* ।

---

* एतदनन्तरं मानसोल्लासे—
सिंहं मल्लं तथा बाहुं पालं वर्म पराक्रमम् ।
सेनं चन्द्रं तथा दिव्यसत्त्वं केसरिणं रथम् ॥
अनीकं च पदं प्रान्ते कुर्यान्नाम्नो यथारुचि ॥ इति वर्तते ।

[1] द्वादशाद्दिवसाद्–मानस.

[क्रमविशेषतस्स्त्रीपुमपत्यजनने पित्राद्यनिष्टसूचनम्]

सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि ॥ १७ ॥
मातापित्रोः कुलस्यापि तदानिष्टं महद्भवेत् ।

[शिशूनां आन्दोलनशयनकालः, स्त्रीपुमपत्ययोस्तत्र विशेषश्च]

करत्रये वैष्णवरेवतीष्व-
दितिद्वये वाश्विनिकध्रुवेषु ।
कुर्याच्छिशूनां नृपतिश्च तद्व-
दान्दोलनं वै सुखिनो भवन्ति ॥ १८ ॥

आन्दोलशयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा ॥ १९ ॥

अन्यस्मिन् दिवसे चेत्स्यात्तिर्यगास्ये प्रशस्यते ।

[शिशूनां पयःपानकालः, तद्विधिश्च]

एकत्रिंशदिने चैव पयः शङ्खेन पाययेत् ॥ २० ॥

[शिशूनां कर्णवेधनान्नप्राशनादिकालविशेषाः]

अन्नप्राशननक्षत्रे दिवसोदयराशिषु ।
मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे ॥ २१ ॥

कर्णवेधं प्रकुर्वीत पुष्ट्यायुःश्रीविवृद्धये ।

हरिहयककरचित्रासौम्यपौष्णोत्तरार्या-
दितिवसुषु घटालीसिंहवर्जे सुलग्ने ।
शशिगुरुबुधकाव्यानां दिने पर्वरिक्ता-
रहिततिथिषु शुद्धे नैधने कर्णवेधः ॥ २२ ॥

कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा* ।
द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ॥ २३ ॥
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ।

[कर्णवेधने वर्णभेदेन सूचीभेदः]

सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ॥ २४ ॥
शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका ।

[शिशोस्ताम्बूलचर्वणकालः, तत्र नक्षत्रादिकं च]

सार्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ॥ २५ ॥
कर्पूरादिकसंमिश्रं विलासाय हिताय च ।

मूलार्कचित्रकरतिष्यहरीन्द्रभेषु
पौष्णे तथा मृगशिरोऽदितिवासवेषु ।
अर्केन्दुजीवभृगुबोधनवासरेषु
ताम्बूलभक्षणविधिर्मुनिभिः प्रदिष्टः ॥ २६ ॥

[शिशोर्निष्क्रमणसूर्यचन्द्रदर्शनानां कालः]

तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् ।
ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ॥ २७ ॥
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ।

[शिशुनिष्क्रमणे तिथ्यादयः]

मैत्रे पुष्यपुनर्वसुप्रथमभे पौष्णेऽनुकूले तिथौ
हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च ।
कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ [1]शुक्रे विरिक्ते तिथौ
कन्याकुम्भ लामृगारिभवने सौम्यग्रहालोकिते ॥ २८ ॥

---

* इतः परं निर्णयसिन्धौ—'कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने' इति वर्तते ।     [1] शुक्रेष्वरिक्ते–मु.

[बालस्य जीविकोपायपरीक्षाक्रमः]

अग्रतोऽथ प्रतिन्यस्य शिल्पभाण्डानि सर्वशः ॥
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥ २९ ॥

प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥ ३० ॥

[शिशोः भूमावुपवेशनकालः, तदासनभूप्रार्थनादिकं च]

पञ्चमे च तनो मासि भूमौ तमुपवेशयेत् ।
तत्र सर्वे ग्रहाः शस्ता भौमेऽप्यत्र विशेषतः ॥ ३१ ॥

उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ।
प्राजापत्यं च हस्तश्च शस्तमाश्विनमित्रभम् ॥ ३२ ॥

वराहं पूजयेद्देवं पृथिवीं च विशेषतः ।
रक्षैनं वसुधे! देवि! सदा सर्वगतं शुभे! ॥ ३३ ॥

आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये! ।
अचिरादायुषस्तस्य ये केचित्परिपन्थिनः ॥ ३४ ॥

जिविताारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥ ३५ ॥

इति सम्प्रार्थ्य भूमौ तु शिशुं तत्रोपवेशयेत् ।

[शिशोः अन्नप्राशनकालतिथिवारनक्षत्राणि, तद्विधानं च]

षष्ठे मासि तथा कुर्यादन्नप्राशनमुत्तमम् ॥ ३६ ॥

रेवतीरोहिणीहस्तपुष्यश्रवणयुग्मके ।
उत्तरात्रितये वापि वारे [1]चान्द्रे बृहस्पतौ ॥ ३७ ॥

---

[1] चेन्दोर्बृहस्पते:—मान,

बुधभार्गवयोश्चैव शस्ते लग्ने शुभे तिथौ ।
देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ॥ ३८ ॥

अलङ्कृतस्य दातव्यमन्नं पात्रे सकाञ्चनम् ।
मध्वाज्यदधिसंयुक्तं पायसं प्राशयेत्तथा ॥ ३९ ॥

[बालकाव्यक्तभाषणश्रवणाद्युपभोगाः]

बालकानां स्वकीयानामव्यक्तं शृणुयाद्वचः ।
अर्धार्धं भाषितं तेषां गालिदानं मनोहरम् ॥ ४० ॥

जानुचङ्क्रमणं पश्येत् स्खलितं च पदक्रमम् ।
मातृहस्तावलम्बेन ललितं गमनं शनैः ॥ ४१ ॥

फलप्रदर्शनाद्बालमानीतं मातुरङ्कतः ।
अङ्कमारोपयेदेनमुरस्कन्धतलं तथा ॥ ४२ ॥

[कुमारालङ्कारविशेषाः, तदीयचेष्टाः, तदालिङ्गनोपभोगश्च]

रक्षामन्त्राङ्कितैः पत्रैः लाक्षाक्तैः परिवेष्टितम् ।
शार्दूलनखसंयुक्तं प्रवालाङ्कुरशोभितम् ॥ ४३ ॥

कपर्दकेन चित्रेण [1]रत्नाङ्केन विराजितम् ।
अजरोमविमिश्रं च बिभ्राणं कण्ठसूत्रकम् ॥ ४४ ॥

पञ्चलोहसुक्लृप्तैश्च वलयैर्भूषिताङ्घ्रिकम् ।
पदयोः कटिदेशे च हेमघर्घरिकायुतम् ॥ ४५ ॥

सौवर्णकुण्डलप्रोतकर्णपालीविराजितम् ।
अश्वत्थपत्रसङ्काशमूर्धभूषाङ्कितालिकम् ॥ ४६ ॥

मातरं पितरं दृष्ट्वा धावमानमितस्ततः ।
कुमारं सुकुमाराङ्गमालिङ्गेदवनीपतिः ॥ ४७ ॥

---

[1] शङ्खेन च विराजितम्—मान,

कर्णौ कचांश्च कर्षन्तं वर्षन्तं हर्षमात्मनि ।
चुम्बंस्तद्वदनं भूपः परिष्वज्य सुखी भवेत् ॥ ४८ ॥

[स्वबालकदर्शनस्येश्वरदर्शनस्येव पुण्याधीनता]

योगीन्द्रमिव सानन्दं दिग्वस्त्रमपरिग्रहम् ।
जटिलं भूतिभूषाढ्यं गङ्गाधरमिवात्मजम्[1] ॥ ४९ ॥

पुत्रं गात्रात्समुत्पन्नमीक्षन्ते पुण्यभागिनः ।

[बालकस्य चूडाकर्मकालः, तत्र विहिता निषिद्धाश्च दिवसाः]

वत्सरद्वितयादूर्ध्वं चूडा कार्या [2]यथाक्रमम् ॥ ५० ॥

हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।
सौम्यचित्रे नवक्षौरे उत्तमा नव तारकाः ॥ ५१ ॥

रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि ।
निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः शुभाः । ॥ ५२ ॥

षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
द्वादशी दर्शपूर्णे द्वे प्रतिपच्चात्र निन्दिताः॥ ५३ ॥

[बालकस्याक्षरग्रहणकालः, तदुपयोगितिथ्यादयश्च]

अक्षरग्रहणं कुर्यात् प्राप्ते पञ्चमहायने ।
गुरुः सोमश्च सौम्यश्च श्रेष्ठोऽनिष्टौ [3]कुजासितौ ॥ ५४ ॥

विद्यारम्भे बुधैः प्रोक्तौ मध्यमौ भृगुभास्करौ ।
[4]पूर्वात्रयं श्रुतिद्वन्द्वं विद्यादौ मूलमश्विनी ॥ ५५ ॥

हस्तं शतभिषक्स्वाती चित्रा च मृगपञ्चकम् ।

---

[1] इतः परं मानसोल्लासे :— "विष्णुरुद्रसमाभासं नरकत्राणकारणम्" इत्यधिकः पाठो वर्तते । [2] यथाकुलम्—मानस. [3] कुजस्सितः—मु. [4] पूर्वाद्वयं—ग.

[कलाचार्यलक्षणम्]

अक्रुद्धः शास्त्रमर्मज्ञोऽनालस्यो व्यसनोज्झितः ॥ ५६ ॥
हस्तसिद्धस्तथा वाग्मी कलाचार्यो मतः सताम् ।

[पञ्चमवत्सरादूर्ध्वं बालकस्य कलाचार्यनिकटे समर्पणम्]

पितृभ्यामीदृशस्यैव कलाचार्यस्य बालकः ॥ ५७ ॥
वत्सरात्पञ्चमादूर्ध्वमर्पणीयः कृतोत्सवः ।

[बालके नास्तिक्यस्यात्यन्तनिषिद्धता]

इष्टानामप्यनिष्टानां वरं भवतु मूर्खता ॥ ५८ ॥
नास्तिक्यं दुष्टचेष्टाश्च विद्या विद्यागुरोर्न तु ।
विद्ययापि तया किं वा या नास्तिक्यादिदूषिता ॥ ५९ ॥
स्वर्णेनापि हि किं तेन कर्णच्छेदं करोति यत् ।

[आचार्यस्य शिष्यशिक्षणक्रमः]

आचार्यो मधुरैर्वाक्यैः साभिप्रायावलोकनैः ॥ ६० ॥
शिष्यं शिष्यान्न निर्लज्जं कुर्याद्बन्धनताडनैः ।
मस्तके हृदये वापि प्राज्ञश्छात्रं न ताडयेत् ॥ ६१ ॥
अधोभागे शरीरस्य पुनः किञ्चन शिक्षयेत् ।

[शिष्यापेक्षिता गुणाः]

कृतज्ञाः शुचयः प्राज्ञाः कल्या द्रोहविवर्जिताः ॥ ६२ ॥
गुरुभिः त्यक्तशाठ्याश्च पाठ्याः शिष्या विवेकिनः ।
मधुराहारिणः प्रायो ब्रह्मव्रतविधायिनः ॥ ६३ ॥
[1]कपर्दप्रमुखक्रीडाविनोदपरिहारिणः ।
विनीतेन च शिष्येण पठता भाव्यमन्वहम् ॥ ६४ ॥

---

[1] कन्तुकप्रमुख–मु.

[शिष्यवर्जनीया दोषाः]

गुरुष्वविनयो धर्मे विद्वेषः स्वगुणैर्मदः ।
गुणिविद्वेष इत्येताः तालकूटच्छटाः स्फुटाः ॥ ६५ ॥

[कलाचार्ये शिष्येण हिताचरणं, आत्मलाभनिवेदनं च]

कलाचार्यस्य चाजस्रं [1]पठिता हितमाचरेत् ।
निःशेषमपि चामुष्मै लब्धं लब्धं निवेदयेत् ॥ ६६ ॥

[विशिष्टमेदिनीदानेऽपि गुरावानृण्यस्यानपोहनीयता]

गुरोः सनगरग्रामां ददाति यदि मेदिनीम् ।
तथापि न भवत्येव कथञ्चिदनृणः पुमान् ॥ ६७ ॥

[विनीतभावोपाध्यायोपासनम्]

उपाध्यायमुपासीत तदनुद्धतवेषभृत् ।

[क्षत्रियस्य व्रतबन्धनकालः, विद्यारम्भश्च]

वर्षे गर्भाष्टमे वापि गर्भैकादशकेऽपि वा ॥ ६८ ॥

व्रतबन्धं प्रकुर्वीत क्षत्रियस्य यथोचितम्[2] ।
वेदमध्यापयेत्पुत्रमस्त्रविद्यां च शिक्षयेत् ॥ ६९ ॥

[लब्धविद्यस्य तत्तद्विद्यापरीक्षा]

गजाश्वारोहणाभिज्ञं रथयानविशारदम् ।
शस्त्रशास्त्रकृताभ्यासं गजारोहे सुशिक्षितम् ॥ ७० ॥

---

[1] पठता—मु. [2] एतदनन्तरं—

आर्द्रायां श्रवणे स्वात्यां चित्रायां हस्तमूलयोः ।
पूर्वात्रये च रेवत्यामाश्लेषायां पुनर्वसौ ॥
मृगशीर्षे धनिष्ठायामश्विनीपुष्ययोरपि ।
वारे बुधे गुरौ शुक्रे विद्यारम्भं च कारयेत् ॥—इति मानसोल्लासे पाठः ।

अश्ववाहैस्सुनिष्णातं तत्तद्विद्भिः परीक्षयेत् [1]।
एकैकं क्रमशः पुत्रं परीक्षेत विचक्षणः ॥ ७१ ॥

पाटवं च बलं प्रज्ञां क्रियाकौशलमेव च।
श्रुतौ नीतौ स्मृतौ तर्के काव्ये व्याकरणेऽपि च ॥ ७२ ॥

धनुर्वेदे भूमिबले स्वरशास्त्रे कलास्वपि।
दृढघाते दूरपाते [2] लक्ष्यालक्ष्येषुमोक्षणे ॥ ७३ ॥
त्रिधोत्कर्षं परीक्षेत बलं कोदण्डकर्षणे।
गात्रेषु पाटवं [3] पाददार्ढ्यं तल्लाघवं तथा ॥ ७४ ॥
हस्ते निष्ठुरतां चैव [4] दृष्ट्वा स्थैर्यं च चेतसि।
वितस्तित्रिचतुःपञ्च [5] भेदाख्यानानि धेनुषु ॥ ७५ ॥
खड्गकुन्तगदाचक्रशक्तिशूलपरश्वधे।
परप्रयुक्तघातेषु वञ्चना[6]प्रौढिमीक्षयेत् ॥ ७६ ॥
स्वयंप्रयुक्तघातेषु दृढकर्म परीक्षयेत्।
एवमस्त्रप्रयुक्तं तु कुमाराणां च कौशलम् ॥ ७७ ॥
कृतास्त्राणां परीक्षेत तज्ज्ञैः सह महीपतिः[7]।

[गुणवत्पुत्रलाभेन महीपतेरानन्दातिशयः]

तेषामुत्कर्षमन्विच्छेत्स्वस्मादप्यवनीपतिः ॥ ७८ ॥

गुणाधिकतराः पुत्राः प्राप्यन्ते सुकृताधिकैः[8]।
धर्मज्ञानदयोपेताः पितृशुश्रूषणे रताः ॥ ७९ ॥

---

[1] इतः परम् "विचित्रव्यथने लक्ष्ये चापविद्यां परीक्षयेत्। दूरे दृढं चले लक्ष्यं लाघवं चापमोक्षणे॥ इति मानसोल्लासे अधिकः पाठः। [2] लघुसन्धानमोक्षणे—मान. [3] पादसञ्चारे लाघवं तथा—मान. [4] दृष्टौ—मान. [5] भेदाः ख्याताखिधेनुषु—मान. [6] प्रौढिमा क्षमा—मु. [7] इतः परं "गजाश्वारोहणे तेषां प्रावीण्यं पृथिवीपतिः। कुमाराणां परीक्षेत लक्ष्यलक्षणकोविदः।" इति मानसोल्लासे अधिकः पाठः। [8] इतः परं—"विनीताः श्रुतसंपन्नाः शास्त्रेषु च कृतश्रमाः। गजाश्वारोहणे दक्षा लभ्यन्ते सुकृतैः सुताः"॥ इति मानसोल्लासे अधिकः पाठः।

रूपौदार्यगुणोपेता दृश्यन्ते सुकृतैः सुताः ।
एवं गुणाधिकान् पुत्रान् दृष्ट्वा रोमाञ्चकञ्चुकः[1] ॥ ८० ॥
गजाश्वरत्नभूषाभिस्तोषयित्वा सुखी भवेत् ।

[ उपाध्यायानां ग्रामाद्यनेकबहुमानवितरणम् ]

उपाध्यायेषु सर्वेषु ग्रामपत्तनखेटकम् ॥ ८१ ॥
वस्त्राणि काञ्चनं भूरि मानपूर्वकमर्पयेत् ।

[राजकुमाराणां समावर्तनपूर्वकविवाहः]

सम्प्राप्तयौवनान् पुत्रान् कृतगोदानसत्क्रियान्[2] ॥ ८२ ॥
रूपलावण्यवर्णाढ्यान् लक्षणैः समलङ्कृतान् ।
महाकुलसमुत्पन्नान् समजातिनिरूपितान्[3] ॥ ८३ ॥

कुमारान् प्रापयेत्कन्या धर्मकामार्थसिद्धये ।

[ क्षत्रियस्य विवाहे लग्ननिरूपणम् ]

वायव्ये नैर्ऋते चान्द्रे पौष्णे मैत्रेऽर्कदैवते ॥ ८४ ॥

चित्राभाग्ये तथा वैश्वे चाहिर्बुध्न्यभवात्मके ।
लग्ने तुलायां कन्यायां मिथुने च तदंशके ॥ ८५ ॥

त्रिभिरेतैः प्रकर्तव्यो विवाहस्तु महीभुजा ।
राशिष्वन्येषु यत्नेन कर्तव्यास्ते त्रयोंऽशकाः ॥ ८६ ॥

तेषामलाभे लग्नानां तुलायां वा विचक्षणः ।
लग्नाः शुभग्रहाः शस्ताः सप्ताष्टव्ययवर्जिताः ॥ ८७ ॥

---

[1] इतः परं—“आलिङ्ग्य मूर्ध्न्युपाघ्राय चाशीर्भिरभिनन्दयेत् । पुत्राणां दर्शनं चन्द्रदर्शनादपि सौख्यदम् ॥ पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः । इति ब्रुवन् महीपालो वाग्भिरानन्द्य पुत्रकान्”। इति मानसोल्लासे अधिकः पाठः । [2] इतः परं—“समावर्तनसम्पन्नान् कामभोगसुखोचितान् । इति मानसोल्लासे अधिकः पाठः । [3] इतः परं मानसोल्लासे—विवाहविधिना राजा रत्नभूषणभूषितान्—इत्यधिकः पाठो वर्तते ।

शुक्रं षष्ठे तृतीयेऽपि त्यक्त्वा वैवाहिके विधौ ।
एकादशे द्वितीये च तृतीये शुभदः शशी ॥ ८८ ॥

पापांस्त्रिषष्ठलाभस्थांस्त्यक्त्वा मङ्गलमष्टमे ।
शुक्लपक्षे तिथौ शस्ते शोभनग्रहवासरे ॥ ८९ ॥

कुर्याद्विवाहं भूपालः [1]पुत्रस्याखिल[2]दर्शिनः ।

[विवाहमण्डपपरिष्करणम्]

शोभने सुविशाले च मध्यत्रेदीविराजिते ॥ ९० ॥

[3]पट्टपट्टविताने न्न स्तम्भैः पट्टावकुण्ठितैः ।
तोरणालङ्कृतद्वारे गोमयालिप्तभूमिके ॥ ९१ ॥

पुष्पप्रखरशोभाढ्ये मण्डपे सुमनोहरे ।

[वैवाहिकविधिः]

कृत्वा नान्दीमुखं श्राद्धं संपूज्य कुलदेवताः ॥ ९२ ॥

पुण्याहवाचनं कृत्वा मुहूर्ते [4]च गुणान्विते ।
मधुपर्केण संमान्य सितवस्त्रैर्विभूषितम् ॥ ९३ ॥

मुद्रिकालङ्कृतं पुत्रं वेदीमारोपयेत्सुधीः ।
तण्डुलैः कारयेत्पुञ्जौ पूर्वापर[5]समाश्रितौ ॥ ९४ ॥

सितं दुकूलं तन्मध्ये कल्पयेद्व्यवधानकम् ।
पुत्रं प्राचीमुखं कृत्वा तण्डु[6]लोर्ध्वव्यवस्थितम् ॥ ९५ ॥

पश्चिमाशामुखीं कन्यां पुञ्जस्योपरि वर्तिनीम् ।
उभाभ्यां करयोर्दत्त्वा तण्डुलान् जीरकान्वितान् ॥ ९६ ॥

---

[1] पुत्रस्यामित्रकर्शनः—मान. [2] दर्शनः—मु. [3] यटीपट्ट—मु. [4] गणकोदिते—मान. [5] समस्थितौ—मान. [6] लोपरिवर्तिनम्—मान.

जाते लग्ने तु मध्यस्थं पटमुत्सारयेत्ततः ।
हस्तस्थान् तण्डुलान् कन्याकुमारौ क्षिपतो मिथः ॥ ९७ ॥

परस्परमुखाम्भोजविनिवेशितलोचनौ ।
कन्या दक्षिणं पाणिं कुमारकरमध्यगम् ॥ ९८ ॥

कृत्वा कन्यापिता कन्यां धारापूर्वं समर्पयेत् ।
कुमारं च तथा कन्यां वेष्टयेत्पञ्चतन्तुभिः ॥ ९९ ॥

प्रादक्षिण्यात्पञ्चवारान् कृतं सूत्रं समाहरेत् ।
निष्कासितं प्रयत्नात्तदुभाभ्यां पादयोरधः ॥ १०० ॥

कुङ्कुमेन समालिप्य कङ्कणं तद्विधीयते ।
अनेनैव प्रकारेण कन्यायाः कङ्कणं न्यसेत् ॥ १०१ ॥

ततो होमं प्रकुर्वीत यथोक्तविधिना द्विजः ।
कनिष्ठामङ्गुलीं धृत्वा पत्युः पत्नी व्रजेदनु ॥ १०२ ॥

प्रदक्षिणक्रमेणैव कृत्वा होमं यथाविधि ।
वारत्रयं भ्रमित्वा च सप्त तण्डुलपुञ्जकान् ॥ १०३ ॥

आक्रमेत्पदविन्यासैस्ततः पट्टासने विशेत् ।
वामपार्श्वे विधातव्या पत्युः पत्नी शुभावहा ॥ १०४ ॥

[विवाहे वधूवरयोर्यौतकवितरणम्]

ततो वस्त्राणि रत्नानि काञ्चनं भूषणानि च ।
गृहाश्वमहिषीगांश्च दासीदासान् भुवं बहु ॥ १०५ ॥

दद्यात्पुत्राय तत्पत्न्यै विवाहोत्सवकर्मणि ।

[विवाहे वस्त्रादिभिर्विप्रादितोषणम्]

विप्रांश्च तोषयेत्तत्र वस्त्रकाञ्चनभूषणैः ॥ १०६ ॥

यथार्हं तोषयेदन्यान् धनैर्वस्त्रैश्च भूषणैः ।

[विवाहे सर्वत्र वादित्रादिमङ्गलध्वनिपूरणम्]

वादित्राणां महानादैः शोभनैर्मङ्गलस्वनैः ॥ १०७ ॥

गीतैर्मङ्गलवाद्यैश्च वेदमन्त्रैः शुभावहैः ।
वन्दिभिः पठ्यमानैश्च जयमालाशुभाक्षरैः ॥ १०८ ॥

पूरयेद्व्योम सर्वत्र दिशश्च विदिशस्तथा ।

[विवाहे जनानां दिनचतुष्टयमन्नादिवितरणम्]

तोषयेदन्नपानैश्च ताम्बूलैरितरान् जनान्[1] ॥ १०९ ॥
एवं निरन्तरं कार्यं विवाहेऽह्नां चतुष्टयम् ।

[विवाहे चतुर्थेऽहनि वीथ्यां वरयात्रोत्सवः]

चतुर्थे वासरे रात्रौ कुर्याच्छृङ्गारमूर्जितम् ॥ ११० ॥

वरवध्वोर्यथाशोभं जगल्लोचनहारकम् ।
आहूय करिणीवृन्दं हेमघण्टानिनादितम् ॥ १११ ॥

कर्णचामरशोभाढ्यं सिन्दूरारुणमस्तकम् ।
पुष्पकैः शोभितं [2]कान्तं महामात्यनियोजितम् ॥ ११२ ॥

आरोहार्हं कुमारस्य तत्सेवकजनस्य च ।
उद्दीप्य हस्तदीपांश्च शतशोऽथ सहस्रशः ॥ ११३ ॥

तारालोकमिवातन्वन् मेदिन्यां मेदिनीपतिः ।
कुमारं कृतशृङ्गारं [3]तद्वन्धुकृतमण्डनम् ॥ ११४ ॥

आरोप्य करिणीं यत्नान्मुक्तापुष्पकधारिणीम् ।
आरोपयेद्वशां वश्यां कान्तावृन्दमनिन्दितम् ॥ ११५ ॥

---

[1] एतदनन्तरं मानसोल्लासे — "हर्षयेदासवैर्मद्यैः कान्तावृन्दं मनोहरम्" इत्यधिकः पाठो वर्तते । [2] दान्तं महामात्राभियोजितम् —मान. कान्तं महामात्रनियोजितम्—मु. [3] तद्वधूं कृतमण्डनाम्—मान.

इन्दुवक्त्रं सलावण्यमिन्दीवर[1]समेक्षणम् ।
ततः पञ्चमहाशब्दैर्वाद्यमानैर्व्रजेद्वरः ॥ ११६ ॥

पुरवीथ्यां पुरन्ध्रीभिः पूजितः पुरवासिनाम् ।
वरयात्रां विनिर्वर्त्य समागम्य स्वमालयम् ॥ ११७ ॥

अवतीर्य वशापृष्ठात्प्रणमेज्जनकं [2]नृपम् ।

[विवाहितराजपुत्राणां गुणवत्पुत्रावाप्तिः]

एवं विवाहिताः पुत्रा रमन्ते रमणीयुताः ॥ ११८ ॥

लभन्ते च प्रजाः श्रेष्ठा रूपशीलगुणान्विताः ।

[राज्ञः पुत्रपौत्रादिलालनादिना पुत्रोपभोगः, तदुपसंहारश्च]

तेषां पुत्रांश्च पौत्रांश्च स्वाङ्कमारोप्य लालयन् ॥ ११९ ॥

निर्भरानन्दसन्दोहः पुत्रभोगमवाप्नुयात् ।
एवं शिशून् लालयित्वा शिक्षयित्वा विवाह्य च ॥ ११० ॥

तत्प्रजाः पालयेत्तत्तु पुत्रभोगः प्रकीर्तितः ।

[उक्तरीत्या शिवभूपस्य भद्रपुत्रेण सुतोपभोगः]

इत्युक्तरीत्या रचयन् जातकर्मादिकाः क्रियाः ॥ १२१ ॥

पुत्रस्य भद्रभूपस्य शिवभूमिपतिः शुभाः ।
कन्यां सुलग्ने सञ्जातां सर्वग्रहबलान्विते ॥ १२२ ॥

सर्वाङ्गलक्षणोपेतां कन्यामुद्वाह्य वैभवात् ।
तथा गजानामश्वानां शुभलक्षणशालिनाम् ॥ १२३ ॥

आरोहणे रथानां च कुशलं बुद्धिशालिनम् ।
पुत्रं विलोक्य बहुधा प्रमोदभरितोऽभवत् ॥ १२४ ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले पुत्रोपभोगनिरूपणं नाम सप्तमस्तरङ्गः

---

[1] निमेक्षणम्—मु. दलेक्षणम्—मान. [2] निजम्—मान.

## सप्तमकल्लोले अष्टमस्तरङ्गः

### होराशास्त्रनिरूपणम्

[कुमारसोमशेखरस्य ग्रहबलादिप्रश्नो राज्ञस्तदुत्तरकथनप्रतिज्ञा च]

स्वामिन्! सुलग्ने सञ्जातां कन्यां ग्रहबलान्विते ।
सुलक्षणैः समायुक्तामुद्वहेदिति कीर्तितम् ॥ १ ॥

ग्रहाणां च बलं कीदृक्? यस्मिन् जाता शुभा भवेत् ।
तन्मे समस्तमाचक्ष्व शास्त्रं जातकगोचरम् ॥ २ ॥

पुत्र! यत्र तव प्रीतिस्तद्ब्रवीमि मुदा शृणु ।
बुधैर्भावादयः सर्वे ज्ञेयाः [1] पूर्वोक्तवर्त्मना ॥ ३ ॥

एतच्छास्त्रानुसारेण संज्ञां ब्रूमो विशेषतः ।

[सामान्यतो विशेषतश्च ग्रहवीक्षणानि]

पश्यन्ति सप्तमान् सर्वे शनिजीवकुजाः पुनः ॥ ४ ॥
विशेषतश्च त्रिदशत्रिकोणचतुरश्रगान् ।

[ग्रहाणां शुभत्वाशुभत्वाभ्यां त्रिकोणादिस्थानतो फलप्रदानरीतिः उत्तरोत्तरप्राबल्यं च]

सर्वे त्रिकोणनेतारो ग्रहाः शुभफलप्रदाः ॥ ५ ॥

एतयस्त्रिषडायानां यदि पापफलप्रदाः ।
न दिशन्ति शुभं नृणां [2] सौम्याः केन्द्राधिपा यदि ॥ ६ ॥

[3] क्रूराश्चेदशुभं त्वेते प्रबला उत्तरोत्तरम् ।

[ग्रहाणां स्थानान्तरानुसारतः इतरशुभाशुभग्रहसाहचर्येण फलदानक्रम:]

लग्नाद्व्ययद्वितीयेशौ परेषां साहचर्यतः ॥ ७ ॥

---

[1] सामान्यशास्त्र:-ज्ञा. च. [2] शुभा:-ज्ञा. च. [3] अशुभाश्चे-ज्ञा. च.

स्थानान्तरानुगुण्येन भवतः फलदायकौ ।
भाग्यव्ययाधिपत्येन रन्ध्रेशो न शुभप्रदः ॥ ८ ॥

स एव शुभसन्धाता लग्नाधीशोऽपि चेत्स्वयम्

[ग्रहाणां केन्द्राद्याधिपत्यप्रयुक्तगुणदोषविवेचनम्]

केन्द्राधिपत्यदोषस्तु बलवान् गुरुशुक्रयोः ॥ ९ ॥

मारकत्वेऽपि च तयोर्मारकस्थानसंस्थितिः ।
बुधस्तदनु चन्द्रोऽपि भवेत्तदनु तद्विधः ॥ १० ॥

न रन्ध्रेशत्वदोषस्तु सूर्याचन्द्रमसोर्भवेत् ।
कुजस्य कर्मनेतृत्वप्रयुक्तशुभकारिता ॥ ११ ॥

त्रिकोणस्यापि नेतृत्वे न कर्मेशत्वमात्रतः ।

[राहुकेत्वोः फलप्रदानक्रमः]

यद्यद्भावगतौ वापि यद्यद्भावेशसंयुतौ ॥ १२ ॥

[1]तत्तत्फलानि प्रबलौ प्रदिशेतां [2]तमोग्रहौ ।

[सामान्यशुभयोगफलानि]

केन्द्रत्रिकोणपतयः सम्बन्धेन परस्परम् ॥ १३ ॥

इतरैरप्रसक्ताश्चेद्विशेषशुभदायकाः ।

[साधारणराजयोगः]

केन्द्रत्रिकोणनेतारौ दोषयुक्तावपि स्वयम् ॥ १४ ॥

[3]सम्बन्धमात्राद्बलिनौ भवेतां योगकारकौ ।
निवसेतां व्यत्ययेन तावुभौ धर्मकर्मणोः ॥ १५ ॥

---

[1] तत्फलानि प्रदेयानि—मु. [2] राहुकेतू इत्यर्थः । [3] इदमर्धं मुद्रिते नास्ति ।

एकत्रान्यतरो वापि वसेच्चेद्योग[1]कारकः ।
त्रिकोणाधिपयोर्मध्ये सम्बन्धो येन केनचित् ॥ १६ ॥

केन्द्रनाथस्य बलिनो भवेद्यदि स योगकृत् ।
दशास्वपि भवेद्योगः प्रायशो योगकारिणोः ॥ १७ ॥

दशाद्वयीमध्यगत[2]स्तदायुःशुभकारिणाम् ।
योगकारकसम्बन्धात्पापिनोऽपि ग्रहाः स्वतः ॥ १८ ॥

तत्तद्भुक्त्यनुसारेण दिशेयुर्यौगिकं फलम् ।
यदि केन्द्रे त्रिकोणे वा निवसेतां तमोग्रहौ ॥ १९ ॥

नाथेनान्यतरस्यैव सम्बन्धाद्योगकारकौ ।
केन्द्रत्रिकोणाधिपयोरैक्ये ते योगकारकाः ॥ २० ॥

अस्य त्रिकोणपतिना सम्बन्धो यदि [3]किं परम् ।

[राजयोगभङ्गः]

धर्मकर्माधिनेतारौ रन्ध्रलाभाधिपौ यदि ॥ २१ ॥

तयोः सम्बन्धमात्रेण न योगं लभते नरः ।

[आयुर्दायः]

अष्टमं ह्यायुषः स्थानमष्टमादष्टमं [4]तथा ॥ २२ ॥

तयोरपि व्ययस्थानं मारकस्थानमुच्यते ।
*एवं द्वादशभावानामायुर्मारकचिन्तनम् ॥ २३ ॥

तत्राप्याद्यव्ययस्थानादुत्तरं बलवत्तरम् ।
तदीशितुस्तत्र गतः पापिनस्तेन [5]संयुताः ॥ २४ ॥

---

* इदमर्धमस्माकं (जा. चं.) नास्ति ।

[1] कारकौ–रां. [2] स्तदयुक्शुभं–जा.च. [3] किं पुनः–जा.च. [4] च यथ–मु. जा. च. [5] सङ्गताः–मु.

तेषां दशाविपाकेषु सम्भवेन्निधनं नृणाम् ।
तेषामसम्भवे साक्षाद्व्ययाधीशदशास्वपि ॥ २५ ॥

अलाभे पुनरेतेषां सम्बन्धेन व्ययेशितुः ।
क्वचिच्छुभानां च दशास्वष्टमेशदशासु च ॥ २६ ॥

केवलानां च पापानां दशासु निधनं क्वचित् ।
कल्पनीयं बुधैर्नृणां मारकानामदर्शने ॥ २७ ॥

मारकैः सह संबन्धान्निहन्ता पापकृच्छनिः ।
अतिक्रम्येतरान् सर्वान् भवत्येव न संशयः ॥ २८ ॥

[ग्रहभुक्तिः]

न दिशेयुर्ग्रहाः सर्वे स्वदशासु स्वभुक्तिषु ।
शुभाशुभफलं नृणामात्मभावानुरूपतः ॥ २९ ॥

आत्मसंबन्धिनो ये च ये ये निजसधर्मिणः ।
तेषामन्तर्दशास्वेव दिशन्ति स्वदशाफलम्[1] ॥ ३० ॥

स्वदशायां त्रिकोणेशो भुक्तौ केन्द्रपतेः शुभम् ।
दिशेत्सोऽपि तथा नो चेदसम्बन्धेऽपि पापकृत् ॥ ३१ ॥

[राजयोगप्रारम्भादिः]

आरम्भो राजयोगस्य भवेन्मारकभुक्तिषु ।
[2]प्रथयन्ति तमारब्धं क्रमशः पापभुक्तयः ॥ ३२ ॥

तत्सम्बन्धिशुभानां च तथा पुनरसंयुजाम् ।
शुभानां च समत्वेन चासंयुग्योगकारिणाम् ॥ ३३ ॥

---

[1] एतदनन्तरं जातकचन्द्रिकायां—'इतरेषां दशानाथविरुद्धफलदायिनाम् । तत्तत्फलानुगुण्येन फलान्यूह्यानि भुक्तिषु' ॥ इति वर्तते । [2] निघ्नन्ति च तमारम्भं—जा. च.

[राजयोगे ग्रहभुक्तौ विशेषः]

[1]शुभस्य स्ववियुक्तस्य दशायां [2]योगकारकाः ।
स्वस्वभुक्तिषु यच्छन्ति कुत्रचिद्योगजं फलम् ॥ ३४ ॥

[राहुकेत्वोः योगकृद्भुक्त्यनुसारेण योगफलदायकत्वम्]

[3]तमोग्रहौ शुभारूढा[4]वसम्बद्धौ च केनचित् ।
अन्तर्दशानुरूपेण भवेतां योगकारकौ ॥ ३५ ॥

[शुभाशुभग्रहभुक्तिषु तेषां पापदशानाथसंयोगासंयोगाभ्यां फलभेदः]

पापा यदि दशानाथाः शुभानां [5]तदसंयुजाम् ।
भुक्तयः पापफलदास्तत्संयुक्छुभभुक्तयः ॥ ३६ ॥

भवन्ति मिश्रफलदा भुक्तयो योगकारिणाम् ।
अत्यन्तपापफलदा भवन्ति तदसंयुजाम् ॥ ३७ ॥

सत्यपि स्वेन सम्बन्धे न हन्ति शुभभुक्तिषु ।
यत्रासत्यपि सम्बन्धे मारकः पापभुक्तिषु ॥ ३८ ॥

[शनिशुक्रयोः परस्परदशायां स्वस्वभुक्तौ विनिमयेन विशेषतः शुभाशुभफलसंभवः]

परस्परदशायां स्वभुक्तौ सूर्यजभार्गवौ ।
प्रदिशेतां व्यत्ययेन विशेषेण शुभाशुभम् ॥ ३९ ॥

[मेषादिलग्नादारभ्य ग्रहाणां शुभाशुभत्वाविरोधेन स्वरूपविवरणप्रतिज्ञा]

प्रतिलग्नं समालक्ष्य पूर्वोद्दिष्टाविरोधतः ।
तत्तद्ग्रहस्वरूपाणि क्रमेणैव विवृणमहे ॥ ४० ॥

---

[1] शुभं च स्ववि–जा. च. शुभस्य स्वनियु–मु. [2] योगकारिणः–जा. च.
[3] राहुकेतू इत्यर्थः । [4] वसम्बन्धेन–मु. [5] हन्त्यसत्यपि–जा. च. मु. यदि संयुजाम्–मु.

[मेषलग्नतः ग्रहाणां फलप्रदातृत्वम्]

मन्दसौम्यसिताः पापाः शुभौ गुरुदिवाकरौ ।
न शुभं योगमात्रेण प्रभवेच्छनिजीवयोः ॥ ४१ ॥

परं तु तेन जीवस्य पापित्वमपि सिध्यति ।
कविः साक्षान्निहन्ता स्यान्मारकत्वेन लक्षितः ॥ ४२ ॥

मन्दादयो न हन्तारो भवेयुः पापिनो ग्रहाः ।
शुभाशुभफलान्येवं ज्ञातव्यानि [1]क्रियाभुवः ॥ ४३ ॥

[वृषभलग्नतः ग्रहाणां फलदानक्रमः]

जीवशुक्रेन्दवः पापाः शुभौ शनिदिवाकरौ ।
राजयोगकरः साक्षादेक एवांशुमत्सुतः ॥ ४४ ॥

जीवादयो ग्रहाः पापाः घ्नन्ति मारकलक्षणाः ।
बुधैस्तत्तत्फलान्येवं ज्ञेयानि वृषजन्मनः ॥ ४५ ॥

[मिथुनलग्नतः ग्रहाणां फलदातृता]

भौमजीवारुणाः पापाः एक एव शुभः कविः ।
शनैश्चरेण जीवस्य [2]योगो मेषभुवो यथा ॥ ४६ ॥

[3]नालं [4]शनिर्निहन्तुं तं लक्षणाः पापिनस्त्वलम् ।
ज्ञातव्यानि द्वन्द्वजस्य फलान्येतत्प्रकारतः ॥ ४७ ॥

[कटकलग्नतः ग्रहाणां फलप्रदातृत्वम् ]

भार्गवेन्दुसुतौ पापौ भूसुताङ्गिरसौ शुभौ ।
एक एव भवेत्साक्षाद्भूसुतो योगकारकः ॥ ४८ ॥

न हन्ता [5]कविरन्ये तु पापिनो मारकाह्वयाः ।
कुलीरसम्भवस्यैवं फलान्यूह्यानि सूरिभिः ॥ ४९ ॥

---

[1] मेषलग्नजातस्येत्यर्थः । [2] योगे—ज्यौ. क. [3] शनिः साक्षान्न हन्ता स्यान्मारकत्वेन लक्षितः—ज्यौ. क. नालं शशी—मु. [4] शशी निहन्तुं—मु. [5] रवि—मु.

[सिंहलग्नतः ग्रहाणां फलदातृत्वम्]

रौहिणेयसितौ पापौ कुज एकः शुभावहः ।
प्रभवेद्योगमात्रेण न शुभं गुरुशुक्रयोः ॥ ५० ॥

घ्नन्ति सौम्यादयः पापग्रहलक्षणलक्षिताः ।
एवं फलानि ज्ञेयानि सिंहजस्य मनीषिभिः ॥ ५१ ॥

[कन्यालग्नतः ग्रहाणां फलदातृत्वम्]

कुजजीवेन्दवः पापा एको भृगुसुतः शुभः ।
भार्गवेन्दुसुतावेव भवेतां योगकारकौ ॥ ५२ ॥

[1] न हन्ति कविरन्ये तु मारकाख्याः कुजादयः ।
घ्नन्ति पापाः फलान्यूह्यान्येवं कन्योद्भवस्य हि ॥ ५३ ॥

[तुलालग्नतः ग्रहाणां फलवितरणरीतिः]

जीवार्कमहिजाः पापाः शनैश्चरबुधौ शुभौ ।
भवेतां राजयोगस्य कारकाविन्दुतत्सुतौ ॥ ५४ ॥

कुजो न हन्ति जीवाद्याः परे मारकलाञ्छनाः ।
निहन्तारः फलान्येवं ज्ञातव्यानि तुलाभुवः ॥ ५५ ॥

[वृश्चिकलग्नतः ग्रहाणां फलदानक्रमः]

[2]सौम्यभौमसिताः पापाः शुभ एको निशाकरः ।
सूर्याचन्द्रमसावेव भवेतां योगकारकौ ॥ ५६ ॥

जीवो न हन्ता सौम्याद्या हन्तारो मारकध्वजाः ।
तत्तत्फलानि विज्ञेयान्येवं वृश्चिकजन्मनः ॥ ५७ ॥

---

[1] निहन्ति कविरन्यैर्युङ्मारकाख्याः कुजादयः—ज्यौ. क. [2] बुधशुक्रार्कतनयाः पापाः सुरगुरुः शुभः—ज्यौ. क.

[धनुर्लग्नतः ग्रहाणां फलदानरीतिः]

एक एव कविः पापः शुभौ भौमदिवाकरौ ।
योगो भास्करसौम्याभ्यां स्यान्न हन्तांशुमत्सुतः ॥ ५८ ॥

घ्नन्ति शुक्रादयः पापा मारकत्वोपलक्षिताः ।
ज्ञातव्यानि फलान्येवं विबुधैश्चापजन्मनः ॥ ५९ ॥

[मकरलग्नतः ग्रहाणां फलवितरणक्रमः]

कुजजीवेन्दवः पापाः शुभौ भार्गवचन्द्रजौ ।
स्वयं नैव निहन्ता स्यान्मन्दो भौमादयः परे ॥ ६० ॥

तल्लक्षणा निहन्तारः कविरेकः सुयोगकृत् ।
ज्ञातव्यानि बुधैरेवं फलानि मृगजन्मनः ॥ ६१ ॥

[कुम्भलग्नतः ग्रहाणां फलप्रदानक्रमः]

[1]जीवशुक्रकुजाः पापा एको दैत्यगुरुः शुभः ।
राजयोगकरो भौमः स्वयमेको बृहस्पतिः ॥ ६२ ॥

न हन्ता घ्नन्ति भौमाद्या मारकत्वेन निश्चिताः ।
एवमेव फलान्येतान्यूह्यानि घटजन्मनः ॥ ६३ ॥

[मीनलग्नतः ग्रहाणां फलदानरीतिः]

मन्दशुक्रांशुमत्सौम्याः पापा भौमविधू शुभौ ।
महीसुतगुरू योगकारिणौ नैव भूसुतः ॥ ६४ ॥

मारको मारकाभिख्या मन्दाद्या घ्नन्ति पापिनः ।
इत्यूह्यानि बुधैस्तत्तत्फलानि झषजन्मनः ॥ ६५ ॥

[निर्दिष्टेतरग्रहाणां स्थानादिसाहचर्यात्फलदानक्रमः]

शुभपापात्मकतया निर्दिष्टेभ्यः परे ग्रहाः ।
भवन्ति फलदाः स्थानसाहचर्यानुगुण्यतः ॥ ६६ ॥

---

[1] कुजजीवेन्दवः—ज्यौ. क.

[ग्रहाणां स्थानविशेषसाहचर्यात्तद्दशाभुक्तिषु फलविशेषप्रदत्वम्]

पुत्रदारादिलाभस्य शुभात्मकतया ग्रहाः ।
प्रदिशन्ति शुभा एव स्वदशासु स्वभुक्तिषु ॥ ६७ ॥

[पापग्रहाणां उच्चतया प्राबल्ये लोकानुरोधेन फलप्रदत्वम्]

पापिनश्चेद्ग्रहास्तेषामुच्चत्वे सति किं फलम् ।
बलवत्त्वे घातुकानां यत्फलं लभ्यते हि तत् ॥ ६८ ॥

[भावचिन्ताविधिः]

भावाः सर्वे शुभपतियुता वीक्षिता वा शुभेशैः
तत्तद्भावाः सकलफलदाः पापदृग्योगहीनाः ।
पापाः सर्वे भवनपत[1]यश्चाशुभाश्चेत्तथैव
[2]खेटाः सर्वे शुभमपि फलं निम्नमूढारिहीनैः ॥ ६९ ॥

[3]तत्तद्भावात्त्रिकोणे स्वसुख[4]मदनभे चास्पदे सौम्ययुक्ते
पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ।
[5]भावानां पुष्टिमाहुः सकलशुभकरीमन्य[6]था चेत्प्रणाशो-
मिश्रं [7]मिश्रैर्ग्रहेन्द्रैः सकलमपि तथा मूर्तिभावादिकानाम्
॥ ७० ॥

नाशस्थानगतो दिवाकरकरैर्लुप्तस्तु [8]यद्राशिगो
नीचारा[9]तिगतोऽथ वा यदि भवेत्सौम्यैरयुक्तेक्षितः ।
तद्भावस्य विनाशनं [10]मुनिगणाः शंसन्ति खेटैर्युता-
[11]श्चेदत्रापि फलप्रदो न हि [12]तथा [13]लग्नादिभावाः क्रमात्
॥ ७१ ॥

---

[1] यश्चेदिहाशुभस्तथैव—फल. स. चि. [2] खेटैः सर्वैः शुभफलमिदं नीचमूढारि—फल. [3] तत्तद्भावत्रिकोणे—फल. पा. [4] मदनखेटास्पदे—मु. [5] पापानां—मु. [6] थात्वे प्र—स. चि. [7] मिश्रैर्ग्रहेन्द्राः—मु. [8] यद्भावपो—फल. [9] तिगृहं गतो यदि भवेत्—फल. [10] विज्ञत्रुते तादृग्विधोऽन्योऽस्ति—फल. [11] द्भावोऽपि—फल. [12] शुभश्चोभाशुभग्रहः—फल. [13] मूर्त्यादिभानां क्रमः—स. चि.

यस्माद्यस्माद्भावाद्विर्द्वादशसप्तमस्थिताः सौम्याः ।
तस्मिंस्तस्मिन् वृद्धिः दशमचतुर्थस्थितैस्तद्वत् ॥ ७२ ॥

भ्रातृपः कारको वापि पुत्रपः कारकोऽपि वा ।
कलत्रेशः कारको वा धनपः कारकोऽपि वा ॥ ७३ ॥

यस्य जन्मनि काले तु यावद्ग्रहसमन्वितः ।
तावद्भिर्भ्रातृभिः पुत्रैः कलत्रैश्च भवेद्युतः ॥ ७४ ॥

भ्रातृपुत्रकलत्रेषु तत्तद्भावोपकारकाः ।
रिःफारिरन्ध्रसंस्थाश्चेत्तदीशेन युताश्च वा ॥ ७५ ॥

मन्दाहिशिखिनामेकयुक्तास्तद्वीक्षिताश्च वा ।
भ्रातृपुत्रकलत्राणामभावं तस्य निर्दिशेत् ॥ ७६ ॥

क्रूराः स्वभवनोच्चस्थाः शुभभावेशसंयुताः ।
भावानां तत्र वृद्धिः स्याद्विपरीते विपर्ययः ॥ ७७ ॥

[आयुर्योगाः]

विलग्नहोरालग्नोत्थैरायुर्योगानथ ब्रुवे ।
लग्नादेकघटीमात्रं योनिलग्नं दिने दिने ॥ ७८ ॥

एवं तु घटिकालग्नं निर्दिशेद्दैववित्तमः ।
तथा सार्धद्विघटिकामितं कालाद्विलग्नभाक् ॥ ७९ ॥

प्रयाति लग्नं तन्नाम होरालग्नमुदीरितम् ।
चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरस्थिराः ॥ ८० ॥

द्वन्द्वे स्थिरोभयचरा दीर्घमध्याल्पकायुषः ।
लग्नशरन्ध्रपत्योश्च लग्नेन्द्वोर्लग्नहोरयोः ॥ ८१ ॥

सूत्रमेतत्प्रयुञ्जीत संवादादायुरुच्यते ।
राहुः केतुः पितरि वा नीचभे वापि संस्थिते ॥ ८२ ॥

पूर्णमल्पतरं ज्ञेयं विपरीते विपर्ययः ।

[राजयोगकारका ग्रहाः, निर्याणयोगश्च]

द्विनेशाघिनशुक्रौ च राजयोगकराः स्मृताः ॥ ८३ ॥

कारकस्य त्रिकोणर्क्षे यदा चरति साथवा ।
तदा तेषां तु निर्याणमपमृत्युस्तथाश्रयेत् ॥ ८४ ॥

पत्नीभावात्स्वस्य पितुश्चराभ्यां धनभावतः ।
मुकुरर्क्षदशां मातुरानयेद्बुद्धिमान्नरः ॥ ८५ ॥

तस्मात्तदीशपर्यन्तसङ्ख्यामत्र दशां विदुः ।

[रोगप्राप्तियोगः]

देहाधिपेन पापे वा षष्ठाष्टव्ययगेऽपि वा ॥ ८६ ॥

न देहसुखमाप्नोति शत्रवे तत्र रोगवान् ।
देहे पापे देहपे च बलहीने च रोगवान् ॥ ८७ ॥

[राजपूज्यत्वयोगः]

वाहनाधिपतेर्देहसम्बन्धो भाग्यपेन चेत् ।
गुरुणापि च सन्दृष्टो राजपूज्यो भवेद्ध्रुवम् ॥ ८८ ॥

[कलत्रविचारः]

कुटुम्बपुत्रपौ पापयुक्तौ शुक्रेण संयुतौ ।

षष्ठादित्रिषु संस्थौ च तावत्सङ्ख्यकलत्रहा ॥ ८९ ॥
कलत्रकारकः केन्द्रं त्रिकोणं वा गतो यदि ।

स्वस्थानं तेषु चैको वा गत एकविवाहकृत् ॥ ९० ॥

[गृहयोगः]

गृहाधिपेन देहस्य देहपेन गृहस्य वा ।
योगो भवति चेत्तस्य वेश्मलाभः सुखाद्भवेत् ॥ ९१ ॥

[नेत्रदोषयोगः]

देहेशो नेत्रसम्बद्धः सशुक्रो नेत्रहानिदः ।
आदित्येन तु जात्यन्धः चन्द्रेण तु निशान्धता ॥ ९२ ॥

[मूकत्वयोगः]

वाक्स्थानाधिपवागीशौ षष्ठारित्रिषु संस्थितौ ।
षष्ठादिस्थानपे क्षीने मूकत्वं च भवेद्ध्रुवम् ॥ ९३ ॥

[धनलाभादियोगः]

धनाधिपे लाभगते लाभेशे धनमागते ।
तादृशौ केन्द्रगौ वापि धनलाभ उदीर्यते ॥ ९४ ॥

वित्तलाभाधिपे स्वोच्चे स्वक्षेत्रे मित्रभेऽपि वा ।
लग्नात्केन्द्रे त्रिकोणे वा वित्तलाभं विनिर्दिशेत् ॥ ९५ ॥

वित्तेशे चारिभावस्थे व्ययेशे वित्तगेऽपि वा ।
लाभेशेऽन्त्यादिरन्ध्रस्थे धनहानिं वदेद्बुधः ॥ ९६ ॥

[वाहनयोगः]

चन्द्रेण देहपेनैव देहसम्बन्धमाश्रितः ।
वाहनाधिपतिस्तस्य वाहनं भवति ध्रुवम् ॥ ९७ ॥

[विद्यालाभादियोगः]

विद्यास्थानाधिपे जीवे बुधे केन्द्रत्रिकोणगे ।
विद्यालाभो विनिर्देश्यः शास्त्रेष्वपि च वक्तृता ॥ ९८ ॥

षष्ठादिस्थानगे वापि विद्याहीनो भवेद्ध्रुवम् ।

[सिंहासनपतित्वयोगः]

भाग्यवाहनदेहेशाः कर्मस्थाः तत्पतिस्तनौ ॥ ९९ ॥

लग्नं पश्यन्ति च यदा सिंहासनपतिर्भवेत् ।

[अश्ववाहनयोगः]

चन्द्रवाहेशदेहानां सम्बन्धे त्वश्ववाहनम् ॥ १०० ॥

[आन्दोलिकाहेमवाहनयोगौ]

शुक्रेणान्दोलिकासिद्धिर्गुरुणा हेमवाहनम् ।

[भाग्ययोगः]

भाग्यपो वाहनेशश्च लाभस्थाने यदि स्थितौ ॥ १०१ ॥

पश्यन्तौ वाहनस्थानं तस्य भाग्यं भवेद्ध्रुवम् ।

[हेमवाहनयोगान्तरचन्द्रयोगौ]

भाग्यपो वाहनस्थश्चेद्दृष्टो वापि शुभैर्युतः ॥ १०२ ॥

शुभदृष्टियुतो वापि [1]गुरुशुक्रेण संयुतः ।
हेमवाहनमाप्नोति चन्द्रवान् चन्द्रयोगतः ॥ १०३ ॥

[छत्रचामरयोगौ]

सप्तमेशबलाच्छत्रं चामरं शुक्रयोगतः ।

[आन्दोलिकायोगान्तरम्]

वाहनाधिपतिर्भाग्ये तदीशः केन्द्रगो यदि ॥ १०४ ॥

शुभक्षेत्रे शुभयुते लग्नेशे चापि केन्द्रगे ।
आन्दोलिका भवेत्तस्य

[देववाहनयोगः]

लग्नपे वाहने स्थिते ॥ १०५ ॥

भाग्यपो वाहनेशश्च शुभश्चेद्देववाहनम् ।

---

[1]गुरुभार्गवसंयुतः—मु.

[ अश्वप्राप्तियोगान्तरम् ]

धनेशे वाहनेशे च केन्द्रस्थे शुभसंयुते ॥ १०६ ॥

चन्द्रयोगो यदि भवेदश्वप्राप्तिर्न संशयः ।

[निबिलाभयोगः]

लाभेशे वाहनं याते लग्ने वाहेश्वरे शुभे ॥ १०७ ॥

दृष्टे वा वाहनस्थानं निबिलाभो भवेन्नृणाम् ।

[पूर्वोक्तयोगानां स्त्रीपुंसाधारण्यम् ]

यदुक्तं तु फलं पूर्वं तत्तत् स्त्रीपुंसयोः समम् ॥ १०८ ॥

[स्त्रीजातके विशेषाः]

एतावान् वर्तते तत्र विशेषः स तु कथ्यते ।
वैधव्यं निधनगृहे पतिसौभाग्यं सुखं च जामित्रे ।
सौन्दर्यं लग्नगृहे विचिन्तयेत्पुत्रसम्पदं नवमे ॥ १०९ ॥

एषु स्थानेषु युताः सौम्याः शुभदाः बलान्विता ज्ञेयाः ।
क्रूरास्त्वनिष्टफलदा भवनेशविवर्जिताः सदा चिन्त्याः ॥११०॥

अष्टमे शुभसंयुक्ते धने पापग्रहान्विते ।
कन्या सुमङ्गली ज्ञेया मदे पापविवर्जिते ॥ १११ ॥

सप्तमे नवमे सौम्ये लाभे भूसूनुसंयुते ।
वस्तुक्षेत्रधनैर्युक्ता पुत्रपौत्रादिसम्पदा ॥ ११२ ॥

चतुर्थे दशमे सौम्ये चाष्टमे पापवर्जिते ।
कन्या सुमङ्गली ज्ञेया व्यत्यये विधवा भवेत् ॥ ११३ ॥

जामित्रे गुरुसंयुक्ते पूर्णे शीतकरे तनौ ।
मदेशे बलसंयुक्ते [1]स्वायुःश्रीपुत्रसंयुता ॥ ११४ ॥

---

[1] दीर्घायुःश्रीव्रतैर्युता–मु.

काह्लीके

धने शुभग्रहैर्युक्ते चाष्टमे पापवर्जिते ।
मदेशे शुभसंदृष्टे सौमङ्गल्यादिकं भवेत् ॥ ११५ ॥

हृयाङ्गे पञ्चमे जीवे लाभे रविसितान्विते ।
चतुर्थेऽष्टमगे शुद्धे सौमङ्गल्यादिसम्पदः ॥ ११६ ॥

लग्नात्त्वष्टमगे पापे मदेशे [1]पापनीचगे ।
विधवा सा भवेन्नारी सदा क्लेशसमन्विता ॥ ११७ ॥

धनव्ययगतैः पापैरष्टमे सप्तमेऽपि वा ।
द्यूने शुभाशुभैर्युक्ते सपापश्चाष्टमे शशी ॥ ११८ ॥

वित्ते पापग्रहैर्युक्ते सा नारी विधवा भवेत् ।
मदेशे स्वोच्चगे कोणे शुभग्रहनिरीक्षिते ॥ ११९ ॥

शुभक्षेत्रे शुभांशे वा स्थिते सौमङ्गलं भवेत् ।
पञ्चमे नवमे सौम्ये व्यये भार्गवसंयुते ॥ १२० ॥

सुमङ्गली च सुभगा राजपत्नीत्वमाप्नुयात् ।
गुरौ शुक्रे मृतापत्या मृतगर्भा च मङ्गले ॥ १२१ ॥

अष्टमस्था ग्रहा नूनं न स्त्रियाः शोभनप्रदाः ।
भवन्ति षट् सुतास्तस्याः पञ्चमस्थो यदा रविः ॥ १२२ ॥

मङ्गले च त्रयः पुत्रा गुरौ पञ्च प्रकीर्तिताः ।
पञ्चमस्थे निशानाथे स्त्रियाः कन्याद्वयं भवेत् ॥ १२३ ॥

बुधे कन्याश्चतस्रस्तु शुक्रे [2]सप्त च कन्यकाः ।
षडेव कन्या जायन्ते धर्मस्थाने यदा स्थितः ॥ १२४ ॥

सप्तमे च यदा राहुस्त्रयः पुत्रा भवन्ति हि ।
कर्कटे मध्यमश्चान्त्यः कीटे प्रथममध्यमौ ॥ १२५ ॥

मकरे प्रथमो भागो मीनेऽन्त्यांशाः स्त्रियः कलाः ।

---

[1] नीचपापगे–मु. [2] सप्तैव–मु.

[स्त्रीपुंसयोर्वयोऽनुगुण्येन फलकालः]

आषोडशाब्दात्पुरतश्च पित्रोः
फलं तदूर्ध्वं [1]शुभ एव भुङ्क्ते ।
स्त्री चेन्नवाब्दात्परतश्च भर्तु-
र्विभर्तृका चेत्स्वयमेव भुङ्क्ते ॥ १२६ ॥

[ग्रहदृष्टियोगात्स्त्रीपुंसयोर्दैहिकचिह्नानि]

ग्रहाणां दृष्टियोगाद्यैर्नानारूपाणि विग्रहे ।
चिह्नान्यपि च दृश्यन्ते स्त्रीणां पुंसां पृथक् पृथक् ॥ १२७ ॥

[होरासंग्रहनिगमनम्]

जातकेऽन्यतरे योगा दर्शिताः पूर्वसूरिभिः ।
मार्गप्रदर्शनं चात्र कृतं [2]सङ्ग्रहकाङ्क्षिभिः ॥ १२८ ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले होराशास्त्रनिरूपणं नामाष्टमस्तरङ्गः

---

## सप्तमकल्लोले नवमस्तरङ्गः

### स्त्रीलक्षणनिरूपणम्

[कुमारस्य स्त्रीपुरुषलक्षणप्रश्नः, महीपतेः स्त्रीलक्षणोक्तिप्रतिज्ञा च]

*होराशास्त्रं समुद्दिष्टमाकर्ण्यानन्दितोऽभवम् ।
स्त्रीणां पुंसां च देहेषु सन्ति लक्ष्माण्यनेकधा ॥ १ ॥

इत्याख्यातमभूतपूर्वमपूर्वसुगुणार्णव ! ।
लक्षणानि पुनः कानि ? श्रोतुं मे वर्तते स्पृहा ॥ २ ॥

---

* अस्मिन् प्रकरणे अपेक्षिता बहवः श्लोकाः सामुद्रतिलकादुद्धृत्य टिप्पण्यां योजिताः, तत्र तत्र पाठान्तराणि च ततो योजितानि ।

[1] सुत एव–मु. [2] दर्शनका–मु.

तानि ब्रूहि कृपाम्भोधे ! पूरयास्मदभीप्सितम् ।
पुत्र ! तत्रादितः स्त्रीणामङ्गलक्ष्माणि चक्ष्महे ॥ ३ ॥

[स्त्रीलक्षणानां सुखसमृध्यर्थता, ततः तत्प्रथमनिरूपणीयता च]

सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि ।
अतः सुखसमृध्यर्थमादौ लक्षणमीर्यते ॥ ४ ॥

[वपुराद्यष्टविधलक्षणभूमिका]

वपुरावर्तगन्धाश्च छाया सत्त्वं स्वरो गतिः ।
वर्णश्चेत्यष्टधा प्रोक्ता बुधैर्लक्षणभूमिका ॥ ५ ॥

[पादादिशिरोरुहान्तशुभाशुभलक्षणोक्तिप्रतिज्ञा]

[1]पादस्य तलमारभ्य यावन्मौलिरुहाः क्रमात् ।
शुभाशुभानि वक्ष्यामि लक्षणान्यधुना शृणु ॥ ६ ॥

[स्त्रीणां पादादिमूर्धजान्तानि षट्षष्टिलक्षणस्थानानि]

आदौ पादतले रेखास्ततोऽङ्गुष्ठाङ्गुलीनखाः ।
पृष्ठं गुल्फद्वयं पार्ष्णिजङ्घारोमाणि जानुनी ॥ ७ ॥

ऊरू कटिनितम्बस्फिग्भगो जघनवस्तिगे ।
नाभिः कुक्षिः पार्श्वयुग्मोदरमध्यवलित्रयम् ॥ ८ ॥

रोमाली हृदयं वक्षो वक्षोजद्वयचूचुकम् ।
[2]जत्रुस्कन्धौ च कक्षौ द्वौ मणिबन्धकरद्वयम् ॥ ९ ॥

पाण्योः स्थलं पाणिपृष्ठं रेखाङ्गुष्ठाङ्गुलीनखाः ।
पृष्ठं कृकाटिका कण्ठचुबुके च हनुद्वयम् ॥ १० ॥

कपोलौ वक्त्रमधरोत्तरोष्ठद्विजजिह्विकाः ।
घुटिका तालुहसिता नासिका क्षुतमक्षिणी ॥ ११ ॥

---

[1] आपादतल—सा. ति. [2] जत्रुस्कन्धांसवक्षोजौ—सा. ति.

पक्ष्मभ्रूकर्णफालानि मौलिसीमन्तमौलिजाः ।
षष्टिः षडुत्तरा योषिदङ्गलक्षण[1]सत्खनिः ॥ १२ ॥

[पादतलस्थशुभाशुभलक्षणानि]

स्त्रीणां पादतलं स्निग्धं मांसलं [2]मृदुलं [3]मृदु ।
अस्वेदमुष्णमरुणं बहुभाग्योचितं स्मृतम् ॥ १३ ॥

रूक्षं विवर्णं परुषं खण्डितं [4]प्रतिबिम्बकम् ।
शूर्पाकारं [5]विशुष्कं च दुःखदौर्भाग्यसूचकम् ॥ १४ ॥ *

[स्त्रीणां पादतलस्थिताः शुभाशुभरेखाः]

चक्रस्वस्तिकशङ्खाब्जध्वजमीनातपत्रवत् ।
यस्याः पादतले रेखाः सा भवेत् क्षितिपाङ्गना ॥ १५ ॥ †

रेखाः स्युः सर्पकाकाभा दुःखदारिद्र्यसूचिकाः । ‡

---

* एतदनन्तरं सामुद्रतिलके—

यस्याः समतलौ पादौ समहीनाङ्गुली क्रमात् ।
सर्वं प्रतिष्ठितौ भूमौ सा नारी सुखमेधते ॥

—इत्यधिकः पाठो वर्तते ।

† एतदनन्तरं (सा. ति.)—भवेदखण्डभोगा या रूर्ध्वा मध्याङ्गुलिं गता ।

—इदमधिकं दृश्यते ।

‡ एतदनन्तरं सा. ति.—

अङ्कुशं मुसलं यस्याः पादे स्याद्धर्ममानकम् ।
प्रशस्ता सा भवेन्नारी राजानं लभते पतिम् ॥

यस्याः पादतले रेखा तर्जनीषु प्रकाशते ।
भर्तारं लभते शीघ्रं क्रियाकर्त्री च जायते ॥

—इत्यधिकः पाठो दृश्यते ।

[1] मीरितम्—सा. ति. [2] पृथुलं शुभम्—सा. ति. [3] तथा—मु.
[4] प्रतिबिम्बितम्—मु. [5] विशुष्कं—सा. ति.

[स्त्रीणां अङ्गुष्ठशुभाशुभलक्षणानि]

[1]उन्नतो मांसलोऽङ्गुष्ठो वर्तुलोऽतुलभोगदः ॥ १६ ॥

वक्रो ह्रस्वश्च [2]चिपिटः सुखसौभाग्यभञ्जकः ।
विधवा विपुलेन स्याद्दीर्घाङ्गुष्ठेन [3]दुर्भगा ॥ १७ ॥ *

[स्त्रीणां पादाङ्गुलिलक्षणम्]

मृदुलाङ्गुलयः शस्ता घना वृत्ताः समुन्नताः ।
दीर्घाङ्गुलीभिः कुलटाः कृशाभिरतिनिर्धनाः ॥ १८ ॥

अल्पायुष्या च ह्रस्वाभिः भुग्नाभिर्भुग्नवर्तिनी ।
चिपिटाभिर्भवेद्दासी विरलाभि[4]र्दरिद्रता ॥ १९ ॥

परस्परसमारूढा यथाङ्गुल्यो भवन्ति हि ।
हत्वा बहूनपि पतीन् परप्रेष्या [5]तथा भवेत् ॥ २० ॥

यस्याः प्रतिसमायान्त्या रजो भूमेः समुच्चलेत् ।
[6]सा पांसुला प्रजायेत कुलत्रयविनाशिनी ॥ २१ ॥

यस्याः कनिष्ठिका भूमिं न गच्छन्त्यास्तु [7]पथि स्पृशेत् ।
सा निहत्य पतिं [8]योषा द्वितीयं कुरुते पतिम् ॥ २२ ॥

अनामिका मध्यमा च यस्या भूमिं न संस्पृशेत् ।
पतिद्वयं निहन्त्याद्या द्वितीया तु पतित्रयम् † ॥ २३ ॥

---

* एतदनंतरं सा. ति.—अङ्गुष्ठेनातिरिक्तेन भर्त्रा चैव हि मान्यते ।—इत्यधिकः पाठो दृश्यते । † इतः परं सा. ति.—पतिहीनत्वकारिण्यौ हीने ते द्वे इमे यदि । अधिकः पाठः ।

[1] अनम्भो–सा. ति. [2] विकटः–सा. ति. [3] दुःखभाक्–सा. ति. [4] दरिद्रिणी–सा. ति. [5] च सा भवेद्–सा. ति. [6] षडङ्गुला–मु. [7] परिस्पृशेद्–सा. ति. [8] योगाद्–मु.

प्रदेशिनी भवेद्यस्या अङ्गुष्ठादतिरेकिणी ।
[1]कन्यैव कुलटा सा स्यादेष एव विनिश्चयः* ॥ २४ ॥

---

* एतदुपरि सा. ति. अधिकः पाठः—

अल्पवृत्तैः पतिं हन्याद्वृत्तैः पतिव्रता ।
उन्नतैश्च ध्रुवं सौख्यं मांसलैश्च तथैव च ॥
सुवृत्तैः पद्मवर्णैश्च पुत्रवत्यः स्त्रियः स्मृताः ।
मध्या चानामिका यस्याः अङ्गुष्ठं चातिवर्तते ॥
दुःशीला दुर्भगा ज्ञेया तस्मात्तां परिवर्जयेत् ।
यस्या न स्पृशते भूमिं अङ्गुली च कनिष्ठिका ॥
भर्तारं प्राप्य तं हत्वा द्वितीयेन सह स्थिता ।
यस्यास्त्वनामिका ह्रस्वा तां विदुः कलहप्रियाम् ॥
पादे त्वनामिका यस्या यदि न स्पृशते महीम् ।
तृतीयं पुरुषं हत्वा चतुर्थेन सुसंस्थिता ॥
पादे मध्यमिका यस्या यदि न स्पृशते महीम् ।
नेयं पत्यन्तिके जाया परभार्या भविष्यति ॥
पादप्रदेशिनी यस्या अङ्गुष्ठं समतिक्रमेत् ।
वक्रो यस्याः पदेऽङ्गुष्ठो ह्रस्वा मध्यमिकाङ्गुलिः ॥
दुर्भगा दुःखशीला च तस्मात्तां परिवर्जयेत् ।
अङ्गुष्ठं समतिक्रम्य यस्याः पादे प्रदेशिनी ॥
न सा रमति भर्तारं राजानं रमते सदा ।
पादे मध्यमिका यस्या भूमिं न स्पृशते यदि ।
वामपादे भवेत्कन्या राजपत्नी भविष्यति ॥
पादे कनिष्ठिका यस्याः उन्नता च भवेद्यदि ।
न सा पतिगृहे तिष्ठेत् स्वच्छन्दा कामरूपिणी ॥
यत्पादाङ्गुलयः क्षोणीं कनिष्ठाद्याः स्पृशन्ति न ।
एकद्वित्रिचतुःसङ्ख्यान् प्रक्रमाद्रमते पतीन् ।
दीर्घाङ्गुली च या नारी दीर्घायुष्यमवाप्नुयात् ॥

[1] अन्यैश्च—सा. ति.

[ स्त्रीणां नखशुभलक्षणम् ]

स्निग्धाः समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः।

[ स्त्रीणां पादपृष्ठयोः शुभाशुभचिह्नानि ]

राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् ॥ २५ ॥

अस्वेदमशिराढ्यं च मांसलं मसृणं मृदु ।
दरिद्रा मध्यनम्रेण सिरालेन सदाध्वगा ॥ २६ ॥

रोमाढ्येन भवेद्दासी निर्मांसेन च दुर्भगा । *

[स्त्रीणां शुभाशुभगुल्फलक्षणानि]

गूढौ गुल्फौ शुभौ प्रोक्तौ वसिरालौ सुवर्तुलौ ॥ २७ ॥

[1] †स्थपुटौ शिथिलौ दृश्यौ स्यातां दौर्भाग्यसूचकौ

[स्त्रीणां शुभाशुभपार्ष्णिलक्षणानि]

समपार्ष्णिः शुभा नारी मृदुपार्ष्णिश्च दुर्भगा ॥ २८ ॥

[2] ‡ कुलटोन्नतपार्ष्णिश्च दीर्घपार्ष्णिश्च दुःखभाक् ।

[स्त्रीणां शुभाशुभजङ्घाचिह्नानि]

रोमहीने समे [3]स्निग्धे जङ्घे च क्रमवर्तुले ॥ २९ ॥

सा राजपत्नी भवति विसिरे सुमनोहरे ।

---

* इतः परं सा. ति. । अधिकः पाठः —कूर्मपृष्ठनिभे यस्याः पादपृष्ठे सुपूजिता। † इतः परं सा. ति. अधिकः पाठः—गुल्फौ च महिषाकारौ वधं बन्धमवाप्नुयात् । निगूढगुल्फा या नारी सा नारी सुखमेधते ॥ ‡ इतः पूर्वं सा. ति. अधिकः पाठः—दुःशीलोन्नतपार्ष्णिश्च महापार्ष्णिश्च मध्यमा । दीर्घपार्ष्णिः परिक्लिष्टा समपार्ष्णिस्तु शोभना ।

[1] सुस्पष्टौ. [2] पुरन्ध्री नतपार्ष्णिश्च—सा.ति. [3] जङ्घे सुस्निग्धे समवर्तुले—सा.ति.

[स्त्रीणां शुभाशुभजङ्घारोम]

एकरोमा राजपत्नी द्विरोमा सुखिनी सदा ॥ ३० ॥

त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक् ।

[स्त्रीणां शुभाशुभजानुलक्षणानि]

* वृत्तं पिशितसंमग्नं जानुयुग्मं प्रशस्यते ॥ ३१ ॥

निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् ।

[स्त्रीणां शुभाशुभोरुलक्षणानि]

विसिरैः करभाकारैरूरुभिर्मसृणैर्घनैः ॥ ३२ ॥

सुवृत्तै रोमरहितै[1]र्भवेयुर्भूपवल्लभाः ।
वैधव्यं [2]रोमसंयुक्तैर्दौर्भाग्यं चिपिटैरपि ॥ ३३ ॥

मध्यछिद्रैर्महादुःखं रूक्षत्वग्भिर्दरिद्रता ।

[स्त्रीणां शुभाशुभकटिलक्षणानि]

† चतुर्भिरङ्गुलैः शस्ता कटिर्विंशतिसंयुतैः ॥ ३४ ॥

समुन्नतनितम्बाढ्या चतुरश्रा मृगीदृशाम् ।
विनता चिपिटा दीर्घा निर्मांसा सङ्कटा कटिः ॥ ३५ ॥

ह्रस्वा रोमयुता नार्या दुःखवैधव्यसूचिकाः ।

---

* इतः पूर्वं सा. ति. अधिकः पाठः—मांसलं समयुक्तं वा जानुभिः कदलीसमम् । † इतः पूर्वं सा. ति. अधिकः पाठः—समोन्नता च पृथुला कटिः स्त्रीणां निगद्यते ।

[1] भवेद्भूपतिवल्लभा—सा. ति. [2] रोमभिर्युक्तै—सा. ति.

[स्त्रीणां शुभाशुभनितम्बलक्षणानि]

नितम्बबिम्बौ नारीणामुन्नतौ मांसलौ [1]मृदू ॥ ३६ ॥
महाभोगाय संप्रोक्तौ [2] तदन्यौ दुःखदौ मतौ ।

[स्त्रीणां शुभस्फिग्लक्षणानि]

कपित्थफलवद्वृत्तौ पृथुलौ मांसलौ घनौ ॥ ३७ ॥
स्फिजौ वलि[3]विनिर्मुक्तौ रतिसौख्यविवर्धनौ ।

[शुभाशुभभगलक्षणानि]

शुभः कमठपृष्ठाभो गजस्कन्धोपमो भगः ॥ ३८ ॥

वामोन्नतस्तु कन्यासूः पुत्रसूर्दक्षिणोन्नतः ।
आखुरोमा गूढमणिः [4]सुश्लिष्टः संहतः पृथुः ॥ ३९ ।

[5]तुङ्गः कमलवर्णाभः शुभोऽश्वत्थदलाकृतिः ।
कुरङ्गखुररूपोत्थचुल्लीकोटरसन्निभः ॥ ४० ॥

रोमशो [6]विवृतास्यश्च [7]दृश्यनासोऽतिदुर्भगः ।
शङ्खावर्तो भगो यस्याः सा गर्भमिह नेच्छति ॥ ४१ ॥

चिपिटः खर्पकाकारः किङ्करीपददो भगः ।
वंशवेतसपत्राभो [8]गजरोमोच्चनासिकः ॥ ४२ ॥

विकटः कुटिलाकारो लम्बगल्लः श्लथोऽशुभः ।

[शुभाशुभजघनचिह्नानि]

भगस्य फालं जघनं विस्तीर्णं तुङ्गमांसलम् ॥ ४३ ॥

---

[1] पृथू–मु. [2] तदस्यां: शर्मणे मतौ–सा. ति. [3] विनिर्मुक्कावतिसौख्य–ग्रा.
[4] सस्निग्धः–सा. ति. [5] पिङ्गलः पद्मवर्णाभः–सा. ति. [6] विरलो यस्याः सा नारी सुभगा भवेत्–सा. ति. [7] द्रव्यनाशो–मु. [8] राजिरोमोच्च–मु.

पृथुलं मृदुरोमाढ्यं दक्षिणावर्तमीडितम् ।
वामावर्तं च निर्मांसं भुग्नं वैधव्यसूचकम् ॥ ४४ ॥

संकटं स्थपुटं रूक्षं जघनं दुःखदं सदा ।

[शुभाशुभवस्तिलक्षणानि]

वस्तिः प्रशस्ता विपुला मृद्वी स्तोकं समुन्नता ॥ ४५ ॥

रोमशा च शिराला च रेखाङ्का नैव शोभना ।

[शुभाशुभनाभिलक्षणानि]

गम्भीरा दक्षिणावर्ता नाभिः स्यात्सुखसम्पदे * ॥ ४६ ॥

वामावर्ता समुत्ताना व्यक्तग्रन्थिर्न शोभना † ।

[शुभाशुभकुक्षिचिह्नानि]

सूते सुतान् बहून्नारी पृथुकुक्षिः सुखास्पदम् ॥ ४७ ॥

क्षितीशं जनयेत्पुत्रं मण्डूकाभेन कुक्षिणा ।
उन्नतेन वलीभाजा सावर्तेनापि कुक्षिणा ॥ ४८ ॥

वन्ध्या प्रव्रजिता दासी क्रमाद्घोषा भवेदिह ।

---

* इतः परं सा. ति.—

आवर्तवृत्तगम्भीरा नाभिर्यासां सदा शुभा ।
पद्माकारा तु या नाभिर्युवती सुखमेधते ॥
मेखला स्वर्णभा यस्याः नाभिदेशे तु वर्तुला ।
सा स्त्री भवति कल्याणी राजानं पतिमाप्नुयात् ॥
सुवर्णरोमयुक्ता या नाभिश्च त्रिवलीयुता ।
नरेन्द्रस्य तु सा भार्या भवेदेव न संशयः ॥—इत्यधिकः पाठः ।

† इतः परं सा. ति.—

निम्ननाभिः सुखकरी समनाभिर्दरिद्रिणी ।
शुष्यन्नाभिस्तथा वापी सूक्ष्मनाभिरपुत्रिणी ॥—इत्यधिकपाठः ।

[शुभाशुभपार्श्वलक्षणानि]

समैः समांसैर्मृदुभिर्योषिन्मग्नास्थिभिः शुभैः ॥ ४९ ॥

पार्श्वैः सौभाग्यसुखयोर्निदानं स्यादसंशयम् ।
यस्या दृश्ये सिरे पार्श्वे उन्नते रोमसंयुते ॥ ५० ॥

अनपत्या च दुःशीला सा भवे[1]द्दुःखशेवधिः ।

[शुभाशुभोदरलक्षणानि]

उदरेणालि[2]तुच्छेन विसिरेण मृदुत्वचा ॥ ५१ ॥

योषिद्भवति भोगाढ्या नित्यं मृष्टान्नसेविनी ।
कुम्भाकारं दरिद्रायाः जठरं च मृदङ्गवत् ॥ ५२ ॥

कूष्माण्डाभं यवाभं वा दुष्पुत्रो जायते स्त्रियाः ।
सुविशालोदरा नारी निरपत्या च दुर्भगा ॥ ५३ ॥

प्रलम्बजठरा हन्ति श्वशुरं चापि देवरम् ।
मध्यक्षामा च सुभगा भोगाढ्या [3]सुवलित्रया* ॥ ५४ ॥

---

* इतः परं सा. ति. अधिकः पाठः—

ऋक्षवानरकुक्षिर्या सा नारी निन्दिता बुधैः ।
उदरेणातिगूढेन विसिरेण मृदुत्वचा ।
योषिद्भवति भोगाढ्या नित्यं मृष्टान्नसेविनी ।
मण्डूककुक्षिर्या नारी न्यग्रोधपरिमण्डला ।
एकं जनयते पुत्रं स च राजा भविष्यति ।
सिंहोदरं भवेद्यस्याः मण्डूकोदरपूजिता ।

[शुभमध्यलक्षणम्]

मध्ये क्षामा च सुभगा भोगाढ्या सुवलित्रया ।

[1] दुःखदायिनी—सा. ति. [2] गूढेन—सा. ति. [3] पुत्रिणी भवेत्—सा. ति.

कपिला कुटिला स्थूला [1]उद्भिन्ना रोमराजिका ।
[2]वैरवैधव्यदौर्भाग्यं विदध्यादिह योषिताम् ॥ ५५ ॥

[शुभाशुभहृदयचिह्नानि]

निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् ।
ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा भजेत् ॥ ५६ ॥

विस्तीर्णहृदया योषा पुंश्चली निर्दया तथा ।
उद्भिन्नरोमहृदया पतिं हन्ति विनिश्चितम् ॥ ५७ ॥

अष्टादशाङ्गुलततमुरः पीवरमुन्नतम् ।
सुखाय दुःखाय भवेद्रोमढं [3]विषमं पृथु ॥ ५८ ॥

[शुभाशुभस्तनचिह्नानि]

घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ ।
स्थूलाग्रविरलौ शुष्कौ वामोरूणां न शर्मदौ ॥ ५९ ॥

दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्मता ।
वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् ॥ ६० ॥

---

[शुभाशुभरोमावलिलक्षणम्]

मृद्वी तन्वी च रोमाली यस्याः सा शर्मनर्मदा ।
रोमराजिः पुनर्यस्यास्त्रिवल्यङ्कममध्यमा ॥
उदरं नाभिगं यस्याः प्रशस्ता सा निगद्यते ।
धनाढ्यं रूपसंपन्नं भर्तारं वरवर्णिनम् ॥
लभते नात्र सन्देहः सामुद्रवचनं यथा ।
ऊर्ध्वं तु कपिला यस्याः रोमराजिर्निरन्तरा ।
अपि राजकुले जाता दासीत्वमधिगच्छति ॥

[1] सुच्छिन्ना—सा. ति. [2] चौर्यवैधव्य—सा. ति. [3] विपुलं—सा. ति.

कालोले

[1]आवद्धद्विघटीतुल्यौ कुचौ दौश्शील्यसूचकौ ।
पीवरास्यौ सान्तरालौ पृथूपान्तौ न शोभनौ ॥ ६१ ॥

मूले स्थूलौ क्रमकृशावग्रे तीक्ष्णौ पयोधरौ ।
सुखदौ पूर्वकाले तु पश्चादत्यन्तदुःखदौ * ॥ ६२ ॥

[ शुभाशुभचूचुकलक्षणम् ]

सुदृशां चूचुकयुगं शस्तं श्यामं सुवर्तुलम् ।
अन्तर्मग्नं च दीर्घं च कृशं क्लेशाय जायते ॥ ६३ ॥

[ शुभाशुभजत्रुलक्षणम् ]

पीवराभ्यां च जत्रुभ्यां धनधान्यनिधिर्वधूः ।
श्लथास्थिभ्यां चैव निम्नाभ्यां विषमाभ्यां दरिद्रिणी ॥ ६४ ॥

[शुभाशुभस्कन्धचिह्नानि]

आबद्धावनतौ स्कन्धावदीर्घावकृशौ शुभौ ।
वक्रौ स्थूलौ च रोमाढ्यौ प्रेष्यवैधव्यसूचकौ ॥ ६५ ॥

[शुभाशुभांसचिह्नानि]

निगूढसन्धी स्रस्ताग्रौ शुभावंसौ सुसंहतौ ।
वैधव्यदौ समुच्चाग्रौ निर्मांसावतिदुःखदौ ॥ ६६ ॥

---

* इतः परं सा. ति. अधिकपाठः.—

नीचौ च सुदृढौ यस्याः पीनोन्नतयुगस्तनौ ।
समांसलौ च स्निग्धौ च स्त्रियः सा शोभना स्मृता ॥
वर्तुलौ चातिकठिनौ कपित्थफलसन्निभौ ।
स्तनौ समांसलौ स्निग्धौ प्रशस्ता सा भवेत्प्रिया ॥
कुचावुरस्स्थलं प्राप्य उन्नताङ्गौ सुपीनकौ ।
समौ यस्या भवेतां च साभूद्धान्यवती चिरम् ॥

[1] अस्पृष्टघटीतुल्यौ–सा. ति.

[शुभाशुभकक्षचिह्नानि]

कक्षे सुसूक्ष्मरोमाढ्ये तुङ्गे स्निग्धे च मांसले ।
शस्ते न शस्ते गम्भीरे सिराले स्वेदमेदुरे ॥ ६७ ॥

[शुभाशुभबाहुलक्षणानि]

स्यातां दोषा सुनिर्दोषा गूढास्थिग्रन्थिकोमलौ ।
[1]निशितौ च विरोमाणौ सरलौ हरिणीदृशाम् ॥ ६८ ॥

वैधव्यं स्थूलरोमाणौ ह्रस्वौ दौर्भाग्यसूचकौ ।
[2]पतिक्लेशाय नारीणां परिदृश्यसिरौ भुजौ ॥ ६९ ॥

[शुभकरद्वन्द्वम्]

अम्भोजकुड्मलाकारमङ्गुष्ठाङ्गुलि[3]सन्निभम् ।
हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥ ७० ॥

[शुभाशुभकरतलचिह्नानि]

मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ।
प्रशस्तं [4]शस्तरेखाढ्यमल्परेखं [5]शुभाश्रयम् ॥ ७१ ॥

विधवा बहुरेखेण विरेखेण दरिद्रिणी ।
भिक्षुकी सुसिराढ्येन नारी करतलेन वै ॥ ७२ ॥

[शुभाशुभकरपृष्ठचिह्नानि]

विरोमं विशिरं शस्तं पाणिपृष्ठं समुन्नतम् ।
[6]वैधव्यदायि रोमाढ्यं निर्मांसस्नायुमुत्सृजेत्* ॥ ७३ ॥

---

* इतः परं सा ति.—

पद्मपत्रनिभौ यासां नारीणां पाणिपल्लवौ ।
मृदुहस्ततला कन्या सा नित्यं दुःखमेधते ॥
क्रव्यादरूपैर्वृककोककङ्कसरीसृपोलूकसमानचिह्नैः ।
शुष्कैः सिरावैर्विषमैश्च हस्तैः भवन्ति नार्यः सुखहीनजीवनाः ॥ अयमधिको ग्रन्थः ।

[1] विसिरौ–सा. ति. [2] परिक्लेशाय–सा. ति. [3] संमुखम्–सा. ति. सन्नखम्–मु. [4] रक्त–सा. ति. [5] सुखं स्त्रियः–सा. ति. [6] वैधव्यहेतु–सा. ति.

[शुभाशुभकररेखाः]

रक्ताव्यक्ता गभीरा च स्निग्धा पूर्णा च वर्तुला।
करे रेखाङ्गनायाः स्याच्छुभा भाग्यानुसारतः ॥ ७४ ॥

मत्स्येन सुभगा नारी स्वस्तिकेन [1]च सुप्रजा।
पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् ॥ ७५ ॥

चक्रवर्तिप्रिया पाणौ [2]नन्द्यावर्तः प्रदक्षिणः।
शङ्खातपत्रकमठा देवमातृत्वसूचकाः ॥ ७६ ॥

तुलामानाकृती रेखे [3]वणिक्पत्नीत्वकारणम्।
गजवाजिवृषाकाराः करे वामे मृगीदृशः ॥ ७७ ॥

रेखाः प्रासादवज्राभा भूयस्तीर्थकराः शुभाः।
कृषीवलस्य [4]पत्नीस्याच्छकटेन युगेन वा ॥ ७८ ॥

[5]चामराङ्कुशकोदण्डै राजपत्नी भवेद्ध्रुवम्।
अङ्गुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम् ॥ ७९ ॥

[6]यदि स्यात्पतिहन्त्री स्याद्दूरतस्तां त्यजेत्सुधीः।
त्रिशूलासिगदाशक्तिदुन्दुभ्याकृतिरेखया ॥ ८० ॥

नितम्बिनी कीर्तिमती [7]त्यागिनी पृथिवीतले।
कङ्कजम्बूकमण्डूकवृकवृश्चिकभोगिनः ॥ ८१ ॥

रासभोष्ट्रबिडालाः स्युः करस्था दुःखदाः स्त्रियः। *

---

* इतः परं सा. ति.—

अङ्कुशं कुलिशं चक्रं यस्याः पाणितले भवेत्।
पुत्रान् प्रसूयते चासौ वद्भर्तां पृथिवीपतिः ॥

[1] वसुप्रदा—सा.ति. [2] यद्यावर्तः—सा.ति. [3] वणिक्पत्नीत्वहेतुके—सा.ति. वाणिक्पत्नित्वसूचिके—मु. [4] पत्नीत्वं शकटेन—सा.ति. [5] चापाङ्कुशौ च दोर्दण्डैः—सा.ति. [6] यदि सा पतिहन्त्री—सा.ति. [7] त्यागेन पृथिवीपतेः—सा.ति.

[शुभकराङ्गुष्ठलक्षणम्]

शुभदः सरलोऽङ्गुष्ठो वृतो वृत्तनखो मृदुः ॥ ८२ ॥

[शुभाशुभाङ्गुलिचिह्नानि]

अङ्गुल्यश्च सुपर्वाणो दीर्घा वृत्ताः क्रमात्कृशाः ।
चिपिटाः स्थपुटा रूक्षाः पृष्ठरोम[1]युजोऽशुभाः ॥ ८३ ॥

अतिह्रस्वाः कृशा वक्रा विरला रोमसंयुताः ।
[2]अधिकाङ्गुलयः स्त्रीणां बहुपर्व[3]युजोऽशुभाः ॥ ८४ ॥

[शुभाशुभकरनखचिह्नानि]

अरुणाः [4]सशिखास्तुङ्गाः करजाः सुदृशां शुभाः ।
निम्ना विवर्णाः शुक्तथाभाः पीता दारिद्र्यदायकाः ॥ ८५ ॥

---

यस्याः पाणितले रेखा प्राकारं छत्रतोरणम् ।
सवी राजकुले जाता राजपत्नी भवेद्ध्रुवम् ॥
यस्याः करतले रेखा मयूरं च प्रदृश्यते ।
राजपत्नीत्वमाप्नोति पुत्रैश्च सह वर्धते ॥
अङ्गुष्ठमूलप्रभवाश्च रेखाः पुत्रा बृहत्यः प्रमदाश्च सूक्ष्माः ।
अच्छिन्नरेखा बहुलायुषः स्युः स्वल्पायुषश्छिन्नलघुप्रमाणम् ॥
शृङ्गारासनवाजिकुञ्जररथश्रीवत्सलांछामरैः
मालाकुण्डलकार्मुकाङ्कुशयवैर्धौतध्वजैस्तोरणैः ।
मत्स्यस्वस्तिकवैदिक।व्यजनकैः शङ्खातपत्राम्बुजैः
पादे पाणितले ध्रुवं युवतयो गच्छन्ति लक्ष्म्याः पदम् ॥
मध्याङ्गुलीया मणिबन्धने या रेखा गता पाणितलेऽङ्गनायाः ।
ऊर्ध्वस्थिता पाणितले ध्रुवा या पुंसी वराङ्गे सुखदा यदि स्यात् ॥
कनिष्ठिकामूलगता च रेखा प्रदेशिनीमध्यमिकान्तरालम् ।
करोति रेखा परमायुषः स्यात् क्रमेण मानादि तदेवम युः ॥

—अयमधिको ग्रन्थः ।

[1] युजः शुभाः—सा. ति. [2] दुःशीलाङ्गुलयः—सा. ति. [3] समन्विताः—सा. ति.
[4] सशिरास्तुङ्गाः—सा. ति.

नखेषु बिन्दवः श्वेताः [1]कुर्युस्ते स्वैरिणीं स्त्रियम्*।

[शुभाशुभकरपृष्ठचिह्नानि]

अन्तर्निमग्नवंशास्थि पृष्ठं स्यान्मांसलं शुभम् ॥ ८६ ॥

पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् ।
भुग्नेन विनतेनापि ससिरेणापि दुःखिता ॥ ८७ ॥ †

[शुभाशुभकृकाटिकाचिह्नानि]

ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता ।
शुष्का सिराला लोमाढ्या विशाला कुटिला शुभा ॥ ८८ ॥

[शुभाशुभकण्ठलक्षणानि]

मांसलो वर्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः ।
शस्ता ग्रीवा त्रिरेखाङ्का त्वव्यक्तास्थिः सुसंहता ॥ ८९ ॥

निर्मांसा चिपिटा दीर्घा स्थपुटा न शुभप्रदा ।
स्थूलग्रीवा च विधवा [2]वक्रग्रीवा च किङ्करी ॥ ९० ॥

वन्ध्या च चिपिटग्रीवा ह्रस्वग्रीवा च [3]निर्धना । ‡

---

* इतः परं सा. ति.—

परुषा अपि जायन्ते दुःखिताः पुष्पितैर्नखैः ।
अङ्गुल्या सहिता यस्या मुखपद्मदलैः शुभाः ॥
कूर्मपृष्ठनखा यस्याः स्निग्धास्या भाग्यवर्जिताः । अयमधिको ग्रन्थः ।

† इतः परं सा. ति.—

दासी चोन्नतपृष्ठा च समपृष्ठा तथैव च ।
क्षोणीपृष्ठा पतिघ्नी च सिराले च सुदुःखिता ॥ अयमधिको ग्रन्थः ।

‡ इतः परं सा. ति.—

त्रिधा त्रिरेखा सुभगोपपन्ना स्निग्धा समांसोपचिता सुरूपा ।
अतीव दीर्घा चतुरङ्गुला च ह्रस्वा च दीर्घा भवतीह धन्या ॥ अयमधिको ग्रन्थः ।

[1] प्रायः स्युः स्वैरिणीस्त्रियः—इतः परं. सा. ति. [2] रक्त—सा. ति.
[3] निस्सुता—सा. ति.

[शुभाशुभचुबुकचिह्नानि]

चुबुकं द्व्यङ्गुलं शस्तं वृत्तं पीनं सुकोमलम् ॥ ९१ ॥
स्थूलं द्विधा संविभक्तमायतं रोमशं त्यजेत् ।

[शुभाशुभहनुचिह्नानि]

हनुश्चुबुकसंलग्ना निर्लोमा [1]सुघना शुभा ॥ ९२ ॥
वक्रा स्थूला कृशा ह्रस्वा रोमशा न शुभप्रदा ।

[शुभाशुभकपोलद्वयम्]

शस्ता कपोला वामाङ्ग्याः पीनवृत्तौ समुन्नतौ ॥ ९३ ॥
रोमशौ परुषौ निम्नौ निर्मांसौ परिवर्जयेत् ।

[शुभवक्त्रचिह्नानि]

समं समांसलं स्निग्धं सामोदं वर्तुलं मुखम् ॥ ९४ ॥
[2]जनयित्रा न सच्छायं धन्यानामिह जायते ।

[शुभाशुभाधरोष्ठचिह्नानि]

पाटलो वर्तुलः स्निग्धो रेखाभूषितमध्यभूः ॥ ९५ ॥
सीमन्तिनीनामधरो धराजानिप्रिया भवेत् ।
कृशः प्रलम्बस्फुटितो रूक्षो दौर्भाग्यसूचकः ॥ ९६ ॥
श्यामः स्थूलोऽधरोष्ठः स्याद्वैधव्यकलहप्रदः । *

[शुभाशुभोर्ध्वौष्ठलक्षणम्]

मसृणो मध्यकाशिन्याश्चोत्तरोष्ठः सुभोगदः ॥ ९७ ॥
किञ्चिन्मध्योन्नतो [3]रोमपरीतश्च विरुद्धकृत् ।

---

* इतः परं सा. ति.—बिम्बोपमो रक्तसङ्काशा सौभाग्यसुखभोगिनी। अधिकः पाठः ।

[1] सुखदा—सा. ति. [2] जैवातृवदनच्छायं—सा. ति. [3] रोमाविपरीतो विवृद्धिकृत्—सा. ति.

[शुभाशुभदन्तलक्षणम्]

गोक्षीरसन्निभाः स्निग्धाः द्वात्रिंशद्दशनाः शुभाः ॥ ९८ ॥

अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ।
पीताः श्यामाश्च दशनाः स्थूला दीर्घा द्विपङ्क्तयः ॥ ९९ ॥

शुकथाकाराश्च विरला दुःखदौर्भाग्य[1]सूचकाः ।
अधस्तादधिकैर्दन्तैः मातरं भक्षयेत्स्फुटम् ॥ १०० ॥

पतिहीना च विकटैः कुलटा विरलैर्भवेत् ।*

[शुभाशुभजिह्वाचिह्नानि]

जिह्वेष्टमृष्टभोक्त्री स्याच्छोणा मृद्वी सितासिता ॥ १०१ ॥

दुःखाय मध्यसङ्कीर्णा पुरोभागे सविस्तरा ।
सितया तोयमरणं श्यामया कलहप्रिया ॥ १०२ ॥

दरिद्रा स्यान्मांसलया लम्बयाऽभक्ष्यभक्षिणी ।
विशालया रसनया प्रमदातिप्रमादभाक् †॥ १०३ ॥

---

* इतः परं सा. ति.—

अनपत्या भवेन्नारी दन्तानां चलनं यदि ।
निर्धनत्वं च दारिद्र्यं कन्यां तां परिवर्जयेत् ॥

[ घुटिकालक्षणम् ]

कण्ठे स्थूला सुवृत्ता च क्रमात्तीक्ष्णा न लोहिता ।
अप्रलम्बा शुभा घण्टा शुक्ला कृष्णा च दुःखदा ॥—अयमधिकः पाठः ।

† इतः परं सा. ति.—

रक्तजिह्वा तु या नारी सा भवेत्सुखभोगिनी ।
नित्यं सा वर्धते पुत्रैः सामुद्रवचनं यथा ॥
श्वेतायां जनयेत्पुत्रं मांसलायां धनक्षयम् ।
श्यामायां कलहं नित्यं वंशच्छेदं विनिर्दिशेत् ॥
यस्याः सूक्ष्मा च जिह्वा स्यान्मृदुस्निग्धा च रक्तवत् ।—अयमधिको ग्रन्थः ।

[1] कारकाः—सा. ति.

[शुभाशुभतालुचिह्नानि]

स्निग्धं कोकनदाभासं प्रशस्तं तालु कोमलम् ।
सिते तालुनि वैधव्यं पीते [1]प्रव्रजिता भवेत् ॥ १०४ ॥
कृष्णेऽपत्यवियोगार्ता रूक्षे रौद्रकुटुम्बिनी ।*

[शुभाशुभघुण्टीलक्षणम्]

घुण्टी स्थूला सुवृत्ता च निगूढास्थिसुलोहिता ॥ १०५ ॥
अप्रलम्बा शुभा घुण्टी स्थूला कृष्णा च [2]दुःखिता ।

[शुभाशुभहसितलक्षणम्]

अलक्षितद्विजं किञ्चित्किञ्चित्फुल्लकपोलकम् ॥ १०६ ॥
स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् ।†

[शुभाशुभनासाचिह्नानि]

समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा ॥ १०७ ॥

---

* इतः परं सा. ति.—
श्वेततालुगता दासी दुःखिता कृष्णतालुका ।
हरितेन च कृष्णेन वृत्ततालुश्च शोभना ॥—अयमधिको ग्रन्थः ।

† इतः परं सा. ति.—
यस्यां तु हसनात्नार्या ललाटे स्वस्तिकं भवेत् ।
वाहनानां सहस्राणामाधिपत्यं भवेत्सदा ॥
यस्यां तु हसनान्नार्या गण्डे दृश्येत कूपवत् ।
भर्तारं रमते सा हि स्वच्छन्दा कामचारिणी ॥
यस्यां तु हसनान्नार्या कूपे कोमलको भवेत् ।
न सा भर्तरि तिष्ठेत स्वच्छन्दा कामचारिणी ॥—अयमधिको ग्रन्थः ।

[1] पुत्रयुता—सा. ति. [2] दुःखदा—मु.

स्थूलाग्रा मध्यनम्रा च न प्रशस्ता समुन्नता ।
आकुञ्चिता च भुग्ना च वैधव्यक्लेशदायिनी ॥ १०८ ॥
परप्रेष्या च चिपिटा ह्रस्वदीर्घकलिप्रिया* ।

[शुभभ्रुवम्]

दीर्घायुष्कस्य भ्रुवं दीर्घं युगपद्वि[1]त्रिपञ्चकम् ॥ १०९ ॥

[शस्ताशस्तचक्षुश्चिह्नानि]

ललनालोचने शस्ते रक्तान्ते कृष्णतारके ।
गोक्षीरवर्णे विशदे सुस्निग्धे कृष्णपक्ष्मणी ॥ ११० ॥
उन्नताक्षी न दीर्घायुः [2]वृत्ताक्षी कुलटा भवेत् ।
मेषाक्षी महिषाक्षी च केकराक्षी न शोभना ॥ १११ ॥
[3]कामग्रहाढ्या नितरां गोपिङ्गाक्षी सुदुर्व्रता ।
पारावताक्षी दुश्शीला रक्ताक्षी भर्तृघातिनी ॥ ११२ ॥
[4]कोटरामग्ननयना गजनेत्रा न शोभना ।
पुंश्चली [5]वामकाणाक्षी वन्ध्या दक्षिणकाणिका ॥ ११३ ॥
[6]रमणी मधुपिङ्गाक्षी धनधान्यसमृद्धिभाक्‌ स्त्री ।

---

* इतः परं सा. ति.—

दीर्घा च नासिका यस्याः नारी सा कोपना भवेत् ।
ह्रस्वेन तु भवेद्दासी परकर्मकरी सदा ॥
चिपिटा नासिका यस्याः वैधव्यं साधिगच्छति ।
नातिदीर्घा न विस्तीर्णा सा नारी सुखमेधते ॥—अयमधिकः पाठः ।

† इतः परं सा. ति.—

पिङ्गनेत्रा तु या नारी सदा कौशलदायिनी ।
दुश्शीला सा च विज्ञेया वैधव्यस्य च भागिनी ॥
पारावताक्षी कन्या च केकराक्षी च या तथा ।
विभ्रान्ता चपलाक्षी च तां कन्यां वर्जयेद्बुधः ॥—अयमधिको ग्रन्थः ।

[1]संयुतम्—मु. [2]सुवृत्ता—मु. [3]पिङ्गलाक्षी च नितरां दुर्वृत्ता कामचारिणी—सा. ति. [4]कोटरानयना दुष्टा बकनेत्रा—सा. ति. [5]वामकृष्णाक्षी—सा. ति. [6]मधुपिङ्गलनेत्रा च—सा. ति.

[शुभाशुभपक्ष्मचिह्नानि]

पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः शुभाग्यभाक् ॥ ११४ ॥
कपिलैर्विरलैः स्थूलैर्निन्द्या भवति कामिनी ।

[प्रशस्ताप्रशस्तभ्रूलक्षणम्]

भ्रुवौ सुवर्तुले तन्व्यौ स्निग्धे कृष्णे असंहते ॥ ११५ ॥
प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती ।
खररोमा च पृथुला विकीर्णा [1]सफला स्त्रियः ॥ ११६ ॥
न भ्रूः प्रशस्ता मिलिता दीर्घरोमा च पिङ्गला ।

[शुभाशुभकर्णलक्षणम्]

लम्बौ कर्णौ [2]शुभावर्तौ सुखदौ च शुभप्रदौ ॥ ११७ ॥
शष्कुलीरहितौ निन्द्यौ सिरालौ कुटिलौ कृशौ ।*

[शुभाशुभफालचिह्नानि]

फालः सिराविरहितो निर्लोमार्धेन्दुसन्निभः ॥ ११८ ॥
आनिम्नस्त्र्यङ्गुलो नार्याः सौभाग्यारोग्यकारणम् ।
व्यक्तस्वस्तिकरेखाङ्कं ललाटं [3]राज्यसम्पदि ॥ ११९ ॥
प्रलम्बमलिकं यस्या देवरं हन्ति सा [4]ध्रुवम् ।
रोमशेन सिरालेन [5]प्रांशुना रोगिणी भवेत् ॥ १२० ॥

---

* इतः परं सा. ति.—
आयते श्रवणे चैव सुरूपे विसरे तथा ।
देवयन्त्रायुताकारा सा नारी सुखमेधते ॥—अयमधिको ग्रन्थः ।

† इतः परं सा. ति.—
ललाटं त्र्यङ्गुलं यस्याः सिरा रोमविवर्जितम् ।
निर्मलं च समं दीर्घमायुःसौख्यधनप्रदम् ॥
ललाटे दृश्यते यस्यास्त्रिशूलं देवनिर्मितम् ।
बहुहस्तिसहस्राणां स्वामिनीं तां विनिर्दिशेत् ॥—अयमधिको ग्रन्थः ।

[1] सरका—मु. [2] शुभौ वृत्तौ—सा. ति. [3] राजसम्पदे—सा. ति. [4] ध्रुवम्—मु.
[5] पांसुका—सा. ति.

[शुभाशुभसीमन्तमौलिचिह्नानि]

सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः।
गजकुम्भनिभो वृत्तः सौभाग्यैश्वर्यसूचकः॥ १२१ ॥

स्थूलमूर्धा च विधवा दीर्घशीर्षा च [1]लम्बकी।
विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम्॥ १२२ ॥

[शुभाशुभशिरोरुहलक्षणानि]

केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः।
किञ्चिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः॥ १२३ ॥

परुषाः स्फुटिताग्राश्च विरलाश्च शिरोरुहाः।
पिङ्गला लघवो रूक्षा दुःखदारिद्र्यदायकाः* ॥ १२४ ॥

[शुभाशुभमशकलक्षणम्]

भ्रुवोरन्तर्ललाटे वा मशको राज्यसूचकः।
वामे कपोले मशकः शोणो मृष्टान्नदः स्त्रियाः॥ १२५ ॥

तिलकं लाञ्छनं वापि हृदि सौभाग्य[2]कारणम्।
यस्या दक्षिणवक्षोजे शोणं तिलकलाञ्छनम्॥ १२६ ॥

कन्याचतुष्टयं सूत्वा सूते सा च सुतत्रयम्।
तिलकं लाञ्छनं शोणं यस्या वामे कुचे भवेत्॥ १२७ ॥

---

* इतः परं सा. ति.—

स्थूलकेशा पतिघ्नी च दीर्घकेशा सुखप्रदा।
षड्भिः षडुत्तरा योषिदङ्गलक्षणमीदृशम्॥—अयमधिको ग्रन्थः।

[1] वर्धकी—सा. ति. बन्धकी—मु. [2] मानकम्—सा. ति.

एकं सुतं प्रसूयादौ ततः सा विधवा भवेत् * ।
करे कर्णे कपोले वा कण्ठे वामे [1] स्फुरेद्यदि ॥ १२८ ॥
एषां त्रयाणामेकं तु प्राग्गर्भे [2] पुत्रदं भवेत् ।
फालगेन त्रिशूलेन निर्मितेन स्वयम्भुवा ॥ १२९ ॥
नितम्बिनी सहस्राणां स्वामित्वं योषिदाप्नुयात् ।
सुप्ता परस्परं या तु दन्तान् कटकटायते ॥ १३० ॥
सुलक्ष्मापि न सा शस्ता यत्किञ्चित्प्रलपेत्तथा † ।

* इतः परं मुद्रितकोशे—

गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः ।
तदा क्षितिपतेः पत्नी सूते सा क्षितिपं सुतम् ॥
नासाग्रे मशकः शोणो महिष्येव प्रजायते ।
कृष्णः स एव भर्तृघ्नी पुंश्चली वा प्रकीर्तिता ॥
नाभेरधस्तात्तिलकं मशको लाञ्छनं शुभम् ।
मशकस्तिलकश्छन्नः गुल्फे दारिद्र्यदायकम् ॥—अधिकः पाठः

† इतः परं सा–ति.—

गुह्यान्ते तिलकं यस्याः रक्तकुङ्कुमसन्निभम् ।
अथवा दक्षिणे पार्श्वे प्रशस्ता सा निगद्यते ॥
नाभिदेशे भवेद्यस्या लाञ्छनं मशकोऽपि वा ।
कुङ्कुमोदकसङ्काशः प्रशस्ता सा निगद्यते ॥
यस्यास्तु हृदये नार्या रक्ताभस्तिलको भवेत् ।
लाञ्छनं यदि रक्ताभं सा नारी शोभना भवेत् ॥
स्तनमध्ये तु नारीणां कुङ्कुमोदकसन्निभः ।
लाञ्छनं दृश्यते यस्याः प्रशस्ता परिकीर्तिता ॥
वामपार्श्वे गले चोभौ पार्श्वे यस्याश्च लाञ्छनम् ।
मकरं तिलकं वापि प्रथमं जनयेत्सुतम् ॥
स्तने वामे च कृष्णाभं लाञ्छनं तिलकोपमम् ।
क्षिप्रं वैधव्यमाप्नोति जायते च सुदुःखिता ॥
यस्याः पयोधरे वामे मकरस्तिलकोऽपि वा ।
हस्ते कर्णे च कण्ठे च सा कन्या पुत्रदायिनी ॥
ललाटे दृश्यते यस्यास्तिलकः कृष्णसन्निभः ।
पञ्च सा जनयेत्पुत्रान् धनधान्यसमूहवान् ॥—अधिकः पा.

[1] स्फुटं यदि—सा. ति.   [2] पुत्रसंभवेत्—सा. ति.

[स्त्रीणां शुभाशुभावर्तलक्षणे पुंसां गन्धछायादिलक्षणस्य वक्ष्यमाणता च]

पाणौ प्रदक्षिणावर्तो धन्यो वामो न शोभनः ॥ १३१ ॥

नाभौ वुश्रुतारसि वा दक्षिणावर्त [1]ईडितः
[2]शुभाय दक्षिणावर्तः पृष्ठवंशस्य [3]जायते ॥ १३२ ॥

अन्तःपृष्ठे नाभिसमो बह्वायुः [4]पुष्टिवर्धनः ।
राजपत्नयाः प्रदृश्येत भगमौलौ प्रदक्षिणः ॥ १३३ ॥

सा चेच्छकटभङ्गे स्याद्बह्वपत्यसुखप्रदः ।
कटिगो गुह्यवेधेन पृष्ठेऽपत्यविनाशनः ॥ १३४ ॥

स्यातामुदरवेधेन पृष्ठावर्तौ न शोभनौ ।
एकेन हन्ति भर्तारं भवेदन्येन पुंश्चली * ॥ १३५ ॥

---

* इतः परं सा. ति. अधिकः पाठः ।—

कटावती च कुलटा नाभ्यावर्ता पतिव्रता ।
पृष्ठावर्ता पतिघ्नी स्यात्कुलटा वाथ जायते ॥
आवर्तस्तु भवेद्यस्या भगस्योपरि मस्तके ।
सा हि वै वर्धते नित्यं धनधान्यसमाकुला ॥
पृष्ठे वाथ ललाटे वा विधवा स्यात्प्रयत्नतः ।
शिरोमध्ये तु नारीणामार्तो यदि दृश्यते ॥
दशाहाभ्यन्तरेणैव शीघ्रं मारयते पतिम् ।
मुखावर्ता सुतं हन्ति भुजावर्ता पतिप्रिया ॥
स्तनद्वये यदावर्ता सा भवेत्परभागिनी ।
उदरे श्वशुरं हन्ति ललाटे देवरं तथा ॥
कर्णमूले यदावर्ता सा कन्या विधवा भवेत् ।
भ्रूयुग्मे च भ्रुवोर्मध्ये फलावर्ता भवेत्प्रिया ॥
विधवा जारिणी यस्या भ्रमणं च यथास्थितम् ।
त्रिकावर्ता त्रिरेखा तु स्वयमेव मृता भवेत् ॥

[1] ईरितः—मु. [2] सुभाय—सा. ति. [3] दक्षिणे—सा. ति. [4] पुत्रवर्धनः.

[1]कण्ठगो दक्षिणावर्तो दुःखवैधव्य[2]कारकः ।
सीमन्ते वा ललाटे वा त्याज्या दूरात्प्रयत्नतः ॥ १३६ ॥

सा पतिं हन्ति वर्षेण यस्या मध्ये कृकाटिका ।
प्रदक्षिणो वा वामो वा रोम्णामावर्तकः स्त्रियाः ॥ १३७ ॥

एको वा मूर्धनि द्वौ वा [3]वामावामगते अपि ।
आदशाहात्पतिघ्ना सा [4]त्याज्या दूरात्प्रयत्नतः ॥ १३८ ॥

मस्तके वा ललाटे वा [5]स्तनमध्ये गुदेऽपि वा ।
आवर्तद्वयमातिष्ठेन्मृतपुत्रा भवेद्ध्रुवम् ॥ १३९ ॥

जिह्वायां वा कपोले वा कण्ठे वा बाहुमूलयोः ।
यद्यावर्तद्वयं तिष्ठेत्सा [6]भूयो निष्प्रजा भवेत् ॥ १४० ॥

[7]काकदृष्टिः केकराक्षी या नारी पृष्ठदर्शिनी ।
मार्जारदृष्टिर्या नारी स्रवद्गर्भा भवेद्भुवि ॥ १४१ ॥

गन्धच्छायादिकान् पुंसो लक्षणेऽनुपदं ब्रुवे ।

[पत्युरायुष्याभिवृद्धिदायाः सुलक्षणायाः परिणेयता, दुर्लक्षणायास्त्याज्यता च]

सुलक्षणैः सुचारित्रैरपि मन्दायुषं पतिम् ॥ १४२ ॥

दीर्घायुषं प्रकुर्वन्ति प्रमदाः प्रमदास्पदम् ।
अतः सुलक्षणा योषा परिणेया विचक्षणैः ॥ १४३ ॥

---

द्विरावर्ता तु नाशः स्याद्दक्षावर्ता धनक्षयः ।
कर्णमूले यदावर्तो मूर्ध्न्यावर्तद्वयं तथा ॥

द्विरावर्ता पतिं हन्ति सव्ये सुखवती भवेत् ।
जानुमध्ये यदावर्तो गुल्फयोः पतिनाशिनी ॥

एकावर्ता भाग्यवती द्विरावर्ता पतिं त्यजेत् ।
सव्ये शुभावहा ज्ञेया अपसव्ये त्यजेद्बुधः ॥

[1] कण्ठे च—सा. ति. [2] सूचकः—सा. ति. [3] वामे वामगता अपि—सा. ति. [4] त्यजेद्दूरात्सुबुद्धिमान—सा. ति. [5] मध्ये पृष्ठे—सा. ति. [6] भूयाक्षिप्रजा भुवि—सा. ति. [7] अयं श्लोकः आकरे नास्ति, प्रकरणसङ्गतिश्च ।

लक्षणानि परीक्ष्यादौ मुञ्चेद्दुर्लक्षणाः स्त्रियः ।
[जगन्मातुरर्चनात् स्त्रीणां सुचारित्रत्वादिकम्]
अर्चिता जगतां माता याभिर्मृडवधूरिह ॥ १४४ ॥

ता भवन्ति सुचारित्रा योषाः स्वाधीनभर्तृकाः ।
स्वाधीनभर्तृकाणां च सुशीलानां मृगीदृशाम् ॥ १४५ ॥

स्वर्गापवर्गावत्रैव सुलक्षणफलं हि तत् ।

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले सामुद्रिकशास्त्रे स्त्रीलक्षणनिरूपणं नाम नवमस्तरङ्गः

---

## सप्तमकल्लोले दशमस्तरङ्गः

### पुरुषलक्षणनिरूपणम्

[स्त्रीलक्षणनिरूपणानन्तरं पुरुषलक्षणनिरूपणप्रतिज्ञा]

एवमुक्तानि योषाणां लक्षणानि समासतः ।
अतः परं वर्णयामि नराणां लक्षणान्यहम् ॥ १ ॥

[सामुद्रविदः भूतभविष्यदुक्तावपेक्षितानि विज्ञानानि]

उन्मानमानगतिसंहतिसारवर्ण-
स्नेहस्वरप्रकृतिसत्त्वमनूकमादौ ॥
क्षेत्रं [1]मुचां च विधिवत्कुशलो विलोक्य
सामुद्रविद्वदतियातमनागतं वा ॥ २ ॥

[राज्ञः शुभाशुभचरणचिह्नानि]

अस्वेदिनौ मृदुतलौ कमलोदराभौ
शिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी ।
उष्णौ सिरावरहितौ सुनिगूढगुल्फौ
कूर्मोन्नतौ च चरणौ मनुजेश्वराणाम् ॥ ३ ॥

---

[1] मृजां—बृ. सं.

शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ सिरासन्ततौ
संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ।
[1]मार्गे चोत्कटिकौ कषायसदृशौ वंशस्य विच्छित्तिदौ।
ब्रह्मघ्नौ परिपक्व[2]मृत्समतलौ पीतावगम्यौ रतौ ॥ ४ ।

[पुरुषस्य पादतलरेखाफलम्]

दीर्घाः पादतले रेखा यस्य दृश्या हलाङ्कुशाः ।
स धराधिपतिर्ज्ञेयः पुरुषो नात्र संशयः ॥ ५ ॥

[पुरुषाणां धनिकत्वसाम्राज्यप्रापकजङ्घाचिह्नानि]

क्रमाद्वृत्ते प्रशस्येते जङ्घे स्निग्धे त्वरोमके।
सिंहव्याघ्रसमे जङ्घे धनिनां परिकीर्तिते ॥ ६ ॥

काकजङ्घो भवेद्राजा मृगजङ्घोऽपि तादृशः।
जङ्घे च मीनवद्यस्य सोऽपि साम्राज्यभाजनम् ॥ ७ ॥

[पथिकत्वदुःखप्रदजङ्घाचिह्नानि]

स्थूलजङ्घा दीर्घजङ्घा जायन्ते पथिकाःसदा ।
सृगालकोलजङ्घा ये ते नरा दुःखभागिनः ॥ ८ ॥

[रोमकूपेषु रोमसंख्याभेदेन फलभेदाः]

एकरोमा भवेद्राजा द्विरोमा धनिको भवेत् ।
त्रिरोमा रोमकूपेषु नरो भाग्यविवर्जितः ॥ ९ ॥

[रोम्णामूर्ध्वाधोभावफलानि]

ऊर्ध्वरोमा भवद्धीरोऽ[3]ह्यधोरोमाऽतिभीरुकः

[धरणीभुजां जानुलक्षणानि]

मांसले जानुनी वृत्ते समे शब्दविवर्जिते ॥ १० ॥

निगूढितास्थिनी किञ्चिदुन्नते धरणीभुजाम् ।

---

[1] मार्गायोत्कटिकौ—बृ. सं. [2] मृद्युतिवतौ—बृ.सं. [3] ह्यद्रोमा—मु.

[तेषामेवोरुलक्षणानि]

ऊरू करिकराकारौ लोमभिः परिवर्जितौ ॥ ११ ॥

सुश्लक्ष्णौ निबिडौ नातिस्थूलौ नातिकृशौ समौ ।

[स्फिचः स्थौल्यादिभेदेन फलभेदाः]

*स्थूलस्फिक्च धनी ज्ञेयो मांसलस्फिक्सुखी भवेत् ॥ १२ ॥

व्याघ्रभेकसमाकारस्फिग्भवेत्पृथिवीपतिः ।

[लिङ्गाल्पत्वादीनां फलानि]

लिङ्गेऽल्पे धनवानपत्यरहितः स्थूले विहीनो धनै-
[1]स्तस्मिन् वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्रवान् ।
दारिद्र्यं विनते त्वधोऽल्पतनयो लिङ्गे सिरासन्तते
स्थूलग्रन्थियुते सुखी [2]मृदुतरे सान्तःप्रमेहादिभिः ॥१३॥

कोशनिगूढैर्भूपा दीर्घैर्भुग्नैश्च वित्तपरिहीनाः ।
ऋजुवृत्तशेफसो लघुशिरालशिश्नाश्च धनवन्तः ॥ १४ ॥

[वृषणसंख्याभेदेन फलभेदाः]

जलमृत्युरेकवृषणे विषमे स्त्रीचञ्चलः समे क्षितिपः ।

[अल्पायुष्ट्वादिप्रदवृषणचिह्नानि]

ह्रस्वायु[3]श्चोद्बन्धे प्रलम्बवृषणश्च [4]दीर्घायुः ॥ १५ ॥

---

* निःस्वोऽतिस्थूलस्फिक् समांसलस्फिक् सुखान्वितो भवति ।
व्याघ्रान्तोऽप्यर्धस्फिक् मण्डूकस्फिङ्नराधिपो भवति ॥
बृहत्संहितायां मयंविषयः एवं कटिलक्षणतः पूर्वं वर्तते ।

[1] मेढ्रे वामनते—बृ. सं. [2] मृदु करोत्यन्तं प्रमेहादिभिः—बृ. सं. [3] श्चोद्बद्धैः—बृ. सं. [4] शतमायुः—बृ. सं.

[लिङ्गमणिवर्णभेदतो फलभेदः]

रक्तैराढ्या * मणिभिर्निर्द्रव्याः पाण्डुरैश्च मलिनैश्च ।

[मूत्रशब्दधारादिवैविध्याद्विविधफलानि]

सुखिनः सशब्दमूत्रा निःस्वा निःशब्दधाराश्च ॥ १६ ॥

द्वित्रिचतुर्धाराभिः प्रदक्षिणावर्तवलितमूत्राभिः ।
पृथिवीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः ॥ १७ ॥

एकैव मूत्रधारा वलिता [1]रूपप्रदा न सुतदात्री ।

[मणिस्निग्धतादीनां फलभेदः]

स्निग्धोन्नतसममणयो धनवनितारत्नभोक्तारः ॥ १८ ॥

मणिभिश्च मध्यनिम्नैः कन्यापितरो भवन्ति निःस्वाश्च ।
बहुपशुभाजो मध्योन्नतैश्च नात्युल्बणैर्धनिनः ॥ १९ ॥

[ वस्तिशुक्रमैथुनभेदैः फलभेदाः ]

परिशुष्कवस्तिशेषैर्धनरहिता दुर्भगाश्च विज्ञेयाः
कुसुम[2]सुगन्धशुक्रा विज्ञातव्या महीपालाः ॥ २० ॥

मधुगन्धे बहुवित्ता मत्स्यसगन्धे बहून्यपत्यानि ।
तनुशुक्रः स्त्रीजनको मांससगन्धो महाभोगी ॥ २१ ॥

मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि दरिद्रः ।
शीघ्रं मैथुनकारी दीर्घायुरतोऽन्यथाल्पायुः ॥ २२ ॥

[ कटिजठरभेदैः फलभेदः ]

सिंहकटिर्मनुजेन्द्रः कपिकरभकटिर्धनैः परित्यक्तः ।
समजठरा भोगयुता घटपिठर[3]समोदरा निःस्वाः ॥ २३ ॥

---

* लिङ्गाग्रैरित्यर्थः ।

[1] रूपप्रधानसुतधारा—मु. [2] समगन्ध—बृ. सं. [3] निमोदरा—बृ. सं.

[ पार्श्वकुक्षोदरप्रभेदफलानि ]

अविकलपार्श्वा धनिका निम्नैर्वक्रैश्च भोगसंत्यक्ताः ।*
उन्नतकुक्षाः क्षितिपाः कुटिलाः स्युर्मानवा विषमकुक्षाः ॥ २४ ॥

सर्पोदरा दरिद्रा भवन्ति बह्वाशिनश्चैव ।

[ नाभ्याकारभेदैः फलभेदाः ]

वृत्तविस्तीर्णगम्भीरनाभयः सुखिनो नराः ॥ २५ ॥

विषमा बिलमध्यस्था नाभिर्दारिद्र्यकारिणी ।
दक्षिणावर्तिनी शस्ता वामावर्तापहारिणी ॥ २६ ॥

सरोजकर्णिकाकारनाभिः कुर्यान्महीश्वरम् ।

[ उदरवलिसंख्याभेदफलानि ]

आढ्यो वलित्रयो ज्ञेयो बहुपुत्रश्चतुर्वलिः ॥ २७ ॥

शस्त्रान्तं स्त्रीभोगिनमाचार्यं बहुसुतं [1]यथाक्रमशः ।
एकद्वित्रिचतुर्भि[2]र्विद्यावन्तं नृपं च पञ्चवलिः ॥ २८ ॥

[वलीनां विषमत्वादिना फलभेदः]

विषमवलयो मनुष्या भवन्त्यगम्याभिगामिनः पापाः ।
ऋजुवलयः सुखभाजः परदारद्वेषिणश्चैव ॥ २९ ॥

[मार्दवादिगुणैस्तद्विपरीतैश्च पार्श्वफलानि]

मांसलमृदुभिः पार्श्वैः प्रदक्षिणावर्तरोमभिर्भूपाः ।
विपरीतैर्निर्द्रव्याः सुखपरिहीनाः परप्रेष्याः ॥ ३० ॥

---

* एतदनन्तरं बृहत्संहितायां—
“ समकुक्षा भोगाढ्या निम्नाभिर्भोगपरिहीनाः ”—इत्यधिकः पाठो दृश्यते ।

[1] यथासङ्ख्यम्—बृ. सं.  [2] वलिभिर्विन्द्यान्नृपं त्ववलिम्—बृ. सं.

[अनुत्पादादिगुणतः चूचुकफलभेदः]

सुभगा भवन्त्यनुत्पन्न-
चूचुका निर्धना विषमदीर्घैः ।
पीनोपचितनिमग्नैः
क्षितिपतयश्चूचुकैः सुखिनः ॥ ३१ ॥

[हृदयप्रभेदफलानि]

हृदयं समुन्नतं पृ-
थ्ववेपनं मांसलं च नृपतीनाम् ।
अथ नाना विपरीतं
खररोमचितं सिरालं च ॥ ३२ ॥

[वक्षोभेदैः फलभेदः]

समवक्षसोऽर्थवन्तः
पीनैः शूराः ह्यकिञ्चनास्तनुभिः ।
विषमं वक्षो येषां
ते निःस्वाः शस्त्रनिधनाश्च ॥ ३३ ॥

[जत्रुभेदफलानि]

विषमैर्विषमो जत्रुभि-
रर्थविहीनो[1]ऽस्थिभिश्च परिणद्धैः ।
उन्नतजत्रुर्भोगी
निम्नैर्निस्वोऽर्थवान् पीनैः ॥ ३४ ॥

[ग्रीवाप्रभेदफलानि]

चिपिटग्रीवो निःस्वः
[2]शुष्कसिरा यस्य वा ग्रीवा ।
[3]मेषग्रीवः शूरः
शस्त्रान्तो [4]मृगसमग्रीवः ॥ ३५ ॥

---

[1] अस्थिसन्धिपरिणद्धैः—बृ. सं. [2] शुष्का सशिरा च यस्य वा ग्रीवा—बृ. सं.
[3] महिष—बृ. सं. [4] वृष—बृ. सं.

कम्बुग्रीवो राजा
प्रलम्बकण्ठः प्रभक्षणो भवति ।
पृष्ठमभुग्नमरोमश-
मर्थवतामशुभ[1]मं ततः पश्चात् ॥ ३६ ॥

[स्वेदादितदभावाभ्यां बाहुमूलस्य फलभेदः]

अस्वेदनपीनोन्नत-
सुगन्धसमरोमसङ्कुलाः कक्षाः ।
विज्ञातव्या धनिना-
मतोऽन्यथार्थैर्विहीनानाम् ॥ ३७ ॥

[धनिकाधनिकयोरंसलक्षणानि]

निर्मांसौ रोमचितौ
[2]भुग्नावल्पौ च निर्धनस्यांसौ ।
[3]तौ विपुलावत्युच्चौ
सुश्लिष्टौ वीर्यवित्तवताम् ॥ ३८ ॥

[पृथिवीशाधनिकयोर्बाहुलक्षणानि]

करिकरसदृशौ वृत्ता-
वाजानुविलम्बिनौ समौ पीनौ ।
बाहू पृथिवीशाना-
मधनानां रोमशौ ह्रस्वौ ॥ ३९ ॥

[पाणिः, तद्गताङ्गुलीनां क्रमादङ्गुष्ठादिनामानि, स्त्रीपुरुषयोर्वामदक्षिणपाण्योर्विशेषश्च]

मणिबन्धात्परः पाणिस्तस्य लक्षणमुच्यते ।
तत्र चाङ्गुष्ठ एकः स्यात् चतस्रोऽङ्गुलयः पुनः ॥ ४० ॥

---

[1] दमतोऽन्यथ—बृ. सं.   [2] भुग्नौ वक्रौ च—मु. भिन्नानम्रौ च—बृ. सं.
[3] विपुलावत्युच्छ्रितौ सुश्लिष्टौ सौख्यवीर्यवताम् —बृ. सं.

नामान्यासां यथार्थानि ज्ञेयान्यङ्गुष्ठतः क्रमात् ।
तर्जनी मध्यमानामी कनिष्ठा च चतुर्थिका ॥ ४१ ॥

[1]अकर्मकरणः पाणिर्दक्षिणो वीक्ष्यते नृणाम् ।
वामभ्रुवां पुनर्वामः स प्रशस्योऽतिकोमलः ॥ ४२ ॥

[ श्लाघ्यकरलक्षणम् ]

श्लाघ्यश्शोणोऽरुणोऽस्वेदो-
ऽच्छिद्रः स्निग्धश्च मांसलः ।
श्लक्ष्णस्ताम्रनखो दीर्घा-
ङ्गुलिको विपुलः करः ॥ ४३ ॥

[ करतलप्रभेदेन फलभेदः ]

[2]पाणेस्स्थलेन शोणेन धनी नीलेन मद्यपः ।
पीतेनागम्यनारीगः कल्मषेण धनोज्झितः ॥ ४४ ॥

शठोन्नते तले पाणौ निम्ने पितृधनोज्झितः ।
धनी संवृतनिम्ने स्याद्विषमे निर्धनः पुनः ॥ ४५ ॥

अरेखं बहुरेखं वा येषां पाणितलं नृणाम् ।
ते स्युरल्पायुषो निःस्वा दुःखिता नात्र संशयः ॥ ४६ ॥

[ श्रेष्ठाश्रेष्ठकरपृष्ठलक्षणम् ]

करपृष्ठं सुविस्तीर्णं पीनं स्निग्धं समुन्नतम् ।
श्लाघ्यं गूढशिरं नृणां फणभृत्फणसन्निभः ॥ ४७ ॥

विवर्णं परुषं रूक्षं रोमशं मांसवर्जितम् ।
मणिबन्धसमं निम्नं न श्रेष्ठं करपृष्ठकम् ॥ ४८ ॥

---

[1] अकर्मकठिनः—ग.   [2] पाणिस्थ—मु.

[श्लाघ्याश्लाघ्यपाणिमूललक्षणम्]

पाणिमूलं दृढं गूढं श्लाघ्यं सुश्लिष्टसन्धिकम्।
श्लथं सशब्दं हीनं च निर्धनत्वादिदुःखदम् ॥ ४९ ॥

[अङ्गुलिभेदास्तत्फलभेदाश्च]

दीर्घनिर्मांसपर्वाणः सूक्ष्मा दीर्घाः सुकोमलाः।
सुघनाः सरला वृत्तास्तिस्रोऽप्यङ्गुलयः श्रियम् ॥ ५० ॥

यच्छन्ति विरलाः शुष्काः स्थूला वक्रा दरिद्रताम्।
शस्त्रघातं बहिर्नम्राश्चेटत्वं चिपिटाश्च ताः ॥ ५१ ॥

[अनामिकाद्यङ्गुल्याधिक्यफलानि]

अनामिकान्त्यरेखायाः कनिष्ठा स्याद्यदाधिका।
धनवृद्धिस्तथा पुंसः मातृपक्षो बहुस्तथा ॥ ५२ ॥

मध्यमा प्रान्तरेखाया अधिका यदि तर्जनी।
प्रचुरस्तत्पितुः पक्षः स्त्रिया प्रत्ययुतोऽन्यथा ॥ ५३ ॥

अङ्गुष्ठस्याङ्गुलीनां वा यद्यन्यूनाऽधिकता भवेत्
धनैर्धान्यैस्तथा हीनो नरः स्यादायुषापि च ॥ ५४ ॥

[मणिबन्धस्थितयवरेखाभेदात्फलभेदः]

मणिबन्धे यवश्रेण्यस्तिस्रश्चेत्तन्नृपो भवेत्।
यदि ताः पाणिपृष्ठेऽपि ततोऽधिकतरं फलम् ॥ ५५ ॥

द्वाभ्यां तु यवमालाभ्यां राजमन्त्री धनी बुधः
एकया यवपङ्क्त्या तु श्रेष्ठो बहुधनान्वितः ॥ ५६ ॥

[शुभाः कररेखाः]

सूक्ष्माः स्निग्धाश्च गम्भीराः प्रलम्बा मधुपिङ्गलाः।
अव्यावृत्ता गतच्छेदाः कररेखाः शुभा नृणाम् ॥ ५७ ॥

[कररेखाभेदात्फलभेदः]

त्यागाय शोणगम्भीराः सुखाय मधुपिङ्गलाः ।
सूक्ष्माः श्रिये भवेयुस्ताः सौभाग्याय समूलकाः ॥ ५८ ॥

[अनुत्तमकररेखाः]

भिन्नाः सपल्लवा रूक्षा विषमस्थानकच्युताः ।
विवर्णाः स्फुटिताः कृष्णा लीनास्तन्व्यश्च नोत्तमाः ॥ ५९ ॥

[सपल्लवादिरेखानां क्लेशादिफलदायकत्वम्]

क्लेशं सपल्लवा रेखा [1]छिन्ना जीवितसंशयम् ।
कदनं परुषा द्रव्यविनाशं विषमार्पयेत् ॥ ६० ॥

[पितृविभवायूरेखापरिचयः]

मणिबन्धात्पितुर्लेखा करभाद्विभवायुषोः ।
रेखे द्वे यान्ति तिस्रोऽपि तर्जन्यङ्गुष्ठकान्तरम् ॥ ६१ ॥

[गोत्रधनायुषां संपूर्णतावेदकयवरेखाः]

येषां रेखा यवास्तिस्रः सम्पूर्णा दोषवर्जिताः ।
तेषां गोत्रधनायूंषि सम्पूर्णान्यन्यथा न तु ॥ ६२ ॥

[जीवितरेखाया अङ्गुल्यतिक्रमणेऽङ्गुलिसंख्यया पञ्चविंशतिक्रमशः आयुर्निर्णयः]

उल्लङ्घयन्ते च यावत्योऽङ्गुल्यो जीवितरेखया ।
पञ्चविंशतयो ज्ञेयास्तावत्यः शरदां बुधैः ॥ ६३ ॥

[पल्लवानामायूरेखासंबन्धविशेषेण संपद्विपदावेदकत्वम्]

मणिबन्धोन्मुखा आयुर्लेखायां येऽत्र पल्लवाः ।
सम्पदस्ते बहिर्याता विपदोऽङ्गुलिसम्मुखाः ॥ ६४ ॥

---

[1] भिन्ना—मु.

[धनपितृरेखयोरुपरि गत्वा मीलने फलम्]

गत्वा मिलितयोः प्रान्ते द्रव्यपित्रोश्च रेखयोः ।
गृहबन्धो विनिर्देश्यो गृहभङ्गोऽन्यथा पुनः ॥ ६५ ॥

[ऊर्ध्वरेखाया अङ्गुष्ठादिपञ्चाङ्गुलिसंबंधात् पञ्चविधफलावेदकत्वम्]

ऊर्ध्वरेखा मणेर्बन्धादूर्ध्वगा सा तु पञ्चधा ।
अङ्गुष्ठाश्रयिणी सौख्यराज्यलाभाय जायते ॥ ६६ ॥

राजा राजसदृक्षो वा तर्जनीगतया तया ।
मध्यमां यातयाचार्यः ख्यातो राजा धनैर्नृपः ॥ ६७ ॥

अनामिकां प्रयान्त्या तु सार्थवाहो धनाधिपः ।
कनिष्ठां गतया श्रेष्ठः सप्रतिष्ठो भवेद्ध्रुवम् ॥ ६८ ॥

[साम्यवैषम्याभ्यां शुभाशुभगृहिणीप्रदा आयूरेखादयः]

आयुर्लेखाः कनिष्ठान्तर्लेखाः स्युर्गृहिणीप्रदाः ।
समाभिः शुभशीलास्ता विषमाभिः कुशीलकाः ॥ ६९ ॥

[मणिबन्धे आयूरेखावसानरेखानां संस्पृष्टत्वादिना भ्रात्राद्यावेदकता]

आयुर्लेखावसानाभिर्लेखाभिर्मणिबन्धतः ।
स्पृष्टाभिर्भ्रातरः स्पृष्टतराभिर्जामयः पुनः ॥ ७० ॥

अस्पृष्टाभिरदीर्घाभिः भ्रातृजाम्यायुषस्त्रुटिः ।

[यवानामङ्गुष्ठमूलादिगतत्वेन फलभेदः]

यवैरङ्गुष्ठमूलस्थैस्तत्सङ्ख्याः सूनवो नृणाम् ॥ ७१ ॥

यवैरङ्गुष्ठमध्यस्थैर्विद्याख्यातिविभूतयः ।

[यवानां दक्षिणवामाङ्गुष्ठगतानां क्रमात् शुक्लकृष्णपक्षे जन्मावेदकत्वम्]

शुक्लपक्षे तथा जन्म दक्षिणाङ्गुष्ठजैश्च तैः ॥ ७२ ॥

कृष्णपक्षे नृणां जन्म वामाङ्गुष्ठगतैर्यवैः ।

[यवेषु बहूनामेकस्य वा मत्स्याभिमुख्ये फलाफलसाम्यं, श्रीवृद्धिकारणता च]

बहूनामथ वैकस्य यवस्य स्यात्फलं समम् ॥ ७३ ॥

एकोऽप्यभिमुखः स्वस्य मत्स्यः श्रीवृद्धिकारणम् ।

[तत्रैव सम्पूर्णमत्स्ययोः फले कैमुतिकता]

सम्पूर्णौ किं पुनस्तौ द्वौ पाणिमूलस्थितौ नृणाम् ॥ ७४ ॥

[शफरादीनां सम्मुखत्वे क्रमात् शतादिकोट्यवधिकसार्वदिकफल-
दातृत्वम्, अन्त्यकालेऽसम्मुखता च]

शफरो मकरः शङ्खः पद्मः पाणौ स्वसम्मुखः ।
फलदः सर्वदैवान्त्यकाले पुनरसम्मुखः ॥ ७५ ॥

शतं सहस्रं लक्षं च कोटिं दद्युर्यथाक्रमम् ।

[मीनादीनामस्पष्टादिरेखाणामल्पफलदत्वम्]

मीनादयः करेऽस्पष्टा भिन्नच्छिन्नादयोऽल्पदाः ॥ ७६ ॥

[सिंहासनादिरेखाणां सार्वभौमस्थानप्रदत्वम्]

सिंहासनदिनेशाख्यनन्द्यावर्तेन्दुतोरणैः ।
पाणिरेखास्थितैर्मर्त्याः सार्वभौमा न संशयः ॥ ७७ ॥

आतपत्रं करे यस्य दण्डेन सहितं पुनः ।
चामरद्वितयं वापि चक्रवर्ती स जायते ॥ ७८ ॥

[श्रीवत्सादिरेखाभिः क्रमात्सुखादिप्राप्तिः]

श्रीवत्सेन सुखी चक्रेणोर्वीशः पविना धनी ।
भवेद्वकुलाकाररेखाभिर्धार्मिकः पुमान् ॥ ७९ ॥

[याप्यादिरेखाभिः परसैन्यानां हठाद्ग्रहणम्]

याप्ययानरथाश्वेभवृषरेखाङ्किताः कराः ।
येषां ते परसैन्यानां हठग्रहणकर्मठाः ॥ ८० ॥

[एकायुधरेखया परायोध्यत्वम्]

एकमप्यायुधं पाणौ षट्त्रिंशन्मध्यतो यदि ।
तदा परैरयोध्यः स्याद्वीरो भूमिपतिर्जयी ॥ ८१ ॥

[उडुपादिरेखाभिः पोतवणिक्त्वप्राप्तिः]

उडुपो भङ्गिनी पोतो यस्य पूर्णाः करान्तरे ।
स रूप्यस्वर्णरत्नानां पात्रं सांयात्रिकः पुमान् ॥ ८२ ॥

[त्रिकोणादिरेखया कृषीवलत्वप्राप्तिः]

त्रिकोणरेखया सीरमुसलोलूखलादिना ।
वस्तुना हस्तजातेन पुरुषः स्यात्कृषीवलः ॥ ८३ ॥

[नरस्य सौधादिरेखया गोप्राप्तिः]

गोमन्तः स्युर्नराः सौधैर्दामभिः पाणिसंस्थितैः ।

[नरस्य कमण्डल्वादिरेखया श्रीसमागमः]

कमण्डलुध्वजौ कुम्भस्वस्तिकौ श्रीप्रदौ नृणाम् ॥ ८४ ॥

[अनामिकान्त्यपर्वस्थरेखया नरस्य प्रभुत्वप्राप्तिः]

अनामिकान्त्यपर्वस्था प्रतिरेखा प्रभुत्वकृत् ।

[धर्मरेखास्वरूपम्]

ऊर्ध्वा पुनस्तले तस्य धर्मरेखेयमुच्यते ॥ ८५ ॥

[मध्यमस्थितरेखाभ्यां नरस्य प्रभुत्वहानिः]

रेखाभ्यां मध्यमस्थाभ्यामाभ्यां प्रोक्तविपर्ययः ।

[नरस्य सुखमृतिप्रदा रेखा]

तर्जनीगृहबन्धान्तर्लेखा स्यात्सुखमृत्युदा ॥ ८६ ॥

[स्थानप्रदा रेखा]

अङ्गुष्ठपितृरेखान्तस्तिर्यग्रेखा पदप्रदा ।

[अपत्यरेखास्थानम्]

अपत्यरेखाः सर्वाः स्युर्मतस्याङ्गुष्ठतलान्तरे ॥ ८७ ॥

[नरस्य अन्तकाले शूलरोगतो विपत्तिकरी रेखा, तत्स्थानञ्च]

अङ्गुष्ठस्य तले यस्य रेखा काकपदाकृतिः ।
तस्य स्यात्पश्चिमे काले विपत्तिः शूलरोगतः ॥ ८८ ॥

[अङ्गुलिमध्यानां श्लिष्टत्वाश्लिष्टत्वाभ्यां क्रमात् द्रव्यसञ्चयत्यागहेतुता]

श्लिष्टान्यङ्गुलिमध्यानि द्रव्यसञ्चयहेतवे ।
तानि चेच्छिद्रयुक्तानि त्यागशीलस्ततो नरः ॥ ८९ ॥

[तर्जन्यादिकनिष्ठिकान्ताङ्गुलिच्छिद्रेषु क्रमात् प्रथमादिजन्मत्र्यंशक्रमतः
श्रीमतामपि भोजनावसरे दुःखसंभवः]

तर्जनीमध्यमारन्ध्रे मध्यमानामिकान्तरे ।
अनामिकाकनिष्ठान्तश्छिद्रे सति यथाक्रमम् ॥ ९० ॥

जन्मनः प्रथमे त्र्यंशे द्वितीयेऽथ तृतीयके ।
भोजनावसरे दुःखं केप्याहुः श्रीमतामपि ॥ ९१ ॥

[अङ्गुलिपर्वसु दक्षिणावर्तादिरेखाप्राशस्त्यम्]

आवर्ता दक्षिणाः शस्ताः साङ्गुष्ठाङ्गुलिपर्वसु ।

[नरस्य अपमृत्युप्रदरेखाविन्यासः]

रेखायां प्रतिरेखास्तु जायन्ते सूक्ष्मरूपकाः ॥ ९२ ॥

अपमृत्युस्तदा तेषां रेखामाने विनिर्दिशेत् ।

[कनिष्ठिकाग्रस्य अनामिकापर्वातिक्रमादिना नरस्य शताद्यायुर्भूषि]

अनामिकापर्वं यदा विलङ्घ्यते
कनिष्ठिकाग्रेण शतं च जीवितम् ।
समे त्वशीतिर्विषमे च सप्तति-
र्यथार्थहीने खलु षष्टिमादिशेत् ॥ ९३ ॥

[शुभनखाः]

ताम्रस्निग्धोच्चिखोत्तुङ्ग[1]पर्वादिस्था नखाः शुभाः ।

[नरस्य यतित्वाद्यावेदकनखलक्षणानि]

सितैर्यतित्वमस्थाभैर्नैस्स्वं पीतैः सरोगता ॥ ९४ ॥

पुष्पितैर्दुष्टशीलत्वं क्रौर्यं व्याघ्रोपमैर्नखैः ।
शुक्त्याभैः [2]श्यामलैः स्थूलैः स्फुटिताग्रैश्च नीलकैः ॥ ९५ ॥

अधोतरूक्षवक्रैश्च नखैः पातकिनोऽधमाः ।

[हस्तपादयोर्नखेषु श्वेतबिन्दुसंभवे प्रशस्तागन्तुसंभव इति भोजः]

नखेषु बिन्दवः श्वेताः पाण्योश्चरणयोरपि ॥ ९६ ॥

आगन्तारः प्रशस्ताः स्युरिति भोजनृपोऽभ्यधात् ।

[नरस्य जातमात्रस्य तर्जन्यादिनखभङ्गे क्रमात् सहजायुषः अर्धत्वादिसंभवः]

तर्जन्यादिनखैर्भग्नैर्जातमात्रस्य तु क्रमात् ॥ ९७ ॥

अर्धत्र्यंशचतुर्थांशाष्टांशास्स्युः सहजायुषः ।

[नरस्य अङ्गुष्ठनखभङ्गेन धर्मतीर्थरतत्वम्]

अङ्गुष्ठस्य नखे भग्ने धर्मतीर्थरतो नरः ॥ ९८ ॥

---

[1] पर्वान्तस्था–मु. [2] शबलैः–मु.

[अङ्गुष्ठनखस्य कूर्मपृष्ठवदुन्नतत्वे नरस्य भाग्यहानिः]

कूर्मोन्नतेऽङ्गुष्ठनखे नरः स्याद्भाग्यवर्जितः।

[चुबुकस्यातिकृशत्वमांसलत्वाभ्यां नरस्य दरिद्रत्वधनिकत्वे]

अतिकृशदीर्घैश्चुबुकैर्निर्द्रव्या मांसलैर्धनोपेताः।

[अधरस्यावक्रत्वबिम्बोपमत्वाभ्यां नरस्य भूपतित्वं, स्फुटितत्वादिना धनराहित्यं च]

बिम्बोपमैरवक्रैरधरैर्भूपा[1]स्तनुह्रस्वैः ॥ ९९ ॥
ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षै[2]र्धनैः परित्यक्ताः।

[शुभदन्तलक्षणम्]

स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः ॥१००॥

[दन्तानां द्वात्रिंशत्त्वादिसङ्ख्यया नरस्य राजत्वादिप्राप्तिः]

* द्वात्रिंशद्दशनै राजैकत्रिंशद्भिश्च भोगवान्।
त्रिंशद्दन्ता नराश्चैव सुखदुःखैकभाजनाः ॥ १०१ ॥

एकोनत्रिंशकैर्दन्तैर्मनुजा दुःखभागिनः।

[भोगिनां जिह्वालक्षणं, दरिद्राणां तालुलक्षणं च]

जिह्वा रक्ता दीर्घा
श्लक्ष्णा सुसमा च भोगिनां ज्ञेया।
श्वेता कृष्णा परुषा
निर्द्रव्याणां तथा तालु ॥ १०२ ॥

---

* अत्र—द्वात्रिंशद्दशनै राजा एकत्रिंशच्च भोगवान्। त्रिंशद्भिश्च नरो भोगी दुःखी स्यात्स नरो भवेत् ॥ एकोनत्रिंशद्दशनैर्नराः स्युर्दुःखभागिनः। इति—सुब्ब. सामु. पाठः।

[1] स्तनुभिरस्वाः—बृ. सं. [2] क्षैश्च धनपरित्यक्ताः—बृ. सं.

[भूपादीनां वक्त्राणि]

वक्त्रं सौम्यं संवृत-
 ममलं श्लक्ष्णं समं च भूपानाम्।
विपरीतं क्लेशभुजां
 महामुखं दुर्भगाणां च ॥ १०३ ॥

पूर्णचन्द्रसमाकारं मनुजानां मुखं शुभम्।
स्त्रीमुखा निरपत्याः स्युः शठानां वर्तुलं मुखम् ॥ १०४ ॥

निःस्वाः स्युर्दीर्घवदना भीताः स्युः पापकारिणः।
चतुरस्रानना धूर्ता निम्नास्याः पुत्रवर्जिताः ॥ १०५ ॥

कृपणा ह्रस्ववक्त्राः स्युर्दुःखिनो निष्प्रभास्यकाः।

[शुभाशुभे श्मश्रुणी]

अभिन्नाग्रं मृदुस्निग्धं घनं श्मश्रु प्रशस्यते ॥ १०६ ॥

आरक्तं विषमं कूर्चं स्थूलरोम न शोभनम्।

[पुरुषकर्णयोर्लम्बत्वमांसलत्वादीनां फलानि]

लम्बमांसलकर्णाः स्युः सुखिनो मानवाः सदा ॥ १०७ ॥

शङ्खकर्णाश्च भूपाला रोमकर्णाश्शतायुषः।
विस्तीर्णकर्णा धनिनः सिराकर्णास्तु निष्ठुराः ॥ १०८ ॥

कृपणा ह्रस्वकर्णाः स्युः पापान्ताः शुष्ककर्णकाः।

[पुरुषगण्डस्य प्रोन्नतत्वादीनां फलानि]

राजानः प्रोन्नतैर्गण्डैः श्लक्ष्णैः कान्तिसमन्वितैः ॥ १०९ ॥

समैश्च मन्त्रिणः प्रोक्ता निम्नैर्दारिद्र्यभागिनः।

[पुरुषनासायाश्शुकतुंडसादृश्यादीनां फलानि]

शुकनासः सुखी प्रोक्तश्चिरायुः शुष्कनासिकः ॥ ११० ॥

अगम्यागामी पुरुषो नासया भिन्नकल्पया।
सुभगो दीर्घया प्रोक्तश्चोरः कुञ्चितया तया ॥ १११ ॥

अवटीटो वधूभृत्यः धनी वक्राग्रनासिकः।
क्रूराणां दक्षिणे वक्रा नासिका कथिता बुधैः ॥ ११२ ॥

समाऽल्पविवरा ऋज्वी नासा भाग्यवतां भवेत्।

[धनिकादिक्षुतलक्षणानि]

धनीक्षुतं सकृद्द्वि[1]स्त्रिर्मिलितं ह्लादि सानुनादं च।

दीर्घायुषां प्रयुक्तं विज्ञेयं संहतं चैव ॥ ११३ ॥

[स्वभावोपाधिभ्यां दृक्स्वरूपाणि]

दृक्स्वरूपमथो वक्ष्ये स्वभावोपाधिसम्भवम्।

रक्तत्वं धवलत्वं च श्यामत्वमतिनिर्मलम् ॥ ११४ ॥
पर्यन्तपार्श्वतारासु दृशोस्तु स्याद्यथाक्रमम्।

[पुरुषदृशोर्हरितालप्रभत्वादिना चोरत्वादिसूचनम्]

हरितालप्रभैश्चोरो नेत्रैर्नीलैरहङ्कृतः ॥ ११५ ॥
रक्तैर्नृपः सितैर्ज्ञानी मधुपिङ्गैर्महाधनः।

[पुरुषस्य सेनाध्यक्षत्वादिसूचका दृगुपाधयः]

सेनाध्यक्षो गजाक्षः स्याद्दीर्घाक्षश्चिरजीवितः ॥ ११६ ॥
विस्तीर्णाक्षो महाभोगी कामी पारावतेक्षणः।

---

[1] त्रिपिण्डित—मु. सं.

[पुरुषस्य मध्यमत्वावेदकौ चक्षुरुपाधी]

नकुलाक्षा मयूराक्षा मध्यमाः पुरुषाः पुनः ॥ ११७ ॥

[पुरुषस्य अधमत्वावेदका दृगुपाधयः]

काकाक्षा धूसराक्षाश्च मण्डूकाक्षाश्च तेऽधमाः ।

[पुरुषस्य दुष्टत्वाद्यावेदका दृष्ट्युपाधयः]

दुष्टो दारुणदृष्टिः स्यात्कुक्कुटाक्षः कलिप्रियः ॥ ११८ ॥

दृष्टिरोगी भुजङ्गाक्षो मार्जाराक्षस्तु पातकी ।
श्यामदृक्सुभगस्तिर्यग्लोचनो भोगभाजनम् ॥ ११९ ॥

स्थूलाक्षो धनिको दीनदृष्टिः स्यादधमो नरः ।

[पुरुषस्य नेत्रयोर्निम्नत्वादिना आयुःप्राचुर्यादिसूचनम्]

निम्नयोः प्रचुरं प्रायस्तोकमुन्नतयोः पुनः ॥ १२० ॥

वृत्तयोर्नेत्रयोरल्पतरमायुस्तनूभृताम् ।

[पुरुषस्य अधमत्वसूचकनेत्रोपाध्यन्तराणि, निर्धनत्वावेदकचक्षुरुपाधयश्च]

विवर्णैः पिङ्गलैर्वान्तश्चञ्चलैरतिखर्वकैः ॥ १२१ ॥

अधमाः स्युः कृशै रूक्षैः सजलैर्निर्धनाः पुनः ।

[पुरुषे अचक्षुष्ट्वादीनामुत्तरोत्तरं क्रूरत्वावेदकत्वम्]

अचक्षुरेकचक्षुश्च तथा केकरनेत्रकः ॥ १२२ ॥

अर्धकेकरनेत्रः स्यादेषां क्रूरः परः परः ।

[प्रसन्नपुरुषादीनां ऋजुत्वादीनि चक्षुश्चिह्नानि]

ऋजुः शुक्लं प्रसन्नस्य रौद्रं तिर्यक्च कोपिनः ॥ १२३ ॥

सवकासः सपुण्यस्याधोमुखं पापसूचिनः ।

शून्यं व्यग्रमनस्कस्य वलितं चानुरागिणः ॥ १२४ ॥

मध्यस्थं वीतरागस्य सरलं सुजनस्य च ।
असम्मुखं विलक्षस्य सविकारं तु कामिनः ॥ १२५ ॥

भ्रूभङ्गयुक्तमीर्ष्यालोर्भ्रान्तं मत्तस्य सर्वतः ।
जलाविलं च दीनस्य चञ्चलं तस्करस्य च ॥ १२६ ॥

अलक्षितार्थं निद्रालोर्विततस्तं भीरुकस्य च ।
बहवो वीक्षणस्यैवं भेदाः [1]कति तु दर्शिताः ॥ १२७ ॥

[भूताविष्टपुरुषाणां दृष्टिप्रकाराः]

भूताविष्टस्य दृष्टिः स्यात्प्रायेणार्धविलोकिनी ।
मीलिता मुद्गलार्तस्य देवतार्तस्य दुःसहा ॥ १२८ ॥

शाकिनीभिर्गृहीतस्याधोमुखी च भयानका ।

[वातरोग्यादीनां दृष्टिवर्णाः, मिश्ररोगचिह्नं च]

अरुणा श्यामला वापि जायन्ते वातरोगिणः ॥ १२९ ॥

पित्तदोषवतः पीता नीला च शुकपिञ्छवत् ।
श्लेष्मलस्य तथा पाण्डुर्मिश्ररोगस्य मिश्रिता ॥ १३० ॥

दृष्टिः प्रतिजनं भिन्ना भवत्येकमनेकधा ।

[निमेषस्य मात्राद्वित्वादिक्रमतः पुरुषेषु धनिकत्वादिसूचकता]

द्विमात्रास्पन्दिनो ये तु धनिनस्ते प्रकीर्तिताः ॥ १३१ ॥

त्रिमात्रास्पन्दिनो ज्ञेयाः पुरुषाः सुखजीविनः ।
चतुर्मात्रानिमेषस्तु धनवान् परिकीर्तितः ॥ १३२ ॥

दीर्घायुषो धनयुताः पञ्चमात्रानिमेषिणः ।

---

[1] केचन–मु.

[पुरुषाणां भ्रुवोरत्युन्नतत्वादिना अल्पायुष्ट्वादिपरिज्ञानम्]

अत्युन्नताभिरल्पायुषो विशालोन्नताभिरतिसुखिनः।
विषमभ्रुवो दरिद्रा बालेन्दु[1]निभभ्रुवः सधनाः ॥ १३३ ॥

*मध्यविनतभ्रुवो ये
ते सक्ताः स्त्रीष्वगम्यासु।

[पुरुषेषु ललाटप्रभेदफलानि]

[2]धनिनश्च त्रिपुलशृङ्गैः
खण्डाभिश्चार्थपरिहीनाः ॥ १३४ ॥

विषमललाटा विधना
धनवन्तोऽर्धेन्दुसदृशेन।
शुक्तिविशालैराचा-
[3]र्यकाः शिरासन्ततैरधर्मरताः ॥ १३५ ॥

उन्नतशिराभिराढ्याः
स्वस्तिकवत्संस्थिताभिश्च।
निम्नललाटावव-
न्धभागिनः क्रूरकर्मनिरताश्च ॥ १३६ ॥

अभ्युन्नतैश्च भूपाः
कृपणाः स्युः संवृतललाटाः।

[शुभाशुभरुदितचिह्नानि]

रुदितमदीनमनश्रु
स्निग्धं च शुभावहं मनुष्याणाम् ॥ १३७ ॥

---

* इतः पूर्वमयमधिको ग्रंथो बृहत्संहितायाम्—
दीर्घासंसक्ताभिर्धनिनः खण्डाभिरर्थपरिहीनाः।

[1] नतभ्रुवः—बृ. सं. [2] उन्नतविपुलैर्धनिनो निम्नैः सुतार्थसन्त्यक्ताः—बृ. सं.
[3] र्यता—बृ. सं.

रूक्षं दीनं प्रचुरा-
श्रु चैव न शुभप्रदं पुंसाम् ।

[ शुभदादिहसितचिह्नानि ]

हसितं शुभदमकम्पं
निमीलितविलोचनं च पापस्य ॥ १३८ ॥

दुष्टस्य हसितमसकृ-
त्सोन्मा[1]दसमाकृति प्रोक्तम् ।

[ पुरुषेषु ललाटरेखाभेदास्तत्फलानि च ]

तिस्रो रेखाः शतजी-
विनां [2]ललाटाश्रिता यदि वा । १३९ ॥

चतसृभिरवनीशत्वं
नवतिश्चायुः सपञ्चाब्दा ।
[3]विच्छिन्नाभिरगम्या-
गमनरतास्ते भवन्ति रेखाभिः ॥ १४० ॥

केशान्तोपगताभी
रेखाभिरशीतिवर्षायुः ॥
पञ्चभिरायुः सप्तति-
[4]रेकाभ्यधिकाभिरपि षष्टिः ॥ १४१ ॥

[5]बहुभिः समाः शतार्धं
चत्वारिंशच्च वक्राभिः ।
*त्रिंशच्छूलग्नाभि-
[6]विंशतिश्चैव कामवक्राभिः ॥ १४२ ॥

---

* इदमर्धं मुद्रितपुस्तके नास्ति.

[1] दस्यासकृत्प्रान्ते—बृ. सं. [2] ललाटायताः स्थिता यदि ताः—बृ. सं. विच्छिन्नाभिश्चागम्यागामिनो नवतिरप्यरेखेण—बृ. सं. [4] रेकाग्रावस्थिताभिरपि षष्टिः—बृ. सं. [5] बहुरेखेण शतार्धं—बृ. सं. [6] विंशतिकश्चैव वामवक्राभिः—बृ. सं.

क्षुद्राभिः स्वल्पायुः
न्यूनाभिरतोऽन्तरे कल्प्यम् ।

[पुरुषाणां वर्तुलादिशिरोफलानि]

परिमण्डलै[1]र्धनाढ्य-
श्छत्राकारैः शिरोभिरवनीशाः ॥ १४३ ॥

चिपिटैः पितृमातृघ्नाः
करोटि[2]शिरसोऽचिरान्मृत्युः ।
घटमूर्धा चाध्वरुचि-
र्द्विमस्तकः पापकृद्धनैस्त्यक्तः ॥ १४४ ॥

निम्नं तु शिरो महतां
बहुनिम्नमनर्थदं भवति ।

[पुरुषाणां मूर्धजप्रभेदास्तत्फलानि च]

एकैकभवैः स्निग्धैः
कृष्णैराकुञ्चितैरभिन्नाग्रैः ॥ १४५ ॥

मृदुभिर्न चातिबहुभिः
केशैः सुखभाङ्नरेन्द्रो वा ।
बहुमूलविषमकपिलाः
स्थूलस्फुटिताग्रपरुषह्रस्वाश्च ॥ १४६ ॥

अतिकुटिलाश्चातिघना
मूर्धरुहा वित्तहीनानाम् ।

[पुरुषाणां संक्षेपतः शुभाशुभगात्रलक्षणसंग्रहः]

यद्यद्गात्रं रूक्षं
मांसविहीनं शिरावनद्धं च ॥ १४७ ॥

---

[1] धैनाख्याः—बृ. सं.  [2] शिरसां निरान्ध युः—बृ. सं.

तत्तदनिष्टं प्रोक्तं
विपरीतमतः शुभं सर्वम् ।

[महापुरुषलक्षणं तद्विवरणं च]

त्रिषु विपुलो गम्भीर-
स्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ॥ १४८ ॥

सप्तसु रक्तो राजा
पञ्चसु दीर्घश्च सूक्ष्मश्च ।
नाभिः स्वरः सत्त्वमिति [1]प्रदिष्टं
गम्भीरमेतत्त्रितयं नराणाम् ।
उरो ललाटं वदनं च पुंसां
विस्तीर्णमेतत्त्रितयं प्रशस्तम् ॥ १४९ ॥

कक्षाऽथ वक्षो नखनासिकास्यं
कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठं
ग्रीवा च जङ्घा च शुभप्रदानि ॥ १५० ॥

नेत्रान्तपादकरताल्वधरोष्ठजिह्वा
रक्ता नखाश्च खलु सप्त शुभावहानि ।
सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशाः
साकं त्वचा कररुहाश्च न दुःखितानाम् ॥ १५१ ॥

हनुलोचनबाहुनासिकाः
स्तनयोरन्तरमत्र पञ्चमम् ।
इति दीर्घमिदं तु पञ्चकं
न भवत्येव नृणामभूभृताम् ॥ १५२ ॥

---

[1] प्रशस्तं-मु. सं.

[मनुष्यादिषु छायापरिशीलनं तस्याः शुभाशुभफलावेदकता च]

छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रविकासयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥ १५३ ॥

[पार्थिवच्छायालक्षणम्]

स्निग्धद्विजत्वङ्नखरोमकेशाः
छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति
धर्मस्य चाहन्यहनि प्रवृत्तिम् ॥ १५४ ॥

[आप्यच्छायालक्षणम्]

स्निग्धा सिताच्छहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।
सर्वार्थसिद्धिजननी [1]जलसम्भवा स्या-
च्छाया फलं तनुभृतां शुभमादधाति ॥ १५५ ॥

[आग्नेयीच्छायालक्षणम्]

चण्डाधृष्या पद्महेमाग्निवर्णा
युक्ता तेजोविक्रमैश्चातितीव्रैः ।
आग्नेयी प्राणिनां स्याज्जयाय
क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥ १५६ ॥

[वाय्वाकाशयोः छायास्वरूपे]

मलिनपरुषकृष्णा पापगन्धाऽनिलोत्था
जनयति वधशोकौ पुत्रदारार्थनाशम् ।
स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा
निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णा ॥ १५७ ॥

---

[1] जननीव चाप्या—बृ. सं.

[कर्यादिस्वराणां प्राशस्त्यं, गर्दभादिस्वराणां निन्द्यता च]

करिवृषरथौघभेरी-
मृदङ्ग[1]सिंहस्वनाः शस्ताः ।
गर्दभजर्जररूक्ष-
स्वराश्च धनसौख्यसंत्यक्ताः ॥ १५८ ॥

[मनुष्यशरीरस्थाः त्वगादयः सप्त साराः]

सप्त भवन्ति च सारा
मेदोमज्जात्वगस्थिशुक्राणि ।
रुधिरं मांसं चेति
प्राणभृतां तत्समासफलम् ॥ १५९ ॥

[नरस्य रक्तसारः, तत्फलं च]

ताल्वोष्ठदन्तपाली-
जिह्वानेत्रान्तपायुकरचरणैः ।
रक्तैस्तु रक्तसारा
बहुसुखवनितार्थपुत्रयुताः ॥ १६० ॥

[नरस्य त्वङ्मज्जामेदस्साराः, तत्फलानि च]

स्निग्धत्वग्भिर्धनिनो
मृदुभिः सुभगा विचक्षणास्तनुभिः ।
मज्जामेदःसाराः
सुशरीराः पुत्रवित्तयुताः ॥ १६१ ॥

[नरस्य अस्थिशुक्रसारौ, तत्फलानि च]

स्थूलास्थिरस्थिसारो
बलवान्विद्यान्वितः सुरूपश्च ।
बहुगुरुशुक्राः
सुभगा विद्वांसो रूपवन्तश्च ॥ १६२ ॥

---

[1] सिंहाभ्रनिस्वना भूपाः—बृ. सं.

[नरस्य मांससारः, तत्फलं च]

उपचितदेहो विद्वान्
धनी सुरूपश्च मांससारो यः।
[1]संहततनवः स्निग्धाः
सुलब्धयः सुखभुजो ज्ञेयाः ॥ १६३ ॥

[नरस्य वागादिस्थस्नेहस्तत्फलं च]

स्नेहः पञ्चसु लक्ष्यो
वाग्जिह्वादन्तनेत्रनखसंस्थः।
सुतधनसौभाग्ययुताः
स्निग्धैस्तैर्निर्धना रूक्षैः ॥ १६४ ॥

[नरस्य वर्णभेदास्तत्फलानि च]

द्युतिमान् वर्णस्निग्धः
क्षितिपानां मध्यमः सुतार्थवताम्।
रूक्षो धनहीनानां
शुद्धः शुभदो न सङ्कीर्णः ॥ १६५ ॥

[मनुष्यस्य गवादिमुखतः शुभादिप्राग्जन्मपरिज्ञानं, तत्फलं च]

साध्यमनूकं वक्त्रा-
द्गोवृषशार्दूलसिंहगरुडमुखाः।
अप्रतिहतप्रतापा
जितरिपवो मानवेन्द्राश्च ॥ १६६ ॥

वानरमहिषवराहा-
जतुल्यवदनाः [2]सुतार्थसुखभाजः।
गर्दभकरभप्रतिमैः
मुखैः शरीरैश्च निस्स्वसुखाः ॥ १६७ ॥

---

[1] संहृत इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेयाः—बृ.सं. [2] श्रुतार्थ—बृ. सं.

[उत्तममध्यमहीनानामुन्मानानि]

साष्टशतं षण्णवतिः
परिमाणं चतुरशीतिरपि पुंसाम् ।
उत्तमसमहीनाना-
मङ्गुलसङ्ख्या स्वमानेन ॥ १६८ ॥

[पुरुषस्योत्तमादितुलामानानि, तत्फलानि च]

भारार्धतनुः सुखभाक्
तुलितो दुःखी भवत्यूनः । *

[स्त्रीपुरुषयोरुन्मानादिमापनकालः]

विंशतिवर्षा नारी
पुरुषः खलु पञ्चविंशतिभिरब्दैः ।
अर्हति मानोन्मानं
जीवितभागे चतुर्थे वा ॥ १६९ ॥

[भूम्यादयः पुरुषप्रकृतयः]

भूजलशिख्यनिलाम्बर-
सुरनररक्षःपिशाचतिर्यग्भिः ।
सत्त्वेन च भवति नरो
लक्षणमेतद्भवेत्तेषाम् ॥ १७० ॥

[भूजलप्रकृतिकपुरुषस्वभावः]

महीस्वभावः शुभपुष्पगन्धः
सम्भोगवान् [1] सौख्ययुतः स्थिरश्च ।
तोयस्वभावो बहुतोयपायी ।
प्रियाभिलाषी रसभोजनेच्छुः ॥ १७१ ॥

---

* इतः परं— भारोऽशीत्याढ्यानामथर्धः सर्वधरणीशः ॥ इत्यर्धं अधिकं वर्तते बृहत्संहितायाम् ।

[1] सुश्वसनः—बृ. सं.

[अग्निवायुप्रकृतिकपुरुषस्वभावः]

अग्निप्रकृत्या चपलोऽतितीक्ष्णः
चण्डः क्षुधालुर्बहुभोजनश्च ।
वायोः स्वभावे चपलः कृशश्च
क्षिप्रं प्रकोपस्य वशं [1]न याति ॥ १७२ ॥

[आकाशसुरप्रकृतिकपुरुषस्वभावः]

खप्रकृतिर्निपुणो विवृतास्यः
शब्दगतौ कुशलः [2]सुशिराङ्गः ।
त्यागयुतः पुरुषो मृदुकोपः
स्नेहयुतश्च भवेत्सुरसत्त्वः ॥ १७३ ॥

[मनुष्यप्रकृतिकपुरुषस्वभावः]

मनुष्यसत्त्वसंयुतः सुगीतभूषणप्रियः ।
असंविभागशीलवान् स नित्यमेव मानवः ॥ १७४ ॥

[रक्षःपिशाचप्रकृतिकपुरुषस्वभावः]

तीक्ष्णप्रकोपः खलचेष्टितश्च
पापश्च सत्त्वेन निशाचराणाम् ।
पिशाचसत्त्वश्चपलो मलाक्तो
बहुप्रलापी च समुल्बणाङ्गः ॥ १७५ ॥

[तिर्यक्प्रकृतिकपुरुषस्वभावः]

भीरुः क्षुधालुर्बहुभुक्च यः स्यात्
ज्ञेयः स सत्त्वेन नरस्तिरश्चाम् ।
एवं नराणां प्रकृतिः प्रदिष्टा
यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम् ॥ १७६ ॥

---

[1] प्रयाति–वृ. सं.  [2] सुशिरोजः–मु.

[पुरुषस्य शार्दूलादिगतिफलानि]

शार्दूलसिंहसमदद्विपगोपतीनां
तुल्या भवन्ति शिखिनां गतिभिश्च भूपाः ।*
एतानि यस्य पुरुषस्य भवन्ति [1]कार्ये
धन्यान्वदन्ति खलु [2]तान्नरलक्षणज्ञाः ॥ १७७ ॥

[सेनापतित्वप्रापकवर्णः]

क्षतजप्रवालसदृशं
काञ्चनसदृशं च भूमिपस्य वपुः ।
श्यामलपाटलसदृशो
वर्णः सेनाधिपं कुरुते ॥ १७८ ॥

[दारिद्र्यप्रापकवर्णः]

विवर्णश्चातिकृष्णश्चातिरक्तस्तथैव च ।
यस्य वर्णस्तु वपुषो दरिद्रः स भवेन्नरः ॥ १७९ ॥

[स्त्रीपुरुषयोः मूर्धादिस्थानभेदेनावर्तफलभेदः]

आवर्तको वक्षसि मूर्ध्नि यस्य
पापी स योषित्तु मृतप्रजा स्यात् ।

---

*[निश्शब्दस्तिमितगतिफलं, द्रुतपरिप्लुवगतिफलं च]
येषां च शब्दरहितं स्तिमितं च यातं
तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः ॥

[धन्यनरलक्षणानि]

श्रान्तस्य यानमशनं च बुभुक्षितस्य ।
पानं तृषापरिगतस्य भयेषु रक्षा ॥

—अयं श्लोको बृ. सं. अधिको वर्तते । सोऽपीतः परमत्रावश्यकः ।

[1] काले—बृ. सं. [2] नरलक्षणज्ञाः बृ.-सं.

सा भ्रातरं देवरकं च हन्यात्
पृष्ठे ललाटे यदि दृश्यते सः ॥ १८० ॥

मणिबन्धे यदावर्तः वामतो दक्षिणेऽथ वा ।
स पुमान् ब्रह्महत्यादिपापकारी न संशयः ॥ १८१ ॥

आवर्तश्चेच्छिरोमध्ये कुर्यातां योषितावुभे ।
दक्षिणे करमध्ये तु आवर्तो दक्षिणाकृतिः ॥ १८२ ॥

स नरः पुत्रसम्पन्नो धनधान्ययुतो भवेत् ।
वामश्च करमध्ये तु आवर्तो यदि दृश्यते ॥ १८३ ॥

स नरः पापकारी च मध्ये वयसि सौख्यवान्
ललाटे च यदावर्तो जायते पुरुषः शुभः ॥ १८४ ॥

गण्डद्वये यदावर्तो धनभोक्ता भविष्यति ।
चुबुके यदि चावर्तः पापकर्मरतो भवेत् ॥ १८५ ॥

तालुस्थाने यदावर्तः पुण्ययुक्तो भविष्यति ।
पादद्वये यदावर्तः सोऽगम्यागमने रतः ॥ १८६ ॥

[पुरुषस्य शरीरे पद्मादिगन्धभेदेन फलभेदः]

पद्मजातीमल्लिकादिगन्धो वपुषि चेद्यदि ।
स नरो राजराजश्च सत्ययुक्तो भविष्यति ॥ १८७ ॥

पुन्नागस्य च वा गन्धः पाटल्याश्चम्पकस्य वा ।
स पुमान् सैन्यनाथः स्यान्नारदस्य वचो यथा ॥ १८८ ॥

घृतगन्धस्तैलगन्धो गुडगन्धस्तथैव च ।
नानाफलसुगन्धश्च भवेद्वाणिज्यजीवनः ॥ १८९ ॥

करिदानद्रवामोदो महाशूरो भविष्यति ।
गोगन्धो भूमिगन्धो वा स पुमान् भूमिसेवकः ॥ १९० ॥

मांसगन्धो मद्यगन्धः पुंसः स्यात्पापकर्मिणः ।
कटुगन्धः क्षारगन्धः स नरः पण्डितो भवेत् ॥ १९१ ॥

नानागन्धो भवे[1]द्यस्य दरिद्रः स भवेन्नरः ।

[ पुरुषस्य गजादिच्छायाफलानि ]

गजरथशङ्खच्छायायुक्तो भूमिपतिर्भवति ॥ १९२ ॥

गोमेदसमच्छायः सेनानीर्जायते मनुजः ।
व्याघ्रच्छायायुतः पापकर्मैकनिरतो भवेत् ॥ १९३ ॥

कपिच्छायानने यस्य स भवेच्च धनाधिपः ।
वृकच्छायो महायोगी सर्पच्छायो महायशाः ॥ १९४ ॥

सिंहच्छायो महाविद्यस्तुरङ्गो वीरनायकः ।

[ पुरुषस्य सिंहादिसत्त्वफलानि ]

सिंहः पिपीलिका चैव तुरङ्गो यदि वा भवेत् ॥ १९५ ॥

एतानि त्रीणि सत्त्वानि सोऽपि राजा भविष्यति ।
[2]राजा वराहो व्याघ्रश्च सत्त्वः सेनाधिनायकः ॥ १९६ ॥

उरगो वृश्चिकश्चैव कपिमण्डूकलावकाः ।
एतत्सत्त्वो भवेद्यस्तु विद्यावान् धनिको भवेत् ॥ १९७ ॥

काकोलूक[3]क्षीरपक्षिकुक्कुटक्रौञ्चयोस्तथा ।
एतत्सत्त्वो भवत्येव कालज्ञानी ध्रुवं नरः ॥ १९८ ॥

वन्याया मक्षिकायाश्च गोधारस्य च सत्त्वतः ।
वाणिज्यवृत्त्या जीवन्ति मनुजास्ते न संशयः ॥ १९९ ॥

---

[1] दस्य–ग. [2] अत्र 'राजव्याघ्रवराहाणां सत्त्वात्सेनाधिनायकः' इति पाठो युज्यते। [3] अत्र "क्रौञ्चपक्षिणः" इति पाठो युज्यते।

[पुरुषस्य क्रौञ्चादिस्वरफलानि]

क्रौञ्चदुन्दुभिहंसाभस्वरवान् पार्थिवो मतः ।
शङ्खनीरदघोषश्च महाशूरो भविष्यति ॥ २०० ॥

कोकिलस्य मयूरस्य स्वरैः सेनाधिनायकः ।
व्याघ्रोष्ट्रमेषमहिषखरकाकस्वरो भवेत् ॥ २०१ ॥

दरिद्रः पापकर्मा च अगम्यागमने रतः ।

[पुरुषस्य राजहंसादिगतिफलानि]

राजहंसमृगेभानां गमनेन नराधिपः ॥ २०२ ॥

सिंहस्य तुरगस्यापि गत्या सेनाधिनायकः ।
व्याघ्रवानरगत्या च स भवेत्पापकर्मकृत् ॥ २०३ ॥

श्वानोष्ट्रमहिषाणां च गत्या दारिद्र्यमाप्नुयात् ।
गतिर्जलचरस्येव काकोलूकसमाऽथवा ॥ २०४ ॥

गतिर्यस्य समाख्याता जारश्चोरो भवेन्नरः ।

[पुरुषस्यात्यन्तदीर्घादिदेहोन्मानफलानि]

अत्यन्तदीर्घो ह्रस्वश्च यस्य देहः प्रदृश्यते ॥ २०५ ॥

सोऽल्पायुश्च दरिद्रश्च सामुद्रवचनं यथा ।
सम्पूर्णे सर्वाङ्गे हस्ते चैकत्र दीर्घता भवति ।
अङ्गुलिशतवपुषि स्याद्धनवानपि दुःखितः स विज्ञेयः ॥२०६॥

[सर्वलक्षणसंपूर्णतायाः पूर्वजन्माचरितशिवाराधनफलत्वं, प्रकरणोपसंहारश्च]

ये जन्मनि पुरा शम्भुं मनुजास्तु निषेविरे ।

सर्वलक्षणसम्पूर्णा भाग्यभाजो भवन्ति ते॥ २०७ ॥
इति स्त्रीपुंसयोरुक्तो लक्षणानां समुच्चयः ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले सामुद्रशास्त्रे पुरुषलक्षणनिरूपणं नाम दशमस्तरङ्गः

---

## सप्तमकल्लोले एकादशस्तरङ्गः

### गजलक्षणनिरूपणम्

[गजाश्वाद्यारोहणप्रसङ्गतः कुमारस्य गजादिलक्षणप्रश्नः, महीपस्य तदुत्तरकथनप्रतिज्ञा च]

स्त्रीपुंसलक्षणान्युक्तान्याकर्ण्यानन्दितोऽभवम् ।
यच्च प्रोक्तं गुरो! पूर्वं शुभलक्षणशालिनाम् ॥ १ ॥

आरोहणं गजाश्वानां पुत्रस्यापश्यदित्यपि ।
तत्र कौतूहलं भूयः श्रोतुं मे वर्तते हृदि ॥ २ ॥

तल्लक्षणानि कानि स्युः तान्याचक्ष्व गुरोऽधुना ।
शृणु ते कथयाम्यद्य तेषां लक्ष्म समासतः ॥ ३ ॥

[पुरातनगजोत्पत्तिवृत्तान्तः]

या पुरा महिषी जाता काश्यपस्य त्रयोदशी ।
क्रोधेति विदिता जातास्तस्या द्वादश कन्यकाः ॥ ४ ॥

तन्मध्ये भद्रमुद्राया अभूदैरावतो गजः ।
शताख्यायास्तु कन्याया जज्ञिरेऽन्येऽपि दिग्गजाः ॥ ५ ॥

मातङ्गसंज्ञिकायास्तु जाता मातङ्गसंज्ञकाः ।
द्विधा विधाय ब्रह्माण्डं सालवादनकारिणि ॥ ६ ॥

मतङ्गे शिवसंतुष्ट्यै सामगानपरे मुनौ ।
तदा साम्नोऽथ ये जातास्तेन ते सामजाः स्मृताः ॥ ७ ॥

[स्वर्गस्थानां गजानां मुनिशापाद्भूमावुत्पत्तिः]

पुरा स्वर्गे सुखेनासन् कामगाः खेचरा गजाः ।
मुनिशापाहता भूमौ ततो जाता वनेचराः ॥ ८ ॥

[गजोत्पत्तिस्थानानि वनानि, तद्विभागश्च]

गङ्गासागरहेमाद्रिप्रयागाणां च मध्यतः।
वनं प्राच्यमिति प्रोक्तं लौहित्याब्धेश्च पश्चिमे ॥ ९ ॥

त्रिपुर्यां कोसलादौ च चेदीकारूषकं वनम्।
श्रीक्षेत्रं गौडवङ्गालं मांसलीयं वनं परम् ॥ १० ॥

विन्ध्याचलत्रिकूटाद्रिकलिङ्गद्राविडाश्रितम्।
वनं कलिङ्गकं नाम समुद्रावधि कीर्त्यते ॥ ११ ॥

श्रीशैले वेदशैले च समयाद्रौ तथैव च।
वनं दशार्णकं नाम करिणां जन्मकारणम् ॥ १२ ॥

सह्याद्रिभृगुकच्छान्तमपरान्तं वनं स्मृतम्।
द्वारवत्यामवन्त्यां च सौराष्ट्रं वनमुच्यते ॥ १३ ॥

कालाञ्जने कुरुक्षेत्रे सिन्धुसागरसङ्गमे।
वनं पञ्चनदं प्रोक्तं हिमालयकृतावधि ॥ १४ ॥

[गजवनानामुत्तममध्यमाधमभावः, आहत्य तत्संख्या च]

कलिङ्गं चेति कारूषं दाशार्णं च वनं परम्।
अङ्गारेयं वनं प्राच्यं मध्यमं वनमिष्यते ॥ १५ ॥

अपरान्तं पञ्चनदं सौराष्ट्रं चाधमं वनम्।
एवमष्ट[1]वनान्याहुर्गजानां जन्मने परम् ॥ १६ ॥

[कलिङ्गवनसंभवगजलक्षणानि]

सूक्ष्मरोममृदुत्वक्काः कलविङ्कनिभेक्षणाः।
शूरोत्कास्तु चिरमदाः सर्वदाऽस्य स्रवन्मदाः ॥ १७ ॥

कलिङ्गदेशसञ्जातकरिणां लक्षणं त्विदम्।
ह्रस्वपीनशिरोग्रीवा विषाणैर्मधुसन्निभैः ॥ १८ ॥

---

[1] मांसलीयवनेन सहाष्टौ वनानि।

उदग्राश्च महाकायाः पृथुदीर्घकरान्विताः ।
स्वभावबलिनः पीना वराहजघना वराः ॥ १९ ॥

सुदीर्घबालवंशाश्च पद्मप्रालपपेचकाः ।
[1] मनोरमाः क्लेशसहाः कलिङ्गवनचारिणः ॥ २० ॥

पृथुत्वकाश्च दीर्घाश्च सूक्ष्मरोमाण एव च ।
ह्रस्वपीनसुवृत्तग्रीवा विषाणैर्मधुसन्निभैः ॥ २१ ॥

तनूदरा दीर्घजङ्घा नोज्झन्ति च चिरं मदम् ।
क्लेशक्षया धनुर्वंशाः कालिङ्गवनसम्भवाः ॥ २२ ॥

[अपरान्तगजलक्षणम्]

महोत्तुङ्गोऽग्रमूर्धाक्षिदन्ताष्ठीवांसनोरसः ।
दीर्घताम्रास्यताल्वोष्ठाः मद्यगन्धमदाश्च ते ॥ २३ ॥

धनुर्वंशाः सुपर्वाणः ह्रस्वग्रीवापरस्थिराः ।
श्यामोदराः सत्त्ववन्तः सेवन्ते नितरां च ते ॥ २४ ॥

सत्त्वप्रतीपास्तत्र स्युर्ह्रस्वग्रीवापराङ्गकाः ।
वक्षोमस्तशिरोदग्राः श्यामाश्चाप्यपरान्तजाः ॥ २५ ॥

[सौराष्ट्रजगजलक्षणम्]

त्वक्रदनखकर्णैस्तु रूक्षैस्तनुभिरेव च ।
पिङ्गाक्षाश्चाल्पबलिनस्तनुरोमाल्पपेचकाः ॥ २६ ॥

सौराष्ट्रनामकेऽरण्ये सञ्जातास्तु गजा मताः ।

[शुभगजस्योत्सेधादिमानानि]

सप्तारत्निसमुत्सेधो नवारत्न्यायतश्च यः ॥ २७ ॥

दशारत्निपरीणाहः स गजो मानवः शुभः ।

---

[1] मनोरमा-ग.

[अरालात्यरालगजमानं, मानाधिक्यगजस्य निन्द्यता च]

अरत्निमात्रेणाधिक्यादरालः परिकीर्तितः ॥ २८ ॥

[1]अत्यरालस्तदाधिक्यान्निन्द्यो मानाधिको गजः ।
अरत्निमात्रहीनो यः स मध्यो मानतो गजः ॥ २९ ॥

[कनिष्ठवामनगजयोर्मानम्]

अरत्निद्वयहीनस्तु कनिष्ठः परिकीर्तितः ।
कनिष्ठादपि यो हीनो वामनः स तु निन्दितः ॥ ३० ॥

[भद्रादिगजभेदाः]

भद्रो [2]मन्द्रो मृगश्चेति ज्ञेयास्ते त्रिविधा गजाः[3] ।

[मृगगजस्य औन्नत्यादिकम्]

पञ्चोन्नतिः सप्तमृगस्य दैर्घ्य-
मष्टौ च हस्ताः परिणाहमानम् ।

[भद्रमंद्रगजयोः संकीर्णनागानां च देहप्रमाणानि]

एकद्विवृद्धावथ भद्रमन्द्रौ
सङ्कीर्णनागोऽनियतप्रमाणः ॥ ३१ ॥

[गजानां दैर्घ्यादिमानव्यवस्था]

मुखादापेचकं दैर्घ्यं पृष्ठपार्श्वोदरान्तरात् ।
आनाह उच्छ्रयः पादाद्विज्ञेयो यावदासनम् ॥ ३२ ॥

[भद्रगजानां संचारप्रदेशास्तल्लक्षणानि च]

भद्रा द्विपाः पर्वतचारिणस्ते
कक्षाण्डकोशेषु समा घनाश्च ॥

[1] अत्यरालो ह्याधिक्यान्निन्द्यो मानाधिकावितौ—मान. [2] मन्द इत्यपि पाठो ।
[3] अत्रोपरि वक्ष्यमाणः चतुर्थः संकीर्णनामविभागोऽप्यवधेयः ।

कूर्माभपार्ष्णिश्च नखान्तरेषु
सुक्ताश्च मांसैश्च तनूरुहैश्च ॥ ३३ ॥
पादैः प्रशस्तैश्च नखैश्च सान्द्राः
समन्ततः पद्मकलाञ्छिताश्च ।

न कृशा न चातिवृद्धा मधुनिभदन्तेक्षणा घनुर्वंशाः ।
समसुविभक्तशरीराः सुवृत्तगात्राः परा भद्राः ॥ ३४ ॥

[ भद्रगजारोहणफलम् ]

आरोहणं भद्रनाम्नो मातङ्गस्य यशस्करः ।
आयुष्करं पापहरं बलतेजो विवर्धनम् ॥ ३५ ॥

[मन्द्रगजसंचारस्थानानि, तल्लक्षणं च]

[1] मन्द्रा गजाः शैवलिनीसुचाराः
समुन्नताश्चानतपूर्वकायाः ।
सुनिर्वलीभिस्तनुभिस्तथांसैः
सहिष्णवः संहरणप्रियाश्च ॥ ३६ ॥

विपुलकरकर्णवदना
महोदराः स्थूलपेचकविषाणाः ।
चलबहुललम्बमांसा
हर्यक्षाः कुञ्जरा मन्द्राः ॥ ३७ ॥

[मृगगजसञ्चरणस्थानानि, तल्लक्षणं च]

मृगा वने सञ्चरणा भवन्ति
समन्वितास्ते शिथिलैश्च मांसैः ।
मृद्वीक्षणा दीर्घविषाणगात्राः
सुस्निग्धवर्णाः सुबृहद्वलीकाः ॥ ३८ ॥

---

[1] मन्द्रा इत्यपि पाठः ।

सुस्निग्धपक्ष्माक्षिनखास्यफाला
अतीववक्राः सुकुमारकेशाः ।
कृशकरचरणग्रीवाः स्थूला
ह्रस्वाश्च वालमेढ्रोष्ठाः ॥ ३९ ॥

संक्षिप्तपुष्टवंशास्तनुमुखदन्ता मृगा ज्ञेयाः ।

[अष्टादश सङ्कीर्णगजजातयः]

भद्रादीनां लक्षणानि क्रमेणोक्ता पृथक् पृथक् ॥ ४० ॥

सङ्कीर्णानां प्रवक्ष्यामि भेदानष्टादशोदितान् ।
अष्टादशैव सङ्कीर्णा जातीर्जानाति काश्यपः ॥ ४१ ॥

[अनूकसंज्ञकशुभाशुभगजचेष्टिते]

गतिं चेष्टां स्वरं सत्वमन्यस्यानुकरोति यत् ।
अनूकमिति तज्ज्ञेयं गजचेष्टितकोविदैः ॥ ४२ ॥

शुभानां प्राणिनां चेष्टा शुभानूकं [1]वरं हि तत् ।
निन्दितानां तथा चेष्टामनूकं निन्दितं विदुः ॥ ४३ ॥

[ब्रह्मांशजगजलक्षणम्]

सुव्यक्ता बिन्दवो यस्य गौरवर्णा मनोहराः ।
लोहितौ नेत्रयोः प्रान्तौ स्निग्धौ च बलिनौ रदौ ॥ ४४ ॥

एवं लक्षणसंयुक्तो गजो ब्रह्मांशको मतः ।
पूजार्होऽसौ नरेन्द्राणां विजयारोग्यवर्धनः ॥ ४५ ॥

[प्रजापत्यंशजगजलक्षणम्]

कक्षभागे तथा कण्ठे यः समः पृथुलाननः ।
मुखे कोकनदच्छायो युग्मरोमविराजितः ॥ ४६ ॥

---

[1] परं—ग.

बहुकालमदः शूरो घननादेन हृष्यति ।
प्रजापत्यंशको नागः प्रजावृद्धिं करोत्यसौ ॥ ४७ ॥

[ इन्द्रांशगजलक्षणम् ]

बिन्दवो वलिरेखाश्च दृश्यन्ते [1]मुखवक्षसोः ।
स्वस्तिकैर्वर्धमानाद्यैर्नन्द्यावर्तैश्च सन्निभाः ॥ ४८ ॥

रक्तोत्पलसमे नेत्रे स स्यादिन्द्रांशको गजः ।
समरे विजयं दद्यात्किञ्च [2]भूपालसम्पदः ॥ ४९ ॥

[ धनदांशगजलक्षणम् ]

ताम्रावोष्ठौ तथा जिह्वा धात्रीफलसमद्युती ।
नयने रदने यस्य कुसुमामोदसन्निभौ ॥ ५० ॥

धनदांशसमुद्भूतो धनरत्नसमृद्धिकृत् ।
नृपाणां भवने तिष्ठन् पूजितः कुञ्जरोत्तमः ॥ ५१ ॥

[ वरुणांशगजलक्षणम् ]

[3]गजः कृष्णसभो वर्णो घनः सर्पिस्सदप्रदः ।
आनने सुभगो मूर्ध्नि गम्भीरघनगर्जितः ॥ ५२ ॥

स्रवति प्रचुरं दानं वरुणांशकसम्भवः ।
आहवे रिपुसंहारी निजभर्तृजयप्रदः ॥ ५३ ॥

[ चन्द्रांशगजलक्षणम् ]

त्रिवलीमण्डितः कण्ठे क्षौद्रपीतविलोचनः ।
केतकीच्छायदशनः पृथुरक्ताग्रपुष्करः ॥ ५४ ॥

---

[1] यस्य वर्ष्मणि—मान. [2] स्वरभूपालसम्पदः—मान. [3] कृष्णमेघनिभो वर्णे स्यानसर्पिः सदप्रदः—मान.

विन्दुमान् पाण्डुवर्णश्च शशाङ्कांशसमुद्भवः ।
सङ्गरप्राङ्गणे राज्ञां गजोऽयं विजयप्रदः ॥ ५५ ॥

[अग्न्यंशगजलक्षणम्]

अग्निज्वालासदृग्रोमा केशवालेषु पिङ्गलः ।
पिङ्गाक्षः [1] पिङ्गपुच्छश्च पिङ्गपुष्करशोभितः ॥ ५६ ॥

अग्न्यंशकसमुद्भूतः साक्षादग्निरिवाहवे ।
भस्मसात्कुरुते सैन्यमशेषं द्विषतां सदा ॥ ५७ ॥

[अग्निमारुतांशगजलक्षणं, तदीयविशेषश्च]

कृष्णायसतनुच्छायो गौरवर्णश्च कर्णयोः ।
नखा दीपशिखाभासो निबिडा मांसला तनुः । ५८ ॥

अग्निमारुतयोरंशात्सञ्जातः कोपनो बली ।
तस्य दोषोऽयमेकः स्यादङ्कुशं यन्न मन्यते * ॥ ५९ ॥

प्रचण्डत्वाद्भयं दत्ते रिपुसैन्येष्वयं गजः ।

[विष्ण्वंशगजलक्षणं, तत्रत्यविशेषश्च]

दन्तमध्यात्समारभ्य क्रमशो हीयते करः † ॥ ६० ॥

सुगन्धिशीकराकारा यस्य निश्वाससन्ततिः ।
[2] घनवद्गर्जिताध्वानो वलिहीनो भृशं दृढः ॥ ६१ ॥

मृदुः सूक्ष्माञ्जनश्यामः सर्वाङ्गीणतनूरुहः ‡ ।
सुवर्णकेतकोद्योतौ रदनौ वर्तुलौ दृढौ§ ॥ ६२ ॥

---

*इतः परं मानसोल्लासे—दोषाभासो गुणस्तस्य सञ्जाते समरोत्सवे । इत्यधिकः पाठो वर्तते । † इतः परमयमधिकः पाठः—ताम्रपुष्करपर्यन्तः सुप्रमाणायताङ्गुलिः—मानसोल्लासे । ‡ इतः परमयमधिकः पाठः—श्रीगर्भपुष्करच्छायाकान्तिः सर्वाङ्गसङ्गिनी—मानसोल्लासे । § इतः परमधिकः पाठः—आयतः प्रोन्नतो मध्ये निम्नः स्यात्पादकुम्बकः—मानसोल्लासे ।

[1] पिङ्गताल्वश्च–मान. [2] घनवद्बृंहिताध्वानो वलीहीनं वपुर्दृढम्–मान.

आयतो रोमवानोष्ठः सुगण्डौ च समौ शुभौ ॥
मुखमण्डलमत्यर्थं रम्यं दृष्टिमनोहरम् ॥ ६३ ॥

पुष्पसारसमे नेत्रे पक्ष्मले प्रान्तलोहिते ।
बलिनौ मृदुविस्तीर्णौ समौ मेदाविवर्जितौ ॥ ६४ ॥

सिराविरहितौ [1] कर्णौ तालदुन्दुभिनिःस्वनौ ।
वर्तुलावुन्नतौ कुम्भौ समौ लक्ष्मीकुचोपमौ * ॥ ६५ ॥

ऋजुर्ह्रस्वो गलोद्देशो दीर्घावंसौ च मांसलौ ।
बाहू दीर्घावृजू पीनावधोऽधः क्रमशः कृशौ ॥ ६६ ॥

कूर्माकार[2]तला लग्नस्निग्धार्धेन्दुनिभा नखाः ।
विंशतिर्वा दशाष्टौ वा शोभनाः परिकीर्तिताः ॥ ६७ ॥

उरो विशालमुद्बद्धमुदरं प्रतनू कुचौ † ।
सज्यचापनिभो वंशो वालधिश्चायतः कृशः ॥ ६८ ॥

शङ्खचक्रगदाकारा बिन्दवो वलयोऽथ वा ।
दृश्यन्ते यस्य नागस्य स विष्णवंशकसम्भवः ॥ ६९ ॥

अभिषेकोचितः पूज्यः सर्वकार्यप्रसाधकः ।
[3]पुष्णाति रत्नदो राज्यं धनधान्यसमृद्धिकृत् ॥ ७० ॥

---

* इतः परमधिकः पाठः—रम्यौ फालतलन्यासौ विपुलं चासनं समम्—**मानसोल्लासे** । † इतः परं अयमधिकः पाठः—अलस्तं मेहनं शस्तं वराहजघनं वरम्—**मानसोल्लासे** ।

[1] कर्णतालौ दुन्दुभि—**मान.** [2] तलालग्नाः स्निग्धा—**मान.** [3] पुनाति—**मान.**

[सात्विकगजाश्चत्वारः, तत्र देवसत्त्वगजलक्षणम्]

रुच्याहाररतो नित्यं वलिरेखाविवर्जितः ।
[1]अनामयः स्थिरः शूरो देवसत्त्वो भवेद्गजः ॥ ७१ ॥

[गन्धर्वसत्त्वगजलक्षणम्]

मेधावी च क्रियादक्षः कामुकश्चपलः पटुः ।
[2]स्तब्धः प्रेक्षणकासक्तो गजो गन्धर्वसत्त्वजः ॥ ७२ ॥

[विप्रसत्त्वजगजलक्षणम्]

जलावगाहने सक्तः कोपनः कातारो भृशम् ।
भोजने लम्पटो नित्यं कुञ्जरो विप्रसत्त्वजः ॥ ७३ ॥

[क्षत्रसत्त्वजगजलक्षणम्]

दान्तः शूरः सदोत्साहो द्वन्द्वयुद्धविशारदः ।
अभीरुराहवे धीरः क्षत्रसत्त्वो मतङ्गजः ॥ ७४ ॥

चत्वार्येतानि सत्त्वानि सात्विकस्य भवन्ति हि ।
सात्विकः कफसंयुक्तः श्लेष्मलः स्निग्धदीधितिः ॥ ७५ ॥

[त्रयो राजसगजाः, तत्र वैश्यसत्त्वोद्भवगजलक्षणम्]

सञ्चिन्वन् कवलं वक्त्रे दन्तसन्धौ तथैव च
प्रज्ञावान् दीर्घरोषश्च वैश्यसत्त्वोद्भवो द्विपः ॥ ७६ ॥

[शूद्रसत्त्वोद्भवगजलक्षणम्]

दण्डसाध्यः सदा नीचो मूर्खश्च मलिनाशयः ।
आहवे निरतः शूरः शूद्रसत्त्वोद्भवः करी ॥ ७७ ॥

---

[1] देवदानवगन्धर्वयक्षराक्षसमानुषान् ।
पिशाचोरगसत्त्वांश्च लक्षयेत्स्वस्वलक्षणैः ॥—मातङ्गलीला ।

[2] स्तम्भप्रेक्षणकासक्तः—मान.

[ सर्पसत्त्वोद्भवगजलक्षणम् ]

विश्वासघातकः क्रूरो गमने कुटिलक्रमः ।
[1]भुङ्क्ते न मदसंयुक्तः सर्पसत्त्वः करी मतः ॥ ७८॥

एतानि त्रीणि सत्त्वानि राजसस्य भवन्ति हि ।

[ राजसगजसामान्यरीतिः ]

राजसः पित्तभूयिष्ठः पित्तलस्तप्तविग्रहः ॥ ७९ ॥

[ तामसगजौ, तत्र पैशाचसत्त्वगजलक्षणम् ]

उन्मार्गेण सदा याति विवेकरहितो भृशम् ।
उन्मत्त इव चेष्टायां द्विपः पैशाचसम्भवः ॥ ८० ॥

[ रक्षस्सत्त्वगजलक्षणम् ]

निशायां चरते स्वैरं [2]मनुष्यहननोद्यतः ।
वेगवान् सबलो हस्ती रक्षःसत्त्वसमुद्भवः ॥ ८१ ॥

एते द्वे तामसे सत्त्वे तामसो वातलो भृशम् ।
समरे दृश्यते रूक्षो निद्रालुश्चपलो गजः ॥ ८२ ॥

[ अष्टौ दिग्गजाः, तत्र ऐरावतान्वयगजलक्षणम् ]

जायन्ते पाण्डुरा यस्य केशा लोमानि वालधिः
वस्तौ च नेत्रयोश्चैव स स्यादैरावतान्वयः ॥ ८३ ॥

[ पुण्डरीकान्वयगजलक्षणम् ]

[3]अध्यक्षः सारसदृशौ स्वेच्छायुद्धविशारदः ।
कुञ्जरः स्थूलशीर्षश्च पुण्डरीकान्वयो गजः ॥ ८४ ॥

---

[1] न भुङ्क्ते च मदेत्यर्थ—मान. [2] मनुष्याणां वधे रतः—मान. [3] युद्धक्षमः सारसदृक् कोपी युद्धविशारदः । कुब्जरोमा स्थूल—मान.

[पुष्पदन्तान्वयगजलक्षणम्]

श्यामवर्णः सुदेहश्च कृष्णकेशः कृशोदरः।
स्थूलबिन्दुर्धनुर्वंशः पुष्पदन्तान्वयः करी ॥ ८५ ॥

[वामनान्वयगजलक्षणम्]

अग्निवर्णः सुवर्णाक्षो वेगवान् जललम्पटः।
आयतो विस्तृतोऽत्यर्थं वामनो वामनान्वयः ॥ ८६ ॥

[सुप्रतीकान्वयगजलक्षणम्]

प्रचण्डः कुमुदच्छायः कपोतनयनच्छविः।
मेधावी तनुरोमा च सुप्रतीकान्वयो गजः ॥ ८७ ॥

[अञ्जनान्वयगजलक्षणम्]

स्निग्धवालत्रिगण्डो यः श्वेतोदरकरान्वितः।
उन्नतस्थूलजघनः सोऽञ्जनान्वयसम्भवः ॥ ८८ ॥

[सार्वभौमान्वयगजलक्षणम्]

[1]श्रोत्रपृष्ठसितो ह्रस्वश्रोत्रहस्तसमन्वितः।
धेनुकाध्यक्षकः स्थूलः सार्वभौमान्वयो गजः ॥ ८९ ॥

[कुमुदान्वयगजलक्षणम्]

कुमुदाभः स्थूलतनुस्तिग्मलोहितलोचनः।
कृष्णविस्तीर्णहस्ताग्रः कुञ्जरः कुमुदान्वयः ॥ ९० ॥

[अन्वर्थवेदिनो गजस्य स्वरूपम्]

धैर्यं शौर्यं पटुत्वं च विनीतत्वं सुकर्मता।
[2]अन्वर्थवेदनश्चैव भयस्थानेष्वमूढता ॥ ९१ ॥

---

[1] रौद्रः पृथुशिरा ह-मान.

[2] अत्यर्थोत्तानगम्भीरान्वर्थमत्यर्थकर्कशैः।
सिद्धेनापि च नागानां वेदनं सप्तधा विदुः ॥—मातङ्गलीला।
अत्यर्थकर्कशसिद्धानां लक्षणं तत्रैव द्रष्टव्यम्।

[गम्भीरवेदिनो गजस्य लक्षणम्]

दौर्मनस्यं तथाऽलस्यं निद्रालुत्वं च मूढता ।
गम्भीरवेदनश्चैव दुष्टत्वं च तमोगुणः ॥ ९२ ॥

[उत्तानवेदिनो गजस्य चिह्नानि]

तेजस्विता च चण्डत्वं चपलत्वं तथैव च ।
शीघ्रता क्रीडनत्वं च तथैवोत्तानवेदिनः ॥ ९३ ॥

[प्रत्यर्थवेदिगजस्वरूपम्, व्यालगजस्य मिश्ररूपता च]

धृतो धावति चात्यर्थं [1]प्रियत्वमनुगच्छति ।
[2]प्रत्यर्थवेदी विज्ञेयो व्यालो मिश्रगजो मतः ॥ ९४ ॥

[गजानां उत्तमवयःकालः]

दशसंवत्सरादूर्ध्वमाचतुर्दशवत्सरात् ।
गजानामुत्तमं प्रोक्तं वयः शास्त्रविशारदैः ॥ ९५ ॥

[गजानां मध्यमाधमवयःकालौ, सप्ततेरुपरि वाहनाद्ययोग्यता च]

ऊर्ध्वं चतुर्दशाब्देभ्यः त्रिंशत्संवत्सरावधि ।
मध्यमं तु वयस्तस्मादूर्ध्वं यावच्च सप्ततिः ॥ ९६ ॥

वयोऽधमं ततोप्यूर्ध्वं न योग्या वाहनादिषु ।

[गजानां कर्मयोग्यायोग्यवयांसि]

सर्वकर्मक्रियायोग्यं पूर्वे वयसि कारयेत् ॥ ९७ ॥

मध्ये वयसि नागानामधमे च प्रशस्यते ।
अन्त्ये वयसि [3]मातङ्गं न कर्मसु नियोजयेत् ॥९८॥

---

[1] प्रियं स्वम–मु. [2] प्रत्यर्थवेधी–मु. [3] मातङ्गान्न–मु.

[राजयोग्यगजलक्षणानि]

सुस्निग्धं श्यामकान्तिं ससुरभिवदनं सप्तधातुस्थिराङ्गं
सुव्यक्तोत्तुङ्गकुम्भं शशिधवलनखं सान्द्रसिन्दूरबिन्दुम् ।
मध्वाभोत्तुङ्गदन्तस्थिरतररदनं धैर्यवन्तं द्विपेन्द्रं
सम्प्राप्तो भूमिपालः सजलधिपरिखां याति पृथ्वीमशेषाम्
॥ ९९ ॥

मध्वाभदक्षिणसमुन्नतदन्तकोशाः
सुस्निग्धचारुनयना अतिदीर्घहस्ताः ।
सम्पूर्णविंशतिनखाः पृथुपीनकुम्भा
निश्छिद्रबिन्दुरुचिरोज्ज्वलकर्णतालाः ॥ १०० ॥

क्षोणीमण्डलकुण्डलीकृतकरायामोऽभिरामो दृशः
क्षौद्राम्भोरुहगन्धदक्षिणमहादन्तोऽभिरामेक्षणः ।
स्फूर्जद्विंशतिसन्नखः परभृतव्याहारचारुस्वनो
निश्छिद्रश्रवणाञ्चलो नृपकरी स्याद्बिन्दुजालोज्ज्वलः ॥ १०१ ॥

आभूमिदीर्घऋजुवृत्तसरोमवाल-
श्चूतप्रवालऋजुकोमलकोशदण्डः ।
रक्तारविन्दनयनः कलकण्ठनादः
सोऽयं करी शुभकरः खलु पार्थिवानाम् ॥ १०२ ॥

[राजवाहनोचितगजलक्षणानि]

शिक्षितः पञ्चधारासु सर्वभूमिषु शिक्षितः ।
अन्धवत्सर्वभूतेषु शब्देषु बधिरो भवेत् ॥ १०३ ॥

रसेष्वजिह्वस्त्यागो भयस्थानेष्वशङ्कितः ।
स्त्रीबालवृद्धमत्तानामारोहेषु सुखावहः ॥ १०४ ॥

[राज्ञामुपवाहनयोग्यगजलक्षणानि]

अन्वर्थविन्मनस्वी च मधुसन्निभलोचनः ।
ईदृशश्च द्विपेन्द्रेषु प्रदिष्टो राजवाहनम् ॥ १०५ ॥

बलसत्त्वसमायुक्तो जवनोऽतीव संयतः ।
साधुशीलो विभक्ताङ्गः प्रज्ञावान्नामवाञ्छुचिः ॥ १०६ ॥

आबाल[1]वृद्धगन्ता च कालिङ्गवनसम्भवः ।
आङ्गारेयकजातो [2]वा सम्पूर्णाङ्घ्रिः सुलक्षणः ॥ १०७ ॥

सन्तापरहितो दान्तो विशालाननमस्तकः ।
ताम्रचूडहलाकारदन्तद्वयशुभाननः ॥ १०८ ॥

समाङ्गः समपादश्च स भवेदुपवाहनम् ।

[राज्ञां सन्नाहोचितगजलक्षणानि]

मधुदृङ्मधुदन्तश्च मनोज्ञः सूक्ष्मबिन्दुमान् ॥ १०९ ॥

दीर्घाङ्गुलिः सुपूज्येन पुष्करेण समन्वितः ।
भद्रजातिः स्थिरतनुर्गोलाङ्गूलो महाशिराः ॥ ११० ॥

हर्यक्षः स्फुटिकाक्षो वा सर्वसत्त्वमदोद्यतः ।
विप्रयुक्तः स्वकेभ्यो वा विच्छिन्नश्चापि सङ्गरे ॥ १११ ॥

एक एव समायाति निःशङ्को देशकालयोः ।
गुणैरेतैः समायुक्तो गजः सान्नाहिको भवेत् ॥ ११२ ॥

[गन्धहस्त्युत्पत्तिक्रमः, तल्लक्षणानि च]

कालयोगविशेषेण मत्तासु करिणीषु च ।
तादृग्गजसमायोगाज्जायन्ते गन्धहस्तिनः ॥ ११३ ॥

गन्धश्च मधुना तुल्यो स्वेदमूत्रपुरीषजः ।
स्वेदमूत्रपुरीषाणि मदं चैव मतङ्गजाः ॥ ११४ ॥

यस्य चाघ्राय माद्यन्ति तं विद्याद्गन्धहस्तिनम् ।

---

[1] वृद्धयोद्धा च—मु. [2] यः स—मु.

[गन्धहस्तिनो लक्षणान्तरम्]

मदमूत्रपुरीषाणि सञ्जिघ्रन्नन्यहस्तिनाम् ॥ ११५ ॥

दीप्तः कोपाग्निना नागो यस्तु दन्दह्यते स्वयम् ।
तं गन्धहस्तिनं विन्द्यान्नृपतेर्विजयावहम् ॥ ११६ ॥

[गन्धमदहस्तिसम्भवप्रकाराः, तेषां राजशुभावहत्वं च]

तथैव मदयुक्तस्य प्राप्तैश्वर्यस्य हस्तिनः ।
जायते यस्ततो नागः सोऽपि गन्धेन हन्ति च ॥ ११७ ॥

मदगन्धेन नागानां यः परावर्तते गजः ।
स गन्धमदहस्ती स्याद्बाल्यप्रभृति वारणः ॥ ११८ ॥

यस्त्वरोगादरोगायां जायते तु वसन्तके
सोऽपि गन्धद्विपो नागः सर्वर्तुमदसंश्रयः ॥ ११९ ॥

पुनरस्य प्रभिन्नायामप्रभिन्नस्य हस्तिनः ।
प्रभिन्नस्याप्रभिन्नायां पुनरस्याभिजायते ॥ १२० ॥

पुरावृत्तमदादन्य उपस्थितमदात्परः ।
यादृशी च नवावस्था तादृशं गन्धमादिशेत् ॥ १२१ ॥

तरुण्यां मत्तजातो हि शूरः सम्पूर्णलक्षणः ।
तेजस्विनः स्वभिजना हन्तारः क्रोधसंयुताः ॥ १२२ ॥

कुर्वते शुभजातस्य पदं गन्धद्विपा नृपम् ।

[गजकायावयवगुणाः]

व्यक्तता बाहुशिरसोरुन्नतत्वं तथोरसः ॥ १२३ ॥

दन्तयोः स्वर्णवर्णत्वं नेत्रयोर्मधुपिङ्गलः ।
आसनस्य पृथक्त्वं च पूर्णता कुक्षिपार्श्वयोः ॥ १२४ ॥

पृथुत्वं पृष्ठभागस्य घनत्वं समसन्धिता ।
स्निग्धच्छायत्वमायामः परिणाहस्तथैव च ॥ १२५ ॥

श्रमत्वं सुभगत्वं च [1]काये त्वेते गुणाः स्मृताः ।

---

[1]कायस्यैते–मु.

[गजानां द्वादश क्षेत्राणि, तैः दशवर्षमितद्वादशदशाश्च]

हस्तश्च प्रथमं क्षेत्रं द्वितीयं वदनं तथा ॥ १२६ ॥

तृतीयं दन्तयोर्युग्मं चतुर्थं शिर उच्यते ।
पञ्चमं नयनं चापि षष्ठं कर्णाभिधं भवेत् ॥१२७॥

ग्रीवा च सप्तमं ज्ञेयं गात्रमष्टममुच्यते ।
उरश्च नवमं ज्ञेयं कायश्च दशमं भवेत् ॥१२८॥

एकादशं तथा मेढ्रं द्वादशं चापरद्वयम् ।
एवं द्वादशसङ्ख्यानि क्षेत्राणि करिणां क्रमात् ॥ १२९ ॥

द्वादशैव दशा ज्ञेया दशवर्षाभिलक्षिताः ।

[भद्रादिगजानामायुःपरिमाणम्, द्वादशक्षेत्रैः संपूर्णायुष्ट्वं च]

विंशोत्तरं वर्षशतं भद्रस्यायुः प्रकीर्तितम् ॥ १३० ॥

अब्दा अशीतिर्मन्द्रस्य चत्वारिंशन्मृगस्य च ।
सर्वैः क्षेत्रैस्तु सम्पूर्णैः सम्पूर्णायुर्गजो भवेत् ॥ १३१ ॥

[गजानां हस्ताद्यवयवदोषात्क्रमादायुःक्षयातिशयः]

हीनैश्च हीयते चायुस्तत्तावदभिधीयते ।
दशाब्दानां क्षयं कुर्याद्धस्तो लक्षणवर्जितः ॥ १३२ ॥

विंशत्यब्दविनाशश्च हीने क्षेत्रद्वये भवेत् ।
एकं दशाब्दनाशं तु क्षेत्रं कुर्यादलक्षणम् ॥ १३३ ॥

एवमायुःक्षयं [1]विन्द्याद्गजस्य गजकोविदैः ।

[हस्तादीन्यष्टौ गजाङ्गानि]

हस्तो मुखं रदौ नेत्रे शिरः कर्णौ च कन्धरा ॥ १३४ ॥

गात्रापरश्च नागानामङ्गान्यष्टौ विनिर्दिशेत् ।

---

[1] राजा विन्द्यादिति तात्पर्यम् ।

[ओष्ठादीन्यष्टौ गजोपाङ्गानि]

ओष्ठकक्षोदरं नाभिरण्डकोशश्च पेचकः ॥ १३५ ॥

तलानि च नखान्यष्टावुपाङ्गानि विनिर्दिशेत् ।

[अष्टौ प्रत्यङ्गानि]

अङ्गुलीपुष्करः कुम्भौ मस्तकं केशरोमणी ॥ १३६ ॥

वक्षः पादासनं चाष्टौ प्रत्यङ्गानि विनिर्दिशेत् ।

[गजस्य मस्तकाद्यङ्गेषु ब्रह्मादीनां वासः]

तन्मूर्धनि वसेद्ब्रह्मा ललाटे स्कन्द एव च ॥ १३७ ॥

मस्तके वीरभद्रः स्यादक्ष्णोश्च शशिभास्करौ ।
नासिकायां तु विघ्नेशो रुद्राश्च श्वास एव च ॥ १३८ ॥

मुखे च भाग्यलक्ष्मीस्तु वीरलक्ष्मी रदद्वये ।
शृङ्गाग्रयोः कृतान्तः स्यान्नरसिंहः कपोलयोः ॥ १३९ ॥

पादेषु वेदाश्चत्वारो विष्णुरस्य करे स्थितः ।
नखाग्रेष्वष्टमीचन्द्रस्तद्वेगे मारुतस्तथा ॥ १४० ॥

अग्निर्नाभौ विधाता च कुक्षौ मेढ्रे प्रजापतिः ।
अन्येषु नागास्तिष्ठन्ति सर्वे लोकधुरन्धराः ॥ १४१ ॥

[गजलक्षणानि]

*पृथुर्वृत्तः पीनस्तनुरुचिरबिन्दुर्वलयित-
स्फुरद्गर्जारावः किसलयनिभो भास्वदुदरः ॥
सवर्णैः स्वर्णेन प्रकटतनुभिर्युग्मजनितैः
समेतो रोमौघैः सुरभितरनिःश्वासपवनः ॥ १४२ ॥

---

* फलनिरूपणे मार्दवमित्युक्त्या अत्र मृदुरिति पाठो भवितुमर्हति ।

स्निग्धश्रीरानुपूर्व्येण सुस्रोतो घनपुष्करः
कुण्डलीकृतरम्याग्रहस्तो दीर्घाङ्गुलिः करः ॥ १४३ ॥

[तेषां प्रत्येकं फलानि]

मार्दवं धनवृध्यै स्यात्सुवृत्तत्वं च पुत्रदम् ।
रोमभिर्जातिवृद्धिः स्याद्बिन्दुभिर्धान्यसम्पदः ॥ १४४ ॥

ताम्रकुक्ष्या कोशवृद्धिर्महापुष्करतः शुभम् ।
पुत्रपौत्राभिवृद्धिश्च निःश्वासेन सुगन्धिना ॥ १४५ ॥

स्निग्धता वैरिनाशाय कीर्त्यै [1]कुण्डलिताग्रता ।

[गजानां शुभरदलक्षणानि]

तप्तस्वर्णमरन्दकेतकघृतक्षौद्रेन्दुकुन्दप्रभौ
नीरेखौ पृथुलौ समौ स्थिरतरौ स्निग्धौ दृढौ प्रोन्नतौ ।
चक्रेन्द्रायुधपत्रिशूलयमराङ्गण्डान्वितौ [2]भेदने
स्यातां निर्व्रणिनौ यथाऽयुधहलाभौ [3]दक्षिणाभ्युन्नतौ॥१४६॥

दन्तवेष्टसमुन्नद्धमूलौ स्थूलौ प्रहारिणौ ।
समायातौ पेशलौ च मुसलाग्ररदौ शुभौ ॥ १४७ ॥

[अनूपगिरिसञ्चारिगजानां दन्तच्छेदनप्रकारः]

दन्तस्य मूलपरिधिं द्विरायतं प्रोह्य कल्पयेच्छेषम् ।
अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ १४८ ॥

[गजदन्तच्छेदे दृश्यमानाकारभेदानां, रक्तस्रावस्य, तद्वर्णादेश्च शुभाशुभ-फलानि]

श्रीवृक्षवर्धमानाच्छत्रध्वजचामरादिरूपेषु ।
भेदे [4]दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ १४९ ॥

---

[1]कुण्डलितौ रदौ–मु. [2]छेदने–मु. [3]दक्षिणे चोन्न–मु. [4]पृष्टेष्वारो–मु.

प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रणष्टदेशाप्तिः ।
लोष्टे त्वलब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः ॥ १५० ॥

स्त्रीरूपे धननाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः ।
कुम्भेन निधिप्राप्तिर्यात्राविघ्नश्च दण्डेन ॥ १५१ ॥

कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् ।
गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जन[1]मरणम् ॥ १५२ ॥

पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत्स्रुते रक्ते ।
कृष्णे श्यामे रूक्षे दुर्गन्धे [2]चाशिवं भवति ॥ १५३ ॥

शूलं शशाङ्कधवलं चक्रमग्निसमप्रभम् ।
कालदण्डस्तु पिङ्गाभः कुलिशं काञ्चनोपमम् ॥ १५४ ॥

[गजशुभललाटचिह्नानि]

बिन्दुमत्पृथु [3]वाहित्थं स्निग्धप्रद्योतवच्छुभम् ।

[गजमुखमण्डलस्य शुभचिह्नानि]

[4]आयातं पाटलामोदि मनोज्ञं मुखमण्डलम् ॥ १५५ ॥

[गजनेत्रशुभचिह्नानि]

रक्तकृष्णतनुशुक्लमण्डले नीलदीर्घमृदुरोमपक्ष्मणी ।
आयते शुभदर्शनान्विते प्रान्तलोहितविलोचने शुभे ॥ १५६ ॥

([5]कलङ्काक्षसमदृशे मकरन्दरसोपमे ।
स्फटिकाभे स्निग्धतारे शाणोल्लीढमणिप्रभे ॥ १५७ ॥

सौम्यदृष्टिसमायुक्ते त्र्यङ्गुले शोभने शुभे ।)

---

[1] मरकः–बृ. सं. [2] चाशुभं–बृ. सं. [3] वाहार्थं–मु [4] अभयं–मु.
[5] चतुरङ्कितोऽयं भागः मुद्रितपुस्तके नास्ति ।

[गजकर्णलक्षणं, तयो राजशुभावहत्वं च]

कर्णौ दुन्दुभिनिस्वनौ मृदुतरौ बिन्द्वङ्कितौ वर्तिनौ
लम्बौ मन्दरयौ सिराप्रविततौ रेखावलीवर्जितौ ।
निश्छिद्राञ्चल[1]कौ सरोमरुचिरौ लोलौ स्फुरच्चूलिकौ
कुर्यातां निजभर्तुराहवजयं नित्यां श्रियं दन्तिनः ॥ १५८ ॥

[गजमस्तकलक्षणं, तदीयफलानि च]

उन्नतं रोमशं चैव व्यक्तपिण्डकसंयुतम् ।
शुभदृष्टियुतं स्निग्धं करिणां मस्तकं वरम् ॥ १५९ ॥

शिरः कुर्यादुन्नतत्वाज्जयलक्ष्मीसमुन्नतिम् ।
रोमशत्वाद्वंशवृद्धिमाह्लादं शुभदर्शनात् ॥ १६० ॥

समृद्धिं धनधान्यानां सुव्यक्तं यूथमस्तकम् ।

[अप्रशस्तगजग्रीवोक्तिमुखेन तदितरासां शुभावहत्वकथनम्]

असंमृष्टा कृशा दीर्घा अतिलम्बगला तथा ॥ १६१ ॥

ग्रीवा भ्रष्टांसका तन्वी निर्याणे मृष्टपिण्डका ।
न प्रशस्तेदृशी ग्रीवा तदन्या तु शुभावहा ॥ १६२ ॥

[गजानां शुभगात्रलक्षणम्]

समे दीर्घे शुभे गात्रे किञ्चिदानम्रपश्चिमे ।
वक्रहीने मांसले च घने गात्रे सुशोभने ॥ १६३ ॥

शीघ्रं यत्र जयस्तत्र समता समदृष्टिता ।
प्रतिष्ठितैः पदन्यासै राष्ट्रस्थैर्यं भवेत्ततः ॥ १६४ ॥

[गजानां शुभवंशदण्डः]

कदलीदलपाश्चात्यदण्डरूपोऽतिशोभितः ।
शस्तः कोदण्डदण्डाभो वंशदण्डोऽतिमांसलः ॥१६५॥

---

[1] कावलोम—मु.

[गजानां शुभस्कन्धलक्षणम्]

कोदण्डदण्डसादृश्यं वंशवृद्धिकरं प्रभोः ।
विपुलं चार्जवोपेतं पीनं मांसातिशोभितम् ॥ १६६ ॥

स्कन्धं करोति भूभर्तुर्दीर्घसिंहासनस्थितम् ।

[सप्त गजरोमगुणाः, तत्स्वरूपं च]

देहच्छायासवर्णत्वं मृदुत्वं च तथा परम् ॥ १६७ ॥

अनाविलत्वं दृश्यत्वं तथाचास्पृश्यगात्रता ।
अयुग्मत्वं च सूक्ष्मत्वं रोम्णि सप्त गुणाः स्मृताः ॥ १६८ ॥

[मुखाद्यवयवेषु रक्तवर्णरोमाढ्यानां गजानां स्वामिघातकत्वम्]

मुखे च पृष्ठवंशे च कर्णयोरासने तथा ।
स्कन्धे कुक्षौ च कोशे च मुष्कपेचकयोस्तथा ॥ १६९ ॥

रक्तवर्णकरोमाढ्या दन्तिनः स्वामिघातकाः ।

[रोमकूपद्वयोपेतगजस्य कुलनाशकत्वम्]

द्वे रोमकूपे नागस्य दृश्येते कुलनाशने ॥ १७० ॥

[गजस्य श्वेतादिबिन्दूनां स्वामिविवर्धकत्वम्]

श्वेतश्च पीतवर्णश्च अरविन्दनिभस्तथा ।
स्वर्णवर्णसमायुक्तो बिन्दुः स्वामिविवर्धनः ॥ १७१ ॥

[मयूराद्याकारबिन्दुकगजानां दूरतो वर्ज्यत्वम्]

मयूरगर्दभश्येनकपीन्द्रसदृशैस्तथा ।
काकगृध्रनिभैश्चैव बिन्दुभिश्च समन्वितान् ॥ १७२ ॥

मेघतारकसङ्काशान् दृष्ट्वा दूरेण वर्जयेत् ।

[मत्कुणाख्यगजलक्षणं, तस्य सङ्ग्रामायोग्यता च]

सर्वलक्षणसम्पूर्णो दन्ताभ्यां परिवर्जितः ॥ १७३ ॥

[1]मत्कुणः स समाख्यातः सङ्ग्रामे प्राणघातकः ।

[षण्डगजलक्षणं, तस्य लक्षणज्ञापूज्यता च]

पादयोः सन्निकर्षः स्याद्यस्य नागस्य गच्छतः ॥ १७४ ॥

[2] स षण्डो लक्ष्मयुक्तोऽपि लक्षणज्ञैर्न पूजितः ।

[पिष्टकगजलक्षणं, तस्य निन्दितत्वं च]

जघनं चाधिकं किञ्चिद्विस्तृतं च स्तनान्तरम् ॥ १७५ ॥

पिष्टकः स तु निर्दिष्टो दुर्गतिर्निन्दितो गजः ।

[राजकुलादिनाशकगजलक्षणानि]

तथा वामैकदन्तस्तु कुर्याद्राज्ञः कुलक्षयम् ॥ १७६ ॥

दक्षिणेऽधोमुखे दन्ते राजा युद्धे विनश्यति ।
अधोमुखे वामदन्ते निहन्यान्मन्त्रिणं नृपम् ॥ १७७ ॥

[अशुभगजलक्षणानि, तेषां परदेशप्रापणं च]

कुब्जवामनकमेषविषाणान्
दृश्यकोशफलपुष्करहीनान् ।
श्यामनीलशबलासिततालून्
स्वल्पवक्त्ररुहमत्कुणगन्धान् ॥ १७८ ॥

गर्भिणीं च नृपतिः परदेशान्
प्रापयेदतिविरूपफलास्ते ॥

---

[1] मोक्कलीयः-मु. [2] स षण्डोऽध्वनि युद्धे च-बृ. सं. व्याख्या ।

[कुब्जगजलक्षणं, तस्याधमता; पूतनादिगजानामपि तथात्वं च]

[1]संक्षिप्तवस्तिजघनः पृष्ठवंशे समुन्नतः।
बलहीनस्तनूनाभिः स कुब्जो वारणोऽधमः ॥ १७९ ॥

पूतनो मातृकश्चैव मत्कुणो मायुकस्तथा।

[व्यालहस्तिलक्षणम्]

[2]स्निग्धदेहो लक्ष्यमुष्कः स्थूलह्रस्वकरस्तथा ॥ १८० ॥

गात्राभ्यामपराभ्यां च पुष्कराभ्यां तथैव च।
कर्णाभ्यां मस्तकाभ्यां च नेत्राभ्यां वापि वारणः ॥ १८१ ॥

द्वाभ्यामेकेन वा हीनो व्यालहस्ती निगद्यते।

[पूतनगजलक्षणं, तत्त्यागस्ततः शान्तिविधानं च]

विषाणेन च कर्णेन नयनेन पदेन च ॥ १८२ ॥

पार्श्वेनैकेन हीनश्च सम्यगेकत्र संयुतः।
नीलजीमूतसङ्काशश्छवियुक्तस्तथैव च ॥ १८३ ॥

मांश्छिन्नखरोमा च नाम्नायं पूतनो गजः।
त्यक्त्वा च तं यूथघातं ततः शान्तिं प्रयोजयेत् ॥ १८४ ॥

[मातृकगजलक्षणं, तेन भूपतेर्दारिद्र्यं, तस्य रिपुराष्ट्रविसर्जनं च]

हीनो विषाणकर्णाद्यैर्यो गजो वामपार्श्वतः।
मातृकः स तु विज्ञेयो दरिद्रस्तेन पार्थिवः ॥ १८५ ॥

ईदृशं वारणं दृष्ट्वा रिपुराष्ट्रे विसर्जयेत्।

---

1 संक्षिप्तवक्षोजघनः पृष्ठमध्यसमुन्नतः। प्रमाणहीनस्तन्नाभिः स कुब्जो वारणाधमः ॥—बृ. सं. व्याख्या। 2 स्विन्नदेहो—मु.

[मत्कुणगजलक्षणं, तस्याधमता च]

* सुदीर्घ[1]वर्ष्मवांश्चापि रूपवान् बलवानपि ॥ १८६ ॥
अविषाणो गजो यस्तु मत्कुणः स गजोऽधमः ।

[मायुकगजलक्षणं, तेन सेनापत्यादिविनाशश्च]

ह्रस्वाल्पतनुकर्णं च तनुवालधिमेहनम् ॥ १८७ ॥
दीर्घहस्तं तनुग्रीवं दुर्गन्धं दुर्मनस्विनम् ।
कालकायं कालजिह्वं निर्दिशेन्मायुकं गजम् ॥ १८८ ॥
सेनापतिं च राष्ट्रं च नाशयेन्मायुको गजः ।

[त्वग्जादयः षट् गजावर्ताः, तेषां स्थानभेदेन शुभाशुभफलप्रदत्वं च]

आवर्तः षट्प्रदेशेषु त्वग्जो दशनभङ्गजः ॥ १८९ ॥
केशजः पक्ष्मजातश्च वालजो रोमजोऽपि च ।
केशरोमभवौ शस्तौ [2]दन्तकल्पनजः शुभः ॥ १९० ॥
[3]शोकानर्थप्रदाः प्रोक्तास्त्वग्जपक्ष्मजवालजाः ।
भूमिदो रोमजावर्तः केशावर्तो जयप्रदः ॥ १९१ ॥
दन्तभङ्गभवावर्तः सुतदारप्रदस्तथा ।

[आवर्तानां वामत्वदक्षिणत्वाभ्यां निन्दितत्वानिन्दितत्वे]

प्रशस्तो दक्षिणावर्तो वामावर्तो विनिन्दितः ॥ १९२ ॥

[प्रशस्तगजावर्तः]

शस्तो मतो मृदुः स्निग्धः सवर्णः पीतरोमकः ।

---

* सर्वलक्षणसम्पूर्णो दन्तैस्तु परिवर्जितः । मत्कुणः स समाख्यातः सङ्ग्रामे प्राणघातकः ॥—इति बृ. सं. व्याख्याने मत्कुणगजलक्षणं दृश्यते ।

[1] पद्मवांश्चा—मु. [2] अत्र दन्तभङ्गभव इति भवितुमर्हति । [3] क्लेशान—मु.

[अनभीष्टा वामतो दक्षिणतश्च विपरीता गजावर्ताः]

वामे च दक्षिणावर्तो वामावर्तश्च दक्षिणे ॥ १९३ ॥
आवर्तास्तेऽपि नाभीष्टा द्विपदेहसमुद्भवाः ।

[शुभावर्तस्यापि अक्षेत्राशुभक्षेत्रयोः शुभफलाप्रदायकत्वानिष्टफलाप्रदायकत्वे]

शुभोऽप्यक्षेत्रजातोऽसौ शुभं नैव प्रयच्छति ॥ १९४ ॥
अशुभक्षेत्रजातश्च नानिष्टफलदः स्मृतः ।

[विजयाख्यगजावर्ताः, तत्स्थानानि, तेषां शुभावहत्वं च]

अवग्रहे ग्रहस्थे च स्तनयोरन्तरे तथा ॥ १९५ ॥
ग्रीवाया[1]मक्षिकूपोर्ध्वकुम्भाभ्यन्तरतस्तथा ।
तन्मूले दन्तवेष्टे च कर्णमध्ये च वक्षसि ॥ १९६ ॥
आवर्ता वारणानां हि विजयाख्याः शुभप्रदाः ।

[स्तनान्तरादिपञ्चस्थानेष्वावर्तयोगाद्गजस्य पञ्चमङ्गलत्वम्]

स्तनान्तरे शिरोमध्ये कुम्भान्तश्चूलिकान्तरे ॥ १९७ ॥
वक्षस्यावर्तयोगेन कुञ्जरः पञ्चमङ्गलः ।

[स्तनान्तराद्यावर्तानां प्रत्येकं शुभफलविशेषः]

शीर्षावर्तोऽभिषेकाय स्तनावर्तो जयाय च ॥ १९८ ॥
सुखाय चूलिकावर्तः कुम्भावर्तः प्रियाय च ।

[वंशाद्यवयवस्था अप्रशस्तगजावर्ताः]

वंशे प्रोथेऽथ वाहित्थे मन्यायां गलकोष्टके ॥ १९९ ॥
कर्णाक्षिकूटे नाभौ च कक्षपक्ष्मांसकुक्षिषु ।
वालधौ पेचके मेढ्रे रन्ध्रसन्धिकलासु च ॥ २०० ॥
आवर्ता न प्रशस्यन्ते मर्म[2]भागेषु तेषु च ।

---

[1] मक्षिकूटोर्ध्व–मु.   [2] भागे तथैव च–मु.

[वामदक्षिणयोर्गजदन्तेषु मूलमध्याग्रेषु स्फोटने क्रमशः फलानि]

दन्तभङ्गफलमत्र दक्षिणे
भूपदेशबलविप्लवप्रदम् ।
वामतः [1]सुतपुरोहिता[2]दिकान्
हन्ति साटविकदारनायकान् ॥ २०१ ॥

[गजस्योभयदन्तस्फोटने वामदन्तमध्यखण्डने च फलविशेषः]

आदिशेदुभयभङ्गदर्शना-
त्पार्थिवस्य सकलं कुलक्षयम्[3] ।
वाममध्यरदखण्डनं भवे-
च्छत्रुनाशकृदतोऽन्य[4]था परम् ॥ २०२ ॥

[गजस्य मदस्रावस्थानानि, तत्सङ्ख्या च]

कटिश्च श्रवणे नेत्रे वक्षः कोशः करः स्तनौ ।
पादश्च करिणामेवमष्टस्थाने [5]स्रवेन्मदः ॥ २०३ ॥

[अष्टौ गजमदनामानि]

वासा च नागरं शीधुर्घर्मश्च मदशीकरौ ।
चिक्का मुखश्च करिणां मदनामानि चाष्टधा ॥ २०४ ॥

[गजानां दन्ताघातशिक्षणावश्यकता]

दन्ताघातान्न जानाति यो रणे निष्फलो हि सः ।
दन्ताघातेषु कुशलं कारयेद्युद्धकर्मणि ॥ २०५ ॥

[सम्पातादयो दश गजदन्ताघाताः]

सम्पातश्च तथोल्लेखः परिलेखस्तथैव च ।
कर्तरी तलघातश्च पार्श्वघातस्तथैव च ॥ २०६ ॥

---

[1] सुतपुरोहितेभयान्–वृ. सं. [2] तार्भकान्–म. [3] इतः परं—सौम्यलग्नतिथिभादिभिः शुभं वर्धतेऽशुभमतोन्यथा वदेत् ॥ क्षीरमृष्टफलपुष्पपादपेष्वापगातटविघट्टितेन वा ।—वृ. सं. अधिकः पाठः । [4] थान्यथा–मु. [5] मदस्रवः–म.

आराघातस्तु सूचीवान् ताडितः सन्धितस्तथा ।
([1] प्रतियुद्धेषु नागानां दन्ताघातस्तु कर्तरी* ॥ २०७ ॥)

[तेषां लक्षणानि]

([2] अन्योन्यमुखसंस्फोटः संपात इति कीर्तितः
ऊर्ध्वक्षेपस्तु दन्ताभ्यामुल्लेख इति कीर्तितः ॥ २०८ ॥

तिर्यगूर्ध्वकृतक्षेपः परिलेखो विधीयते ।
उभयोः पार्श्वयोश्चैव दन्तघातस्तु कर्तरी ॥ २०९ ॥)

तलघातस्तु दन्ताधः [3] क्रियते यो मुखेन च ।
पार्श्वघातः स विज्ञेयो यस्तलेन प्रयुध्यति ॥ २१० ॥

आराघातः स विज्ञेयो सम्मुखाभ्यामलक्षितः ।
करमध्यप्रदेशे तु सूचीघातः स उच्यते ॥ २११ ॥

अन्योन्यदन्तसङ्घर्षजनितस्ताडितो मतः ।
सन्धितस्तु स विज्ञेय उपर्युपरि यो भवेत् ॥ २१२ ॥

[हस्तिनीलक्षणमेतादृश्या यूथपद्विपजनकत्वं च]

हस्तिनीनां प्रवक्ष्यामि साम्प्रतं शुभलक्षणम् ।
सुवृत्तौ मस्तकौ यस्याः सुविभक्तौ स्तनावपि ॥ २१३ ॥

सुकेशी कलविङ्काक्षी श्वेता स्निग्धमुखी च या ।
महोरस्का महाश्रोणी सुभगा चारुगामिनी ॥ २१४ ॥

रक्तोत्पलदलाभासा यस्याश्च दशनावली ।
हस्तिनी तादृशाकारा यूथपं जनयेद्द्विपम् ॥ २१५ ॥

---

* इतः परं मुद्रितकोशे—" तलघातस्तु " इत्यारभ्य पाठो वर्तते ।

[1] अयं धनुरंकितभागोऽत्राऽस्थानः । कर्तरीलक्षणप्रसङ्गे योज्यः । [2] अयं धनुरंकितो भागः मुद्रितपुस्तके नास्ति । [3] क्रियतेऽयोग्य—मु.

[शुभहस्तिन्या राज्ञः स्त्रीसौभाग्यं, तत्पूजनं, पूर्वोक्तनागलक्षणानां तत्रोपसंहारश्च]

यस्यैषा हस्तिनी राज्ञः स स्त्रीसौभाग्यवान् भवेत् ।
गन्धमाल्यानुलेपैश्च चारुभिर्विविधात्मकैः ॥ २१६ ॥

धूपाद्यैर्मधुपर्कैश्च वशां पर्वसु पूजयेत् ।
यादृशं लक्षणं पूर्वं नागानां प्रतिपादितम् ॥ २१७ ॥

तदेव लक्षणं तज्ज्ञो हस्तिनीष्वपि योजयेत् ।

[शौर्याद्युपेतस्याधोरणत्वकल्पनं, तत्र कारणं च]

शूरमारोहकं कुर्याद्वशगं च विशेषतः ॥ २१८ ॥

शूरत्वं [1]वाहकत्वं च तदायत्तं गजे यतः ।
स जितः कल्पितः शूरः शूरारूढः प्रतापवान् ॥ २१९ ॥

[एकस्यापि शूरगजस्य सहस्राश्वविजेतृत्वं, गजानां स्वर्गोपमत्वं च]

जयत्येकोऽपि मातङ्गः षट्सहस्राणि वाजिनाम् ।
शरतोमरहस्ताश्च गजस्कन्धस्थिता नराः ॥ २२० ॥

क्षणा[2]त्स्वर्गं प्रयान्त्येव तस्मात्स्वर्गोपमा गजाः ।

[गजानां कार्यविशेषेषु वज्रप्रायता]

[3]प्राकारगोपुरद्वारकवाटोद्घाटनादिषु ॥ २२१ ॥

भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः ।

[युद्धे नराश्वयोरेकशक्तिप्रहारासहिष्णुता, गजस्याधिकप्रहारसहिष्णुता च]

एकशक्तिप्रहारेण म्रियतेऽश्वो नरोऽपि च ॥ २२२ ॥

सहेन्महाप्रहाराणां शतं युद्धेषु वारणः ।

---

[1] कातरत्वं–ख. [2] त्सर्वं–मु. [3] प्रकाशतः पुरद्वार–मु.

[गजबलस्यात्युत्तमता, तत्कारणं च]

रक्षन्ति [1]पक्षं मुदिताः स्वकीयं
निघ्नन्ति सैन्यं कुपिताः परेषाम् ।
प्राणैरपीच्छन्ति हितं [2]प्रभूणां
गजैः समानं क बलं महीयः ॥ २२३ ॥

[आकस्मिकगजेङ्गितानि]

स्खलितगतिरकस्मात्त्रस्त[3]कण्ठोऽतिदीनः
श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।
[4]द्रुतमुकुलितदृष्टिः स्वप्नशीलो [5]विलोमो
[6]भयकृदहितपक्षी नैकशोऽश्रु प्रमुञ्चन् ॥ २२४ ॥

[राज्ञो जयावहशुभचेष्टितानि]

वल्मीकस्थाणुगुल्मक्षुपतरु[7]मथनस्वेच्छया हृष्टदृष्टि-
र्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चैः ।
कक्ष्यासन्नाहकाले जनयति च [8]महच्छीत्कृतं बृंहितं वा
त[9]त्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयन्दक्षिणं च ॥ २२५ ॥

[गजलक्षणोक्त्युपसंहारः, तत्परीक्षया गजस्वीकारपरित्यागौ च]

एवं गजानां लक्ष्माणि कथितानि समासतः ।
एवं परीक्ष्य यत्नेन लक्षयेदुत्तमान् गजान् ॥ २२६ ॥

स्वीकुर्यादवनीपालो विपरीतान् परित्यजेत् ।

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले गजलक्षणनिरूपणं नामैकादशस्तरङ्गः

———

[1] पक्षमुदिताः स्वकीयान्—म. [2] गजं नृपाः—मु. [3] कर्णो—मु. [4] धृत—मु.
[5] अलसाङ्गः—मा. ली. [6] भयकृदहितभक्षी नैकशोऽसकृच्छक्तकृत्—बृ. सं. मा. ली.
[7] मथनः स्वेच्छया—मा.ली. [8] मुहुः शीकरं—मा. ली. [9] तत्काले वा—मा. ली.

## सप्तमकल्लोले द्वादशस्तरङ्गः

### अश्वोत्पत्त्यादिचेष्टान्तवर्णनम्

[अश्वोत्पत्त्यादिकथनप्रतिज्ञा]

पूर्वं गजानां लक्ष्माणि प्रोक्तान्येवं समासतः ।
अश्वानामथ कीर्त्यन्ते साम्प्रतं सम्भवादिकाः ॥ १ ॥

[अमृतादीनि सप्त अश्वोत्पत्तिस्थानानि]

अमृताद्बाष्पतो वह्नेर्देवेभ्योऽण्डाच्च गर्भतः ।
साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता ॥ २ ॥

[अमृतोद्भवोऽश्वः]

अमृतेनार्णवात्सार्धमुदतिष्ठत्पुरा किल ।
उच्चैःश्रवा नाम हयः स एकोऽमृतसम्भवः ॥ ३ ॥

[बाष्पसंभवाश्वाः]

अम्भोजयोनेर्मुखतो जिह्वातो जातवेदसः ।
अश्रूणि सुस्रुवुः पाण्योस्त्रयस्तत्र प्रजज्ञिरे ॥ ४ ॥

तुरङ्गमा युगादौ ते एते स्युर्बाष्पसम्भवाः ।

[वह्निसमुद्भवोऽश्वः]

सरसीरुहसम्भूतहूयमानहुताशनात् ॥ ५ ॥

आविरासीत्पुरा वाह एष वह्निसमुद्भवः ।

[देवसम्भवोऽश्वः]

इन्द्रादयोऽष्टौ विबुधाः सृष्ट्यादौ प्रसृता यदा ॥ ६ ॥

तज्जाता दिक्षु तुरगा यथा विश्वसृजः किल ।
एष देवसमुत्पन्नः सम्भवः परिकीर्तितः ॥ ७ ॥

[अण्डसमुद्भवोऽश्वः]

[1]अश्वप्रजापती लक्ष्मीतपोवनसमीपतः ।
मृग्युलूकत्वमापन्नौ तौ परस्परशापतः ॥ ८ ॥

ताभ्यामण्डान्यजायन्त स स्यादण्डसमुद्भवः

[गर्भसमुद्भवोऽश्वः]

तुरङ्गप्रसूकायोगाज्जातो गर्भसमुद्भवः ॥ ९ ॥

[सामजोऽश्वः]

साम्ना ततोऽसृजत्स्रष्टा सृष्टिकाले तुरङ्गमान् ।
इति सप्तविधोत्पत्तिः सप्तीनां परिकीर्तिता ॥ १० ॥

[स्वेदाम्बुसंयुक्तभस्मनः खरोत्पत्तिः]

अथ स्वेदाम्बुसंयुक्तभस्मोत्पन्नाः खराः पुरा ।
एवं खराणामुत्पत्तिः कथिता पूर्वसूरिभिः ॥ ११ ॥

[योनितः खरोत्पत्तिक्रमः]

खराः स्वयोनिसम्भूता वक्ष्यन्ते [2]खरजातयः ।
वडवायां खराज्जातः स्यादश्वतरनामकः ॥ १२ ॥

प्रसूकायां प्रजातो यस्तस्माद्गौरी खरस्तु सः ।
मुकुबस्तु ततोऽश्वायां संसर्गाज्जायते तु यः ॥ १३ ॥

वडवायां किणाज्जातो मुकुबस्तु ततः परम् ।
मुकुबायां किणाज्जातः किंषष्ठ इति कीर्तितः ॥ १४ ॥

किंषष्ठात्तु विजानीयात्प्र[3]सूकायां परः खरः ।

---

[1] अत्र प्रजापतिर्ल—मु. [2] खरः स्मृतः—मु. [3] सूतो यः खरः परः—मु.

[पुरा अश्वानां खेचरत्वं, इन्द्रप्रार्थनया शालिहोत्रेण तत्पक्षच्छेदः, अश्वप्रार्थनया मुन्यनुग्रहात् तेषां पादेषु पक्षवेगप्राप्तिः, इन्द्रादिवाहनत्वप्राप्तिश्च]

पुरा सपक्षा हरयः विचेरुः खेचराः किल ॥ १५ ॥

तानालोक्याब्रवच्छक्रः शालिहोत्रं मुनिं प्रति ।
छिन्धि पक्षानमीषां त्वं यथा स्युर्वाहनानि मे ॥ १६ ॥

इषीकास्त्रेण सोऽप्येषां पक्षांस्तत्प्रीतयेऽच्छिनत् ।
ततः प्रसादितस्तैस्तु प्रादाद्वरमिमं मुनिः ॥ १७ ॥

युष्मत्पक्षोपमो वेगश्चरणानां भविष्यति ।
यूयं शक्रादिदेवानां वाहनत्वं गमिष्यथ ॥ १८ ॥

तथा भूमिपतीनां च गौरवेण समन्विताः ।
यो राजा भवतां पुष्टिमन्नपानादिभिः सदा ॥ १९ ॥

करिष्यति स सर्वत्र जयभागी भविष्यति ।
अथागत्य भुवं राज्ञां गता वाहनतां हयाः ॥ २० ॥

तेषां धर्मार्थकामांश्च साधयन्त्युपकारिणः ।

[वाजिनां चातुर्वर्ण्यस्य दुर्लक्ष्यता, ब्राह्मणहयलक्षणानि च]

दुर्लक्षं हि तुरङ्गाणां चातुर्वर्ण्यं प्रचक्ष्महे ॥ २१ ॥

संयताः शीलवन्तश्च शुद्धाचारसमन्विताः ।
लक्ष्मीवन्तश्च धीराश्च सुहृदः सर्ववाजिनाम् ॥ २२ ॥

सुरगन्धर्वसत्त्वाश्च तत्तदाचारगोचराः ।
अर्जुनारुणवर्णाश्च हया वा मधुपिङ्गलाः ॥ २३ ॥

उशीरघृतलाजानां तुल्यगन्धा मनस्विनः ।
स्रग्गन्धपायसाज्येषु संसक्ता ब्राह्मणा हयाः ॥ २४ ॥

[क्षत्रियहयलक्षणानि]

तेजस्विनो धुराधीराः कोपनाः सत्त्वसंयुताः ।
शूरा महास्वनास्तीक्ष्णा महाकाया महाबलाः ॥ २५ ॥

यक्षगन्धर्वसत्त्वाश्च तत्समाचारगोचराः।
सितासितास्सुवर्णा वा पुण्याः पुष्पसुगन्धिनः ॥ २६ ॥

मल्लिकापुष्पनेत्राश्च मणिनेत्रास्तुरङ्गमाः।
विभक्तावयवा वाहाः क्षत्रिया दुःखशीलिनः ॥ २७ ॥

[वैश्यहयलक्षणानि]

वातातपसहाः श्रान्ता भारोद्वाहक्षमाः स्थिराः।
हर्षसन्तापहीनाश्च मध्यवेगसमन्विताः ॥ २८ ॥

पानप्रियाः पल्लवाभाः क्रौञ्चपत्रसुपाटलाः।
छागवानरगन्धाश्च रक्षस्सत्त्वं समाश्रिताः ॥ २९ ॥

ईदृग्लक्षणसंयुक्ता हया वैश्या जितेन्द्रियाः।

[शूद्रहयलक्षणानि, तेषामधमता, ब्राह्मणादिहयानां पृथक्स्थापनं च]

अप्रशस्तगुणा वाहास्त्वशुद्धाचारगोचराः ॥ ३० ॥

परभुक्तोज्झितं चापि तथाऽन्नं भक्षयन्ति च।
न वर्जयन्त्यशुद्धानि प्रहरन्ति च पोषकान् ॥ ३१ ॥

विच्छिन्नवृक्षनादाश्च [1]वायसालयगन्धिनः।
पिशाचसत्त्वसंयुक्ताः शूद्रा ज्ञेया हयाधमाः ॥ ३२ ॥

पृथक् च स्थापयेदेतान् ब्राह्मणादीन् भिषग्वरः।

[ग्रीष्मान्तप्रावृडारम्भयोस्तुरगाणामाहारभेदतो वातप्रकृतिकत्वं, ततो जातानां वातप्रकृतिकता, तल्लक्षणानि च]

अतः परं तुरङ्गाणां प्रकृतिर्वक्ष्यते क्रमात् ॥ ३३ ॥

निःसाररूक्षयवसवल्लीपत्रादिसेवनात्।
ग्रीष्मान्ते प्रावृडारम्भे तुरगाः प्रसुता अपि ॥ ३४ ॥

---

[1] हयाः मालसुगन्धिनः–मु.

वातप्राया भवन्त्येभ्यो जायन्ते वातिका हयाः ।
अन्वर्थवेदी विकृतो हीयते रूक्षरोमवान् ॥ ३५ ॥

कार्श्यचञ्चलतायुक्तः कार्कश्यसहितोऽशुचिः ।
भद्रो निद्राति दुर्मेधा वातप्रकृतिरुच्यते ॥ ३६ ॥

[घनागमहेमन्ताद्योः तुरगाणां पित्तप्रकृतिकत्वं, तत्कारणं, ततो जातानां पित्तप्रकृतिकत्वं, तल्लक्षणानि च]

घनागमान्तकाले तु हेमन्तादौ तुरङ्गमाः ।
दिवाकरकरैस्तप्ता नितरां [1]तरुणा अपि ॥ ३७ ॥

यवसान्यतिसेवन्ते भवेयुः पित्तला भृशम् ।
बडबायां ततो जातस्तीक्ष्णशीलो जलप्रियः ॥ ३८ ॥

आरक्ततालुर्मतिमान् घस्मरोऽत्यर्थरोषणः ।
उत्तानवेदी तुरगः पित्तप्रकृतिको भवेत् ॥ ३९ ॥

[हयानां श्लेष्मप्रकृतिकालः, तदा जातानां श्लेष्मप्रकृतिकत्वं, तल्लक्षणं च]

बलमांसोपसम्पन्नाः पटवश्च तुरङ्गमाः ।
शिशिरे च ततो जाता महाकाया महाबलाः ॥ ४० ॥

मन्दः सहिष्णुर्मतिमानरोगः प्रियदर्शनः ।
गम्भीरवेदी विज्ञेयः श्लेष्मप्रकृतिको हयः ॥ ४१ ॥

[वाजिनामष्टौ लक्षणानि]

शरीररोमजच्छाया गतिर्गन्धः स्वरस्तथा ।
वर्णः सत्त्वमिति ख्यातमष्टधा लक्षणं बुधैः ॥ ४२ ॥

[वाजिशरीरलक्षणकथनप्राथम्ये कारणम्]

लक्षणाश्रयभूतत्वाच्छरीरस्य विशेषतः ।
शरीरलक्षणं तस्मात्प्रथमं सम्प्रवक्ष्यते ॥ ४३ ॥

---

[1] तरुणान्यपि—क.

[वाजिशरीरशुभावयवलक्षणं, तस्य वडवायामतिदेशश्च]

आता[1]म्रौ पूजितावोष्ठौ [2]वलिहीनौ मृदुत्वचौ ।
जिह्वा रक्ता च तन्वी च तालु रक्तं प्रशस्यते ॥ ४४ ॥

घनाः स्निग्धाः सुबद्धाश्च समा दन्ताः सुशोभनाः ।
नातिदीर्घौ पृथू नैव हनू वाहस्य शोभनौ ॥ ४५ ॥

नेत्रे सुबन्धे सुस्निग्धे मृदुपक्ष्मसमन्विते ।
विशाले मधुपिङ्गे च प्रसन्ने वाजिनां शुभे ॥ ४६ ॥

कपिञ्जलकुरङ्गेभक्रौञ्चाक्षिसदृशे तथा ।
टिट्टिभोष्ट्रमयूराक्षिसन्निभे पूजिते मते ॥ ४७ ॥

[3]स्वावर्तं च विशालं च ललाटं वाजिनां शुभम् ।
शस्तं शिरः समं वृत्तमावर्तद्वयभूषितम् ॥ ४८ ॥

ह्रस्वता कर्णयोः शस्ता तीक्ष्णता तनुता तथा ।
सुदृढां कुञ्चितां दीर्घां ग्रीवां धन्यां विदुर्बुधाः ॥ ४९ ॥

केसरं च जटाहीनं दीर्घं चैवं प्रशस्यते ।
शुभावर्तो दृढश्चैव स्कन्धो वाहस्य पूजितः ॥ ५० ॥

वक्षो विशालं दीर्घं च कक्षे दीर्घोन्नते शुभे ।
ऊरू वृत्तौ समौ बाहू गूढजानू शुभावहौ ॥ ५१ ॥

सुवृत्ते मांसहीने च वाजिजङ्घे सुशोभने ।
कूर्चं समं सुगन्धि स्यात् ग्रन्थिव्रणविवर्जितम् ॥ ५२ ॥

[4]दृढमण्डूकताः श्लक्ष्णा वर्तुलाः पृथुलाः खुराः
पार्श्वावत्युन्नतौ दीर्घौ सुदृढौ च समौ शुभौ ॥ ५३ ॥

---

[1] आवूर्जितौ चोष्ठौ–मु. [2] वालहीनौ–अ. वै. [3] सुवृत्तं चाप्यनम्रं च–अ. वै.
[4] दृढमण्डूनयकाः–मु, दृढमण्डूकिकायुक्ताः–अ. वै.

अवलंबि सुवृत्तं च जठरं वाजिनां[1] शुभम् ।
नातिदीर्घं समं पृष्ठं किञ्चिच्च विनतं शुभम् ॥ ५४ ॥

[2]पीना कटिः सुवृत्ता च पश्चाद्भागः पृथुः शुभः ।
मृदुस्निग्धाय तैर्युक्तं[3] वालैः पुच्छं प्रशस्यते ॥ ५५ ॥

वृषणौ च समौ वृत्तौ बिल्व[4]मात्रावरोमशौ ।
कृष्णवर्णविहीनं च ह्रस्वं मेहनमिष्यते ॥ ५६ ॥

ऋजुनी सक्थिनी वृत्ते पूजिते किञ्चिदानते ।
एतैर्गुणैर्विहीनं यच्छरीरं शुभकृन्न च ॥ ५७ ॥

समानं लक्षणं चैतद्वडवायाः प्रकीर्तितम् ।
तस्या योनिस्तथोष्ठौ च स्थिरा दीर्घाः सुसंस्थिताः ॥ ५८ ॥

ऋज्वी विशाला मुनिभिः कीर्तिताः शुभदर्शनैः ।

[उत्तममध्यमाधमाश्वानां मुखमानानि]

ऊर्ध्वं व्रीहित्रयं मानमङ्गुलस्य निगद्यते ॥ ५९ ॥

हस्तोऽपि च समाख्यातश्चतुर्विंशद्भिरङ्गुलः ।
द्वात्रिंशदङ्गुलं वक्त्रमुत्तमाश्वस्य कीर्तितम् ॥ ६० ॥

अङ्गुलद्वयहीनं तु मुखं स्यान्मध्यवाजिनः ।
ततोऽपि द्व्यङ्गुलं न्यूनं कनिष्ठस्य मुखं स्मृतम् ॥ ६१ ॥

[उत्तममध्यमाधमाश्वानां ग्रीवामानानि]

ग्रीवोत्तमस्य वाहस्य षट्पञ्चाशन्मिताङ्गुलैः ।
चत्वारिंशत् षडधिका मध्यमाश्वस्य कीर्तिता ॥ ६२ ॥

षट्त्रिंशदङ्गुलैर्ग्रीवा हीनाश्वस्य प्रकीर्तिता ।

---

[1] वरम्–मु. [2] लीना–मु. [3] तैर्वृत्तं–मु. [4] मात्रौ वरौ मतौ–मु.

[उरःपृष्ठकटीनां मुखमानतौल्यम्]

उरः पृष्ठं कटिश्चैव मुखतुल्यं समादिशेत् ॥ ६३ ॥

[अश्वानां कर्णाद्यवयवमानानि]

कर्णौ सप्ताङ्गुलौ प्रोक्तौ तालुकं च षडङ्गुलम्।
सूक्ष्मं जानु पृथुर्दण्डः कथितो विंशदङ्गुलः ॥ ६४ ॥

[उत्तममध्यमाश्वानां जङ्घामानानि]

द्वाविंशत्यङ्गुलोत्सेधे जङ्घे चैवोत्तमे स्मृते।
अष्टादश तथा मध्ये हीने चैव चतुर्दश ॥ ६५ ॥

[उत्तममध्यमकनिष्ठाश्वानां खुरप्रमाणानि]

सप्ताङ्गुलः खुरः प्रोक्त उत्तमाश्वस्य पण्डितैः।
षडङ्गुलो भवेन्मध्यः कनिष्ठः पञ्चसम्मितः ॥ ६६ ॥

[उत्तमाद्यश्वानां उत्सेधमानानि]

चतुर्हस्तश्च विख्यात [1]उत्सेधेन हयोत्तमः।
अर्धहस्तेन हीनस्तु भवेन्मध्यस्तुरङ्गमः ॥ ६७ ॥

तथा हस्तेन हीनस्तु हीन एव स्मृतो हयः।

[उत्तमाद्यश्वदैर्घ्यमानानि]

पञ्चहस्तप्रमाणेन दैर्घ्यमुत्तमवाजिनः ॥ ६८ ॥

चतुर्भिर्मध्यमे प्रोक्तः त्रिभिः सार्धैस्तथाधमे।

[तिर्यगूर्ध्वमानावधिः]

[2]खुराग्रात्पुच्छमूलं तु तिर्यगश्वं प्रमाणयेत् ॥ ६९ ॥

खुरान्तात्ककुदं यावदूर्ध्वमानेन बुद्धिमान्।

---

[1] उत्सेधे हय उत्तमः–अ. वै. [2] अपाङ्गाव–अ. वै.

[शुद्धा मिश्राश्चाश्वाः, तेषां वर्णप्रभेदाश्च]

श्वेतः कृष्णोऽरुणः पीतः शुद्धाश्चत्वार एव हि ॥ ७० ॥
मिश्रास्त्वनेकधा वर्णास्तेषां भेदः प्रकथ्यते ।

[श्वेतवर्णविप्रजातीयशुद्धाश्वलक्षणम्]

केशा वालाश्च रोमाणि चर्म चैव खुरस्तथा ॥ ७१ ॥
श्वेतैरेतैर्भवेदश्वः शङ्खाभो विप्रजातिजः ।

[कर्तलनामकः शुद्धाश्वप्रभेदः]

पूर्ववत्सर्वशुक्लाङ्गस्त्वचा कृष्णो भवेद्यदि ॥ ७२ ॥
वर्णो नाम्ना स विज्ञेयः कर्तलोऽयं तुरङ्गमः ।

[कालनामकशूद्रजातीयशुद्धाश्वः, तल्लक्षणं च]

लोमभिः केशवालैश्च त्वचा कृष्णः खुरैरपि ॥ ७३ ॥
काल इत्युच्यते वाजी शूद्रः शौर्याधिको भवेत् ।

[कुञ्जाभनामा लोहितवर्णशुद्धः क्षत्रजातीयोऽश्वः, तल्लक्षणं च]

केशात्प्रभृति वालान्तं सर्वाङ्गं लोहितं यदि ॥ ७४ ॥
कुञ्जाभ इति विख्यातः क्षत्रजातिस्तुरङ्गमः ।

[शेरभनामकशुद्धवैश्यजातीयतुरङ्गमस्तल्लक्षणं च]

केशैस्तनूरुहैर्वालैः काञ्चनाभस्तुरङ्गमः ॥ ७५ ॥
[1] शेरभा इति विख्यातो वैश्यजातिसमुद्भवः ।

[मिश्रजातीयतुरङ्गमास्तेषां नामानि, लक्षणानि च]

[2] सितलोहितरोमाणि [3] समाङ्गे मिश्रितानि चेत् ॥ ७६ ॥

---

[1] शरभा—क. [2] पीत—मु. [3] यदङ्गे-मु.

[भोरहयलक्षणम्]

मुखाङ्घ्रिवालकेशेषु लोहितो भोर उच्यते ।

[रुरुसंज्ञकहयस्वरूपम्]

शेफवालाङ्घ्रितुण्डेषु मेचको रुरुसंज्ञकः ॥ ७७ ॥

[नीलनामकहयः]

नील इत्युच्यते वाजी सितैः कृष्णैस्तनूरुहैः ।

[मेघाख्यो हयः]

पाटलीपुष्पसङ्काशो नलकेषु सितेतरः ॥ ७८ ॥
मधूकवल्कलच्छायो मेघ इत्युच्यते हयः ।

[जम्बाख्यो हयः]

पक्वजम्बूफलच्छायो जम्ब इत्यभिधीयते ॥ ७९ ॥

[हरिताख्यो हयः]

केशवालेषु पीतश्चेल्लोहितो हरितो मतः ।

[रुचिराख्यो हयः]

उदुम्बरसमच्छायः सती रुचिर उच्यते ॥ ८० ॥

[सुमना हयः]

केशकेसरपुच्छेषु जानुनोऽधश्च मेचकः ।
सर्वाङ्गलोमभिः पीतैः सुमनाः कथ्यते हयः ॥ ८१ ॥

[श्यामकर्णो हयः]

सर्वश्वेतो हयो यस्तु श्यामैकश्रवणो भवेत् ।
स वाजी वाजिमेधार्हः श्यामकर्णः [1] प्रकीर्तितः ॥ ८२ ॥

---

[1] स दुर्लभः—यु. क.

[कल्याणपञ्चको हयः]

यस्य पादाः सिताः सर्वे तथा वक्त्रं च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः [1]सदा कल्याणकृच्च सः ॥ ८३ ॥

[अष्टमङ्गलो हयः]

केशेषु वदने पुच्छे [2]वत्से पादेषु पाण्डुरः ।
अष्टमङ्गलनामाश्वः [3]सर्ववर्णेषु शस्यते ॥ ८४ ॥

[मल्लिकाक्षो हयः]

मुखे चन्द्रकसंवीतो जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाक्षः सुपूजितः ॥ ८५ ॥

[धौतपादो हयः]

श्वेतः सर्वेषु पादेषु पादयोर्वापि यो भवेत् ।
धौतपादः स विज्ञेयः प्रशस्तो मुखपुण्ड्रकः ॥ ८६ ॥

[हलाभो हयः]

विशालैः पट्टकैः श्वेतैः स्थाने स्थाने विराजितः ।
येन केनापि वर्णेन हलाभ इति कथ्यते ॥ ८७ ॥

[करञ्जो हयः]

विचित्रः पार्श्वदेशेषु श्वेतबिन्दुकदम्बकैः ।
यो वा को वा भवेद्वर्णः करञ्जः कथ्यते हयः ॥ ८८ ॥

[बिम्बको हयः]

सितस्य बिन्दवः कृष्णाः स्थूलाः सूक्ष्माः समन्ततः ।
दृश्यन्ते वाजिनो यस्य बिम्बकः स निगद्यते ॥ ८९ ॥

---

[1] भर्तुः कल्याणकारकः—यु.क. [2] वत्से—हृदये इत्यर्थः । [3] इतरेषु सर्वाङ्गेषु सर्ववर्णेषु सत्स्वपीत्यर्थः ।

[स्निग्धो हयः]

वर्णेनैकेन वर्णैर्वा स्निग्धवर्णो भवेद्यदि ।
स हन्याद्वर्णजान् दोषान् स्निग्धः सर्वत्र शस्यते ॥ ९० ॥

[यमदूतो हयः, तस्य त्याज्यता च]

चत्वारोऽप्यसिताः पादाः सर्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः स रूपतः ॥ ९१ ॥

पुच्छेन शिरसा वापि हीनवर्णः स निन्दितः ।
अन्यवर्णं [1] मुखं यस्य पुच्छं वा यस्य वाजिनः ॥ ९२ ॥

[हीनदन्तादयः सप्त स्वामिघातकाः अश्वाः]

हीनदन्तोऽधिकश्चैव कराली कृष्णतालुकः ।
उद्दालो मुसली शृङ्गी सप्तैते स्वामिघातकाः ॥ ९३ ॥

[व्याघ्राभादयः पापाश्वाः]

व्याघ्राभः सस्तनी चैव द्विखुरः ककुदी तथा ।
एकाण्डश्चैव जाताण्डो वाहः पापः प्रकीर्तितः ॥ ९४ ॥

[हीनदन्तादिशृङ्ग्यन्ताश्वलक्षणानि]

पञ्चभिः सप्तभिर्दन्तैर्वाहौ हीनाधिकौ मतौ ।
[2]कराटी(ली) चाधरैर्दन्तैः खाद्यन्ते यस्य चोत्तराः ॥ ९५ ॥

कृष्णं तालु भवेद्यस्य स भवेत्कृष्णतालुकः ।
उद्दालश्चोत्तरैर्दन्तैश्छाद्यन्ते यस्य चाधराः ॥ ९६ ॥

सितैकचरणः पुष्टी हीनस्तु मुसली मतः ।
कीले चावर्तकः कर्णदेशे यस्य स शृङ्गकः ॥ ९७ ॥

---

[1] शिरो यस्य—मु. [2] कराली चाधरै दन्तो जायते यस्य चोत्तरा—अ. वै.

[व्याघ्राभादिजाताण्डान्ताश्वलक्षणानि]

व्याघ्राभो व्याघ्रकर्णः स्यात् स्तनयुक्तः स्तनी [1]स्मृतः।
द्विखुरं गोखुराकारैः खुरैर्विद्याद्विचक्षणः ॥ ९८ ॥

आवर्तः ककुदो यस्य ककुदी स उदाहृतः।
मुष्केणैकेन लम्बेन हयस्त्वेकाण्ड[2]संज्ञितः ॥ ९९ ॥

अण्डाभ्यां रोमशाभ्यां तु जाताण्डो न हितः स्मृतः।

[परित्याज्यनिन्द्यपूजनीया अश्वाः]

भस्माभं वक्रपुच्छं वा कृष्णनीलं परित्यजेत् ॥ १०० ॥

निन्द्यः केवलकृष्णस्तु सर्वश्वेतस्तु पूजितः।

[अश्वशरीरगतपार्थिवादिच्छायाः]

नानावर्णमनोरमा स्थिरतरा [3]स्निग्धा भवेत्पार्थिवी
*छाया नूत्नघनाम्बुजातसलिल[4]प्रख्या भवेद्वारुणी।
आग्नेयी कनकप्रवालरुचिरा छाया शुभा वायवी
निर्भिन्ना परुषा च लोचनशुभा व्योमप्रभा नाभसी ॥१०१॥

[अश्वानां शुभाशुभगतयः]

सिंहव्याघ्रेभहंसैः शिखिशरभनृषैर्बभ्रुशाखामृगोष्ट्रै-
र्यें गत्या स्युः समाना विदधति हरयः स्वासिनो भूरिवृद्धिम्।
वक्रा वैषम्ययुक्ताः स्खलितपरिगताः सौष्ठवश्रीविहीनाः
सङ्कीर्णा नात्र शस्ता गतिरिह विकटा वाजिनां
-पूजितानाम् ॥ १०२ ॥

---

* छाया—लावण्यविशेषः।

[1] मतः—मु. [2] संज्ञकः—मु. [3] स्निग्धाश्च ये पार्थिव—मु. [4] प्रख्याश्च ते
वारुणाः—मु.

[अक्ष्यादिगतसुगन्धदुर्गन्धाभ्यामश्वानां प्रवरत्वावरत्वे]

अश्वाक्षिकर्णाननानासिकासु
स्वेदे तथा मूत्रपुरीषयोश्च ।
सुगन्धयोगे प्रवरा मतास्ते
दुर्गन्धिनश्चेदवरास्तुरङ्गाः ॥ १०३ ॥

अर्जुनेन कदम्बेन कुटजेन घृतेन च ।
बिल्वक्षीरैः समा गन्धाः स्वेदादिषु शुभावहाः ॥ १०४ ॥

[अश्वानां वीणादिसमानहेषाध्वनितः शुभत्वं, क्रोडादिस्वनतोऽशुभत्वं च]

वीणावेणुमृदङ्गदुन्दुभिगजक्रौञ्चाभकण्ठीरव-
व्याघ्रारावसमानहेषितजुषो ये सप्तयस्ते शुभाः ।
विच्छिन्नं तनुगद्गदं च परुषं ये दर्दुरं त्रिस्वरं
क्रोडोष्ट्रादिसमं स्वनन्ति न शुभास्ते भर्तृभूतिच्छिदः ॥१०५॥

[अश्वानां मध्योत्तमभावतः सत्त्वभेदाः]

ब्रह्मेशवासवकुबेरपरेतराज-
गन्धर्वपाशधरसत्त्वयुता वरेण्याः ।
ये राक्षसासुरपिशाचपितृद्विजिह्व-
पक्षिस्वभावमलिनास्तु भवन्ति मध्याः ॥ १०६ ॥

[देवसत्त्वा गन्धर्वादिसत्त्वाश्च वाजिनः, तेषां शस्तता;
हीनसत्त्वा वाजिनस्तेषां वर्ज्यता च]

वर्णावर्तप्रभाङ्गस्वरगतिसहिताः सत्त्वगन्धैरुपेताः
शौचाचाराभिजातिस्मृतगुणविनयैरन्विता देवसत्त्वाः ।
गन्धर्वैर्यातुधानैर्मुनिवरयतिभिस्तुल्यसत्त्वाश्च शस्ता
ये चान्ये हीनसत्त्वा[1]स्त्वशुचिकलहरता भीरवस्ते तु
वर्ज्याः ॥ १०७ ॥

---

[1] अशुचिमलरताः—बृ. सं.

[आवर्तादीनां वक्ष्यमाणता]

अथावर्ताः प्रवक्ष्यन्ते ध्रुवाश्चान्याः शुभाशुभाः ।
संस्थानमानस्थानानि तेषां चापि फलोदयः ॥ १०८ ॥

[आवर्तोत्पत्तिक्रमः]

गर्भस्थस्य शिशोर्वायुरतिवेगेन सञ्चरन् ।
आवर्तयति रोमाणि ते चावर्ता हयोद्भवाः ॥ १०९ ॥

[अष्टविधावर्तस्वरूपाणि]

आवर्तः शतपादी च शुक्तिश्चाप्यवलीढकः ।
पादुका पादुकार्धं च समूहो मुकुलं तथा ॥ ११० ॥

एवमष्टविधं रूपमावर्तानां प्रकीर्तितम् ।

[तेषां लक्षणानि]

यो वाम्भावर्तसदृशः स स्यादावर्तसंज्ञकः ॥ १११ ॥

शतपादी तदाकारा शुक्तिः शुक्तिसमा भवेत् ।
वत्सजिह्वावलीढेन सदृशोऽप्यवलीढकः ॥ ११२ ॥

पादुका पादुकाकारा तदर्धं चार्धपादुकम् ।
* मुकुलं मुकुलाकारमेतेषां वा द्वयोरपि ॥ ११३ ॥

बहूनामपि सङ्घातः समूहः स तु कीर्तितः ।

[एतदन्यावर्तानां रोमविकारजत्वं, आवर्तादिस्थानसंस्थानैः शुभाशुभफलसंभवश्च]

एतेभ्योऽन्ये प्रदृश्यन्ते यदि रोमविकारजाः ॥ ११४ ॥

तेषां च स्थानसंस्थानैः शुभाशुभफलं भवेत् ।

---

* उद्देशक्रमानुरोधेन समूहनिरूपणानन्तरमस्य पाठो युज्यते ।

[आवर्तादीनां प्रमाणानि, प्रदक्षिणावर्तानां शुभावहत्वं च]

आवर्तस्य प्रमाणं तु त्रिभागाङ्गुलमिष्यते ॥ ११५ ॥

अध्यर्धाङ्गुलमानेन शतपादी प्रकीर्तिता ।
अङ्गुलानां त्रयं सार्धं शुक्तेर्मानमिहोच्यते ॥ ११६ ॥

अवलीढप्रमाणं तु त्र्यङ्गुलं समुदाहृतम् ।
चतुर्भागाङ्गुलं मानं मुकुलस्य विधीयते[1] ॥ ११७ ॥

षड्यवाः पादुकार्धं तु सङ्घातोऽर्धाङ्गुलं भवेत् ।
एतैः स्वरूपैः सुव्यक्ताः स्वे स्वे स्थाने व्यवस्थिताः ॥११८॥
शुभा देहसमुद्भूताः शुभदाः स्युः प्रदक्षिणाः ।

[निन्द्यानां दशविधस्थानच्युताद्यावर्तानामुद्देशः]

स्थानच्युतो विवर्णश्च दुःस्थितस्तिर्यगायतः ॥ ११९ ॥

विन्यस्तो विनिगूढश्च भिन्नाकारस्ततः परः ।
ओमश्चापि महांश्चैव वामे यो दक्षिणाकृतिः ॥ १२० ॥

दक्षिणे वामसंस्थानो निन्द्या एते प्रकीर्तिताः ।

[स्थानच्युतादीनामावर्तानां लक्षणानि, फलानि च]

स्थानच्युतश्च्युतो यस्तु स्वस्थानाद्रोमजावृतः ॥ १२१ ॥

[विवर्णः]

अन्यवर्णो विवर्णः स्याद्रोमजः स तु निन्दितः ।

[दुस्स्थितः]

लक्ष्यालक्ष्यो भवेद्यस्तु रोमजः स तु दुःस्थितः ॥ १२२ ॥
तेन दौस्थित्यमायाति नृपतिर्न च संशयः ।

---

[1] इतः परं "द्विषड्यवप्रमाणं तु पादुका परिकीर्तिता" इति पादुकाप्रमाणपाठेन भवितव्यम् ।

[तिर्यगायतः]

आवर्ते त्वायते तिर्यग्राज्यहानिभयं भवेत् ॥ १२३ ॥

[विन्यस्तः]

विवर्णैर्विषमैः स्थूलैरुल्बणैर्वामदक्षिणैः ।
चित्ररोमभिरत्यर्थं पुञ्जीभूत इव स्थितः ॥ १२४ ॥

स विन्यस्तो भवेद्राज्ञामायुर्धनविनाशनः ।

[विनिगूढकः]

न लक्ष्यते [1]स्थितिर्यस्य रोम्णां स *स्याद्विमूढकः ॥ १२५ ॥
येन मूढो भवेद्भूपः

[भिन्नः]

द्विधा भिन्नस्तु रोमभिः ।
शिरश्छेदं विधत्ते हि स्वामिनः शीघ्रमेव तु ॥ १२६ ॥

[ओमः]

हीनमानो भवेदोमः स तु सत्त्वविनाशनः ।

[महान्]

महान् मानातिरिक्तस्तु रोमजो व्यसनप्रदः ॥ १२७ ॥

[वामदक्षिणः]

वामे दक्षिणसंस्थानो दक्षिणे दक्षिणेतरः ।
कुरुतश्च्यवनं राज्ञः स्वस्थानाच्छत्रुवर्धनम् ॥ १२८ ॥

[एतेषामावर्तानां स्थानभेदेन शुभाशुभत्वम्]

निन्द्यस्थानेषु निन्द्या ये ते तु कष्टफलप्रदाः ।
प्रशस्तेषु प्रशस्ताश्च सम्पूर्णफलदा मताः ॥ १२९ ॥

---

* अत्र उद्देशनिर्देशानुरोधेन विगूढक इति पाठो युज्यते ।

[1] गति–मु.

प्रशस्तदेशे निन्द्यस्तु निन्द्ये शस्तो भवेद्यदि ।
शस्ताशस्तफलं तत्र [1]तुच्छमिच्छन्ति पण्डिताः ॥ १३० ॥

शुभाशुभानां संयोगे बाहुल्यात्फलमादिशेत् ।

[स्वस्थानस्थाः च्युताश्च दश ध्रुवावर्ताः]

दश ध्रुवाः प्रवक्ष्यन्ते स्वस्थानस्थाश्च्युता अपि ॥ १३१ ॥

एकं [2]प्रपानजं विन्द्यात्तथा चैकं ललाटजम् ।
द्वौ मस्तकयौ तथोरस्यौ द्वौ द्वौ रन्ध्रोपरन्ध्रजौ ॥ १३२ ॥

[प्रपानावर्तः]

प्रपाने दक्षिणं भागं मध्यमं भागमेव वा ।
आश्रितौ दक्षिणावर्तौ वित्तसौभाग्यदौ ध्रुवम् ॥ १३३ ॥

वामभागाश्रितोऽपाने रोमजो वित्तनाशनः ।
भ्रुवोरन्ते दक्षिणतो मध्यतो वा तथोपरि ॥ १३४ ॥

[अश्वानां ललाटस्थानभेदेनावर्तध्रुवतो दीर्घायुष्ट्वादिविज्ञानम्]

ललाटे दक्षिणावर्तो ध्रुवो यस्य प्रदृश्यते ।
स दीर्घायुर्भवेदश्वः सुखसौभाग्यवर्धनः ॥ १३५ ॥

ललाटे मध्यभागस्थो रोमजो यस्य वाजिनः ।
स मध्यमायुर्विज्ञेयो वाजिलक्षणकोविदैः ॥ १३६ ॥

भ्रुवोर्मध्ये ललाटे वा वामभागं समाश्रितः ।
ध्रुवो यस्य प्रदृश्येत सोऽश्वोऽल्पायुरनर्थकः ॥ १३७ ॥

[अश्वानां मस्तकावर्तत आयुःप्रमाणादिपरिचयः]

मस्तकस्थौ च मस्तकयौ यस्यावर्तौ समौ ध्रुवौ ।
स जीवत्यष्टवर्षाणि वाहो वित्तविनाशनः ॥ १३८ ॥

---

[1] अत्र मिश्रमिति युज्यते । [2] मुखाग्रसमीपजमित्यर्थः ।

कर्णान्तरस्थौ मस्तक्यौ विन्यस्ताकारसंयुतौ ।
यस्य सोऽल्पायुरित्युक्तः सुखवित्तापहो हयः ॥ १३९ ॥

मस्तक्यौ शुक्तिसंस्थानौ यस्य केशान्तमाश्रितौ ।
स्थानच्युतौ स चाल्पायुर्निन्दनीयः सुखार्थिभिः ॥ १४० ॥

मस्तकस्थौ [1] विदेशस्थौ यस्य स्यातां प्रदक्षिणौ ।
स वन्यस्तुरगो नित्यं धनगोत्रविवर्धनः ॥ १४१ ॥

[अश्वानां दक्षिणोरसि जातावर्तफलम्]

आवर्तो वाऽथ शुक्तिर्वा यस्योरसि च दक्षिणे ।
भवेतां सोऽपि धन्योऽश्वो धनधान्यविवर्धनः ॥ १४२ ॥

[अश्वानां रन्ध्रोपरन्ध्रजावर्तसंस्थितिविशेषतः शुभाशुभपरिचयः]

रन्ध्रोपरन्ध्रजौ शस्तौ द्वौ द्वौ स्वस्थानमाश्रितौ ।
अन्योन्यसंश्रितौ यस्य नाभिदेशसमीपगौ ॥ १४३ ॥

उपरन्ध्रौ स चाल्पायुर्निन्दनीयः शुभार्थिभिः ।
विरोमको ध्रुवो यस्य सोऽल्पायुरशुभप्रदः ॥ १४४ ॥

[स्वस्थानस्थितच्युतदशविधावर्तध्रुवोपसंहारः]

एते दश ध्रुवाः प्रोक्ताः स्वस्थानस्थाश्च्युता अपि ।

[उक्तदशविधध्रुवरहितानां प्रत्येकं फलोक्तिः]

प्रपानाद्येषु हीनेषु यत्फलं तत्प्रवक्ष्यते ॥ १४५ ॥

प्रपानजविहीनोऽश्वः स्वामिघ्नः [2] कुलनाशनः ।
अललाटो हयो भर्तुर्विधत्ते मोहमक्षयम् ॥ १४६ ॥

अमस्तकः शिरःशूलं भर्तुः कुर्यादमङ्गलम् ।
स मुण्डकी भवेन्नाम्ना वर्जनीयो विशेषतः ॥ १४७ ॥

---

[1] अत्र समदेशस्थाविति स्यात् । [2] कुलमर्दनः — अश्वशास्त्रम्.

[1] ककुदावर्तजाता ये दोषाः शृङ्गिणि भाषिताः।
काकसावर्तनिष्ठा ये चासनावर्तिनीरिताः॥ १४८॥

हृदयावर्तिनि प्रोक्ता अमस्तक्ये भवन्त्यमी।
उरोजातविहीनोऽश्वो भर्तृपुत्रघ्न ईरितः॥ १४९॥

रन्ध्रजाभ्यां विहीनाभ्यां [2] जठरान्तं सकृद्भयः।
शून्योपरन्ध्रजो वाहो भर्तुर्वधकरः स्मृतः॥१५०॥

इति शून्यध्रुवाणां तु फलमुक्तं पृथक् पृथक्।

[अशुभावर्ताः, तदीयफलविशेषाश्च]

अशुभाश्च प्रवक्ष्यन्ते फलं वैशेषिकं तथा॥ १५१॥

उत्तरोष्ठोद्भवो भर्तुरावर्तो मातृघातकः।
प्रपानस्योपरिष्टात्तु पितृघ्नो दक्षिणस्थितः॥ १५२॥

अधरोष्ठस्थितश्चैव चुबुकप्रोथसम्भवः।
घोणागण्डस्थितो येषां तेऽश्वा भर्तृविनाशकाः॥ १५३॥

वृत्तिघ्नौ रोमजौ स्यातां नासापुटसमुद्भवौ।
दुःखाश्रुपातिनौ भर्तुरश्रुपातस्थितौ मतौ॥ १५४॥

वर्त्मजौ नेत्ररोगाय भ्रूमध्यौ द्वेषिवर्धनौ।
द्वौ शङ्खकटिजौ घोटशिरस्थौ भर्तृरोगदौ॥ १५५॥

कूर्चकक्षकलामन्युहनुस्कन्धभवौ तथा।
कर्णाग्रजौ तथैवार्थं हरेतां विधुमर्मजौ॥ १५६॥

ग्रीवास्थौ यदि भर्तृघ्नौ * गलस्थोऽशनिभीतिकृत्।
जत्रुस्थौ दिशतोऽल्पायुर्वाहस्थौ स्वामिघातकौ॥ १५७॥

† ककुदस्थो हरेत्सर्वं तं त्यक्त्वा शान्तिमाचरेत्।
काकसावर्तिना भर्ता काकैर्भक्ष्येत संयुगे॥ १५८॥

---

* अत्र पूर्वोत्तरदृष्ट्या द्विवचनापेक्षायामपि छन्दोभङ्गभिया एकवचनप्रयोग इति भाति। † अत्रापि पूर्ववदवसेयम्।

[1] ककुदावर्तिनि प्रोक्ता—मु. [2] अत्र जठरामयवृद्धिकृत् इति स्यात्।

शूलेन स्वामिनं हन्यादासनावर्तसंयुतः ।
ओमक्रोडस्थितावर्तौ हन्यातां समरे पतिम् ॥ १५९ ॥

अंसस्थे शत्रुसंक्षोभो लाङ्गूलस्थे पराजयः ।
मन्दुरस्थावथैहशौ जानुस्थौ भर्तृनाशनौ ॥ १६० ॥

जङ्घास्थौ रोमजौ भर्तुर्निगलैर्बन्धनप्रदौ ।
ईषिकास्थौ जूषिकास्थौ स्वामिघ्नौ परिकीर्तितौ ॥ १६१ ॥

मूत्रजौ कुष्ठिकस्थौ च रणे भर्तृवधप्रदौ ।
रोमान्तजौ तु स्वामिघ्नौ क्लेशदौ पार्श्वशीर्षजौ ॥ १६२ ॥

हृदयावर्तिना भर्ता हृच्छोकै[1]र्वधमृच्छति ।
पतिघ्नौ वक्षजौ शङ्खपार्श्वयोर्भर्तृनाशनौ ॥ १६३ ॥

ककुन्दरस्थौ वंशस्थौ सान्वयस्वामिघातुकौ ।
रोगदावोष्ठनाभिस्थौ मूत्रकोशत्रिके तथा ॥ १६४ ॥

पत्युरल्पायुषं पुत्रं दद्यातां मुष्कसम्भवौ ।
रोहिणीभासलोद्भूतौ चिबुकस्थौ पतिद्रुहौ ॥ १६५ ॥

पुच्छमूलस्थितौ भर्तुर्भवेतां मूलघातिनौ ।
रोमजातौ शिरोजातौ स्थानभ्रंशकरौ मतौ ॥ १६६ ॥

पुच्छदण्डस्थितः कुर्याद्भर्तुः शत्रोः पराजयम् ।
कुक्षिरोगप्रदा एते सेवनीपायुकुक्षिजाः ॥ १६७ ॥

स्फिक्पिण्डाण्डोद्भवौ सक्थिवंक्षणस्थौ पतिद्रुहौ ।
रोमजौ शङ्खजौ चैव स्फुरजौ क्लेशदायिनौ ॥ १६८ ॥

इति निन्द्याः समाख्याताः वक्ष्यन्ते रोमजाः शुभाः ।

[रोमजाः शुभावर्ताः, तेषां नामविशेषाः, फलविशेषाश्च]

आवर्तौ सृक्किसञ्जातौ शुक्ती वा जयवर्धनौ ॥ १६९ ॥

यमौ ललाटजावर्तौ शुभौ स्यातां प्रदक्षिणौ ।

---

[1] मूतिम–मु.

[त्रेताग्न्यावर्तः]

त्रयो ललाटजा यस्य रोमजाः स्युः प्रदक्षिणाः ॥ १७० ॥

त्रेताग्निः स भवेत्तेन शत्रुं जित्वा हरेन्नृपः ।

[निश्रेणिकावर्तः]

ललाटे रोमजानां तु त्रयाणां पङ्क्तिरूर्ध्वगा ॥ १७१ ॥

सा तु निश्रेणिका नाम्ना तया शत्रुं जयेन्नृपः ।

[चतुरन्तावर्तः]

यस्य प्रदक्षिणावर्तौ ललाटस्थौ चतुर्दिशम् ॥ १७२ ॥

चतुरन्तः स विज्ञेयस्तेन जित्वा विवर्धते ।

[वृषभावर्तः]

जयदौ मुकुलाकारावपाङ्गस्थानभागजौ ॥ १७३ ॥

प्रदक्षिणः सप्रमाणो रोमजस्तुवसंस्थितः ।
वृषभाविति विज्ञेयौ रोमजौ कर्णमूलजौ । १७४ ॥

भर्तुर्जयप्रदौ स्यातामर्थभूषणदायिनौ ।

[देवमण्यावर्तः]

यो लोमजो निगालस्थः स तु देवमणिः शुभः ॥ १७५ ॥

अशुभान् पूर्वकायस्थान् हन्याद्भर्तुर्जयार्थदः ।

[चक्रावर्तः]

कण्ठनाड्याश्रितौ यस्य रोमजौ चक्रवत् स्थितौ ॥ १७६ ॥

स चक्रकी नाम हयो रिपुक्षयकरः स्मृतः ।

[रोचमानावर्तः]

रोचमानस्तु कण्ठस्थो जयमित्रधनावहः ॥ १७७ ॥

[शुक्त्यावर्तास्तत्फलानि च]

यस्य केशान्तजौ शुक्ती द्वे तु ग्रीवासमायते ।
अचिरात्तस्य भर्ता तु शत्रून् जित्वा नृपो भवेत् ॥ १७८ ॥

केशान्ते दक्षिणे जाता शुक्तिः पानप्रदा भवेत् ।
शुभारोग्यप्रदा वामे स्यादेका शुक्तिरायता ॥ १७९ ॥

उरोजावस्य चत्वारो रोमजाः स्युश्चतुर्दिशम् ।
स शत्रुघ्नो रणे भर्तुर्वाजी संपत्प्रदो मतः ॥ १८० ॥

[श्रीवृक्षो हयः, तल्लक्षणं, फलं च]

यस्य प्रदक्षिणावर्ताश्चत्वारो वक्षसि स्थिताः ।
कण्ठस्थो रोचमानः स्याच्छ्रीवृक्ष इति कीर्तितः ॥ १८१ ॥

हयः श्रीवृक्षको नाम्ना भर्तुरिष्टार्थसाधकः ।

[वक्षस्स्थितशुक्तिप्रभेदफलविशेषः]

तिस्रो वक्षसि दृश्यन्ते शुक्तयश्चोर्ध्वरोमजाः ॥ १८२ ॥

तेन मथ्नाति शत्रूणां सङ्घान् सङ्ख्ये महीपतिः ।

[अङ्गदी हयः, तत्फलं च]

आवर्तौ बाहुजौ यस्य [1]सोऽङ्गदी भूषणप्रदः ॥ १८३ ॥

[मेखली हयः, तत्फलं च]

यस्योपरन्ध्रयोः स्यातामुपरिष्टात्तु रोमजौ ।
स मेखली भवेन्नाम्ना धनधान्यविवर्धनः ॥ १८४ ॥

[हयललाटस्थितशुभफलदरोमजाकाराः]

श्रीवृक्षस्वस्तिकाब्जध्वजकलशगदाशङ्खचक्रासिचापाः
नन्द्यावर्तार्धचन्द्राः सकलशशिकला वर्धमानः पताकः ।

---

[1] स मतो—मु.

वज्रो मत्स्याऽङ्कुशो वा व्यजनकवचभृङ्गारकाद्या हयानां
वक्षस्येतादृशा ये शुभतरफलदा रोमजाः स्युर्ललाटे ॥ १८५ ॥

[दन्तोद्भेदः, तस्य वयोनिर्णायकत्वं च]

दन्तोद्भेदं प्रवक्ष्यामि वाजिनां मुख्यलक्षणम् ।
येन विज्ञातमात्रेण वयोज्ञानं प्रजायते ॥ १८६ ॥

[पतितपुनरुत्थितादिदन्तैः हयवयोविशेषपरिचयः]

षड्भिर्दन्तैः सिताभैर्भवति हयशिशुस्तैः कषायै[1]र्द्विरब्दः
सन्दंशैर्मध्यमान्त्यैः पतितसमुदितै[2]स्त्रिश्चतुःपञ्चवर्षः ।
सन्दंशानुक्रमेण [3]त्रिकसमगुणितैः कालिकापीतशुक्लैः
काचामाक्षिकशङ्खावटचलन[4]मतश्चावपातं च विद्धि ॥१८७॥

[हयानां पञ्चवर्षोपरि द्वात्रिंशदब्दं यावत् त्रिकक्रमेण वयोव्यञ्जकदन्तचिह्नानि]

कालिका हरिणी शुक्ला काचा चापि समाक्षिका ।
शङ्खश्चो[5]लूखलं कम्पः पतनं व्यञ्जनं क्रमात् ॥ १८८ ॥

ऊर्ध्वं च पञ्चवर्षेभ्यो यावद्द्वात्रिंशदब्दकम् ।
त्रयं त्रयं च वर्षाणामेकैकं व्यञ्जनं भवेत् ॥ १८९ ॥

[चिरजीविवाहलक्षणम्]

कर्णाग्रे पीडिते येषां सिन्दूराभस्य दर्शनम् ।
[6]शोणितस्य भवेत्क्षिप्रं ते वाहाश्चिरजीविनः ॥१९० ॥

---

[1] द्विवर्षः—बृ.सं. [2] स्त्र्यष्टिपञ्चाब्दिकाश्वः—बृ.सं. [3] त्रिकपरिगणिताः—बृ.सं. [4] मतो दन्तपातं च—बृ. सं. [5] उलूखल —छिद्रम् , कालिकादयः षट् दन्तस्थिता रेखाः, दन्तच्छिद्रं, दन्तचलनं, दन्तपतनं चेत्याहत्य नव चिह्नानि त्रित्रिवर्षावस्थितानि क्रमेण ५डादिद्वात्रिंशान्तवर्षाणां सूचकानीत्यर्थः। उदूखलकमिति—नकुलः। [6] शोणिताक्ता भवेज्जिह्वा इत्यप्यन्यत्र पाठो दृश्यते ।

[अश्वानां प्रथमाब्दात् एकोनविंशाब्दावधि तत्तद्वर्षे मृतिसूचकाः प्रोथरेखाः, मृतिकारणरोगाश्च]

नृणां करतले यद्वद्रेखाः समभिलक्षयेत् ।
आयुस्तद्वत्तुरङ्गाणां प्रोथजाभिर्व्यवस्थितम् ॥ १९१ ॥

रेखोर्ध्वगासिनी यस्य प्रोथमध्यसमुद्भवा ।
[1]स चैकाब्दान्मृतिं याति मुखरोगेण शैशवे ॥ १९२ ॥

दृश्येतेऽङ्गुलमाने द्वे तादृश्यौ प्रोथमध्यगे ।
रेखे यस्य स नश्येत्तु जिह्वास्तम्भाद्विहायने ॥ १९३ ॥

यस्य तादृग्विधे रेखे द्वे स्यातां तिर्यगायते ।
स च त्रिहायने नश्येद्धनुर्ग्रहणपीडितः ॥ १९४ ॥

रेखे नते भवेतां द्वे सुव्यक्तं यस्य तं हयम् ।
हन्याद्गलग्रहव्याधिश्चतुर्थेऽब्दे सुदारुणः ॥ १९५ ॥

रेखोर्ध्वगा नताग्रा या वामतः प्रोथजा भवेत् ।
यस्य तं मृगजृम्भेण हन्यादब्दे तु पञ्चमे ॥ १९६ ॥

अङ्गुलद्वयमानोर्ध्वा प्रोथे यस्य स्थिता भवेत् ।
हन्यात् षष्ठाब्दिके प्राणाननातङ्कं निपीडितम् ॥ १९७ ॥

अर्धाङ्गुलायता रेखा यस्य मध्योन्नता भवेत् ।
तं सप्तहायने हन्याद्धनिरुग्रस्तुरङ्गमम ॥ १९८ ॥

या रेखा त्र्यङ्गुलमिता यस्य स्यात्प्रोथसम्भवा ।
सा हन्यादष्टमेऽब्दे तु तुरङ्गं ज्वरपीडितम् ॥ १९९ ॥

मध्ये स्थूला [2]रुजा रेखा यस्य द्वे वापि तादृशे ।
नवमे दशमे चाब्दे क्रमान्मृत्युं प्रपद्यते ॥ २०० ॥

---

[1] अर्धैकाब्दा—मु. [2] ऋजू—ग.

* अङ्गुलद्वितयायामा प्रोथमध्योर्ध्वगायता ।
यस्य स द्वादशे वर्षे रूक्षावर्तेन नश्यति ॥ २०१ ॥

यस्य प्रोथोपरि स्थूला दीर्घा स्यात्स तुरङ्गमः ।
वर्षे त्रयोदशे मृत्युं प्राप्नुयाच्छ्वासपीडितः ॥ २०२ ॥

यस्य रेखे भवेतां तु तिर्यगूर्ध्वं व्यवस्थिते ।
काकाङ्घ्रिवत्स रोगेण नाशं याति चतुर्दशे ॥ २०३ ॥

रेखे यस्य भवेतां द्वे स पञ्चदशहायने ।
पथि गच्छन् भयार्तस्तु पञ्चत्वमुपगच्छति ॥ २०४ ॥

एका चैवंविधा रेखा यस्य गौरस्य दृश्यते ।
स हयः षोडशे वर्षे मृतः स्याद्वातपीडनात् ॥ २०५ ॥

कृष्णस्य तद्विधा रेखा प्रोथादीषत्परा भवेत् ।
स च सप्तदशे वर्षे मृत्युं याति न संशयः ॥ २०६ ॥

यूपचैत्याकृतिर्वापि प्रोथे यस्योपलक्ष्यते ।
जले निमग्नो म्रियते सोऽष्टादशकवत्सरे ॥ २०७ ॥

यस्य श्यावनिभा रेखा लक्ष्यते प्रोथमध्यगा ।
एकोनविंशकेऽब्दे तु परासुर्विषदूषितः ॥ २०८ ॥

[अश्वानां पूर्णायुःकालः]

अत ऊर्ध्वं तु पूर्णायुस्तुरङ्गाणां विभावयेत् ।

[अश्वानां शुभप्रदचिह्नानि]

सुक्स्वस्तिको वर्धमानो नन्द्यावर्तोऽथवा भवेत् ॥ २०९ ॥
श्रीवृक्षो यस्य वा प्रोथे दृश्यते स शुभप्रदः ।

---

* इतः पूर्वमेकादशाब्दे मरणसूचकरेखाग्रन्थेन भवितव्यम् ।

[अश्वानां त्रिंशदेकत्रिंशद्द्वात्रिंशदब्देषु मृतिसूचकचिह्नानि]

त्रिंशद्वर्षे मृतिं याति क्रिमिगोष्ठे हयोत्तमः ॥ २१० ॥

यस्य प्रोथे प्रदृश्येत चक्रं वा वज्रमेव वा ।
स तुरङ्गो दिवं गच्छेदेकत्रिंशे तु वत्सरे ॥ २११ ॥

अर्धेन्दुसन्निभा रेखा भास्करप्रतिमापि वा ।
प्रोथे यस्य भवेत्सोऽश्वो द्वात्रिंशेऽब्दे दिवं व्रजेत् ॥ २१२ ॥

[स्वामिनः शुभाशुभफलसूचकाश्वचेष्टाः]

[1]यैर्बुधाः कथयन्त्याशु शुभं वा यदि वाऽशुभम् ।
स्वामिनो वाजिनां चेष्टास्ता विज्ञेया विचक्षणैः ॥ २१३ ॥

यः प्रबुद्धो हयो रावमूर्ध्ववक्त्रः करोति हि ।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम् ॥ २१४ ॥

यः [2]करोति सकृन्मूत्रं पुरीषं चाश्रुमोचनम् ।
स शंसति परा[3]भूतिम[4]त्यन्तं यश्च दुर्मनाः ॥ २१५ ॥

निष्कारणं निशान्ते यो हेषाशब्दं करोत्यपि ।
परचक्रागमाशंसी स विज्ञेयो विचक्षणैः ॥ २१६ ॥

पुलकाङ्कितपुच्छो यो जायते यस्य घोटकः ।
स शंसति स्थिरस्यापि स्वामिनस्तु विनिर्गमम् ॥ २१७ ॥

स्फुलिङ्गा इव दृश्यन्ते पुच्छान्ते यस्य वाजिनः ।
निर्गच्छतः प्रभोर्नाशं सूचयन्ति निशागमे ॥ २१८ ॥

खनन् क्ष्मां वामपादेन हेषते दीनमानसः ।
यो वाजी नृपतेः स स्यात्पराजयनिवेदकः ॥ २१९ ॥

---

[1] प्रबुद्धाः कथयन्त्यश्वा. शुभं वा यदि वाऽशुभम् । स्वस्वामिनो निजैश्चिह्नैस्तद्विज्ञेयं विचक्षणैः ॥—अश्ववैद्यके । [2] करोत्यसकृ—अ. वै. [3] भूतिं यश्चैवं वर्तते हयः—अ. वै. [4] त्यन्तं भयमेव च—मु.

[1] दीना भिन्नशकृन्मूत्रा हेषन्ते साश्रुलोचनाः ।
ते तु वाहा वदन्त्याशु राज्ञामपजयं भृशम् ॥ २२० ॥

श्रूयते हेषितं यस्य रुदितोन्मुखिनामिव ।
आयतं दीनतायुक्तं तं विद्यादशुभप्रदम् ॥ २२१ ॥

ग्रासप्रतिहतानां च पांसून्वक्त्रेषु गृह्णताम् ।
शुष्कं तृणं वा काष्ठं वा हेषितं भयसूचकम् ॥ २२२ ॥

वसुधां वामपादेन निखनन् यश्च वै हयः ।
पृष्ठवालान्विकिरते स हि प्रवसनं वदेत् ॥ २२३ ॥

भूमिं दक्षिणपादेन हत्वा वालान् किरन् हयः ।
स्वामिनो विजयं कुर्याद्यात्रायां न च संशयः ॥ २२४ ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले अश्वशास्त्रे अश्वोत्पत्त्यादिचेष्टान्तवर्णनं नाम द्वादशस्तरङ्गः

---

## सप्तमकल्लोले त्रयोदशस्तरङ्गः

### चतुःपञ्चाशद्देशजाश्वलक्षण-रथ-गोलक्षण-तच्चिकित्सावर्णनम्

[देशभेदेनाश्वानां व्यञ्जनोक्तिप्रतिज्ञा]

अथ देशविभागेन व्यञ्जनानि प्रचक्ष्महे ।

[देशभेदतश्चतुःपञ्चाशदश्वकुलोद्देशः]

हयाः काम्भोजबाह्लीकवनायुजकुलोद्भवाः ॥ १ ॥

आरट्टजाश्च गान्धाराश्चाम्पेयाः सैन्धवाः स्मृताः ।
तैतिलाः पाटलीपुत्रा मेचकाश्चोपमेचकाः ॥ २ ॥

---

[1] पीना—मु.

कुलजाश्चोपकुलजास्त्रैगर्ताश्चार्जुनेयकाः ।
सावित्रयाश्च यौधेया [1]यावन्त्या यावनास्तथा ॥ ३ ॥

ह्रस्वाश्च यावनास्तद्वत्सुखाराः कान्दरेयकाः ।
वार्मतेयास्तथावन्त्या रसकाश्मीरसम्भवाः ॥ ४ ॥

साकानका पार्वतेया माद्रेया दक्षिणोत्तराः ।
[2]नादेया द्वीप्यकैकेया अपरान्ता वसन्तकाः ॥ ५ ॥

[3]सौवीरा दारदाश्चैव सैन्धिकाः क्षुद्रकास्तथा ।
आवर्तकाश्च कालिङ्गा मौकुलैरावता अपि ॥ ६ ॥

वानवास्यास्त्रिलिङ्गाश्च कथनाश्च सुराष्ट्रजाः ।
उपावृत्ताश्च साल्वेयाः कुरुक्षेत्रोद्भवास्तथा ॥ ७ ॥

पाञ्चाला [4]वाच्छूलाश्चैव तथैवाभीरसम्भवाः ।
इत्थं कुलानि चाश्वानां चतुःपञ्चाशदूचिरे ॥ ८ ॥

[यथोद्देशमश्वकुलानां प्रत्येकं व्यञ्जनोक्तिप्रतिज्ञा]

अतः परं व्यञ्जनैश्च प्रत्येकं तु प्रचक्ष्महे ।
यथोद्देशं कुलगणान् शृणु तांश्च पृथक् पृथक् ॥ ९ ॥

[काम्भोजाश्वव्यञ्जनानि]

काम्भोजाः सुमहाल्ललाटजघनस्कन्धा महावक्षसो
दीर्घग्रीवमुखा महाबलजवा ह्रस्वाण्डमेढ्रासनाः ।
श्रीमन्तश्च समन्विताश्च चरणैर्दीर्घैः सुजातैर्भुजैः
सर्वव्यञ्जनपूजिता दृढशफा वैडूर्यनेत्राश्च ते ॥ १० ॥

श्वेताश्च शोणाश्च भवन्त्यदीना
सकृष्णवर्णातिविवर्णकाश्च ।
ह्रस्वैश्च कूर्चैर्मृदुरोमकेशा
ह्रस्वेन पृष्ठेन सवर्ष्मवन्तः ॥ ११ ॥

---

[1] आव—मु. [2] माद्रेया—मु. [3] कम्पिल्ला—मु. [4] वात्सला—मु.

सुसंहताङ्गाः प्रियदर्शनास्ते
नित्यं च भर्तुर्वशगा मनोज्ञाः ।
तेजस्विनः सत्त्वयुताः सुशीलाः
श्रेष्ठाश्च रूपेण कुलेन दक्षाः ॥ १२ ॥

समवृत्तजानुजङ्घा वृत्तोरुह्रस्वकुक्षिकखुराः ।
पीनास्तनुलाङ्गूलाः सुस्निग्धाः शङ्कुकर्णाश्च ॥ १३ ॥

सुमहास्रुक्प्रोथा महोदरास्ते महोत्साहाः ।
प्रत्यश्वं बडवामपि दृष्ट्वा तेनैव हेषन्ते ॥ १४ ॥

स्पष्टमुखाः स्थिरनादाः स्वामिहितास्ते सुपार्ष्णयः शूराः ।
सुखसञ्चारा वाहाः काम्भोजास्ते समाख्याताः ॥ १५ ॥

[बाह्लीकाश्वानां संस्थानवर्णरूपेषु काम्भोजाश्वसाम्यं, व्यञ्जनान्तरविशेषश्च]

बाह्लीकाः काम्भोजैः समानसंस्थानवर्णरूपाः स्युः ।
तेषामयं विशेषो दीर्घाङ्गा दीर्घतरपृष्ठाश्च ॥ १६ ॥

परिणाहायामाभ्यां किञ्चिद्ध्रस्वा महेक्षणाः शूराः ।
वृत्ता त्रिधूतपृथुला दीर्घग्रीवाश्च दीर्घमुखाः ॥ १७ ॥

मधुपिङ्गला न दीनाः क्रुद्धास्ते दन्तखादिनः कथिताः ।
नैव त्यजन्ति पतितं सङ्कटेष्वपि सादिनम् ।
एतावदेव विज्ञानं बाह्लीकानां प्रकीर्तितम् ॥ १८ ॥

[वनायुजाश्वव्यञ्जनानि]

वनायुजाश्वा लघवः प्रचण्डाः
मध्यप्रमाणाश्चपला न दीनाः ।
वृत्तायताः कायसमाः सुनेत्राः
ह्रस्वाण्डमेढ्रास्त्वथ शङ्कुकर्णाः ॥ १९ ॥

पूर्वार्धकायेषु समुच्छ्रितास्ते
ह्रस्वत्रि[1]काढ्याश्च महासुसत्त्वाः ।
स्थूलैश्च पादैर्दृढ[2]कुष्टिकाश्च
कालानुवर्णा बहुशो भवन्ति ॥ २० ॥

उपाण्डदेशे विकटाः सुदीर्घा
मेघेभनादाश्च न शङ्किनस्ते ।
सत्त्वतेजोबलोपेता हया वानायुजाः स्मृताः ।

[गान्धारजाश्वव्यञ्जनानि]

तेषामुपकुले जातान् गान्धारांश्च शृणुष्व मे ॥ २१ ॥

कृष्णकुक्कुटका धूम्राः कृष्णसारादिवर्णिनः ।
श्यामाः सुबहुवर्णाश्च समकायाः सुसंहताः ॥ २२ ॥

दृढपश्चार्धकायाश्च दृमोदग्रास्तथा पुरः ।
पश्चार्धविषमाश्चण्डा वलितस्थूलकेसराः ॥ २३ ॥

तन्वायतमुखाश्चैव गान्धारकुलजा हयाः ।

[आरट्टजाश्वव्यञ्जनानि]

आरट्टजानां विज्ञानं कीर्त्यमानं शृणुष्व मे ॥ २४ ॥

ह्रस्वपृष्ठाश्च सुमुखास्तनुवालाः शुभेक्षणाः ।
उदग्रायतपूर्वार्धा मृदुश्लक्ष्णतनूरुहाः ॥ २५ ॥

तनुत्वग्घ्रस्वकर्णाश्च मृदुग्रीवाः सुसंस्थिताः ।
सुसंहताः शङ्कुकर्णा दृढपादाः सुकुष्टिकाः ॥ २६ ॥

शोणभूयिष्ठवर्णाश्च हरिवर्णानुवर्णकाः ।
महाजवाः सुविक्रान्ता न च विक्षिप्तकारिणः ॥ २७ ॥

आरट्टकुलजा एवं विज्ञेया बलिनो हयाः ।

---

[1] काषाश्च–मु. [2] यष्टि–मु.

[चाम्पेयाश्वानामारट्टजाश्वोपकुलजत्वं, तदीयव्यञ्जनानि च]

तेषामुपकुले जाताश्चाम्पेयास्ताञ्छृणुष्व मे ॥ २८ ॥

परिमण्डलांसपृष्ठाः सुगन्धाः सुप्रतिष्ठिताः ।
पणजङ्घास्तनुपदा गात्रवन्तः सुविक्रमाः ॥ २९ ॥

बलवन्तः सुरोमाणस्तेजःसारजवान्विताः ।
स्थूलाक्षिकूटघाटास्ते स्थिरपादाः सुकुष्ठिकाः ॥ ३० ॥

समसम्पूर्णकायाश्च चाम्पेयास्तुरगाः स्मृताः ।

[सैन्धवाश्वव्यञ्जनानि]

सैन्धवाः स्थिरपादाश्च विस्तीर्णजघनाः स्थिराः ॥ ३१ ॥

दीर्घग्रीवमुखाढ्यास्ते स्थूलाक्षास्तनुकेसराः ।
शङ्कुकर्णा महाकाया [1]महोत्साहास्तनुत्वचः ॥ ३२ ॥

तनुस्कन्धा महाप्रोथा हयास्ते बहुशोऽद्भवाः ।
लम्बमेहनमुष्काश्च सैन्धवाः समुदाहृताः ॥ ३३ ॥

[तैतिलाश्वानां सैन्धवोपकुलत्वं, तदीयव्यञ्जनानि च]

तेषामुपकुले जाता[2]स्तैतिला मन्दमेधसः ।
स्थूलग्रीवांसहनवः स्थूलवालधिकेसराः ॥ ३४ ॥

स्थूलमेढ्रफलाक्षाश्च बलवन्तो जवान्विताः ।
सारवन्तः सुगात्राश्च समुच्छ्रितशिरोधराः ॥ ३५ ॥

संस्थानवन्तो लघवो दृढपादाः सुकुष्ठिकाः ।
पृथुवक्षोललाटास्ते विशालजघनेक्षणाः ॥ ३६ ॥

भाराध्वनोः क्लेशसहाः क्षुत्पिपासासहाश्च ते ।
सत्त्ववन्तश्च तुरगास्तैतिलाः परिकीर्तिताः ॥ ३७ ॥

---

[1] महोच्छ्रासाः-मु.     [2] स्तैत्तिला -मु.

[पाटलिपुत्रकाश्वव्यञ्जनानि]

सुसंस्थानाश्च दुर्वृत्ता मेचकाः स्थूलवक्षसः ।
शङ्कुकर्णाः स्पष्टमुखा विस्तीर्णजघनास्तथा ॥ ३८ ॥

दीर्घायतविधुग्रीवा गूढजत्रुमहांसकाः ।
महासनाः पृथुग्रीवास्तनुवृत्तोरुजङ्घकाः ॥ ३९ ॥

ह्रस्वकुष्ठिककूर्चास्ते तनुमध्या मितोदराः ।
रोमशाः पूर्णसर्वाङ्गाः समशीला न कर्कशाः ॥ ४० ॥

बहुवर्णयुताश्चित्रा हयाः पाटलिपुत्रकाः ।

[मेचकाश्वव्यञ्जनानि]

[1] मृदुपृष्ठा न चपला मध्यसारबलास्तथा ॥ ४१ ॥

सत्त्वतेजोबलैर्मध्या मेचकास्तुरगाः स्मृताः ।

[उपमेचकाश्वव्यञ्जनानि]

अथोपमेचका ह्रस्वाः स्थूलवालधिकेसराः ॥ ४२ ॥

मृद्वङ्गा दुर्बलशफास्तनुगात्राः सुकुष्ठिकाः ।
उर्ध्वबद्धशिरोग्रीवा ह्रस्वोरस्काश्च दुर्मुखाः ॥ ४३ ॥

विरूपाक्षाः समाख्याता हयाः स्युरुपमेचकाः ।

[कुलजाश्वव्यञ्जनानि]

कुलजा दीर्घपृष्ठांसा ह्रस्वमेढ्रफलालसाः ॥ ४४ ॥

वृत्तग्रीवायतमुखास्तनुमध्याः सुकुष्ठिकाः ।
दीर्घवालधिकेशाश्च सूक्ष्मत्वग्रोमकेसराः ॥ ४५ ॥

तनूरस्काश्च तुरगाः कुलजाः समुदाहृताः ।

---

[1] मृदुमध्या–मु.

[उपकुलजाश्वानां कुलजाश्वसमलिङ्गत्वं, तदीयव्यञ्जनानि च]

अथोपकुलजा ह्रस्वास्तनुग्रीवोरुकुष्ठिकाः ॥ ४६ ॥

दीर्घवालधिकेशाश्च दीर्घस्कन्धा महोरसः ।
कुलजैः समलिङ्गास्ते किञ्चिदायतदेहिनः ॥ ४७ ॥

मन्दप्राणाल्पतेजस्काः कर्कशा ह्रस्वविक्रमाः ।
अल्पसत्त्वाल्पमध्याश्च तथोपकुलजा हयाः ॥ ४८ ॥

[त्रैगर्ताश्वव्यञ्जनानि]

अतः परं तु त्रैगर्ता बलवन्तो न कर्कशाः ।
ह्रस्वग्रीवा महोरस्का रूक्षवालधिकेसराः ॥ ४९ ॥

प्रायशः शशनेत्रास्ते दृढ[1]सान्द्रशफास्तथा ।
शशक्रोडाः शशमुखाः शशवालधिकेसराः ॥ ५० ॥

क्रोधना नातिशूराश्च त्रैगर्ता दुःखवाहिनः ।

[आर्जुनेयाश्वव्यञ्जनानि]

आर्जुनेया महोरस्काः स्थूलाक्षाः स्थूलकेसराः ॥ ५१ ॥

सुकुष्ठिकाश्च सुमुखा लम्बमेढ्रफलास्तथा ।
उरुस्कन्धविधुग्रीवाः कृष्णवर्णाः सुवर्णिनः ॥ ५२ ॥

विज्ञेया जविनः क्रूरा आर्जुनेयास्तुरङ्गमाः ।

[सावित्रेयाश्वव्यञ्जनानि]

सावित्रेया ह्रस्वपृष्ठा विस्तीर्णजघना दृढाः ॥ ५३ ॥

[2]दुष्टवक्त्रानना दीर्घस्थूलवालधिकेसराः ।
दीर्घपृष्ठा रुरुशफाः स्थिरमांसाः सुगन्धिनः ॥ ५४ ॥

---

[1] पातश—म. [2] दृढ—ग.

मृदङ्गाश्च सुनेत्राश्च पृथुपादा महौजसः ।
दीर्घसक्थ्यंसपृष्ठास्ते स्थिरमांसा महोरसः ॥ ५५ ॥

सत्त्ववन्तश्च शूराश्च साविन्धेयास्तुरङ्गमाः ।

[यौधेययावन्त्याश्वानां व्यञ्जनानि]

यौधेया ह्रस्वकर्णोष्ठाः सारतेजोबलान्विताः ॥ ५६ ॥

वृत्तायतोन्नतग्रीवा वृत्तमध्योरुकुष्ठिकाः ।
दीर्घवालधिकेशाश्च सुखुरा नातिपिङ्गलाः ॥ ५७ ॥

श्रेष्ठा वृत्तमुखाश्चण्डाः सुविभक्ताः सुवक्षसः ।
तनुत्वक्सूक्ष्मरोमाणः विभक्ता मत्तसन्धयः ॥ ५८ ॥

यौधेयाश्चैव यावन्त्या भवेऽध्वनि च शीघ्रगाः ।

[यावनाश्वव्यञ्जनानि]

विज्ञानं यावनाश्वानां शृणु वक्ष्याम्यतः परम् ॥ ५९ ॥

सुललाटाः सुनेत्राङ्गास्तनुपृष्ठायताननाः ।
तनुत्वक्सूक्ष्मरोमाणः शङ्कुकर्णा लघुक्रमाः ॥ ६० ॥

सुपृष्ठजघनोरस्काः वर्ष्मवन्तः सुमेधसः ।
बहुवर्णाः सुवर्णाश्च मनोज्ञाः प्रियदर्शनाः ॥ ६१ ॥

सारवन्तः सुगम्भीराः सत्त्वतेजोबलान्विताः ।
सुकुष्ठिकखुराः शीघ्राः सुस्थिराः सर्वकर्मसु ॥ ६२ ॥

यावनाश्वास्तु बोद्धव्या वृत्तदीर्घास्यबाहवः ।

[यावनवामनाश्वव्यञ्जनानि]

अथेदानीं प्रवक्ष्यन्ते हया वामनयावनाः ॥ ६३ ॥

स्वभावतो ह्रस्वकायाः सत्त्ववन्तो बलान्विताः ।
सम्पूर्णसुविभक्ताङ्गाः संहताङ्गा मनोहराः ॥ ६४ ॥

सुवर्णाः सुशफाश्चैव मांसलाः प्रियदर्शनाः ।
सुरोमकेशवालान्ताः सुभगाश्च सुमेधसः ॥ ६५ ॥

कर्कशाः क्रीडनपरा ज्ञेया यावनवामनाः ।

[तुखाराश्वव्यञ्जनानि]

एते तु[1]खारकाश्चा जवसत्त्वरसान्विता महाकायाः ।
भाराध्वक्लेशसहा वृषभाकाराः पृथूदरोरस्काः ॥ ६६ ॥

दृढमेधसः सुशीला बलवन्तस्ते मनस्विनश्चित्राः ।
पृथुजघना दृढपादाः सुकुक्षिकाः स्युः खरैस्तुल्याः ॥ ६७ ॥

सुविक्रान्ता दृढशफास्तुखारावाजि[2]नः स्मृताः ।

[विषमेयाश्वव्यञ्जनानि]

विषमेयास्तु विज्ञेयाः केशैः सूक्ष्मतरैस्तथा ॥ ६८ ॥

तनूदरा वृत्तमध्याः पृथूरस्का लघुक्रमाः ।
श्वेतगौराः सुरोमाणो विषमेया हयाः स्मृताः ॥ ६९ ॥

[कान्दरेयाश्वव्यञ्जनानि]

कान्दरेयास्तु ये वाहास्तेषां शृणुत लक्षणम् ।
कायवन्तः सुसंवृद्धा दृढपादाः सुकुक्षिकाः ॥ ७० ॥

स्थूलत्वक्सूक्ष्मरोमाणः स्थूलवालधिकेसराः ।
अकोपनाः सुशीलाश्च कान्दरेयास्तुरङ्गमाः ॥ ७१ ॥

[वार्ष्मतेयाश्वव्यञ्जनानि]

वार्ष्मतेया धनुर्ग्रीवा ह्रस्वाङ्गा ह्रस्वकुक्षिकाः ।
पश्चार्धकायेषु समाः पूर्वकायेषु च स्थिराः ॥ ७२ ॥

---

[1] भारका—मु.  [2] नस्तथा—मु.

[1]तनूदरा ह्रस्वपृष्ठा वर्ष्मवन्तः सुसंहताः ।
शीलवन्तश्च विज्ञेया वार्ष्मतयास्तुरङ्गमाः ॥ ७३ ॥

[आवन्त्यौरसाश्वव्यञ्जनानि]

विषमेयास्तथावन्त्याः स्थूलाङ्गा दृढकुक्षिकाः ।
गात्रवन्तो निरुदराः सुबद्धांसशिरोधराः ॥ ७४ ॥

शोणवर्णाः सुसत्वाश्च वृत्तमध्याः पृथूरसः ।
आवन्त्याः सूक्ष्मरोमाणो महाजघनवक्षसः ॥ ७५ ॥

दृढपादा वीर्यवन्तः पृथुजङ्घोरुकुक्षिकाः ।
विज्ञेया औरसा ह्येवं श्वेतवर्णानुवर्णिनः ॥ ७६ ॥

[काश्मीरजाश्वव्यञ्जनानि]

काश्मीरिका वर्ष्मवन्तः तेजोवन्तः शुभेन्द्रियाः ।
पृथ्वायतललाटास्ते [2]शुद्धा ह्यलघुविक्रमाः ॥ ७७ ॥

तथैव शङ्कुकर्णास्ते सुरोमाणस्तनुत्वचः ।
उष्ट्रायतमुखाः शूराः सुविभक्ताः सुसंहताः ॥ ७८ ॥

दृढाङ्गबलसम्पन्ना दृढपादा मनस्विनः ।
शोणव[3]र्णानुवर्णाश्च हयाः काश्मीरजास्तु ते ॥ ७९ ॥

[साकानकाश्वलक्षणानि, साकानकार्थविवरणं च]

साकानकानामश्वानां [4]लक्षणं तु निबोध मे ।
महानदी सका नाम प्रभूतयवसोदका ॥ ८० ॥

तस्यास्तीरे ये वसन्ति तत्रोत्पन्नाः सकानकाः ।
पूर्वकायेऽत्युदग्रास्ते पश्चादीषत्समुन्नताः ॥ ८१ ॥

---

[1] अयं श्लोको मुद्रितपुस्तके न दृश्यते । [2] सिद्धा–मु. [3] र्णाः सुवर्णा–मु.
[4] यत्तल्लक्ष्म निबोध–मु.

तन्वायतविधुग्रीवा दीर्घवालधिकेसराः ।
वीक्षमाणास्तु दृश्यन्ते प्रत्यश्वं बडवामपि ॥ ८२ ॥

शङ्कुकर्णाः स्पष्टमुखास्तनुवृत्ताननाश्च ते ।
दीर्घकेशाश्च दीर्घाङ्गा लम्बपार्श्वोदरस्फिजः ॥ ८३ ॥

पुष्पगात्रोरुजघना हयाः साकानकाः स्मृताः ।

[पार्वतेयाश्वव्यञ्जनानि]

पार्वतेयास्तनुग्रीवा महाजघनवक्षसः ॥ ८४ ॥

विध्वस्तपृष्ठगात्रास्ते दीर्घवालधिकेसराः ।
महाजवा बलोपेताः पुरोगाः सर्वकर्मसु ॥ ८५ ॥

धीराश्च दृढपादाश्च पार्वतेयास्तुरङ्गमाः ।

[दक्षिणोत्तरमाद्रेयाश्वव्यञ्जनानि]

[1] दक्षिणोत्तरमाद्रेया दीर्घवालधिकेसराः ॥ ८६ ॥

पृथुग्रीवा महाकर्णा हयास्ते शीघ्रगामिनः ।
न च कर्मणि योग्यास्ते न च शीलान्विता हयाः ॥ ८७ ॥

दुरासदा दुःखशीलाः प्रायशो मधुपिङ्गलाः ।
हरिवर्णानुवर्णाश्च दृढपादखुराश्च ते ॥ ८८ ॥

एवं दक्षिणमाद्रेया विज्ञेया लघुचारिणः ।

[द्वीपविभागेन तत्संज्ञहयनिर्देशः]

अन्तर्द्वीपेषु ये जाता वक्ष्यन्ते तान्निबोध मे ॥ ८९ ॥

इरावत्या विपाशायाः शतद्रूचन्द्रभागयोः ।
अन्तर्द्वीपेषु ये जातास्ते च तद्वीपसंज्ञिताः ॥ ९० ॥

चित्तस्थायाः सरस्वत्या नादेयास्तु तुरङ्गमाः ।

---

[1] अनूपोत्तर–मु.

[द्वीपजहयव्यञ्जनानि]

कल्याणव्यञ्जनोपेता दीर्घग्रीवा मुखोच्छ्रिताः ॥ ९१ ॥

सुवालिनः सुजघनाः [1]सुपक्ष्मा द्वीपजा हयाः ।

[कैकयाश्वव्यञ्जनानि, तेषां यवनाश्वसाम्यं च]

कैकेयका वर्ष्मवन्तो महाप्रोथमुखा हयाः ॥ ९२ ॥

दीर्घग्रीवा महोच्छ्वासा दीर्घवालधिकेसराः ।
सुचारुदृढपादास्ते कैकेया यवनैः समाः ॥ ९३ ॥

[अपरान्तभवाश्वव्यञ्जनानि]

अपरान्तभवाः स्वस्था महास्कन्धा महाबलाः ।
वृत्तग्रीवास्तु तैर्भुग्नैः [2]पाण्डवो विकटाश्च ते ॥ ९४ ॥

महोरस्का महापक्षा लम्बश्रवणमेहनाः ।
महामेढ्रफलाश्चैव वृत्त[3]कूर्चोरुकुक्षिकाः ॥ ९५ ॥

अपरान्तोद्भवा[4] एते अश्वा ज्ञेया विचक्षणैः ।

[वासन्तकाश्वव्यञ्जनानि]

वासन्तकास्तु विक्रान्ता दीर्घग्रीवामुखा हयाः ॥ ९६ ॥

मृगोदरा ह्रस्वपृष्ठा ह्रस्वश्रवणमेहनाः ।
स्पर्शवन्तश्च शान्ताश्च दृढपादाः सुकुष्ठिकाः ॥ ९७ ॥

महोरस्काः सुचपला महाजघनपिङ्गलाः ।
एवं वासन्तका ज्ञेयास्तुरगाः शीलकर्कशाः ॥ ९८ ॥

---

[1] सुपक्षा—मु. [2] रूपाण्ड—ग. [3] कूर्पोरुकुक्षयः—मु.
[4] एवमश्वा—मु.

[सौवीरकाश्वव्यञ्जनानि]

सौवीरका ह्रस्वपृष्ठा दृढगात्राः क्षमान्विताः ।
उदग्रगामिनो हृष्टाः पादान्तरविहारिणः ॥ ९९ ॥

सुदाम्यमानाः शीघ्रास्ते स्थिरभारास्तथाध्वनि ।
समाः सम्पूर्णसर्वाङ्गा हयाः सौवीरकाः स्मृताः ॥ १०० ॥

[दरदाश्वव्यञ्जनानि]

दरदा ह्रस्वजघना ह्रस्व[1]कूर्चाल्पमेधसः ।
महोदरशिरस्स्कन्धा महाकायबलक्रमाः ॥ १०१ ॥

दृढपादाः सारवन्तो वर्णवन्तो जवान्विताः ।
ह्रस्वाक्षिपृष्ठलाङ्गूला दरदा वाजिनः स्मृताः ॥ १०२ ॥

[सैन्धिकाश्वव्यञ्जनानि]

[2]सैन्धिकाः स्थूलवालाश्च स्थूलरोमत्वचस्तथा ।
विकटा वर्ष्मवन्तश्च बलवन्तो जवान्विताः ॥ १०३ ॥

स्थूलकुक्षिकजङ्घाश्च [3]सैन्धिकास्तुरगाः स्मृताः ।

[क्षुद्रकाश्वव्यञ्जनानि]

क्षुद्रका वर्ष्मवन्तश्च बलवन्तो जवान्विताः ॥ १०४ ॥

महोदरजवस्कन्धा महोरस्का न कर्कशाः ।
चतुरश्राः सुजघनाः स्वायताः सुप्रतिष्ठिताः ॥ १०५ ॥

दीर्घश्रवणमेढ्राश्च सुखुराः क्षुद्रकाः स्मृताः ।

[मालवाश्वव्यञ्जनानि]

मालवा वर्ष्मवन्तश्च विस्तीर्णजघनासनाः ॥ १०६ ॥

---

[1] कूर्चाल्प—मु. [2] सैन्धवाः—मु. [3] सैन्धवास्तु—मु.

पूर्वकायायता ह्रस्वा लोहिताभा मनोरमाः ।
लम्बोष्ठा लम्बकर्णास्ते ह्रस्वग्रीवा महाबलाः ॥ १०७ ॥

तेजोवन्तोऽतिजवना मालवास्ते हयाः स्मृताः ।

[ऐरावताश्वव्यञ्जनानि]

ऐरावता रूक्षकर्णा मन्दमध्यजवान्विताः ॥ १०८ ॥

स्थूलरोमास्थिवालास्ते हीनसत्त्वाल्पतेजसः ।
गौरानुवर्णाः प्रायेण विषमाङ्गा दृढैः शफैः ॥ १०९ ॥

स्थूलचर्मास्थिमांसास्ते हया ऐरावताः स्मृताः ।

[आवर्तकाश्वव्यञ्जनानि]

आवर्तका दाक्षिणात्या दीर्घकर्णा महास्वनाः ॥ ११० ॥

महाकाया विधुग्रीवा महाजघनवक्षसः ।
भुग्नास्यास्तनुपार्श्वाश्च विवृद्धस्वाः सुशीलिनः ॥ १११ ॥

दीर्घकेशा मृदुतला मध्यसारजवान्विताः ।
एवमावर्तका ज्ञेयाः सत्त्वहीना न कर्कशाः ॥ ११२ ॥

[कालिङ्गाश्वव्यञ्जनानि]

कालिङ्गकाः स्थूलपादा महाकर्णा दृढैः खुरैः ।
कुब्जदण्डायतग्रीवा भुग्नास्या लम्बमेहनाः ॥ ११३ ॥

अल्पतेजोजवबला हयाः कालिङ्गकाः स्मृताः ।

[मौकुलाश्वव्यञ्जनानि]

मौकुलाः स्थूलरोमाणो दुर्धिय क्रोधनालसाः ॥ ११४ ॥

ह्रस्वपृष्ठाङ्गजघनाः स्थूलकुष्ठिकजानवः ।
भीरवोऽल्पबला मन्दा हीनतेजोबलास्तु ते ॥ ११५ ॥

पृथ्वासना निरुत्साहा मौकुलाः तुरगाः स्मृताः ।

[वानवासिकाश्वव्यञ्जनानि]

दाक्षिणात्यास्तु तुरगा वक्ष्यन्ते वानवासिकाः ॥ ११६ ॥

ह्रस्वपृष्ठोरुजवनाः पूर्वकायेषु संहताः ।
पश्चार्धविकृता मन्दा दृढपादाः क्षमान्विताः ॥ ११७ ॥

मध्यप्राणा ह्रस्वजवाः स्वल्पतेजस्समन्विताः ।
वानवासिकजातानामेतद्भवति लक्षणम् ॥ ११८ ॥

[त्रैलिङ्गाश्वव्यञ्जनानि]

वाजिनस्त्वथ त्रैलिङ्गाः क्रोधनाः सूकरस्वनाः ।
महोरस्का महास्कन्धाः पश्चार्धेषु सुसंहताः ॥ ११९ ॥

दृढकुक्षिकपादाश्च हयास्त्रैलिङ्गकाः स्मृताः ।

[क्रोधनाश्वव्यञ्जनानि]

क्रोधना दीर्घकर्णाश्च दीर्घोष्ठजघनास्तथा ॥ १२० ॥

उदग्राः पूर्वकायेषु पश्चार्धविकृताश्च ते ।
हीनवर्णाल्पतेजस्काः स्तब्धगात्रा महोदराः ॥ १२१ ॥

स्थूलकुक्षिकलाङ्गूलाः क्रोधनास्ते हयाः स्मृताः ।

[सौराष्ट्राश्वव्यञ्जनानि]

* सौराष्ट्राः स्थूलपादाश्च दृढरोमान्तपार्ष्णयः ॥ १२२ ॥

दीर्घविस्तीर्णसक्थ्यङ्गा दर्शनीय[1]तराः पुरः ।
पश्चार्धविकृताश्चैव स्थूलजानूरुकुक्षिकाः ॥ १२३ ॥

एवं सौराष्ट्रिका ज्ञेयाः सुपादा न च संहताः ।

---

* सौराष्ट्राश्वव्यञ्जनानि मुद्रितकोशे उपावृत्ताश्वव्यञ्जननिरूपणानन्तरं निरूपितानि ।

[1] तमाः—मु.

[उपावृत्ताश्वव्यञ्जनानि]

अथोपावृत्तका मन्दाः स्थूललाङ्गूलकुक्षिकाः ॥ १२४ ॥

लम्बकर्णा विधुस्कन्धा लम्बसृक्वाण्डमेहनाः ।
महापृष्ठाश्च कुब्जाश्च दृढसक्थिसुसंहताः ॥ १२५ ॥

पिङ्गलाक्षाश्च भूयिष्ठा उपावृत्ता हयाः स्मृताः ।

[साल्वजवेसरव्यञ्जनानि]

साल्वेया वेसरा ज्ञेयाः स्थिराङ्गा ह्रस्वकुक्षिकाः ॥ १२६ ॥

वृत्तायतविधुग्रीवा दीर्घकर्णा महोरसः ।
पश्चार्धविकृता रूक्षास्तनुवालधिकेसराः ॥ १२७ ॥

वेसराः साल्वजातास्ते तनुत्वङ्मध्यमेधसः ।

[कुरुक्षेत्रजाश्वव्यञ्जनानि]

कुरुक्षेत्रजविज्ञानं वेसराणां निबोध मे ॥ १२८ ॥

अव्यग्राः पूर्वकायेषु पश्चार्धस्वल्पमेदसः ।
युक्ताः पृष्ठे तथा स्कन्धे न वहन्ति गुरुश्रमाः ॥ १२९ ॥

कुरुक्षेत्रेषु जातास्ते वेसराः समुदाहृताः ।

[पाञ्चालजाश्वव्यञ्जनानि]

पाञ्चालानां तु विज्ञानं वेसराणां निबोध मे ॥ १३० ॥

पाञ्चालजा दीर्घमुखाः स्थूलाङ्गाः स्थूलकुक्षिकाः ।
विनतायतपृष्ठास्ते मृदुगात्राल्पतेजसः ॥ १३१ ॥

सुप्रतिष्ठितपादास्ते विषमा दृढपाणयः ।
एते पाञ्चालसम्भूता वेसराः परिकीर्तिताः ॥ १३२ ॥

[वाच्छेलाश्वव्यञ्जनानि]

[1]वाच्छेलाः स्थूलसर्वाङ्गा दीर्घपृष्ठतनूदराः ।
सृक्कर्णोदरैर्लम्बैर्महामुखशिरोधराः ॥ १३३ ॥

कायोपचितमांसास्ते सुविभक्ता दृढा भृशम् ।
मन्दतेजोजवाश्चैव वाच्छेला वेसराः स्मृताः ॥ १३४ ॥

[आभीरजाश्वव्यञ्जनानि]

आभीरजानां विज्ञानं कुकुराणां तु वक्ष्यते ।
ऊर्ध्वकर्णाः सूक्ष्ममुखाः जवना नित्यनिर्वृताः ॥ १३५ ॥

दुरासदा दुराकारा हया आभीरकास्तु ते ।
एवं देशविभेदेन लक्ष्माण्युक्तानि वाजिनाम् ॥ १३६ ॥

[मत्तोचकाद्या अश्वाः, तेषां लक्षणानुक्तौ कारणं च]

मत्तोचका अश्मकेया मलङ्काश्च चकोरकाः ।
वैदर्भाः श्वेतगिरिजा हिमवत्पूर्वदक्षिणाः ॥ १३७ ॥

सामेयोत्तरसामेया घोटका इति कीर्तिताः ।
एषां लक्ष्माणि नोक्तानि ग्रन्थविस्तरभीरुभिः ॥ १३८ ॥

[सौराष्ट्रादीनि चत्वार्यश्वकुलानि, तेषां वेसरसंज्ञा, उत्तममध्यमाधमभावश्च]

सौराष्ट्रकाश्च साल्वेयाः कुरुक्षेत्राश्च वाच्छेलाः ।
कुलान्येतानि चत्वारि भजन्ते वेसराभिधाम् ॥ १३९ ॥

उत्तमाश्चाधमा मध्या विज्ञेयाः प्रोक्तलक्षणैः ।

[तेषां शरीरदैर्घ्यतादिकम्]

दीर्घाणि चत्वार्यथ [2]चोन्नतानि
चत्वारि रक्तान्यथ [3]सूक्ष्मकाणि ।

---

[1] वाच्छलाः–मु.   [2] चोच्छ्रितानि–मु.   [3] सक्ष्मकानि–ख. मु.

*ह्रस्वानि चत्वार्यथ वक्रकाणि
पृथूनि चत्वार्यथ निम्नकानि ॥ १४० ॥

[अश्वानां मुनिसम्मतद्वात्रिंशच्छुभलक्षणानि, तेषां पृथगभिधानं च]

द्वात्रिंशद्घोटकस्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्तयिष्यामि वाजिनां च पृथक् पृथक् ॥ १४१ ॥

आस्यं [1]भुजौ केशककाटिका च
दीर्घं चतुष्कं [2]तुरगस्य शस्तम् ॥
तथोन्नतं घ्राणशिरोललाटं
शफं चतुष्कं [3]शुभदं हयस्य ॥ १४२ ॥

ओष्ठौ च जिह्वा त्वथ तालुकं च
मेढ्रं सुरक्तं शुभदं हयस्य ।
वक्रं मुखं कन्धरजानुनी च
पार्श्वं चतुष्कं शुभदं [4]प्रदिष्टम् ॥ १४३ ॥

गुदं तथा [5]श्रोणितटं विशालं
दन्ताक्षियुग्मं शुभदं हयस्य ।
कक्षान्तरं चोदरमध्यमं च
निम्ना कटी तालु सुनिम्नकं च ॥ १४४ ॥

सूक्ष्माणि च त्वक् च तथोष्ठकेशौ
जङ्घा च शस्तानि तथैव पुच्छम् ।
कर्णान्तरं कर्णयुगं च वंशं
शस्तं तथा ह्रस्वमुशन्ति सिद्धाः ॥ १४५ ॥

[अश्वारोहणं, तद्विज्ञानस्य सर्वतः प्रियता च]

अथातः सम्प्रवक्ष्यामि हयारोहणमुत्तमम् ।
येन विज्ञातमात्रेण सर्वतः प्रियतां व्रजेत् ॥ १४६ ॥

---

* इतः "आस्यं भुजौ" इतिपर्यन्तं मुद्रितकोशे नास्ति ।

[1] भुजाकेश–मु. [2] तुरगेषु–मु. [3] तुरगं–ख. [4] प्रशस्तम्–मु.

[5] श्रोणितलं–ख.

[वेगहीनाश्वस्य रूपादिवैयर्थ्यम्, वेगवतस्तस्य वाहकत्वं च]

रूपावर्तगतिच्छाया सत्त्वं [1]वर्णो वयो बलम्
वेगहीनस्य वाहस्य सर्वमेतन्निरर्थकम् ॥ १४७ ॥

तस्माद्वेगयुतं वाहं तरुणं पुष्टविग्रहम्।
वाहयेद्वाहकं सज्जस्तुरङ्गं सान्त्वयन्मुहुः ॥ १४८ ॥

धनुश्शतान्तरं गत्वा पुनरागच्छति [2]द्रुतम्।

[वेगमात्राभेदेनाश्वानां उत्तममध्यमहीनवेगवत्ता]

मात्राषोडशकेनाश्वो भवेदुत्तमवेगवान् ॥ १४९ ॥

चतुर्विंशतिमात्राभिर्मध्यवेगस्तुरङ्गमः।
द्वात्रिंशता तु मात्राभिर्हीनवेगस्तु घोटकः ॥ १५० ॥

[सादिबललक्षणम्]

अभ्यासी जितघोटकोऽश्वहृदयज्ञातागमज्ञः सुधीः
कालज्ञो गुणदोषवित्पवनजित्क्लेशक्षमी विक्रमी।
लोकाङ्घ्रिः स्थिरकन्धरोन्नतभुजः शास्ता च रश्मीरतः
सोऽयं सादिवरः स्थिरासन[3]पटुर्गाढप्रहारी मतः ॥ १५१ ॥

[सादिनः अष्टावधानानि]

रागो भल्गा कशा [4]खण्डा भूमानं रिपुदर्शनम्।
[5]अश्वरक्षात्मरक्षा च सादिनोऽष्टावधानकम् ॥ १५२ ॥

[वर्जनीयरङ्गभूमिः]

सरन्ध्रां [6]कठिनां चैव पाषाणोदकसंयुताम्।
तृणकाष्ठयुतां चैव रङ्गभूमिं विवर्जयेत ॥ १५३ ॥

---

[1] वर्णादयो–मु [2] ध्रुवम्–ग. [3] पुंटो–ख. [4] खङ्गा–ख. [5] विश्व–ग.
[6] करिणां–ग.

[प्रशस्तरङ्गभूमिः]

समा च विपुला चैव किञ्चित्पांसुसमन्विता ।
नीरन्ध्रा विजना चैव रङ्गभूमिः [1]प्रशस्यते ॥ १५४ ॥

[वाजिनोऽधावनकारणानि]

स्थूलश्च क्रोधनो मूर्खो भीतोत्सुक[2]चलासनः ।
अस्थानदण्डघाती यो वाजी तस्य न धावति ॥ १५५ ॥

[वाजिनां ब्राह्मणादिवर्णभेदेन वाहनोपायाः]

ब्राह्मणं भक्ष्यदानेन सौम्येन क्षत्रियं तथा ।
वैश्यं च शब्ददण्डेन शूद्रं दण्डेन वाहयेत् ॥ १५६ ॥

[अश्वानां दण्डनावसरः]

ह्रेषिते स्खलिते भीते तथा चोन्मार्गगामिनि ।
कुपिते भ्रान्तचित्ते च षट्सु स्थानेषु दण्डयेत् ॥ १५७ ॥

[वाजिनां तत्तदुपाधिकदण्डनस्थानानि]

ह्रेषिते नासिकामध्ये स्खलिते च कपोलयोः ।
भीते च हृदये प्रोक्तमुन्मार्गे जानुजङ्घयोः ॥ १५८ ॥

कुपिते कुक्षि[3]देशे तु भ्रान्तचित्ते तु कर्णयोः ।
सर्वस्य प्राप्तदण्डस्य दण्ड[4]मेवं निपातयेत् ॥ १५९ ॥

[वाजिनामस्थानताडने दोषबाहुल्यम्]

अस्थानताडितो वाजी बहुदोषानवाप्नुयात् ।

[वाजिनामवाहने अत्यन्तवाहने च दोषः]

अवाहिता विनश्यन्ति सर्वकर्मक्षमा अपि ॥ १६० ॥

कृशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात् ।

---

[1] विशिष्यते—ख. [2] चलाननः—मु. [3] देशेषु—ख. [4] मेकं—ख.

[अश्वधाराः गतयः, तासां सङ्ख्या, नामानि च]

पञ्चधाराः प्रवक्ष्यामि ऋषिभिर्याः प्रकीर्तिताः ॥ १६१ ॥

प्रथमा विभ्रमा धारा द्वितीया तु प्लुता स्मृता।
तृतीया [1]पूर्वकण्ठी च चतुर्थी त्वरिता स्मृता ॥ १६२ ॥

पञ्चमी ताडिता षष्ठी निरालम्बा प्रकीर्तिता।

[विभ्रमाद्यश्वधारास्वरूपाणि, षष्ठधारायाः स्वर्गमात्रावस्थितिश्च]

विभ्रमा गतिरित्युक्ता चतुःपादी प्लुता स्मृता ॥ १६३ ॥

मुखपादसमायुक्ता [2]पूर्वकण्ठी च सा भवेत्।
स्वेच्छया त्वरिता धारा [3]ताडिता चैव पञ्चमी ॥ १६४ ॥

* षष्ठी चैव तु या धारा सा स्वर्गे केवलं भवेत्।

[विभ्रमाख्यगतिधाराचातुर्विध्यं, तत्तन्नामानि च]

मयूरगतिका हंसी तित्तिरीगतिसन्निभा ॥ १६५ ॥

मरालगतिका चापि चतुष्कगतिरेव च।

[मायूरीगतिस्वरूपम्]

गच्छतश्चोन्नमय्य स्वं पुच्छग्रीवं विशेषतः ॥ १६६ ॥

त्वरिता गतिरत्यर्थं मायूरीति निगद्यते।

[तैत्तिरीगतिस्वरूपम्]

शीघ्रं पदानि कुरुते यत्र पुच्छं न कम्पते ॥ १६७ ॥

सा गतिस्तैत्तिरी ज्ञेया हयवाहनकोविदैः।

---

* इदमर्धं मुद्रितकोशे नास्ति।

[1] पूर्णक–ख. [2] पूर्ण–ख. [3] स स्वर्गे केवलं भवेत–मु.

[ हंसगतिस्वरूपम् ]

पार्श्वाभ्यां दोलनं यत्र हंसवद्गच्छतो हरेः ॥ १६८॥

शिरसो धूननं तद्वन्मारालो गतिरीदृशी ।

[ चतुष्कगतिस्वरूपं, तस्य सुखदायकत्वं च ]

पादैश्चतुर्भिः सञ्चारे ललितं यत्र गच्छति ॥ १६९ ॥

चतुष्कगतिराख्याता [1]उत्तमा सुखदायिनी ।

[ दश अश्वदेहीयक्षेत्राणि, तदीयावयवविभागश्च ]

क्षेत्राणि दश वाहानां दशाश्च परिकीर्तिताः ॥ १७० ॥

आललाटात्प्रपानादि प्रथमं समुदाहृतम् ।
क्षेत्रं द्वितीयं भवति ललाटान्मस्तकावधि ॥ १७१ ॥

ग्रीवास्कन्धपरिच्छिन्नं तृतीयं परिपठ्यते ।
चतुर्थं [2]जत्रुवक्षोंऽसका[3]कसाककुदात्मकम् ॥ १७२ ॥

आसनं पञ्चमं ज्ञेयं कटिष्षष्ठसिहोच्यते ।
सप्तमं स्फिक्प्रदेशः [4]स्या[5]त्तुरजान्वष्टमं स्मृतम् ॥ १७३ ॥

[6]जङ्घा च नवमं विद्याद्दशमं रकुर[7]कुट्टकम् ।
इति क्षेत्राणि वाहानां निर्दिष्टानि पृथक् पृथक् ॥ १७४ ॥

[ वडबायां विशेषः ]

खुरादिमुखपर्यन्तं वडबायां विनिर्दिशेत् ।

[ अश्वस्य शुभाशुभक्षेत्रतः तादृशफलपरिज्ञानम् ]

तत्र यल्लक्ष्यते काये शुभाशुभफलान्वितम् ॥ १७५ ॥

[8]ततस्तु लक्षणं विद्धि व्यञ्जयेद्व्यञ्जनेन तत् ।

---

[1] सुखदा चोत्तमोत्तमा–मु. [2] जितव–मु. [3] कस्यक–ख. [4] स्यात्स्थुर–ख.
[5] त्पुरजा–मु. [6] जङ्घाश्च–ख. [7] कुष्टकम्–ख. [8] ततस्तल्लक्षणं–ख.

[अश्वक्षेत्रीयदशाकालमानं, क्षेत्रक्रमेण तद्गणना च]

वर्षाणां त्रितयं चैव दिवसानां द्विसप्ततिः ॥ १७६ ॥
दशेति पठ्यते क्षेत्रे प्रथमे प्रथमा भवेत् ।
द्वितीये च द्वितीया तु ज्ञेयमेवं यथाक्रमम् ॥ १७७ ॥
एवं क्षेत्रसमानायां दशायां लक्षणात्फलम् ।

[अश्वस्य सर्वदेवतामयत्वं, तद्विवरणं च]

सर्वदेवमयो ह्येष वाजिराजः प्रकीर्तितः ॥ १७८ ॥
तस्य ब्रह्मा शिरश्चक्षुर्भास्करो हुतभुग्भ्रुवौ ।
शशी ललाटं च भवेन्नासा प्रोथश्च नैर्ऋतिः ॥ १७९ ॥
जिह्वा सरस्वती शुक्रस्तालु चास्यं बृहस्पतिः ।
हनू च मित्रावरुणौ कण्ठस्तु ऋषयस्तथा ॥ १८० ॥
विधुर्ग्रीवा च गन्धर्वा विद्युतो रोमकेसराः ।
उरस्तु सन्ध्या देवाश्च भुजौ तस्याश्विनावुभौ ॥ १८१ ॥
जानुजङ्घे दिशश्चास्य विदिशः कूर्चमुष्टिकौ ।
धराधरास्तस्य शफा मण्डूक्योऽथ तलाः स्मृताः * ॥ १८२ ॥
नाभिहृत्कोशमांसानि रुद्रो देवास्तथैव च ।
† पृष्ठपार्श्वोदरं कुक्षिर्देवास्तु मरुतस्तथा ॥ १८३ ॥
स्फिग्वालपायुजङ्घाश्च विश्वे देवास्तु सीवनी ।
शिश्नमुष्कभगा [1]यक्षा खुराश्शेषस्तथैव च ॥ १८४ ॥
अग्निस्तस्य तु कायाग्निः कायोष्मा च [2]स चैव तु ।
‡ तस्यात्मा परमेष्ठी च मनस्तस्य जलाधिपः ॥ १८५ ॥
जवो विष्णुर्बलं शक्रः प्रसादश्च धनाधिपः ।

---

* इतः परं मुद्रितकोशे 'स्फिग्वाले'त्यार्धस्य पाठो वर्तते । † इदमर्धं मुद्रितकोशे 'जानुजङ्घे' इत्यर्धानन्तरं पठितम् । ‡ इतः अर्धद्वयं मुद्रितकोशे 'नाभिहृत' इत्यर्धानन्तरमस्ति ।

[1] यक्षास्खुरा—ख. [2] तथैव—ख.

[अश्वलक्षणोपसंहारः, सर्वलक्षणसम्पन्नाश्वस्य सुकृतलभ्यता च]

एवं प्रोक्तं तुरङ्गाणां लक्षणं शास्त्रसम्मतम् ॥ १८६ ॥

सर्वलक्षणसम्पन्ना न लभ्याः सुकृतं विना ।

[वायुवेगतुरङ्गमादिलाभस्य शिवपूजाफलत्वम्]

यद्द्वारे मत्तमातङ्गा वायुवेगास्तुरङ्गमाः ॥ १८७ ॥

पूर्णेन्दुवदना नार्यः शिवपूजाविधेः फलम् ।

[मन्दुरायाः पुरतः अवश्यरक्षणीयाः प्राणिविशेषाः, रक्षाफलं च]

भृङ्गराजो मयूरश्च हंसः कुक्कुट एव च ॥ १८८ ॥

कपिञ्जलश्चकोरश्च सरटो ऋक्ष एव च ।
अजश्च मर्कटश्चैव बिडालो वृषभस्तथा ॥ १८९ ॥

मन्दुरायाः पुरोभागे चैतान् संस्थाप्य रक्षयेत् ।
दृष्टिदोषविघाताय वाजिनां च विवृद्धये ॥ १९० ॥

[गृहश्रीहारकाः प्राणिविशेषाः, तेषां प्रत्येकं सङ्ख्या च]

एको मेषः कपी च द्वौ त्रिगावः पञ्च सैरिभाः ।
षडश्वाः सप्त मातङ्गाः हरेयुर्गृहगाः श्रियम् ॥ १९१ ॥

[स्यन्दनप्रभेदाः, तत्स्वरूपं च]

[1] अथ प्रचक्ष्महे तावल्लक्षणं स्यन्दनस्य [2] तु ।
द्विचक्रः शकटः प्रोक्तः चतुश्चक्रं च पुष्यकम् ॥ १९२ ॥

षट्चक्रो रथ इत्युक्तः तैरष्टाभिर्महारथः ।
अश्वैश्चतुर्भिर्द्वाभ्यां वा संयुक्तो दृढचक्रकः ॥ १९३ ॥

मत्तवारणकैर्दिव्यैः चित्रकैरुपशोभितः ।

---

[1] अतः—ख. [2] च—ख.

नानावर्णपताकाभिर्भ्राजितः सुदृढाक्षकः ॥ १९४ ॥

वरूथेन सुगुप्तश्च तथा सुदृढकूबरः ।
सारानुकर्षप्रासङ्गः सुनेमिर्वरचक्रकः ॥ १९५ ॥

[राजयोग्यस्यन्दनविशेषाः]

उत्तमस्यन्दनो यानं नृपाणामेव निर्मितम् ।
द्वाभ्यां स एव चक्राभ्यां संयुक्तस्सुदृढासनः ॥ १९६ ॥

द्वाभ्यां तुरङ्गमाभ्यां वा पुङ्गवाभ्यामथापि वा ।
विहारार्थं भवेद्यानं पुष्ययानं नृपोचितम् ॥ १९७ ॥

[स्यन्दनयोग्याः पुङ्गवास्तल्लक्षणं च]

बलिनः पुङ्गवास्तत्र योज्या लक्षणशालिनः ।
अथ लक्ष्म प्रवक्ष्यामि पुङ्गवानां समासतः ॥ १९८ ॥

मृदुसंहतताम्रोष्ठास्ताम्रजिह्वास्तनु[1]स्फिजः ।
वैडूर्यमधुवर्णैश्च जलबुद्बुदसन्निभैः ॥ १९९ ॥

रक्तैः स्निग्धैश्च नयनैः तथा रक्तवलित्रिकैः ।
सिंहस्कन्धा महोरस्काः स्पष्टपुष्टककुद्मिनः ॥ २०० ॥

भूमौ कर्षन्ति लाङ्गूलं मूलतः स्थूलवालधिम् ।
पुरस्तादुन्नता नीचाः पृष्ठतः सुसमाहिताः ॥ २०१ ॥

वृत्ताङ्गाः स्थूलगात्राश्च विस्तीर्णजघनाश्च ये ।
स्पष्टताम्रतनुश्लक्ष्णैः शफैरविरलैर्दृढैः ॥ २०२ ॥

समांसैः कायसंस्थानैः समास्फुटितपार्ष्णिभिः ।
वृत्तस्थूलोन्नतग्रीवाः ककुदैश्च समुच्छ्रितैः ॥ २०३ ॥

एते भारसहा ज्ञेया धुरि याने च पूजिताः ।

---

[1] स्फिजाः—ख.

[पूजितातिपूजिता: पुङ्गवा:]

बन्धुरा: श्लक्ष्णशृङ्गाश्च लघुविक्रमगामिन: ॥ २०४ ॥

तनुवाल[1]धयो ये च तनुकर्णतनूरुहा: ।
पूर्णाङ्गास्तनुजङ्घाश्च तनुसास्नास्तनुत्वच: ॥ २०५ ॥

तनुसंहतमध्याश्च युक्तस्कन्धशिरोधरा: ।
सिंहाश्वगर्दभोष्ट्राणां शशसूकरयोस्तथा ॥ २०६ ॥

सक्थिनी सदृशे येषां अनड्वाहस्तु तेऽर्चिता: ।
आवर्तैर्दक्षिणावर्तै: युक्ता दक्षिणतश्च ये ॥ २०७ ॥

वामावर्तैर्वामतश्च ये युक्तास्तेऽतिपूजिता: ।

[वित्तादिविवर्धका अनड्वाह:]

शक्तिध्वजपताकाभा येषां [2]राजिर्विराजते ॥ २०८ ॥

अनड्वाहस्तु ते धन्या वित्तसिद्धिजयावहा: ।

[भारवहने दु:खरहिता: पुङ्गवा:]

रक्तोष्ठशृङ्गवृषणा ससुद्रै रक्तसन्निभै: ॥ २०९ ॥

पद्मोत्पलकदम्बाभा लाक्षारसनिभाश्च ये ।
वाजिभिर्जवनैस्सार्धं धावते तनुवालधि: ॥ २१० ॥

[3]मुखैर्मार्जारसदृशो घ्राणदेशे वली तत: ।
श्वेतदक्षिणपादश्च हयतुल्यस्स गोपति: ॥ २११ ॥

यो रक्त: श्वेतवदन: कृष्णाङ्गो मृगसक्थिमान् ।
रक्तजालावृताक्षो वा न भारे व्यवसीदति ॥ २१२ ॥

---

[1] धरा ये—ख. [2] राजीतिराजते—ग. [3] मुखे मा—ख.

[गोपतित्वेन पुरस्कार्योऽनड्वान्]

कृष्णाङ्गो यो ललाटेन रक्तेन सहितो भवेत्।
गोपतित्वे पुरस्कार्यः स धन्यो यूथवर्धनः॥ २१३॥

[भारयानयोः पूजितोऽनड्वान्]

प्रलम्बवृषणोऽत्यर्थं संक्षिप्तोदरवङ्क्षणः।
विस्तीर्णपृष्ठजघनो भारे याने च पूजितः॥ २१४॥

[धान्यादिविवर्धनः पुङ्गवः]

श्यामैकश्रवणश्चैव सावर्तत्रिकमध्यमः।
सुश्वेतसर्वगात्रश्च स धान्यधनवर्धनः॥ २१५॥

[गोमध्यवासयोग्यपुङ्गवलक्षणम्]

स्निग्धः पिङ्गेक्षणः श्वेतः ताम्रशृङ्गशफाननः।
गौरश्वेतैश्चित्रिततनुः श्वेतरक्तैश्च मण्डलैः॥ २१६॥

गोरत्नं तं गवां मध्ये वासयेच्छुभवर्धनम्।

[स्वामिश्रीविवर्धनः पुङ्गवः]

कल्माषो रक्तशृङ्गाक्षश्चारुभूस्पर्शवालधिः॥२१७॥

ककुद्मी स्वामिनो दीर्घां श्रियमावहतेऽधिकाम्।

[अचिरात् श्रीसम्पादको वृषभः]

उच्छ्रितश्वेतलाङ्गूलः स्निग्धवर्णो मनोहरः॥ २१८॥

शुक्लताम्रखुरोऽक्षुद्र आवहत्यचिराच्छ्रियम्।

[यूथवर्धकवृषचिह्नानि]

महाककुन्नीलवर्णो बृहत्स्कन्धकटिर्वृषः॥ २१९॥

उदग्रो लम्बमध्यश्च यूथं वर्धयते चिरम्।

[धनवर्धनवृषभलक्षणम्]

कृष्णपार्श्वः श्वेतपृष्ठः कृष्णाक्षसितवालधिः ॥ २२० ॥

तनुकम्बलकर्णौ यः स धन्यो धनवर्धनः ।

[देवनृपरथयोग्यपुङ्गवचिह्नानि]

श्वेतो रक्ताक्षवदनः प्रजङ्घो दीर्घवालधिः ॥ २२१ ॥

देवतानां नृपाणां वा रथे योग्यः स गोपतिः ।

[सर्वकर्मयोज्यः पुङ्गवः]

रक्तसारं रक्तनेत्रं शफै रजतसन्निभैः ॥ २२२ ॥

मन्दोदरं क्षमायुक्तं योजयेत्सर्वकर्मसु ।

[देववत्पूजार्हो गोपतिः, तदपूजने दोषश्च]

यस्य नेत्रोपमं शुक्लं लक्ष्यं स्यात्कृष्णतारकम् ॥ २२३ ॥

ललाटमध्ये सुव्यक्तं स पूज्यो देववन्नरैः ।
गन्धमाल्यनमस्कारैः सततं प्रतिपूजितः ॥ २२४ ॥

दद्यात्स वृषभः कामान् हन्यात्कुलमपूजितः ।

[गुणावहपुङ्गवलक्षणम्]

मनोहराकृतिः श्रीमान् वृषः सर्वाङ्गसुन्दरः ॥ २२५ ॥

यो यो भवेत्स्निग्धवर्णः स विज्ञेयो गुणावहः ।

[धेनूनां शुभाशुभलक्षणानि]

लक्षणं तु परिज्ञेयं धेनूनामेवमेव हि ॥ २२६ ॥

आस्राविलरूक्षाक्ष्यो मूषकनयनाश्च न शुभदा गावः ।
प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाश्च ॥ २२७ ॥

दशसप्तचतुर्दन्ताः प्रलम्बमुण्डानना विनतपृष्ठाः ।
ह्रस्वस्थूलग्रीवा यवमध्यदारितखुराश्च ॥ २२८ ॥

श्यामातिदीर्घजिह्वा गुल्फैरतितनुभिर्महद्भिर्वा ।
अतिककुदाः कृशदेहा नेष्टा [1] हीनाधिकाङ्गाश्च ॥ २२९ ॥

[तासां वर्णाः, तन्मिश्रणाद्गवां सर्वशोभत्वं च]

कृष्णश्च धवलो धूम्रः कपिलो लोहितस्तथा ।
पञ्चवर्णास्समाख्याता गवामङ्गेषु लक्षिताः ॥ २३० ॥

एतेषु द्वित्रिवर्णानां चतुर्णामपि मिश्रणात् ।
बहुधा चित्रवर्णाः स्युः गावस्तास्सर्वशोभनाः ॥ २३१ ॥

[भाग्यवर्धिन्यो गावः]

सूक्ष्मं मुखं सिराहीनं ह्रस्वशृङ्गसमन्वितम् ।
उरो विशालमुदरं प्रलम्बं कन्धरा तनुः ॥ २३२ ॥

स्निग्धमूधः स्तनाः स्थूला हिङ्गुदीफलसन्निभाः ।
कर्कशाश्च समा यस्याः सा सौभाग्यविवर्धिनी ॥ २३३ ॥

[कपिलगोजातिभेदाः, तत्सङ्ख्या च]

प्रथमा गौरशबला द्वितीया गौरपिङ्गला ।
तृतीया रक्तकपिला चतुर्थी नीलपाटला ॥ २३४ ॥

पञ्चमी नीलपिङ्गाक्षी षष्ठी वै रक्तपिङ्गला ।
सप्तमी बहुपिङ्गाक्षी चाष्टमी नीलरोहिणी ॥ २३५ ॥

नवमी श्वेतपिङ्गाक्षी दशमी श्वेतपिङ्गला ।
ईदृशा वै [2]पयस्विन्यः कपिलाः [3] परिकीर्तिताः ॥ २३६ ॥

---

[1] हीनाधिकाङ्गयश्च—म· मु. [2] ह्यनड्वहः—ग. [3] एते प्रकीर्तिताः—ग.

[गवां शुभाशुभफलचेष्टाविशेषाः]

गावो दीनाः पार्थिवस्याशिवाय
पादैर्भूमिं कुट्टयन्त्यश्च रोगम् ।
मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यो
भीतिं भीतास्तस्कराणां रुवन्त्यः ॥ २३७ ॥

अकारणं क्रोशति वेदनार्तो
भयाय रात्रौ वृषभश्शिवाय ।
भृशं निरुद्धो यदि मक्षिकाभिः
[1]तदा सुवृष्टिस्सरमात्मजैर्वा ॥ २३८ ॥

आगच्छन्त्यो हुंहुरावेण गेहं
जायन्ते ता गोष्ठवृध्यै गवां याः ।
आर्द्राङ्ग्यो वा हृष्टरोम्णा प्रहृष्टाः
धन्या गावः स्युर्महिष्योऽपि चैवम् ॥ २३९ ॥

[वेसरवाजिनां वारिस्फोटचिकित्सा]

चूर्णीकृते[2]षु पुंखाया लवणान्वितपिण्डकान् ।
वारिस्फोटा विनश्यन्ति [3]द्रुतं वेसरवाजिनाम् ॥ २४० ॥

[वाजिनीप्रस्रवचिकित्सा]

कुष्ठसैन्धवसंयुक्तमधुलिप्ताङ्गवालका ।
[4]द्वेष्येऽपि कुरुते प्रीतिं वाजिनी प्रस्रवान्विता ॥ २४१ ॥

[सर्पदष्टचिकित्सा]

तण्डुलीयकमूलानि तथा बिल्वकपित्थयोः ।
गोघृतेन समालोड्य सर्पदष्टं तु पाययेत् ॥ २४२ ॥

---

[1] तदाश्रुवृष्टि–ख. [2] तु–ख. [3] धृतं–ग. [4] प्रीतिं द्वेष्येऽपि कुरुते–ख.

चन्दनागरुकुष्ठैश्च लोध्रभार्ङ्गि[1]फणीज्यकैः ।
दंशलेपो विषं हन्ति जङ्गमं स्थावरं पुनः ॥ २४३ ॥

[स्थावरविषचिकित्सा]

[2]मूलं हि शालिपर्ण्याः शनिवासरमन्त्रितं रवेर्दिवसे ।
नीतं विधिना बद्धं कण्ठे गण्डापचिं हन्ति ॥ २४४ ॥

चर्वित्वा लवणामूलं प्रेरितं मुखवायुना ।
योनिमध्यस्थितं गव्यं ग्राहयेन्महिषीगवाम् ॥ २४५ ॥

[गवां जरानिराकरणोपायः]

शाल्मलीतरुनिर्यासदर्भखण्डस्य बन्धनात् ।
शृङ्गस्याग्रे त्यजत्याशु जरामुद्वेगकारिणीम् ॥ २४६ ॥

[क्षीरप्रस्रवणोपायः]

मधुजीरकगोजिह्वातक्रलेपप्रभावतः ।
स्निह्यति त्वरितं वत्से गौः क्षीरं च प्रयच्छति ॥ २४७ ॥

[मृतवत्साया गोः क्षीरप्रस्नवनोपायः]

विलिप्तं मधुना चित्रं पाषाणं पुरतः स्थितम् ।
लिहन्ती मृतवत्सापि प्रस्नौति सुरभी द्रुतम् ॥ २४८ ॥

[गोरक्षाविधानम्]

ब्रह्मदण्डी शिफा निम्बा बद्धा चक्राङ्कमूलिका ।
[3]मन्थस्तम्भे सदा रक्ष्या रक्षामस्य करोति सा । २४९ ॥

---

[1] फणज्य—ख. [2] मूलं हि शालिपर्ण्याश्च निवारणनिमन्त्रितम् । रवेर्दिने च विधिना बद्धं कण्ठे गदापहम् ॥—मु. [3] मन्द—ख

[गवामतिसारचिकित्सा]

अङ्गारैश्शाकवृक्षस्य चूर्णितैस्सघृतैस्त्र्यहम् ।
दत्तैर्नश्यत्यतीसारः त्र्यहं पानीयवारणात् ॥ २५० ॥

[व्रणचिकित्सातः क्रिमिनाशनम्]

वरुणस्य फलाद्धस्तपीडिताद्गलितो रसः ।
स व्रणे पूरितोऽशेषं क्रिमिजालं विनाशयेत् ॥ २५१ ॥

[गोमुखरोगचिकित्सा]

प्रियङ्गुवृक्षपत्राणां लेपो गोमुखरोगहृत् ।

[गोमहिष्यादेर्ज्वरे गोष्ठे धूपविधानक्रमः]

लाक्षा कुष्ठं नखं मांसी गोमयं तगरं घृतम् ॥ २५२ ॥

एतैस्तु गोमहिष्यादेर्गोष्ठे धूपो ज्वरापहः ।

[वृषभलक्षणोक्त्युपसंहारः]

एवं वृषस्य लक्ष्माणि रथार्हस्य विशेषतः ॥ २५३ ॥

प्रोक्तानि सङ्ग्रहेणैव शास्त्रेषु विदितानि च ।

[शिवनृपस्य भद्रप्पनायक नागाश्वादिकलाकौशलदर्शनतः सुखेनावस्थितिः]

एवं पूर्वोक्तया रीत्या शुभलक्षणसंयुताम् ॥ २५४ ॥

कन्यां प्राप्य च नागाश्वरथयानेषु कौशलम् ।
दर्शयन्तं सुतं वीरं ततो भद्रप्प[1]नायकम् ॥ २५५ ॥

विलोकयन् शिवनृपः सान्द्रानन्दपरोऽभवत् ।

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले चतुःपञ्चाशद्देशजाश्वलक्षणरथगोलक्षणतच्चिकित्सावर्णनं नाम त्रयोदशस्तरङ्गः

---

[1] नायकः—ख.

## सप्तमकल्लोले चतुर्दशस्तरङ्गः

### शिवभूपचरित्रकोटाचक्रवर्णनम्

[सोमशेखरस्य शिवभूपचरितप्रश्नः, महीपतेस्तदुत्तरोक्तिप्रतिज्ञा च]

चरितं परितस्सर्वैः स्तूयमानं गुरोऽधुना ।
शिवभूपस्य विमलमन्यच्छ्रोतुं ममेप्सितम् ॥ १ ॥

तद्ब्रूहि देहि श्रवसोस्तच्चरित्रामृतद्रवम् ।
पुत्र ! ते तद्ब्रुवे प्राज्ञ ! राज्ञां यच्चरितं हितम् ॥ २ ॥

अनन्तरं तु चरितं शिवभूपस्य वर्ण्यते ।

[शिवभूपस्य कनीयसा सह राज्यरक्षणम्]

वेङ्कटाख्येन सहितः शिवभूपः कनीयसा ॥ ३ ॥
अभूदनन्यसामान्यविक्रमौदार्यसंयुतः ।
यथारुणेन घर्मांशुः भुवनानि प्रकाशयेत् ॥ ४ ॥
तथा कनीयसा साकमरक्षत्क्षितिमण्डलम् ।

[शिवभूपस्य ज्यायसा सह नीतिचिन्ता]

अवन्नेवं महीं जातु भ्रात्रा साकमचिन्तयत् ॥ ५ ॥

दुष्टानां निग्रहोऽवश्यं करणीयो महीभृता ।
इयं नीतिस्सर्वसिद्धा साम्प्रतं साप्युपस्थिता ॥ ६ ॥

वेलापुरान्तः प्राकारमध्यवर्ती सुदुर्मदः ।
सार्वभौमप्रतीपत्वमुपेत्य विचरत्यसौ ॥ ७ ॥

अकालमपि तत्स्थानं निगृह्णाम्यद्य तद्रिपुम् ।
सार्वभौमाय तत्स्थानं स्वीयं प्रत्यर्पयाम्यहम् ॥ ८ ॥

इति वाचं ज्यायसस्तु श्रुत्वा सोऽपीत्थमब्रवीत् ।
भ्रातः ! प्रभ्रष्टराज्याय स्थानप्रत्यर्पणं परम् ॥ ९ ॥

यशस्करं नृपाणां तु किमन्यत्त्वीदृशं भवेत् ।
तस्मादवश्यकर्तव्यमिदमित्यमुनेरितः ॥ १० ॥

निधाय राज्यरक्षायै कनीयांसं विचक्षणः ।

[शिवभूपस्य वेलापुरीविजययात्रा]

तदाक्रमणमाकाङ्क्षन् ययौ वेलापुरीं प्रति ॥ ११ ॥

ततो वेलापुरीं गत्वा चतुरङ्गबलान्वितः ।
प्राकाराच्च बहिस्तस्माच्छिबिरं पर्यकल्पयत ॥ १२ ॥

[कोटाचक्रतो बलाबलविवेकः, प्राकाररोधनं च]

कोटाचक्रविधानज्ञैः विज्ञाय च बलाबलम् ।
समन्ततश्च प्राकारं रुरोध सहसा बलैः ॥ १३ ॥

[कोटाचक्रपरिचयः]

दुर्गस्थो दुर्गमश्शत्रुरसाध्यो येन सिध्यति ।
कोटाचक्राभिधं शास्त्रं तद्ब्रवीमि सुधीः! शृणु ॥ १४ ॥

प्रथमा मृण्मयी कोटा द्वितीया तु जलात्मिका ।
तृतीया ग्रामकोटा स्याच्चतुर्थी गह्वराभिधा ॥ १५ ॥

पञ्चमी गिरिकोटा स्यात् [1]षष्ठी कोटा भटावरा ।
सप्तमी वक्रभूमिस्था विषमाख्या तथाष्टमी ॥ १६ ॥

मृण्मये साधयेत्खण्डीं जलस्थे [2]जलमोक्षणम् ।
ग्रामदुर्गेऽग्निदाहं च प्रवेशं गह्वरस्य च ॥ १७ ॥

[3]पर्वने स्थानभेदं च भूबलं [4]च भटावरे ।
चक्राख्ये कवियोगं च विषमे स्थायियायिनाम् ॥ १८ ॥

---

[1] षष्ठं कोटं च डामरम्—नर. वि. [2] बन्धमोक्षणम्—नर. वि. [3] पर्वत-स्थान—मु. [4] भूपडामरे—नर. वि.

[1] अकचाद्यश्चाष्टवर्गा इन्द्रादिदिशि संस्थिताः।
यस्य वर्गस्य [2] यो भक्ष्यः स वर्गस्तस्य भङ्गदः ॥ १९ ॥

अस्सुपर्णः को बिडालश्चः सिंहष्ट[3] श्शुनी तथा।
तस्सर्पश्च प आखुश्च [4] यो गजश्शः शशः स्मृतः ॥ २० ॥

दुर्गवर्गस्य [5] यो भक्ष्यो वर्ज्यस्तन्नामको नरः।
[6] तद्वर्गे ते रणे त्याज्या न कर्तव्या गडाधिपाः ॥ २१ ॥

स्ववर्गात्पञ्चमस्थाने [7] खण्डीभङ्गः प्रजायते।
अवर्गाद्यष्टकं ज्ञेयं पूर्वाद्यष्ट[8] दिशां क्रमात् ॥ २२ ॥

[9] कोटाचक्रं लिखेदादौ चतुरश्रं त्रिनाडिकम्।
कृत्तिकादीनि धिष्ण्यानि साभिजित्कानि विन्यसेत् ॥ २३ ॥

[10] बहिर्दुर्गे च मध्ये च [11] मध्यदुर्गे [12] बहिर्बहिः।
प्रवेशो निर्गमस्तत्र ज्ञातव्यः स्वरवेदिभिः ॥ २४ ॥

बहिर्द्वादशभान्यत्र प्राकारे तारकाष्टकम्।
दुर्गमध्ये तथा चाष्टौ मध्ये स्तम्भचतुष्टयम् ॥ २५ ॥

*कृत्तिकादिरयं न्यासः सुबोधार्थं प्रदर्शितः।
दुर्गभाद्गणना चात्र ग्रहैर्वाच्यं ततः फलम् ॥ २६ ॥

दुर्गनामस्थितो वर्णो यद्वर्गोदीरितः स्फुटः।
तदीशादिलिखेच्चक्रं क्रमात्स्वरविचक्षणः ॥ २७ ॥

---

* अत्र नरपतिविजयचर्यायां— 'कृत्तिका पुष्यसार्पे च मघास्वातीविशाखका' इत्यारभ्य 'कृत्तिकाद्यं मघाद्यं च मैत्राद्यं वासवादिकम्। त्रीणि त्रीणि प्रवेशे च द्वादशान्यानि निर्गमे' ॥ १४ ।'—इति कृत्तिकादिन्यासोऽवगन्तव्यः।

[1] अकजा—मु. [2] ये भक्ष्याः—ग. ख. [3] श्शुनीसुतः—नर. वि. [4] यो मृगःश्च अजात्मजः—नर. वि. [5] ये भक्ष्या वर्गास्तन्नात्मजा नराः—नर. वि. [6] तद्दुर्गे—नर. वि. [7] खण्डभङ्गः—मु. [8] दिशि—नर. वि. [9] कोटचक्रं—नर. वि. [10] बहिः कोटे—नर. वि. [11] मध्ये दुर्गे—मु. [12] बहिः पुनः—नर. वि.

[चतुरश्रादिकोटाचक्राणि]

चतुरश्रं च वृत्तं च त्रिकोणं वृत्तदीर्घकम् ।
अर्धचन्द्रं [1]गोस्तनं च सुदीर्घं चतुरश्रकम् ॥ २८ ॥

[2]धनुराकृतितो न्यासो भूमिभागक्रमेण तु ।
प्रवेशनिर्गमस्तम्भा[3]स्तथा वृत्तादिसप्तके * ॥ २९ ॥

[तत्स्थितखेचरानुरोधेन फलावगतिः]

तत्रस्थैः खेचरैस्सर्वैः फलं वाच्यं यथोदितम् ।
बाह्यमे मध्यमे चैव यत्रस्थाः क्रूरखेचराः ॥ ३० ॥

तत्र [4]स्थाने कृतो यत्नो हन्ति दुर्गं ससैन्यकम् ।

[सदा सौम्याः ग्रहाः]

बुधशुक्रेन्दुजीवाश्च सदा सौम्यग्रहा मताः ॥ ३१ ॥

[कोटाचक्रे त्रिविधानि ग्रहभ्रमणानि, ग्रहाणामुच्चादिभिः वक्ष]

ग्रहाणां त्रिविधश्चारो वक्रो दीर्घस्तथा समः ।
उच्चनीचसमास्ते च त्रिधा चक्रे भ्रमन्ति च ॥ ३२ ॥

[ऊर्ध्वादयश्चतुर्विधा ग्रहदृष्टयः, तदुपपादनं च]

ऊर्ध्वं चाधः समं तिर्यक् [5]दृष्टिरेवं चतुर्विधा ।
उदिताश्चार्कनिर्मुक्ताश्शीघ्राश्चार्के द्वितीयके† ॥ ३३ ॥

समास्तृतीयगे ज्ञेया मन्दे भानौ चतुर्थगे ।

---

* अत्र "दुर्गभित्तिविभागेन दातव्यं धिष्ण्यमण्डलाम्" नर. वि. इत्यधिकः पाठो वर्तते । † इतः परं नरपतिविजयचर्यायां—'स्वकं मित्रं समः शत्रुः स्थानभेदश्चतुर्विधः ॥ ३३ ॥ इज्यो भौमो भृगुर्यत्र बुधः पूर्वादिदिक्स्थितः । कुर्याद्भङ्गं वाथ भङ्गा क्रूरश्चन्द्रसमन्वितः ॥ ३४ ॥ सूर्यमुक्ता उदीयन्ते शीघ्रगाश्च द्वितीयगे ।' इत्यधिकः पाठो वर्तते ।

[1] तथा ज्ञेयं गोस्तनं धनुराकृति—नर. वि. [2] चतुरश्रे तथा न्यासो—नर. वि. [3] स्तना—मु. [4] स्थानकृतो—मु. [5] दृष्टिभेदश्चतुर्विधः—नर. वि.

[स्थानभेदेनार्कादीनां वक्रादिगतिनिरूपणम्]

वक्रः पञ्चमषष्ठेऽर्कोऽतिवक्रोऽष्टसप्तमे ॥ ३४ ॥

नवमे दशमे भानौ जायते कुटिला गतिः ।
शीघ्रगाश्च भवन्त्येते द्वादशैकादशे तथा ॥ ३५ ॥

[सार्वदिकवक्रादिगतयो ग्रहाः]

राहुकेतू सदा वक्रौ रवीन्दू शीघ्रगौ सदा ।
शीघ्रातिचारगत्या च समश्च सममन्दयोः ॥ ३६ ॥

वक्रातिवक्र[1]कुटिला वक्रगत्या ग्रहा मताः ।

[वक्रगतौ क्रूरादिग्रहाणां सम्भवन्तो विशेषाः]

क्रूरोऽतिक्रूरतां याति सौम्यो याति सुसौम्यताम् ॥ ३७ ॥

वक्रचारे समुत्पन्ने शीघ्रेऽप्येवं [2]विपर्ययात् ।

[स्थानभेदेनादित्यादीनामुच्चनीचभावोक्तिः, दृष्टेश्चातुर्विध्याभिधानं च]

मेषो वृषो मृगः कन्या [3]कर्किमूलतुलास्तथा ॥ ३८ ॥

आदित्यादिग्रहेषूच्चं नीचं यत्तस्य सप्तमम् ।
उच्चा नीचा समा तिर्यगिति दृष्टिश्चतुर्विधा ॥ ३९ ॥

[चक्रे उच्चादिभावेन ग्रहाणामवस्थानम्]

उच्चस्थं मध्यमं नीचं चक्रे [4]यत्र व्यवस्थितम् ।

[ग्रहाणामूर्ध्वादिदृष्टिव्यवस्था]

ऊर्ध्वदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ ॥ ४० ॥
समदृष्टी च जीवेन्दू शनिराहू [5]अधोमुखौ ।

---

[1] कौटिल्या:–ख.ग. [2] विपर्यय:–नर.वि. [3] कर्कमीनतुलान्वुक्–नर.वि.
[4] चात्र–नर. वि. [5] अधोदृशौ–नर. वि.

[ग्रहाणां शत्रुमित्रभावव्यवस्था]

सुहृदोऽर्केन्दुभौमेज्या एवं शुक्रज्ञभानुजाः ॥ ४१ ॥
अन्योन्यं वैरिणस्त्वेते राहोस्सर्वे च शत्रवः ।

[ग्रहाणां क्षेत्रभेदेन परिमाणफलव्यवस्था]

स्वक्षेत्रस्थे फलं पूर्णं पादोनं [1]मित्रगेहगे ॥ ४२ ॥
अर्धं समगृहे ज्ञेयं पादं शत्रुगृहे स्थिते ।

[क्रूरादिग्रहाणां चक्रे गर्भादिसमावेशतो जायमानानि फलानि]

(*क्रूरा गर्भे पुरं घ्नन्ति प्राकारे खण्डकारकाः ॥ ४३ ॥

बहिस्थ[2]वेष्टसैन्यस्य मृत्युदा नात्र संशयः ।)
क्रूरा गर्भे शुभा बाह्ये गृह्यते निश्चितं पुरम् ॥ ४४ ॥

सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते ।
[3]सौम्यग्रहाश्च प्राकारे मध्ये क्रूरचतुष्टयम् ॥ ४५ ॥

भेदभङ्गो भवेत्तत्र विना युद्धेन गृह्यते ।
प्राकारे संस्थिताः क्रूरा मध्ये सौम्यग्रहा यदि ॥ ४६ ॥

दुर्गभङ्गे समुत्पन्ने भङ्गमायाति वेष्टकः ।
मध्यनाडीस्थिताः सौम्याः क्रूरा बहिरवस्थिताः ॥ ४७ ॥

सैन्यावर्तो बहिश्शत्रोर्विना युद्धेन जायते ।
प्राकारे पुरमध्ये च यदा क्रूरा व्यवस्थिताः ॥ ४८ ॥

सौम्या बाह्ये तदा दुर्गमयत्नेनापि सिध्यति ।
प्राकारे बाह्यगाः क्रूराः सौम्या मध्यगता यदि ॥ ४९ ॥

---

* धनुरङ्कितोऽयं भागो मुद्रितकोशे नोपलभ्यते ।

[1] मित्रभे ग्रहे—नर. वि. [2] वेष्टके सैन्यमृत्युदा—नर. वि. [3] क्रूरं चतुष्टयं मध्ये प्राकारे सौम्यखेचराः—नर. वि.

[1] युद्धे प्राकारखण्डश्च पुनर्भङ्गो न विद्यते ।
सौम्या बाह्ये तथा दुर्गे मध्ये क्रूरग्रहाः स्थिताः ॥ ५० ॥

स्वयं दुर्गं [2] प्रापयन्ति वेष्टकस्य [3] गडाधिपाः ।
बाह्यान्तरगताः क्रूराः प्राकारे शोभना ग्रहाः ॥ ५१ ॥

रिपुद्वयं क्षयं याति विना युद्धेन निश्चितम् ।
प्राकारस्था ग्रहाः क्रूरा बहिर्मध्ये शुभाः स्थिताः ॥ ५२ ॥

[4]समं युद्धं भवेत्तत्र [5] खण्डीपातो दिने दिने ।
सौम्याः क्रूरास्तथा [6] चाष्टौ प्राकारे मध्यबाह्यगाः ॥ ५३ ॥

एकस्था यत्र कुर्वन्ति सङ्ग्रामं तत्र दारुणम् ।
अशुभा वा शुभा वापि [7] समसङ्ख्या भवन्ति चेत् ॥ ५४ ॥

मध्ये बहिर्बहिर्मध्ये सदा सन्धिस्तु[8]निश्चला ।
सौम्यग्रहा यदा बाह्ये मध्यमा यान्ति शून्यताम् ॥ ५५ ॥

बाह्यदुर्गे विना युद्धं सैन्यावृत्तिः प्रजायते ।
पापास्सौम्या यदा सर्वे मध्यस्थाने स्थितास्सदा ॥ ५६ ॥

सैन्यावर्तो भवेद्दुर्गे तस्माद्यत्नेन रक्षयेत् ।
[9] आग्नेयं पूर्वतो ज्ञेयं नैर्ऋत्यं दक्षिणे मतम् ॥ ५७ ॥

वायव्यं पश्चिमे ज्ञेयमीशान्यं सौम्यगे मतम् ।
समसंख्याश्शुभाः क्रूराः बहिर्मध्ये [10] व्यवस्थिताः ॥ ५८ ॥

तदा सन्धि विजानीयात् सैन्ययोरुभयोरपि ।
क्रूरैर्भङ्गो [11] जयस्सौम्यै[12]र्मिश्रैर्मिश्रफलं मतम् ॥ ५९ ॥

---

[1] युद्धं—नर. वि. [2] प्रयच्छन्ति वेष्टकाय—नर. वि. [3] पुराधिपाः—मु.
[4] समयु—मु. [5] खण्डापा—मु. [6] चाष्टप्राकारे—मु. [7] समसङ्ख्यां भजन्ति—मु.
[8] निश्चिता—मु. [9] आग्नेये—मु. [10] यदा स्थिताः—नर. वि. [11] भवेत्सौ—मु.
[12] श्शुभं मिश्रैश्च मिश्रितम्—मु.

विचार्य कुरुते युद्धं कोटाचक्रे स्वरोदये ।
प्रवेशधिष्ण्यगे चन्द्रे जीवे पक्षर्क्षसंस्थिते ॥ ६० ॥

*रात्रौ [1] कलिरणं दुर्गे कर्तव्यं बाह्यसैनिकैः ।
निगमर्क्षस्थिते चन्द्रे दुर्गाभ्यन्तरगैर्नृपैः ॥ ६१ ॥

कर्तव्यं कलियुद्धं च रात्रौ सुप्ते बहिर्जने ।
प्रवेश[2]निर्गमावुक्तौ सैन्ययोरुभयोरपि ॥ ६२ ॥

[3]रवौ कोटे † [4]तदा युद्धे विपरीते पराजयः ।
क्रूरो वक्री प्रवेशर्क्षे पुरमध्ये स्थितो यदा ॥ ६३ ॥

‡तदा कोटविनाशः स्यात्कोटः स्याद्बाह्यभूपतेः ।
प्रवेशे बाह्यगे क्रूरे वक्रे सैन्यस्य [5]विग्रहः ॥ ६४ ॥

दुर्भिक्षं मृत्युभङ्गश्च बहिस्सैन्यस्य जायते ।
निर्गमस्थे बहिस्थे च क्रूरो वक्रं करोति चेत् ॥ ६५ ॥

प्राकारस्य भवेद्भङ्गः प्राकारस्थे पुरस्य च ।
पुरभे निर्गभे [6]वक्रे भवन्ति क्रूरखेचराः ॥ ६६ ॥

दुर्गं मुक्त्वा तदा काले दुर्गस्थः प्रपलायते ।
[7]तदा (यथा) क्रूराः [7]तदा (तथा) सौम्याः फलं ग्राह्यं
विपर्य(यात्)यः ॥ ६७ ॥

मिश्रैर्मिश्रं विजानीयात्कोटाचक्रे न संशयः ।
दुर्गसैन्यं §भवेदुच्चं प्राकारे [8]मध्य[9]भागगम् ॥ ६८ ॥

---

* अत्र "निशीथे कवियुद्धं तु" इति नर. वि. पाठः । † अत्र जय इति नर. वि. पाठः समीचीनः । ‡ अत्र—तदा कोटविनाशाय कोटस्थो बाह्यभूपतेः । इति नर. वि. पाठः । § सदैवोच्चैः—नर. वि. पाठः ।

[1] कविरणं—ग. [2] निर्गमे युक्ते—मु. [3] कवौ—मु. नर. वि. [4] तथा—मु., जयो—नर. वि. [5] निग्रहः—मु. [6] वक्रे कथञ्चित्—नर. वि. [7] तथा—मु. [8] मध्यगाङ्गगम्—मु. [9] बाह्यकम्—नर. वि.

नीचस्थं [1]वेष्टकं सैन्यं ज्ञातव्यं [2]स्वरवेदिभिः ।
कोटं कोटाधिपं नीचे निघ्नन्तौ भौमभास्करौ ॥ ६९ ॥

समस्थौ तु पुरं सर्वमुच्चस्थौ [3]निष्फलौ च तौ ।
प्राकारे वेष्टकान् घ्नन्तावुच्चस्थौ राहुसूर्यजौ ॥ ७० ॥

प्राकारस्थौ बहिस्सैन्यं नीचस्थौ तौ च निष्फलौ ।
* समदृष्टिर्गुरुश्चन्द्रः पश्यतस्सर्वतः सदा ॥ ७१ ॥

तिर्यक्स्थौ बुधशुक्रौ च फलदौ नात्र संशयः ।
ऊर्ध्वदृष्टिर्ग्र[4]हः कुर्याद्यङ्कलीयन्त्र[5]पातनम् ॥ ७२ ॥

समे च साधयेत्खण्डीरन्ध्रपातमधोमुखे ।
दुर्गमध्यगते सूर्ये जलशोषः प्रजायते ॥ ७३ ॥

चन्द्रे भङ्गः कुजे दाहो बुधे [6]बुद्धिविनाशनम् ।
वाक्पतौ दुर्गमध्यस्थे सुभिक्षं प्रचुरं जलम् ॥ ७४ ॥

† चलचित्तकरः शुक्रो मृत्युभङ्गकरः शनिः ।
राहौ मध्यगते दुर्गे भेदभङ्गो महद्भयम् ॥ ७५ ॥

केतौ मध्यगते [7]तद्वत् विषदानं [8]गडाधिपे ।
मध्ये फलं तथेत्युक्तमेवं बाह्यगते ग्रहे ॥ ७६ ॥

उग्रग्रहसमायोगादत्यन्तं प्राणसंशयः ।

[अकारादिस्वरविन्यासेन दुर्गसिद्धिपरिज्ञानं, युद्धारम्भश्च]

अकारादिस्वराः पञ्च पूर्वाशादिचतुष्टये ॥ ७७ ॥

---

* अत्र—समदृष्ट्या गु–नर. वि. पाठः । † अत्र ' चलचित्तनराः शुक्रे मृत्युरोगौ शनैश्चरे ' इति नर. वि. पाठः ।

[1] वेष्टनं–मु. [2] सर्ववेदिभिः–मु. [3] निघ्नन्तस्तु–मु. [4] हे–नर. वि. [5] साधनम्–नर. वि. [6] बुद्धिबला नराः–नर. वि. [7] तत्र–नर. वि. [8] गडाधिपे–नर. वि.

मध्यान्तात्सव्यमालिख्य चान्तस्थाः खण्डिकारकाः ।
[1]दुर्गभांशः स्वरो [2]यस्य [3]बाले वास्तमितेऽपि वा ॥ ७८ ॥

तद्दिने प्रारभेद्युद्धं दुर्गं सिध्यति नान्यथा ।

[कोटाचक्रे गणनया संवत्सरादिकालपरिचयः]

दुर्गांशकं समारभ्य यावद्भौमांशकावधि ॥ ७९ ॥

गणयित्वा तु तत् स्थाप्यं भौमाद्दुर्गांशकावधि ।
दुर्गांशकाच्च तद्रन्ध्रनाशस्थांशान्तकं समम् ॥ ८० ॥

एकीकृत्यैव गणयेन्नागमानेन वर्धयेत् ।
द्वादशेन हृताच्छिष्टं [4]वत्सरं तं विदुर्बुधाः ॥ ८१ ॥

तच्छेषं नागमानेन वर्धितं द्वादशैर्हरेत् ।
मासं तत्र विजानीयात्तच्छेषं दिवसं क्रमात् ॥ ८२ ॥

रन्ध्रां[5]शे पुष्यगे मासान् सार्धमासे तु स्वर्क्षगे ।
शत्रुराशौ त्रिगुणितं नीचे संवत्सरं भवेत् ॥ ८३ ॥

पूर्वोक्तवर्षमासाः स्युः कोटाचक्रस्वरोदये ।

[दुर्गेश्वरनक्षत्रवृक्षादिपरिज्ञानेन कोटस्य साध्यत्वनिर्देशः]

दुर्गेश्वरर्क्षवृक्षं च खगं च छेदयेत्क्रमात् ॥ ८४ ॥

दुर्गर्क्षाद्रन्ध्रराशौ च तथैवांशदिशि स्थितम् ।
कोटायुद्धं करोत्येव कोटं साध्यं विनिर्दिशेत् ॥ ८५ ॥

[चक्रशास्त्रपरिचयात् खण्डीस्थानविज्ञानेन युद्धाचरणम् ]

एवं बहुप्रकारैस्तु चक्रशास्त्रात्समुद्धृतम् ।
खण्डीस्थानं परिज्ञाय तत्र कुर्वित सङ्गरम् ॥ ८६ ॥

---

[1] दुर्गनाम्नः–नर. वि. [2] यस्मिन्–नर. वि. [3] बालो वा स्थविरोऽपि वा–मु,
[4] वत्सरान्तं–मु. [5] शेऽप्युच्चगे–मु.

[गिर्यादिदुर्गप्रसाधनक्रमः]

परिघासंस्थितं तोयं खनित्वा परिवाहयेत् ।
सेतुं प्रकारयेत्तत्र पूरयित्वा मृदादिभिः ॥ ८७ ॥

यद्यगाधं भवेत्तोयं तरेद्वा तु प्लवादिभिः ।
एवमुत्तार्य सैन्यानि दुर्गमावेष्ट्य सेनया ॥ ८८ ॥

अप्रवेशाच्च धान्यानां दुर्गस्थानामनिर्गमात् ।
अन्नक्षयान्निरोधाच्च निर्बन्धाद्[1]दकेन च ॥ ८९ ॥

एवं विधैरुपायैश्च गिरिदुर्गं प्रसाधयेत् ।
पाषाणैरिष्टकाभिर्वा मृदा वा निर्मितं च यत् ॥ ९० ॥

तद्दुर्गं [2]यन्त्रपाषाणैः खननैश्च निपातयेत् ।
कण्टकैश्चर्मभिर्नद्धैश्चलद्भिश्चक्रयन्त्रितैः ॥ ९१ ॥

तदन्तः संस्थितैर्यूथैः प्रहरद्भिस्समन्ततः ।
अग्नितैलमुखैर्बाणैः वायु[3]संप्रेषणेरितः ॥ ९२ ॥

आरोहद्भिर्भटानीकैः शूरैः श्रेणीबलान्वितैः ।
दन्तिदन्तकराघातैर्योधैर्मुक्तशरोत्करैः ॥ ९३ ॥

गिरिदुर्गविधानेन दुर्गाणां त्रयमाहरेत् ।
कुठारैश्शतसाहस्रैः  दयेद्विटपांस्तरून् ॥ ९४ ॥

दहेद्दावाग्निना वापि वनदुर्गं जयेन्नृपः ।
पूर्णानि जलभाण्डानि तोयैर्दूरसमाहृतैः ॥ ९५ ॥

महिषोष्ट्रबलीवर्दैः बहुभिर्वाहकैरपि ।
आनीय च निजानीकं सन्तर्प्य च चतुर्दिशम् ॥ ९६ ॥

आवेष्ट्य च खनेत्कूपान् बहिः कूपात्समन्ततः ।
आरभेत ततो युद्धं यन्त्रपाषाणपातनैः ॥ ९७ ॥

---

[1] दनेन—मु.   [2] यत्र—मु. पा.   [3] संप्रेरितैरितः—ग.

आत्मनश्चानुकूलेन वायुना समुदीरयेत् ।
अग्नितैलमयं वह्निं सर्वतोऽभ्युक्षयेत्ततः ॥ ९८ ॥

जलाभावेन सन्तप्ता नाशमेष्यन्ति दुर्गमाः ।
तोयपानेन संतृप्तं कुर्यादात्मपदं नृपः ॥ ९९ ॥

एवं प्रकारैरन्यैश्च मरुदुर्गं प्रसाधयेत् ।
साधयेद्दारुजं दुर्गं चूर्णनाद्गजघट्टनैः ॥ १०० ॥

जयेत मतिमान्यत्नैः दहनैर्दहनेन च ।
नरदुर्गं जयेद्राजा गजाश्वबलसंयुतः ॥ १०१ ॥

एवमष्टविधान् दुर्गानुपायैस्सम्प्रसाधयेत् ।

[वेलापुरप्राकारविजयपूर्वकं तन्मध्यस्थरिपुग्रहणम्]

शास्त्रलोकागतैरेवमुपायैश्शिवभूपतिः ॥ १०२ ॥

वेलापुराख्यं प्राकारं सहसा स्वयमग्रहीत् ।
ततोऽग्रहीत्करेणैव रिपुं तन्मध्यवर्तिनम् ॥ १०३ ॥

[शिवभूपस्य वेलापुरविजयं श्रुत्वा तद्दिदृक्षया श्रीरङ्गसार्वभौमसमागमः]

श्रीरङ्गसार्वभौमस्तं श्रुत्वोदन्तं प्रहर्षितः ।
वेलापुरं समायातः शिवभूपदिदृक्षया ॥ १०४ ॥

ततस्समागतस्तेन प्राप्य तद्दर्शनोत्सवम् ।

[श्रीरङ्गसार्वभौमेण सन्तोषात् शिवभूपायानेकबिरुदसमर्पणम्]

सन्तोषितः पराक्रान्तः स्थानप्रत्यर्पणाद्बहु ॥ १०५ ॥

अदिशद्बिरुदान्यस्मै सार्वभौमो महीभृते ।
रामबाणाभिधानं च वारणं परवारणम् ॥ १०६ ॥

अमूल्यमिन्द्रनीलस्य कर्णाभरणमेव च ।
मुक्ताफलमनर्घं च बिरुदे शङ्खचक्रके ॥ १०७ ॥

जगज्झम्पाभिधं छत्रं शात्रवं चापि मस्तकम् ।
एवमादीनि बिरुदान्यर्पयित्वांशुकादिभिः ॥ १०८ ॥

बहुधा मानयामास शिवभूपं महीपतिः ।

[शिवभूपश्रीरङ्गराजयोः कीर्तिस्थानलाभाभ्यां सन्तोषातिशयः]

कीर्त्या शिवमहीपालः स्थानप्रत्यर्पणोत्थया ॥ १०९ ॥

सार्वभौमः पराक्रान्तनिजस्थानादिकस्तथा ।
तौ च स्वस्वेप्सितावाप्तथा तदाभूतां प्रहर्षितौ ॥ ११० ॥

[शिवभूपतेः वेलापुरस्थितसार्वभौमविरोधिसामन्तविजयः, स्वपुरसमागमश्च]

तत्र स्थितांश्च सामन्तान् सार्वभौमविरोधिनः ।
विजित्य [1]तांश्च स नृपो दुष्प्रधर्षपराक्रमः ॥ १११ ॥

विजयी स्वपुरं गन्तुं प्रातिष्ठत महीपतिः ।
ततः स्वपुरमासाद्य चिरं सुखमवर्तत ॥ ११२ ॥

[शिवभूपेन तुङ्गभद्रातीरेऽग्रहारकल्पनं, यज्ञाचरणाय द्विजेभ्यः सोपस्करं तत्प्रदानं च]

तुङ्गभद्रानदीतीरे शिवराजपुराह्वयम् ।
पर्याप्तक्षेत्रफलकमग्रहारमकल्पयत् ॥ ११३ ॥

द्विजानतोषयद्वित्तपर्याप्ताभिश्च वृत्तिभिः ।
यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसम्भवः ॥ ११४ ॥

इति शास्त्रादरचयद्वाजपेयादिकान् क्रतून् ।

[शिवभूपस्य केरले स्वयशोविधायकानेकशुभकृत्यानि]

अनन्तरं केरलेषु भूरि दुर्गाण्यकल्पयत् ॥ ११५ ॥

---

[1] कांश्च–ग.

जीर्णान् कूपतटाकांश्च नष्टान् देवालयानपि ।
उद्द्धारापरिमितान् स्वयशःकेतुना सह ॥ ११६ ॥

[मुक्तिक्षेत्राणि, तत्सङ्ख्या च]

केदारं भद्रपादश्च काशी चैव त्रियम्बकम् ।
वैयाघ्रपादं साम्बाख्यं पुष्करं स्थाणुसंज्ञकम् ॥ ११७ ॥

शिवगङ्गागुहारण्यरुद्रकोटिद्वरालयम् ॥
श्रीशैलं चैव गोकर्णं [1]पुण्यं पुण्याद्रिसंस्थितम् ॥ ११८ ॥

रामेश्वरमिति ख्यातं सर्वपापप्रणाशनम् ।
एवं प्रकीर्तितान्यासन् [2]मुक्तिक्षेत्राणि षोडश ॥ ११९ ॥

[शिवभूपेन मुक्तिक्षेत्रेषु नित्यदीपादिविधानम्]

पुष्पैः पुष्टत्वमाप्नोति धूपो दहति पातकम् ।
दीपान्मृत्युविनाशः स्या[3]न्नैवेद्यं सर्वकामदम् ॥ १२० ॥

इति शास्त्रान्नित्यदीपनैवेद्यादिप्रकल्पनम् ।
तेषु क्षेत्रेषु विप्राणां वर्षाशनसमर्पणम् ॥ १२१ ॥

[शिवभूपकृतकाशीविश्वेश्वरोपचारविशेषाः]

सर्वक्षेत्रोत्तमा काशी सर्वदेवोत्तमः शिवः ।
सर्वमन्त्राधिको लोके शैवः पञ्चाक्षरो मनुः ॥ १२२ ॥

इति प्रमाणसंसिद्धमहिमाधिक्यशालिनः ।
विश्वेश्वरस्य सौवर्णकिरीटादिसमर्पणम् ॥ १२३ ॥

कारयामास देवस्य प्रसादाय महेशितुः ।
यः करोति नरो भक्त्या लक्षदीपमहोत्सवम् ॥ १२४ ॥

---

[1] पुण्याख्याद्रिसंस्थितम्—ग. [2] दिव्यक्षेत्राणि—ग. [3] न्नैवेद्यात्सर्वसम्पदः—मु.

स तु भूमिं समासाद्य राजवर्यो भविष्यति ।
सप्तद्वीपसमुद्रान्तां पालयिष्यति मेदिनीम् ॥ १२५ ॥

एकच्छत्रं महैश्वर्यं भुक्त्वान्ते मोक्षमाप्नुयात् ।
येऽपि पश्यन्त्यमुं धर्मं तेऽपि यान्ति परां गतिम् ॥ १२६ ॥

इति शास्त्रं समालोक्य विश्वेश्वरसमीपतः ।
अकारयद्गोघृतेन कोटिदीपमहोत्सवम् ॥ १२७ ॥

[ शिवभूपेन रामेश्वरादिदेवानां षोडशोपचारार्थं क्षेत्रवितरणम् ]

रामेश्वरो जम्बुकेशो नञ्जुण्डेश्वर एव च ।
शिवगङ्गास्थितो गङ्गाधरो हरिहरेश्वरः ॥ १२८ ॥

नासिकात्र्यम्बकाधीशो रामनाथेश्वरस्तथा ।
[1]पञ्चनन्दीश्वरश्चैषां देवानां षोडशाख्यया ॥ १२९ ॥

उपचारान्विनिर्मातुं क्षेत्रं भूयो वितीर्णवान् ।

[ काश्यां शिवभूपकृतः कपिलतीर्थोद्धारः ]

काश्यां कपिलधाराख्यतीर्थोद्धारं तथाकरोत् ॥ १३० ॥

[ श्रीरङ्गादिषु देवानां शिवभूपकृतानि विशेषकार्याणि ]

श्रीरङ्गकाञ्चीवरदराजश्रीवेङ्कटेश्वराः ।
जगन्नाथेश्वरश्चैषां पूर्वां पूजामकारयत् ॥ १३१ ॥

तत्र तेषु च तीर्थेषु स्नानार्थं वसुधामदात् ।
* काममीनविशालाक्षीमुख्याश्शक्तीरपूजयत् ॥ १३२ ॥

---

* कामाक्षी-मीनाक्षी-विशालाक्षीमुख्याः शक्तिदेवता इत्यर्थः ।

[1] पञ्चनाथेश्वरस्तेषां—मु.

[ केलदीरामेश्वरवीरभद्रयोः, मूकाम्बायाश्च शिवभूपकृतविशेषाः ]

केलदीस्थितरामेशवीरभद्रेशयोरपि ।
मूकाम्बिकायाश्च पृथूनालयानप्यकारयत् ॥ १३३ ॥

तेषां विशेषपूजाश्च कारयामास भक्तितः ।

[ भूरुद्रेभ्यो, द्विजेभ्यश्च शिवभूपेन मृष्टान्नादिप्रदानम् ]

लक्षं षण्णवतिं चैव सहस्राणि महात्मनाम् ॥ १३४ ॥

भूरुद्राणां बहुविधैः [1]मृष्टान्नैर्भूर्यभोजयत् ।
अदिशच्च द्विजातिभ्यो महादानानि षोडश ॥ १३५ ॥

[ सार्वभौमपट्टभद्रयोग्यमहादानानि ]

महान्ति तानि दानानि सङ्कीर्त्यन्ते समासतः ।
सार्वभौमस्य योग्यानि मण्डलाधि[2]पतेस्तथा ॥ १३६ ॥

पट्टभद्रस्य योग्यानि प्रभुमात्रोचितान्यपि ।
[3]शुध्यन्ति दानाद्द्रव्याणि नान्यथा द्रव्यशोधनम् ॥ १३७ ॥

कर्तव्यानि द्विजातिभ्यस्तानि पापोपशान्तये ।
तुलाहिरण्यगर्भं च ब्रह्माण्डं लाङ्गलं तथा ॥ १३८ ॥

सुवर्णधेनुभूगोलं कनकाद्रिरनन्तरम् ।
कालपूरुषकल्पद्रू रजताचल एव च ॥ १३९ ॥

सहस्रधेनुदानं च सालङ्कारं सदक्षिणम् ।
लक्ष्मीरलङ्कृता तद्वद्वृषभो हेमरूपवान् ॥ १४० ॥

सप्ताचलाः स्वर्णमयाः तत्तल्लक्षणलक्षिताः ।
[4]सप्तद्वीपा महापृथ्वी सप्तगोत्रकुलाचला ॥ १४१ ॥

---

[1] मृष्टान्नैरतृप्तिमातनोत्—मु. [2] ते: स्थितौ—मु. [3] सिध्यन्ति—मु.
[4] सप्तद्वीपार्णवा पृथ्वी—मु.

स्वर्णरूपात्मच्छाया तुलया यावती भवेत् ।
एतानि सार्वभौमस्य पट्टभद्रस्य [1]दायिनः ॥ १४२ ॥

[ प्रभुमात्रयोग्यमहादानानि ]

कनकाश्वतिला नागाः कन्या सोपस्करं गृहम् ।
शय्या च कपिला पृथ्वी विद्यादानमतः परम् ॥ १४३ ॥

प्रभुमात्रस्य योग्यानि महादानानि वै दश ।

[शिवभूपतिना शिवप्रीत्यै बहुदानविधानम् ]

एवं दानानि बहुधा सन्त्यन्यान्यपि भूतले ॥ १४४ ॥

महादानानि देयानि महादेवस्य तुष्टये ।
इति शास्त्रं समालोक्य शिवनामा महीपतिः ॥ १४५ ॥

नानाविधानि दानानि महेशप्रीतयेऽदिशत् ।

[शिवभूपेन भद्रप्पसोमशेखरयोः विद्याभ्यासाय वेङ्कटप्पनायके समर्पणम् ]

कनीयांसं ततः पुत्रं सोमशेखरनामकम् ॥ १४६ ॥

विद्याभ्यासे वेङ्कटप्पनायकस्य वशं व्यधात् ।

[तदनु तस्मै भूप्रदानेन नीत्या राज्यरक्षणोपदेशः, राजधर्मतत्त्व-
शिवयोगपरत्वोपदेशश्च]

तस्मै सहैव पुत्राभ्यां प्रापयद्वसुधामपि ॥ १४७ ॥

भद्रप्पनायकं चैव सोमशेखरनायकम् ।
एतौ च बालकौ प्रेम्णा नियतं परिपालयन् ॥ १४८ ॥

[2]नीत्या महीमिमां रक्षन् धर्मकीर्तिपराक्रमैः ।
प्रवर्तयाखिलान् धर्मान् नृपाणामुचितान् [3]बहून् ॥ १४९ ॥

---

[1] ना पुनः–मु. [2] निलां–मु. [3] भुवि–मु.

अन्तरङ्गे परं नित्यं शिवयोगपरो भव ।
इत्युदीर्य नृपस्तस्मै योगविद्यामुपादिशत् ॥ १९० ॥

इति शिवतत्त्वरत्नाकरे सप्तमकल्लोले शिवभूपचरित्रकोटाचक्रवर्णनं नाम चतुर्दशस्तरङ्गः

---

## सप्तमकल्लोले पञ्चदशस्तरङ्गः

### योगोपदेशवर्णनम्

[कुमारस्य योगविद्याप्रश्नः, भूपतेस्तदुत्तरकथनप्रतिज्ञा च]

शिवभूमिपतिर्योगविद्यां समुपदिष्टवान् ।
इत्याख्यातमभूत्स्वामिन्! भवता [1]विदिताखिल ! ॥ १ ॥

योगविद्या पुनः कैषा तां मह्यं परिकीर्तय ।
यत्पृष्टं पुत्र! भवता तद्ब्रवीमि समासतः ॥ २ ॥

[योगस्य मन्त्रादिभेदेन पञ्चविधत्वम्]

मन्त्रो लयो हठो राजा शैवश्चेत्यपि पञ्चधा ।
योगाः पूर्वैस्समाख्याताः सिद्धैश्शम्भुप्रचोदितैः ॥ ३ ॥

[मन्त्रयोगप्रभेदाः, तत्स्वरूपाणि च]

एकाक्षरं द्व्यक्षरं वा षडक्षरमथापि वा ।
अष्टाक्षरं वा मोक्षाय मन्त्रं योगी जपेत्सदा ॥ ४ ॥

एकाक्षरः स्यात्प्रणवो हंसस्तु द्व्यक्षरो मनुः ।
षडक्षरो मूलमन्त्रो [2]मायाभिस्त्वष्टवर्णकः ॥ ५ ॥

---

[1] विदिता किल—मु. [2] मायाख्यस्त्वष्ट—मु.

[वाच्यवाचकादिविज्ञानेन प्रणवादिमन्त्रजपस्य मन्त्रयोगता]

वाच्यवाचकभावाख्यं सम्बन्धं परिमृश्य च ।
[1]जपो मन्त्रस्य यो मन्त्रयोगस्स तु निगद्यते ॥ ६ ॥

[लययोगस्वरूपम्]

[2]मनश्च [3]मनुना सार्धं [4]ध्येयवस्तुनि [5]लीयते ।
नादे वा यस्य [6]तस्यायं लययोग इति स्फुटः ॥ ७ ॥

[चिणादिभेदेन नादस्य दशविधत्वम्]

चिणुश्चिणुचिमिमिघण्टावलशङ्खध्वनयो नु वल्लकीनिनदः ।
सत्तालवेणुभेरीमर्दलनादा दशोदिता नादाः ॥ ८ ॥

[नादसिद्धिक्रमः]

स्थूलात्स्थूलो नश्यन् सूक्ष्मात्सूक्ष्मो [7]यदा भवति नादः ।
तस्य क्रमशः सिद्धिः तदोत्तरोत्तरतयेति [8]सङ्कलितम् ॥ ९ ॥

[हठयोगस्वरूपम्, तस्याष्टाङ्गत्वेऽभिप्रायभेदश्च]

अष्टाङ्गबन्धमुद्रौघकरणाधारवान् हठः ।
षडङ्गोऽयं मतोऽन्येषां यमैश्च नियमैर्विना ॥ १० ॥

ताभ्यां विना हठस्ताभ्यां नेत्यष्टाङ्गं हठं विदुः ।
अन्ये यमश्च [9]नियमश्चर्येत्याहुः षडङ्गकम् ॥ ११ ॥

[दश यमप्रभेदाः, तत्स्वरूपं च]

हिंसाभावः सूनृतमस्तेयं ब्रह्मचर्यमृजुता च ।
मितभोजनक्षमाधृतिशौचदया दश यमा इति प्रोक्ताः ॥ १२ ॥

---

[1] लयो–मु. [2] पुनश्च–मु. [3] मरुता–ग. [4] ध्येये व–मु. [5] नीयते–ग.
[6] कस्यायं–मु. [7] यथा–मु. [8] सङ्कलितः–मु. [9] नियमश्चर्यं आहुर्मनीषिणः–मु.

[दश नियमभेदाः, तत्स्वरूपं च]

तुष्टिः श्रद्धा च मतिः [1]शिवपूजाजपतपोविरतिलज्जाः ।
भस्मावकुण्ठनमथो योगः श्रुतिरिति दशोदिता नियमाः ॥ १३ ॥

[स्वस्तिकादीनि चतुरशीत्यासनानि, तदुपयोगश्च]

पीठानि चतुरशीतिः स्वस्तिकभद्राब्जसिद्धमुख्यानि ।
ध्यानजपपूजनादौ शस्तानि स्वस्थतार्थमुच्यन्ते ॥ १४ ॥

[आसनस्य हठयोगप्रथमाङ्गता, आसनप्रयोजनं च]

हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते ।
तत्कुर्यादासनं स्थैर्यमारोग्यं चाङ्गपाटवम् ॥ १५ ॥

[चतुरशीत्यासनेषु कतिपयासनानां नाम्नोद्देशः]

स्वस्तिकं सर्वतोभद्रं सिद्धं सिंहासनं तथा ।
सव्यं शलं सुखं चैव गोमुखं गरुडं तथा ॥ १६ ॥

मयूरं मत्स्यमत्स्येन्द्रं मण्डूकं मुद्गरं मृगम् ।
कुञ्जरं कुक्कुटं नागं काष्ठं क्रौञ्चं च कूर्मकम् ॥ १७ ॥

[2]खङ्गं च कामदहनं वैयाघ्रं [3]वैणिकासनम् ।
योन्यासनं [4]वासवं च वीरं पद्मासनं तथा ॥ १८ ॥

वाराहं चैव पर्यङ्कं [5]पताकासनमेव च ।
त्रिपदं हस्तिकर्णं च हैममर्धासनं तथा ॥ १९ ॥

इत्यादीनामासनानामशीतिश्चतुरुत्तरा ।

---

[1] शिवपूजाभिरतिजपतपोलज्जाः–मु. [2] खड्गं–ग. [3] वेणुका–मु. [4] वासकं–मु.
[5] पतगा–मु.

[कतिपयासनानां लक्षणाभिधानप्रतिज्ञा]

वसिष्ठाद्यैश्च मुनिभिः मत्स्येन्द्राद्यैश्च योगिभिः ॥ २० ॥
अङ्गीकृतान्यासनानि [1]लक्ष्यन्ते कतिचिन्मया ।

[स्वस्तिकासनलक्षणम्]

जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ॥ २१ ॥
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ।

[वीरासनलक्षणम्]

एकं पादं तथैकस्मिन् * (न्यसेदूराववस्थितम् ॥ २२ ॥
इतरस्मिन् तथैवान्यं) वीरासनमिति स्मृतम् ।

[स्वस्तिकस्य लक्षणान्तरम्]

सीवन्याश्चात्मनः पार्श्वे कुक्षौ निक्षिप्य पादयोः ॥ २३ ॥
सव्ये दक्षिणगुल्फं तु दक्षिणे [2]च तथोत्तरम् ।
एतद्वा स्वस्तिकं प्रोक्तं सव्ये न्यस्येतरं करम् ॥ २४ ॥

[गोमुखासनलक्षणम्]

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे विनिक्षिपेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं [3]गोमुखं [4]यथा ॥ २५ ॥

---

* अयमंशः मुद्रितपुस्तके नास्ति । अत्र हठप्रदीपिकायां—" विन्यसेदूरुणि स्थितम् । इतरस्मिंस्तथा चोरुं " इति पाठो वर्तते ।

[1] कथ्यन्ते—हठप्र. [2] सव्यगुल्फकम्—मु. [3] गोमुखाकृति—हठप्र.
[4] तथा—ग.

[पद्मासनलक्षणम्]

अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण [1]तु ।
ऊर्वोरुपरिभागे च कृत्वा पादतले उभे ॥ २६ ॥

पद्मासनं भवेदेतत्सर्वेषामपि पूजितम् ।

[सिंहासनलक्षणम्]

गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥ २७ ॥

दक्षिणं सव्यगुल्फेन दक्षिणेन तथोत्तरम् ।
हस्तौ जान्वोश्च संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च ॥ २८ ॥

व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ।
सिंहासनं भवेदेतत् पूजितं योगिभिस्सदा ॥ २९ ॥

[मयूरासनलक्षणम्]

अवष्टभ्य धरां सम्यक् *लताभ्यां करयोर्द्वयोः ।
हस्तयोः कूर्परौ चापि स्थापयेन्नाभिपार्श्वयोः ॥ ३० ॥

समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतद्धि सर्वपापप्रणाशनम् ॥ ३१ ॥

[कुक्कुटासनलक्षणम्]

पद्मासनं समास्थाय [2]जानूर्वोरन्तरे करौ ।
निवेश्य भूमौ संस्थाप्य व्योमस्थः कुक्कुटासनम् ॥ ३२ ॥

[भद्रासनलक्षणम्]

गुल्फौ च वृषणस्याधः [3]सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलः ॥ ३३ ॥

भद्रासनं भवेदेतत्सर्वव्याधिनिवारणम् ।

---

*अत्र तलाभ्यामिति स्यात् ।

[1] च–मु. [2] जानुनोरन्तरे–मु. [3] सीवन्योः–ग.

[कूर्मासनलक्षणम्]

गुदं निरुध्य गुल्फाभ्यां व्युत्क्रमेण समास्थितः ॥ ३४ ॥
कूर्मासनं भवेदेतदिति योगविदोऽब्रुवन् ।

[मुक्तासनलक्षणमितरासनानां द्रष्टव्यता च]

सम्पीड्य सीवनीं सूक्ष्मां गुल्फेनैवापसव्यतः ॥ ३५ ॥
सव्यं दक्षिणगुल्फेन मुक्तासनमितीरितम् ।
मुख्यान्युक्तान्यासनानि द्रष्टव्यानीतराण्यपि ॥ ३६ ॥

[देहप्रमाणं, देहमध्यप्रमाणं च]

तनुष्षण्णवत्यङ्गुलात्मैव तस्यां
गुदाद्व्यङ्गुलादूर्ध्वमेवं हि लिङ्गात् ।
अधो द्व्यङ्गुलान्मध्यमेकाङ्गुलं यत्
तदेतद्बुधा [1]देहमध्यं वदन्ति ॥ ३७ ॥

[नाभिप्रदेशः, ततो द्वादशारचक्रनिष्पत्तिश्च]

अतोऽग्रे नवभ्योऽङ्गुलेभ्योऽस्ति कन्दः
त्वगस्थ्यावृतोऽण्डोपमस्तस्य मध्यम् ।
भवेन्नाभिरस्माद्धि चक्रं समुत्थं
लसद्द्वादशारं परं नाभितः स्यात् ॥ ३८ ॥

[कुण्डलिनीस्वरूपं, तत्स्थानं, तदवस्थितिरीतिश्च]

स्थिता कुण्डली सप्तधा वक्रभूता-
ष्टरूपा सुषुप्तोरगाभा निधाय ।
फणां कन्दनाभेरधो रन्ध्रदेशे
मुखं तेन वास्यं मनः सन्निरुध्य ॥ ३९ ॥

---

[1] देहमध्ये—मु.

[कुण्डलिन्या मूढसंस्कृतयोर्बन्धमोक्षोपायता]

समावेष्ट्य पुच्छेन तु ब्रह्मरन्ध्रं
स्थितैषा युता पृष्ठशल्येन भाति ।
इयं कुण्डलिन्येव मूढात्मनां बं-
धनाय स्थिता मुक्तये संस्कृतानाम् ॥ ४० ॥

[कुण्डलिनीव्यापारः]

कवाटं यथोद्घाटयेत्कुञ्चिकैषा-
पवर्गाररं तद्वदुद्घाटयन्ति ।
[1]तथा कुण्डलीवावनी भारवाही
स्वयं [2]सर्वसद्योगतन्त्राधि[3]वासा ॥ ४१ ॥

[कुण्डलिन्या वाचकान्तराणि]

कुटिलाङ्गी कुण्डलिनी भुजङ्गी शक्तिरीश्वरी ।
कुण्डल्यरुन्धती चेति शब्दाः पर्यायवाचकाः ॥ ४२ ॥

[कुण्डलिनीप्रबोधनक्रमः]

मूलबन्धं विधायोर्ध्वगामिना [4]घनवायुना ।
संयुक्तेन प्राणनाम्ना संरुद्धेन नभस्वता ॥ ४३ ॥

वह्निमण्डलमावेष्ट्य [5]तप्तां कुण्डलिनीं ततः ।
वायुना तेन रुद्धेन [6]दण्डेनेव प्रबोधयन् ॥ ४४ ॥

समुत्क्षिप्तफणां कृत्वा नरेन्द्र इव नर्तयन् ।
स्थलं विशोध्य तं वायुं मोक्षमार्गे निवेशयेत् ॥ ४५ ॥

---

[1] यथा—मु. [2] सर्वदोयोग—मु. [3] वासः—मु. [4] धन—ग. [5] तप्ता—ग.
[6] दण्डेनैव—ग.

[कुण्डलिनीप्रबोधे हठयोगसिध्या सिद्ध्यष्टकसम्भवः]

कुम्भकात् कुण्डलीबोधः सुषुम्ना निर्गला ततः ।
हठसिद्धिस्ततस्तस्मात् सिद्धयोऽष्टौ भवन्ति ताः ॥ ४६ ॥

[अष्टौ हठयोगसिद्धयः]

वपुःपटुत्वं च मुखप्रसादो
नादस्फुटत्वं नयनाच्छता च ।
कायाग्निदीप्तिर्विजयश्च बिन्दोः
नाडीषु शुद्धिर्विगतामयत्वम् ॥ ४७ ॥

[ऊर्ध्वाधोभावतो नाडीद्वयं, तत्र शम्भोरेव नियामकत्वं च]

वस्तुस्थितिरियं [1]काचित्सिद्धिरूर्ध्वमुखी सती ।
अधोमुखं किञ्चिदत्र [2]शम्भुरेव नियामकः ॥ ४८ ॥

[आहत्य देहस्थिता नाड्यः, तत्र सुषुम्नायाः सार्थक्यं च]

द्विसप्ततिसहस्राणि नाडीस्थानानि पञ्जरे ।
सुषुम्ना शाम्भवी शक्तिः शेषास्तावन्निरर्थकाः ॥ ४९ ॥

[सुषुम्नाभानरीतिः]

तत्र [3]कुण्डतो नाडिकास्तिर्यगूर्ध्वं
[4]ह्यधो निर्गता ह्युत्तरत्रिंशदुद्धः ।
सुषुम्नात्र तत्कन्दमध्यस्थिता
मूर्धगा [5]पुष्पशल्येन साकं विभाति ॥ ५० ॥

[सुषुम्नावाचकान्तराणि]

सुषुम्ना शून्यपदवी ब्रह्मद्वारं महापथम् ।
श्मशानं शाम्भवी मध्येमार्गं चेत्येकवाचकम् ॥ ५१ ॥

---

[1] काचिद्रुद्धिदोर्ध्वं–मु. [2] शम्भुर्देवो–मु. [3] कुन्दतो–ग. [4] ह्रदो–ग.
[5] व्यष्टिशल्येव–मु.

[इडापिङ्गलासुषुम्नास्थानानि]

इयं दक्षिणे दक्षनासापुटान्त-
स्थितिः पिङ्गलाख्याथ सौषुम्नवासे ।
इडा वामनासापुटान्तस्थितिर्वै
सुषुम्नाग्रभागे [1]तु जिह्वान्तसंस्था ॥ ५२ ॥

[सरस्वत्यादिनाडीस्थानानि]

सरस्वत्यधो पिङ्गला पृष्ठतो दक्षिणा-
क्ष्यन्तगा भावितैषा हि पूषा ।
ततो दक्षकर्णान्तसंस्था पयस्वि-
न्यसौ पार्श्ववर्तिन्यमुष्या हि नाड्याः ॥ ५३ ॥

इडा पृष्ठसंस्था तु गान्धारिका वा-
मनेत्रान्तगास्यास्तु गान्धारिकायाः ।
सरस्वत्यभिख्यागुतायाश्च मध्य-
स्थिता शङ्खिनी वामकर्णान्तगैषा ॥ ५४ ॥

कुहूर्मेहनान्तस्थितालम्बुसा क-
न्दमध्यादधोगा गुदान्तप्रचारा ।
गता दक्षिणाङ्घ्रिं यशस्विन्यथो वा-
मपादान्तगा हस्तिजिह्वा मतैषा ॥ ५५ ॥

ततश्चारणा सर्वगा पक्षभागेऽ-
थविश्वोदरा वामभागे वसन्ती ।

[नाडीषु चतसृणां मुख्यत्वमन्यासु वातसञ्चारश्च]

इमा नाडिकास्तासु मुख्याश्चतस्रो
दशैतासु चान्यासु वाताश्चरन्ति ॥ ५६ ॥

---

[1] हि–मु.

[प्राणवायुः, तत्स्वरूपं, तत्सञ्चारतः श्वासोच्छ्वासनिष्पत्तिश्च]

कन्दादूर्ध्वमिन्द्रनीलाश्मरोचिः
प्राणो धावन्नेव[1] नासास्यमध्ये ।
नाभावह्नी चारयन्नेव तद्व-
न्निश्वासोच्छ्वासादिकं तन्तनीति ॥ ५७ ॥

[अपानवायुस्वरूपं, तत्सञ्चारप्रदेशाश्च]

इन्द्रगोपकनिभोऽपनयन्योऽपान इत्यभिहितः स [2]मलादिः ।
पायुमेढ्र[3]पदोदरजङ्घाजानुनाभिवसतिर्बुधगीतः ॥ ५८ ॥

[व्यानवायुस्वरूपं, तद्गतिप्रदेशाश्च]

ध्यानादिव्यापारं तनोति गोक्षीरपाण्डुरो व्यानः ।
कर्णाक्षिगण्डगुल्फघ्राणाङ्घ्रिषु वर्तते प्रदेशेषु ॥ ५९ ॥

[उदानवायुचेष्टा, तत्सञ्चारप्रदेशाश्च]

मर्माण्युद्वेजयति च देहोन्नयनं करोत्ययमुदानः ।
विद्युत्पावकसमरुक्(क)रचरणाद्यङ्गसन्धिनिष्ठोऽयम् ॥ ६० ॥

[समानवायुस्वरूपं, तद्गतिप्रदेशाश्च]

अन्नं भुक्तं पीतं रसं समं नयति यस्समानोऽयम् ।
तनुमध्यादिसकलगः शुद्धस्फटिकप्रकाशवानेषः ॥ ६१ ॥

[नागादिकूर्मान्तवायुस्वरूपाणि, तच्चेष्टाश्च]

उद्गारं कारयति प्रोद्यद्भास्व.रसमप्रभो नागः ।
कारयति मीलनादि च कुन्देन्दुसमद्युतिः कूर्मः ॥ ६२ ॥

कारयति हि क्षुधादिं कृकरः कारयेत्तु मेचकच्छायः ।
तन्द्रीजृम्भणकारी स्फटिकनिभः स खलु देवदत्तमरुत् ॥ ६३ ॥

---

[1] ध्वनासा- मु. [2] मरादिः—मु. [3] पदोपर—मु.

तप्तसुवर्णसवर्णो धनञ्जयो जयति शोककारयिता ।
न जहाति मृतं दिनपञ्चकं च निर्भिद्य निस्सरेद्देहात् ॥ ६४ ॥

[प्राणादिवायुपञ्चकस्यान्तस्थता, नागादीनां बहिष्ठता च]

प्राणाद्या अन्तस्थाः पञ्च बहिष्ठाश्च पञ्च नागाद्याः ।
इति नाडीपवनज्ञोऽभ्यसेद्योगं गुरूक्तमार्गेण ॥ ६५ ॥

[योगाभ्यासोपयोगिमठरचना]

प्राकारमण्डपसुवेदिपरिष्कृताल्प-
द्वारान्तरायरहितं मठमेकमादौ ।
कुर्यात्कुशाजिनविभूतियुतं [1]वितान-
रम्यं निवेशितसुसेवक[2]मात्रगन्धम् ॥ ६६ ॥

[योगिनः पथ्या, वर्ज्याश्चाहाराः]

गोधूमशालिघृतदुग्धसितामधूनि
चक्षुष्यशाकफलमुद्गनदीजलानि ।
शुण्ठ्यादियोगिवरपथ्यमथोष्णरूक्ष-
कट्वम्लहिङ्गुलशुनादितिलं च वर्ज्यम् ॥ ६७ ॥

तस्मान्मितं हितं स्निग्धं मधुरं धातुपोषकम् ।
सगव्यं मृदुलं कोष्णं योगी भोजनमाचरेत् ॥ ६८ ॥

[योगनाशकाः षडत्याहारादयः, तद्वर्धका उत्साहादयश्च]

अत्याहारः प्रजल्पो नियमविरहिता लोकसङ्गश्च लौल्यं
[3]चाभासश्चेति षड्भिः खलु [4]विधिविमुखैः नाशमायाति योगः ।

---

[1] विकास—म. [2] मात्त—ग. [3] कायादिश्चे—मु. चायासश्चेति—मु. पाठान्तरम् । [4] विमिषमुखैः—मु.

उत्साहस्थैर्यधैर्यप्रबलतरयथालाभसन्तुष्टितत्त्व-
ज्ञानोद्यल्लोकसङ्गच्युतिभिरभिभवद्योगवृद्धिं प्रयाति ॥ ६९ ॥

[प्राणायामलक्षणं, तस्य प्राकृतादित्रैविध्यं च]

प्राणायामः स खलु प्राणाख्यमरुन्निरोधो यः ।
प्राकृतवैकृतकेवलभेदेन प्राणसंयमस्त्रिविधः ॥ ७० ॥

[प्राकृतप्राणायामस्वरूपम्]

प्राणोऽनिलस्वभावश्चरति विशत्येव वैपरीत्येन ।
हंसपदं सोऽहमिति भाषयतः प्राकृतः प्रणीतोऽयम् ॥ ७१ ॥

[वैकृतप्राणायामस्वरूपं, बीजजपादिकं च]

अजपायोगश्चासावथ रेचकपूरकुम्भकैर्विधिना ।
प्राणमरुतो निरोधः क्रियते चेदेष वैकृतः प्रोक्तः ॥ ७२ ॥

सविसर्गं हि सकारं प्रवेश्य बीजं निधाय वस्तुगतम् ।
बीजं बिन्दुसमेतं [1]हकारमुत्सृजति बीजजप एषः ॥ ७३ ॥

स इति शिवोऽहमिति स्वयमीशादिष्टोऽहमित्यमुष्यार्थः ।
एकस्य पूज्यपूजकभावानुपपत्तिरुपचितौ बीजम् ॥ ७४ ॥

आकृष्यावर्णमथोवर्णेन हि योजयेन्मनोगतद्दृष्ट्या ।
मुञ्चतु मवर्णं एष प्रणवजपो भवति गोपितः शैवे ॥ ७५ ॥

[वैकृतप्राणायामभेदाः]

उज्जायिसूर्यभेदन[2]शीतलसीत्कारभस्त्रिकामूर्छाः ।
भ्रमरीति सप्तकमिदं वैकृतमथ केवलं प्रवक्ष्यामि ॥ ७६ ॥

---

[1] वकार–मु.  [2] शीतलि–ग.

[ केवलप्राणायामस्वरूपम् ]

न बहिः स्थितमादत्ते मुञ्चति नात्मस्थमनिलमचलतया ।
तिष्ठति च [1] पूर्णकलशवत्सहामुना कुम्भकाष्टकं प्राहुः ॥ ७७ ॥

[प्राकृतादिप्राणायामपराणां भूयो भूयः श्रेयोलाभः]

प्राकृतवैकृतकेवलविधयोऽमी मन्त्रलयहठात्मानः ।
तत्प्राणायामपरैर्भूयो भूयोऽपि लभ्यते श्रेयः ॥ ७८ ॥

[ प्रत्याहारस्वरूपम् ]

अङ्गानि कूर्म इव रविरस्तं गच्छन् करानिवार्थगणात् ।
इन्द्रियजालं मनसा हरति प्रत्याहृतिप्रणीतिरियम् ॥ ७९ ॥

[बिन्द्वादीनि षड्ध्येयवस्तूनि]

बिन्दुर्नादो व्योम च मन्त्रो भुवनं च [2] विग्रही चेति ।
षड्वस्तूनां ध्यानं ध्यानपदेनोच्यते षडब्जेषु ॥ ८० ॥

[पञ्च धारणाभूमयः]

जान्वन्तं नाभ्यन्तं हृदयान्तं तद्वदेव कर्णान्तम् ।
मौल्यन्तं भूतस्थलमेताः खलु धारणाभुवः पञ्च ॥ ८१ ॥

[ब्रह्मविष्णुरुद्रादीनां तनुपरिमाणानि]

तनुष्षण्णवत्यङ्गुलात्मा विरिञ्चे-
श्चतुर्विंशतिस्थानमङ्गुल्य [3]एवम् ।
मुरारेश्च रुद्रेशसादाख्यभाजां
चतुर्विंशतिर्विंशतिर्वा चतस्रः ॥ ८२ ॥

---

[1] पूर्णकलशात्सहा–मु. [2] विग्रहश्चे–मु. [3] एव–मु.

[धारणास्वरूपं, तदनुभवश्च]

अत्र [1] शिवे चित्तं निदधात्येषा धारणा वशिष्ठस्तु ।
यममुखगुणभरिते स्थितिमात्मनि [2] चित्तस्य तां प्रतीयाय ॥ ८३ ॥

[समाधिस्वरूपं, अस्य राजयोगता च]

स्वात्मानं [3] परमात्मनि नीरे नीरमिव योजयेद्यस्तु ।
एष समाधिः प्रोक्तः प्राहुर्वै राजयोगमिम[4]माद्याः ॥ ८४ ॥

[राजयोगसमाधिनामान्तराणि]

राजयोगः समाधिश्चाप्युन्मनी च मनोन्मनी ।
अमरौघो लयस्तत्त्वं शून्याशून्यं परं पदम् ॥ ८५ ॥

अमनस्कं तथाद्वैतं निरालम्बं निरञ्जनम् ।
जीवन्मुक्तिश्च सहजं तुर्यं चेत्येकवाचकम् ॥ ८६ ॥

[राजयोगसमाधिद्वैविध्यं, तदुपपादनं च]

समाधिर्द्विविधो ज्ञेयः ज्ञातश्चाज्ञात इत्यपि ।
पुटत्रयानुसन्धानाननुसन्धानभेदतः ॥ ८७ ॥

वितर्कस्य विचारस्याप्यानन्दास्मितयोरपि ।
प्रज्ञातोऽनुगमात्पश्चाद्विवेकख्यातिसम्भवः ॥ ८८ ॥

सोऽनात्मात्मभिदास्फूर्तिरसम्प्रज्ञातकस्ततः ।
वासनामात्रशेषोऽसौ तस्मान्मुक्तिश्शिवात्मिका ॥ ८९ ॥

[मरुज्जयोपायः, उड्याणबन्धस्वरूपं, तत्फलं च]

उत्कृष्यापानरविं [5]प्राणानिले हिमकरेण सम्बध्य ।
यत्नेन धारणं यत् स मूलबन्धो मरुज्जयोपायः ॥ ९० ॥

---

[1] शिवे निदधा—मु. [2] चित्ततां—मु. [3] एकमा—ग. [4] मार्याः—मु.
[5] प्राणानिलं हि—मु.

नाभेरूर्ध्वमधोऽनिलबन्धनमुड्डीयणाभिधो बन्धः ।
अस्मान्मलमूत्रक्रिमिविनष्टिरपि रुग्व्यथापरीहारः ॥ ९१ ॥

[जालन्धरबन्धस्वरूपं, तत्फलं च]

गलमाकुञ्च्य तु हृदये चुबुकं संस्थापयेदयं बुधः ।
जालन्धराभिधानो देहे मृतिपलित[1]हरणो बोध्यः ॥ ९२ ॥

[मुद्रानिर्वचनम्]

मुदमानन्दं राति ददातीति हि साधु कीर्त्यते मुद्रा ।
मोचयति बन्धमिति [2]वा द्रावयते शैवममृतमिति मुद्रा ॥९३॥

[बाह्यमुद्रा]

श्रोत्रे नेत्रे नासापुटयुगमप्यङ्गुलीभिरवरुन्ध्यात् ।
नादश्रुतिबिन्द्वीक्षणकरणमियं षण्मुखी बहिर्मुद्रा ॥ ९४ ॥

[आन्तरमुद्रा, अस्याः शाम्भव्याख्या, असुकृत्यलभ्यता च]

अन्तर्मनोबहिर्दृङ्निमेषमुन्मेषमप्यकुर्वाणा ।
शाम्भव्येषा भणिता[3]न्तर्मुद्रा दुर्घटेयमसुकृतीनाम् ॥ ९५ ॥

[राजयोग्यभिमतखेचरी अन्तर्मुद्रा]

रेचकपूरकहीनो निमीलदनिमीलदम्नको लक्ष्यम् ।
पश्यत्यन्तर्मुद्रा खेचर्येषा हि राजयोगिमता ॥ ९६ ॥

[खेचरीमुद्रास्वरूपं, तत्सिद्धिपरिचयश्च]

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिः मुद्रा भवति खेचरी ॥ ९७ ॥

---

[1] वारणो—मु. [2] हि—ग. [3] तन्मुद्रा—ग.

छेदनचालनदोहैः कलां क्रमेण प्रवर्धयेत्तावत् ।
सा यावद्भ्रूमध्यं स्पृशति तदा खेचरी सिद्धिः ॥ ९८ ॥

[योगिसम्मतगोमांसामरवारुणीसेवनस्य कुलीनत्वाभिप्रायः]

गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम् ।
कुलीनं तमहं मन्य इतरे कुलघातकाः ॥ ९९ ॥

[योगिसम्मतगोमांसभक्षणं, तत्फलं च]

गोशब्देनोदिता जिह्वा [1] तत्प्रवेशो हि तालुनि ।
गोमांसभक्षणं तत्तु महापातकनाशनम् ॥ १०० ॥

[योगिसम्मतामरवारुणी]

[2] जिह्वाप्रवेशसम्भूतवह्निनोत्पादितः खलु ।
चन्द्रात्स्रवति यः सारः सा स्यादमरवारुणी ॥ १०१ ॥

[खेचरीशब्दोपाधिः]

चित्तं चरति खे यस्माज्जिह्वा चरति खे [3]गता ।
तेनैषा [4]खेचरीत्यादिहठयोगिभिरीरितम् ॥ १०२ ॥

[उक्तखेचर्यामभिप्रायभेदः, फलानि च]

अपहसितमेतदन्यैरन्यूनावाप्तचित्सुधास्यन्दैः ।
वरराजयोगनिरतैः निरस्तचेष्टैः शिवावधानपरैः ॥ १०३ ॥

---

[1] तत्प्रदेशे हि तालुगे—मु. अत्र ' तत्प्रवेशो हि तालुनि ' इति हठयोगपाठः ।
[2] जिह्वाप्रदेश—मु. ' जिह्वाप्रवेशसम्भूतवह्निनोत्पादितः ' इति हठयोगपाठः । [3] यतः—मु. गत इति हठयोगपाठः । [4] खेचरीनाम मुद्रा सिद्धैर्निरूपिता इति हठयोगपाठः ।

लोकेऽन्तःखेचरीमुद्रामज्ञात्वा बाह्यखेचरीम् ।
आलम्ब्य सत्वरं केचिज्जिह्वाछेदनकर्मणि ॥ १०४ ॥

अङ्गुष्ठं पार्ष्णिमूलं तदनु गुदमथो मेढ्रमोड्याणनाभी ।
हृद्देशः कण्ठमूलं तदनु च नवमी घण्टिका लम्बिकाथ ॥ १०५ ॥

दन्ता वै तालुनासास्थलमलिकतटं भ्रू तालोचनं चे-
त्याधाराः षोडशामी ददति परिचयात्षोडशैते फलानि ॥ १०६ ॥

दृष्टिस्थैर्यं जीवनापानबन्ध-
ब्रह्मग्रन्थ्युद्भेदजीर्णान्नताश्च ।
ओंकारोद्यन्नादहृत्पद्मबोध-
घ्राणस्थैर्याभिस्रवत्सत्सुधा च ॥ १०७ ॥

उन्मनस्त्वं च कविता ज्योतिः केवलकुम्भकम् ।
सिद्धयः किरणाज्ज्यो[1]तिःपुञ्जमाधारजं फलम् ॥ १०८ ॥

[षट्चक्राणां गुरूपदेशगम्यता]

अथवाज्ञान्तषट्चक्रं नाभिहृद्गलतालु च ।
नासाग्रकूर्चपालाश्च शिरो ब्रह्म च पश्चिमम् ॥ १०९ ॥

रविरूर्ध्वमध्यश्चन्द्रस्तालव्यधो नाभिरूर्ध्वतः ।
करणं विपरीताख्यं जानीयाद्गुरुवाक्यतः ॥ ११० ॥

[चक्राभ्यासस्ततो फलावगतिश्च]

अधश्शिरा ऊर्ध्वपादः प्रागभ्यस्येद्दिने क्षणम् ।
दिने दिनेऽधिकमिदमाषण्मासाज्जरापहम् ॥ १११ ॥

---

[1] तिः प्रज्ञमा-मु.

रज्ज्वाङ्गानीव बद्ध्वा दृढतरमनलं भञ्जयेवोदराग्नि
नाडिभ्यां वायुमाकृष्य च बहिरपि निष्कास्य चोद्दीप्य तद्वा।
कुण्डल्यङ्गं विभिद्य य इह तदनु सौषुम्नमार्गं विशोध्य
तद्द्वारासून्मनो वेशयद्धठयुतो योगिराडन्त्यचक्रम् ॥ ११२ ॥

[योगिनो धार्मिकादिषु वर्तनक्रमः]

मैत्र्या धर्मिषु वर्तेत पापिषूपेक्षया चरेत्।
दयया दुःखिषु चरेत्तुष्ट्या तुष्टेषु सञ्चरेत् ॥ ११३ ॥

[राजयोगप्रभेदाः, सङ्ग्रहेण तत्स्वरूपप्रदर्शनं च]

राजयोगस्त्रिरूपोऽसौ साङ्ख्यतारोऽमना इति।
क्रमात्स्वरूपमेतेषां सङ्ग्रहेण [1]प्रदर्श्यते ॥ ११४ ॥

ज्ञानवैराग्यभावेन तृणीकृत्य जगत्त्रयम्।
आदौ सद्गुरुमाश्रित्य तत्त्वज्ञानं समभ्यसेत् ॥ ११५ ॥

ज्ञातृत्वमन्तरिक्षं च समानो वायुरेव च।
श्रोत्रमग्निर्ध्वनिर्वारि वाग्भूः [2]खतत्त्वपञ्चकम् ॥ ११६ ॥

[3]मन एव वियद्व्यानो वायुश्चर्म धनञ्जयः।
स्पर्शोऽम्भश्च [4]क्षमा पाणिर्मरुतस्तत्त्वपञ्चकम् ॥ ११७ ॥

नभो बुद्धिरुदानश्च [5]मरुद्दृग्वह्निरेव च।
[6]पाथो रूपं धरा पादौ [7]वह्निर्यत्तत्त्वपञ्चकम् ॥ ११८ ॥

चित्तं विष्णुपदं वायुरपानो रसनानलः।
रसो जलमुपस्थं भूरपां तत्त्वानि पञ्चकम् ॥ ११९ ॥

---

[1] प्रवक्ष्यते–मु. [2] खे–शिव. [3] मनश्चैव–शिव. [4] क्षमा–मु.
[5] मरुद्दूर्वाग्नि–शिव. [6] पायू–शिव. [7] वह्निरित्यग्निप–मु.

*अहङ्कारो वियत्प्राणो वायुर्घ्राणं हुताशनः ।
आपो गन्धो मही पायुः पृथिव्यां तत्त्वपञ्चकम् ॥ १२० ॥

पञ्चविंशतितत्त्वानि पञ्चभूतस्थितानि च ।
तानि यो वेत्ति तत्त्वज्ञः [1]स एव निजमुक्तिभाक् ॥ १२१ ॥

आध्यात्मिकाधिभूता[2]धिदैवतानि यथाक्रमम् ।
दशेन्द्रियेषु विभजन् जीवान्तःकरणेषु च ॥ १२२ ॥

नाहं भूतगुणेन्द्रियाणि च मनोऽहं चित्तबुद्धिर्वपुः
[3]प्राणस्पर्शमधर्मकर्मनिरतो नैव प्रपञ्चोऽखिलम् ।
नित्यं [4]निष्कलमेकमच्युतमजं शान्तं शिवं निर्गुणम्
शुद्धं बुद्धपदं हि यत्तदहमस्मीति स्मरन् जीवति ॥ १२३ ॥

देहत्रये प्रथितषोडशधा विकारान्
लिङ्गानि सप्तदशधा नवधा पदार्थान् ।
आत्मानमष्टवि[5]धप्रकृतिस्वभावं
[6]जानन् त्वदन्य इति जीवति यो महात्मा ॥ १२४ ॥

सत्यं ज्ञानमनन्तं यद्ब्रह्मेति वदति श्रुतिः ।
मुक्तानन्दस्वरूपं च न च [7]तत्त्वमसि स्थितम् ॥ १२५ ॥

नैतदहं नैतदहं चेति [8]यदन्यं विभावयात्मानम् ।
सोऽहमिति सोऽह[9]मित्यनुभावय सर्वं त्वमात्मानम् ॥१२६॥

[10]इति ज्ञानादेव मोक्ष इत्येतद्वाक्यमादरात् ।
गृहीत्वा ज्ञानयोगेऽस्मिन् समाहितमना भव ॥ १२७ ॥

---

*अत्र "अहङ्कारस्तथा प्राणो घ्राणो गन्धो गुदं च हि ।
भूमितत्त्वानि कीर्त्यन्ते पञ्चधा तत्त्ववेदिभिः ॥" इति शिवयोगप्रदीपिकापाठः।

[1] स शिवः स तु मुक्तिभाक्—शिव. [2] धिदैविकानि—मु. [3] प्राणाश्चाश्रमधर्मकर्मनिरतो—शिव. [4] निश्चल—शिव. [5] धया प्रकृतेः स्वभावान्—शिव. [6] ज्ञात्वा—शिव. [7] तत्त्वमिति—शिव. [8] यदन्यद्विभा—शिव. [9] मिति ननु भा-शिव. [10] हृदि—शिव.

[ ब्रह्मतारकाभ्यासः ]

* मन्त्रेण लययोगेन हठयोगेन [1]सर्वदा ।
यावद्ब्रह्म न जानन्ति तावत्क्लिश्यन्ति पण्डिताः ॥ १२८ ॥

नेत्रे निमीलिते नित्यं किञ्चिदुन्मीलिते तथा ।
यो मनश्चक्षुषा ब्रह्म [2]पश्यतीति स योगिराट् ॥ १२९ ॥

शशिभास्करयोर्मध्ये तारयोः [3]स्थिरतेजसोः ।
[4]बिन्दुद्वयं च संयोज्य ब्रह्मतारकमभ्यसेत् ॥ १३० ॥

[ तारकब्रह्मदर्शिनः आन्तरानुभवः ]

बाह्यान्तर्मध्यलक्ष्येषु ब्रह्मदर्शनतत्परः ।
दृष्टादृष्टस्वरूपाणि ननु तानि [5]विलोकय ॥ १३१ ॥

मूलकन्दाद्दण्ड[6]लग्ना ब्रह्मनाडी शशिप्रभा ।
तस्या मध्ये तटित्कोटि[7]निभां तामूर्ध्वगामिनीम् ॥ १३२ ॥

मनसा लक्षयेन्मूर्तिं सदृशीं बिसतन्तुना ।
आब्रह्मरन्ध्र[8]पर्यन्तगतां सिद्धिप्रदां स्मरेत् ॥ १३३ ॥

ललाटोर्ध्वे[9]ऽथवा लक्ष्ये योगी गोलाटमण्डले ।
विस्फुरत्तारकाकारं मनसा लक्षयेत्सदा ॥ १३४ ॥

---

* अत्र शिवयोगप्रदीपिकायाम्—

अतः परं तारकं गुह्यं दृष्टप्रत्ययसंयुतम् ।
ममानुभवसंसिद्धं योगं प्राणसखे ! शृणु ॥ इति पाठो दृश्यते ।

[1]वा पुनः–मु. [2]पश्येद्योगिवरः स हि–मु. [3]सर्वतेजसोः इति मुद्रितपुस्तके पाठान्तरम् । [4]बन्धुद्वयं–शिव. [5]विलोकये–ग. [6]लग्नाव–मु [7]निभा–मु. [8]सुभगां ग–मु. [9]तथा–शिव.

अथवा कर्णयोर्द्वारे तर्जनीभ्यां निरोधयेत् ।
[1]श्रीषष्ठे मस्तके नादं [2]धुंधुंकारं शृणोति च ॥ १३५ ॥

चक्षुर्मध्येऽ[3]थवा नीलज्योतीरूपं [4]विलक्षयेत् ।
अन्तर्लक्ष्यमिति ज्ञेयं बहिर्लक्ष्यमतः शृणु ॥ १३६ ॥

[तारकब्रह्मदर्शिनो बाह्यानुभवः]

[5]नासाग्रदेशे चतुरः षडष्टौ
तथा दश द्वादश सङ्ख्ययाङ्गुलेः ।
[6]बहिःस्मरेन्नीलसुधामरक्त-
तरङ्ग[7]पीतानि सुतत्त्वपञ्चकम् ॥ १३७ ॥

अथवा [8]सम्मुखाकारं [9]स्थिरदृष्ट्या विलक्षयेत् ।
ज्योतिर्मयूखा दृश्यन्ते योगिभिर्धीरमानसैः ॥ १३८ ॥

[10]दृष्ट्यग्रे वाप्यपाङ्गे वा तप्तकाञ्चनसन्निभाम् ।
भूमिं संलक्षयेद्दृष्टिः स्थिरा भवति योगिनः ॥ १३९ ॥

अथवा शिरस[11]श्चोर्ध्वे द्वादशाङ्गुलसम्मिते ।
ज्योतिःपुञ्जं निराकारं लक्षयेन्मुक्तिदं भवेत् ॥ १४० ॥

यत्र यत्राथवा योगी तत्र तत्र विलक्षयेत् ।
[12]आकाशमिव यस्तस्य चित्तं भवति तादृशम् ॥ १४१ ॥

[13]इत्यनेकविधाकारं बहिर्लक्ष्य[14]मुदाहृतम् ।

---

[1] श्रीहृत्तम–शिव. [2] घण्टाकारं–मु. [3] तथा–शिव [4] विचिन्तयेत्–मु. विलोकयेत्–शिव. [5] नासाग्रदेशाश्चतुरः–शिव. [6] बहिस्स्थनीलं च सुधूमरक्त–शिव. [7] पीतद्रुततत्त्वपञ्चकम्–शिव. [8] सन्मुखाकारं–शिव. [9] स्थिरं दृष्ट्या–मु. [10] दृष्ट्याग्रे–ग. [11] श्चोर्ध्वे–शिव. [12] आकाशमेव–शिव. [13] इत्येवं विविधाकारं–शिव. [14] मुदीरितम्–शिव.

[तारकब्रह्मदर्शिनो मध्यलक्ष्यकथनम्]

शृणुष्व मध्यलक्ष्यं च कथितं पूर्वसूरिभिः ॥ १४२ ॥

श्वेतादिवर्णा[1]नथ खण्डचन्द्र-
सौदामिनी वह्निशिखेव [2]बिम्बात् ।
ज्वलन्नभो वा स्थलहीनमेत-
द्विलक्षयेत्तत्खलु मध्यलक्ष्यम् ॥ १४३ ॥

[व्योमपञ्चकं, तद्दर्शिनः फलं च]

निराकारं पश्येद्गुणरहितमाकाशमथवा
तमोरूपं [3]गूढं स्फुरदुरुपराकाशमथवा ।
महाकाशं कालानलनिभमथात्यन्तरुचिरं
परं तत्त्वाकाशं रविशतनिभं सूर्यखमिति ॥ १४४ ॥

व्योमपञ्चकमेतद्धि तद्बाह्याभ्यन्तरे स्थितम् ।
यः पश्यति नरो लक्ष्यं स व्योमसदृशो भवेत् ॥ १४५ ॥

[योगे तारकसंज्ञाया अर्थानुगमः]

तारणाच्च गुरुशिष्ययोर्द्वयोः
तारकोऽयमिति [4]योग ईरितः ।
तारकं भवमहाब्धितारकं
तत्त्वमेव परिशीलनं कुरु ॥ १४६ ॥

[साङ्ख्यतारयोः फलैक्यं, चर्याभेदादिकं च]

फलमेकं द्विधा चर्या यथार्थं साङ्ख्यतारयोः ।
उपाधिरहितस्साङ्ख्यो योगस्सोपाधिकः स्वयम् ॥ १४७ ॥

---

[1] नवखण्डचन्द्र–ख. [2] बिन्दून्–शिव. [3] गाढं–शिव. [4] योग-
संज्ञिकः–शिव.

[ शिवयोगिविज्ञेयातिरहस्यानि ]

पुनश्चातिरहस्यं यज्ज्योतिषां निलयं महत् ।
दिव्यलिङ्गस्थलं दृष्टमन्तर्लक्ष्यात्मकं शृणु ॥ १४८ ॥

[1]नान्तस्थं न बहिर्व्याप्तमपरोक्षस्वरूपकम् ।
आकाशाभ्यन्तराकाशमन्तर्लक्ष्यं तदेव हि ॥ १४९ ॥

लक्ष्यलीनमनसानिलेन यो
वर्तते [2]चरिततारया भवेत् ।
खेचरीयमथ सैव शाम्भवी
[3]मुद्रया समतया जगद्गुरुः ॥ १५० ॥

लोकेऽन्तःखेचरीमुद्रामज्ञात्वा बाह्यखेचरीम् ।
[4]आलम्ब्य सत्वराः केचिज्जिह्वाच्छेदनकर्मणि ॥ १५१ ॥

तालुमूलद्वादशान्तमध्यं प्रत्यक्कलात्मकम् ।
[5]यत्तत्र ज्योतिषि मनो दत्वा निजहृदि क्रमात् ॥ १५२ ॥

दृष्टिस्तु पूर्णिमा ज्ञेया दृश्यमादौ तमोमयम् ।
तन्मध्ये मनसा पश्येज्ज्योतिर्लिङ्गं सुनिश्चलम् ॥ १५३ ॥

नासाग्रदत्तनिमिषोन्मिषबाह्यदृष्ट्या
लक्ष्ये सदाशिवविमर्शकगूढदृष्ट्या ।
ज्योतिःस्वरूपममलं हृदि बाह्यहीनं
पश्यन्ति ये तदिह संयमिनः कृतार्थाः ॥ १५४ ॥

पश्चिमाभिमुखं लिङ्गमभिन्नवलयाकृति ।
त्वं पूर्वाभिमुखो भूत्वा पश्य पश्य महाद्भुतम् ॥ १५५ ॥

यदा तज्ज्योतिरोङ्कारं ब्रह्माच्युतशिवात्मकम् ।
पश्यन्ति सूरयः शान्तं तद्विष्णोः परमं पदम् ॥ १५६ ॥

---

[1] नान्तःस्थकं न–शिव. [2] चलिततारको–शिव. [3] मुद्रयास्तु कृपया–शिव.
[4] अवलम्ब्य रताः के–शिव. [5] यत्तस्मिन् ज्यो–शिव.

पूर्णेन्दुबिम्ब इव सन्मणिदीपिकेव
मध्याह्नसूर्य इव वह्निशिखेव नित्यम् ।
विद्युत्प्रभेव शिवलिङ्गमहो विचित्रं
लक्ष्यान्तरे ज्वलति पश्यति चक्षुरग्रे ॥ १५७ ॥

आत्मलिङ्गमिदं पश्य किमन्यैः कर्मविभ्रमैः ।
अहिंसाद्यष्टपुष्पैस्तु मानसैरङ्ग ! पूजय ॥ १५८ ॥

[ अहिंसाद्यष्टपुष्पाणि, तैरात्मनि सिद्धलिङ्गपूजोक्तिश्च ]

पुष्पाण्यहिंसेन्द्रियनिग्रहश्च
दयाक्षमाज्ञानसमाह्वयानि ।
ध्यानं तपस्सत्यममीभिरेव
प्रपूजयेदात्मनि सिद्धलिङ्गम् ॥ १५९ ॥

[ राजयोगिनो रीतिः ]

यो निमीलदनिमीलदम्बको
रेचपूरपरिवर्जितानिलः ।
सर्वसंशय[1]विहीनमानसो
राजयोगपदभाक् स एव हि ॥ १६० ॥

[ हठराजयोगिस्वरूपम् ]

शृङ्गाटके यस्तु मनो नियम्य
त्रिकोणगामी शशिभास्कराभ्याम् ।
बाह्यान्तरङ्ग[2]प्रणवैकगोभि-
रष्टावधानी हठराजयोगी ॥ १६१ ॥

दृग्दृश्य[3]भावसम्बन्धादुन्मन्यन्तं विचिन्तयेत् ।
[4]शिवयोगस्त्विदं गुह्यं जीवन्मुक्तिकरं [5]भवेत् ॥ १६२ ॥

---

[1] विभिन्नमा–शिव. [2] प्रवणैक–शिव. [3] मानसं–शिव. [4] शिवयोगमिदं गुह्यं–शिव. [5] मुने–शिव.

[1]वक्त्रे चापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिः स्वकरतलयोः षड्भिरेवं निरुध्य ।
श्रोत्रे नेत्रे च नासापुटयुगलमथानेन मार्गेण धीराः
पश्यन्ति प्रत्ययांस्तान् प्रणवबहुविध[2]ध्यानसंलीनचित्ताः
॥ १६३ ॥

सर्वास्ववस्थास्वकृतप्रयत्नो
निश्चिन्तभावो मृतवत्स तिष्ठन् ।
कल्लोलहीनाम्बुधिवन्निवात-
प्रदीपवत्तत्त्वमयः सुखी स्यात् ॥ १६४ ॥

ज्ञानज्ञेये ध्यानध्येये लक्ष्यालक्ष्ये भावाभावौ ।
ऊहापोहौ यो दृग्दृश्ये सर्वं त्यक्त्वा जीवन्मुक्तः ॥ १६५ ॥

[शिवपूजाप्रकारः, तस्य शास्त्ररहस्यता, तत्फलं च]

शृणु [3]चिच्छिवपूजायाः प्रकारं कथयाम्यहम् ।
रहस्यं सर्वशास्त्रार्थसारं सद्यो विमुक्तिदम् ॥ १६६ ॥

[4]निश्चिन्ता यच्छिवध्यानं निष्क्रिया तस्य पूजनम् ।
प्रदक्षिणं निश्चलत्वं सोऽहंभावो नमस्क्रिया ॥ १६७ ॥

मौनं सङ्कीर्तनं तस्य जपस्तु परिपूर्णता ।
कृत्याकृत्यज्ञता शीलं निर्वाणं समदर्शनम् ॥ १६८ ॥

[सहजावस्थितिः]

सर्वेन्द्रियगुणरहिता रूपातीता निरञ्जना शान्ता ।
भावाभावविदूरा सहजावस्थि[5]तिरसौ कथिता ॥ १६९ ॥

जाग्रत्स्वप्नः सुषुप्तिश्च तुरीयं च तथैव च ।
तुर्यातीतं च सहजं न किञ्चिच्चिन्तयेत्ततः ॥ १७० ॥

---

[1] वक्त्रेणापूर्य-शिव. [2] ध्यान–मु. [3] चिज्जीवपू–मु. [4] निश्चिन्तैव शिव–शिव.
[5] तिः सा–शिव.

विहाय [1]कर्माण्यशुभैर्युतानि
गृह्णाति कर्माणि शुभान्वितानि।
स्वर्गोन्मुखो यः पुरुषः प्रवृत्तो
नैवाधिकारी स तु जागरेऽपि ॥ १७१ ॥

अलमलमखिल[2]पदैरपि चेति कदाचिन्निवृत्तमायो यः।
स तु जाग्रदवस्थायां तिष्ठन् मोक्षोन्मुखो भवति ॥ १७२ ॥

संसारोत्तरणं ममास्ति कथमित्याचार्य[3]सन्देशनं
विद्वत्सङ्गमिता मता स्मृतिसदाचारैः समं मौनताम्।
[4]वैराग्यं श्रुतिशास्त्र[5]निश्चयधियः कामाद्यरिध्वंसनं
योगाभ्यासमुपैति [6]दम्भरहितो जाग्रत्स्वभावान्वितः॥ १७३॥

मृतो [7]जाग्रदवस्थायां यदि चेदन्यजन्मनि।
स्वप्नावस्थां गतो याति पूर्वाभ्यासवशाद्भुवि ॥ १७४ ॥

[8]स्वप्नवदखिलं लोकं पश्यन शरदभ्र[9]रूपमिव चित्ते।
तिष्ठन् सत्तामात्रः स्वप्नावस्थान्वितश्चरति ॥ १७५ ॥

गते द्वैतभावे स्थिते [10]शान्तदेशे
प्रकाशस्वभावे चिदानन्दभानौ।
बहिर्युक्तियुक्तोऽप्यहो हृत्प्रवृत्तः
सुषुप्तिस्थितश्चित्रवद्भाति योगी ॥ १७६ ॥

[11]मृतिगतोऽप्यमृतक्षयमानसो
विदितशान्ततनुर्निरहङ्कृतिः।
गलितगन्धगुणस्स तु तुर्यभाक्
[12]भवति जीवन[13]मुक्तिसुखान्वितः ॥ १७७ ॥

---

[1]कर्माण्यघसंयुतानि–शिव. [2]सुखैकपदश्चेति–शिव. [3]संसेवनम्–शिव. [4]वैराग्यश्रुति–शिव. [5]निश्चयधिया–शिव. [6]दम्भरहितं–शिव. [7]जाग्रदवस्थासु–शिव. [8]स्वप्ने यदखिलं–शिव. [9]रूप इव–शिव. [10]शान्तिशेषे–शिव. [11]अनभृतोऽप्यमृ–शिव. [12]वहति जीवति–शिव. [13]मुक्तिमभावनः–शिव.

सम्पूर्णकुम्भ इव वारिनिधानमध्ये
संशून्यकुम्भ इव विष्णुपदान्तराले।
अन्तर्बहिः प्रथितपूर्णसशून्यभावः
सच्चित्रदीप इव भाति तुरीययुक्तः ॥ १७८ ॥

कैश्चिद्ब्रह्मेति कैश्चिद्धरिरिति शिव [1]इत्येव कैश्चिच्च नाना-
भेदैः [2]प्रोक्तः स शून्यः प्रकृतिपुरुषकालार्थ[3]रूपेण [4]कैश्चित्।
लोकैरन्यैर्विकल्पैर्बहुतरवचनैर्हयुक्तोऽपि नित्यं
मुक्तः स्याद्य[5]स्तुरीयाधिकविनुतसमाख्यामवस्थां समेत्य
॥ १७९ ॥

तस्मात्सर्वप्रयत्नेन क्रमादभ्यासयोगतः।
[5]तुरीयातीतामवस्थां समासाद्य सुखी भव ॥ १८० ॥

सर्वावस्थां गतो वापि सर्वावस्थां न संस्मर।
त्यज सङ्गमशेषं च मनोऽन्तर्बहिरन्वितम् ॥ १८१ ॥

निवर्तयान्यकर्माणि शिवयोगं प्रवर्तय।
सहजाममनस्कां तां मुद्रां संविन्मयां भज ॥ १८२ ॥

आत्मानं गगनं कृत्वा बिन्दुं कृत्वा तथैव च।
द्वयं समरसं कुर्यादमनस्ककला हि सा ॥ १८३ ॥

सचराचरजगदखिलं यत्किञ्चिदिदं [6]तद्भवेन्मनो दृश्यम्।
*तस्मिन्नमनस्काख्यां यतोऽवस्थां लभेत शिवतत्त्वम् ॥१८४॥

[ नादादीनां लयाद्यात्मना श्रेष्ठयोक्तिः ]

नाद एव लयः श्रेष्ठः मुद्राणां खेचरी परा।
[7]ध्येयः श्रेष्ठो निरालम्बो [8]ह्यवस्थायां मनोन्मनी ॥ १८५ ॥

---

* इतः पूर्वं शिवयोगदीपिकायाम्—
"मनसोऽप्युन्मनितां याति स तत्त्वं कथं न भवेत्" इति पाठो वर्तते।

[1] इत्यादि-शिव. [2] प्रोक्त-शिव. [3] रूपीति-शिव. [4] कैश्चिल्लोकै-विकल्पात्मकव-शिव. [5] स्तुरीयातीतसमाख्यामव-शिव. [6] भवेन्मनो-शिव. [7] योगश्रेष्ठो-शिव. [8] ह्यवस्थासु-शिव.

राजयोगस्य मुद्रां तामेत्य योगी मनोन्मनीम् ।
विस्मरत्यखिलान् लोकान् बालोन्मत्तपिशाचवत् ॥ १८६ ॥

[जीवन्मुक्तेर्योगोपलभ्यत्वं, तस्य सर्वदर्शनसम्मतत्वं च]

जीवन्मुक्तिप्रकारस्तु योगादेव न चान्यतः ।
स एव सिद्धिदः सम्यक्सर्वदर्शनसम्मतः ॥ १८७ ॥

[शिवयोगस्य यम्यत्यावश्यकता]

तस्मात्संसेव्य एवंविध इह [1]यमिनां श्रेयसे योगमार्गो
ह्यालस्यं धूर्तसङ्गं स्वजन[2]कुमतिशास्त्रान्ध[3]कारांश्च रोगान् ।
जित्वा [4]मूलान्तरायान् पुनरपि च महायोगजैश्वर्यसिद्धीः
त्यक्त्वा स्थित्वा सुदेशे सुजनपरिवृतेऽबाधिते धर्मराज्ये ॥ १८८ ॥

[योगविद्याप्रदर्शनोपसंहारः, शिवभूपतेः शिवयोगपरता च]

एवं योगाभिधा विद्या सङ्ग्रहेण प्रदर्शिता ।
एवं वेङ्कटभूपाय योगविद्यां प्रदर्शयन् ॥ १८९ ॥

मातृवत्परदारांश्च परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ १९० ॥

वाचमित्यर्थभूयिष्ठां सङ्क्षेपेणोपदिश्य ताम् ।
स्वयं शिवमहीपालः शिवयोगपरोऽभवत् ॥ १९१ ॥

[वेङ्कटभूपतेः सह सुताभ्यां धर्मेण राज्यशासनम्]

ततो वेङ्कटभूपालः शशास धरणीमिमाम् ।
सुताभ्यामर्थकामाभ्यामिव धर्मस्समाहितः ॥ १९२ ॥

इति श्रीमदनाद्यनन्तसकलतत्त्वोत्तीर्णषडध्वोपादानबिन्दुकारणचिदम्बरशक्तिसमन्वित-
परमेश्वरप्रसादासादितशिवाद्वैतविद्याविशारदश्रीमत्केळदीबसवराजेन्द्रविरचिते
शिवतत्त्वरत्नाकरे सप्तमकल्लोले योगोपदेशवर्णनं नाम पञ्चदशस्तरङ्गः

---

[1] यमिना–शिव. [2] कुपितशा–शिव. [3] करोत्ररोगान्–शिव. [4] मन्वन्तरा-यान्–शिव.

[सप्तमकल्लोलीयविषयाकरग्रन्थाः]

हरमेखलिकातन्त्रं मेरुतन्त्रं ततः परम् ।
मानसोल्लासमपि-कौतुकचिन्तामणिं तथा ॥ १ ॥

वाग्भटं चामृतानन्दकृतिं च दशरूपकम् ।
विद्यानाथकृतिं चैव पुराणानां समुच्चयम् ॥ २ ॥

सामुद्रतिलकं होराशास्त्रं वाराहसंहिताम् ।
बार्हस्पत्यं पालकाप्यं शालिहोत्रं च गारुडम् ॥ ३ ॥

नलस्य नकुलस्यापि मतं पाराशरं तथा ।
शिवयोगं शिवालोकं हठयोगप्रदीपिकाम् ॥ ४ ॥

एताः कृतीः समालोक्य ग्रन्थान् सङ्गृह्य तद्गतान् ।
पूरितोऽयं समभवत्कल्लोलः [1]सप्तमस्त्वयम् ॥ ५ ॥

तरङ्गैः पञ्चदशभिः शोभमानो विशेषतः ।
एकाशीत्यभ्यधिकया चतुश्शत्या समन्वितम् ॥ ६ ॥

सहस्रद्वितयं ग्रन्थाः कल्लोले त्वत्र सप्तमे ।

श्रीमत्सद्गुणसोमशेखरलसच्चन्नाम्बिकासूनुना
श्रीदीक्षागुरुचन्नवीरकरसञ्जातेन विद्याब्धिना ।
शम्भौ दत्तहृदा सदापि बसवक्षोणीभृता निर्मिते
कल्लोलः परिपूरितः कृतिवरे त्वस्मिन्नभूत्सप्तमः ॥ ७ ॥

———

[1] सप्तमोऽधुना—मु.

# अष्टमकल्लोले

## प्रथमस्तरङ्गः

### व्यवहारपदनिरूपणम्

[शङ्करप्रार्थना]

*भीते वैयाघ्रकृत्तेर्द्रुतवति वृषभे धारयन्नैभचर्म
द्राक् सिंहे शैलजायास्तदनु गजधिया हन्तुमायाति सैंहम्।
बिभ्राणश्चर्म तस्मादुदितभियि मृगे तच्च मुञ्चन् विलक्षं
दृष्टस्साकं सखीभिः गिरिवरसुतया शङ्करः शं करोतु ॥ १ ॥

[कुमारस्य वेङ्कटभूपतिचरितप्रश्नः, बसवभूपतेस्तदुत्तरोक्तिप्रतिज्ञा च]

स्वामिन् ! कथितमाश्चर्यं चरित्रं शिवभूपतेः।
आकर्ण्य विस्मयानन्दमन्थरं मामकं मनः ॥ २ ॥

नामधेयानुरूपं हि तच्चरित्रं विभावये।
अधुना श्रोतुमिच्छामि वेङ्कटाख्यमहीपतेः ॥ ३ ॥

चरितं स्फुरितं सम्यक् तन्मह्यं प्रकटीकुरु।
पुत्र ! ते विशदा बुद्धिर्यद्गुरून् श्रोतुमीहसे ॥ ४ ॥

यदभीष्टं तव श्रोतुं तद्ब्रवीमि विभावय।

[वेङ्कटभूपते राज्यरक्षणक्रमः]

शिवभूपात्समासाद्य क्षमां स्वसहजक्षमः ॥ ५ ॥

स्वयं शिवमहीपालप्रोक्तधर्मेण सञ्चरन्।
एकपत्नीव्रतपरः प्रकृतीरनुरञ्जयन् ॥ ६ ॥

---

* इत आरभ्य "शृणु पुत्र ! कृतादरः" इत्यन्तो ग्रन्थः ख पुस्तके नास्ति।

सत्यव्रतैकनिरतः शिवाधिक्यं विभावयन् ।
श्रीवेङ्कटमहीपालो रक्षति स्म क्षमामिमाम् ॥ ७ ॥

ज्येष्ठसम्पादितं राज्यमवन्नवनिवर्तिनाम् ।

[वेङ्कटभूपतिना द्विविधदेवानां पूजाविधानं, तस्य त्यागभोगयोरप्रतिमता च]

देवानां द्विविधानां च पूजां पुनरवर्तयत् ॥ ८ ॥

त्यागे चानन्यसामान्ये भोगे च परदुर्लभे ।
यमेकमेव भुवने वदन्त्यप्रतिमं बुधाः ॥ ९ ॥

[वेङ्कटभूपतिना गुरुजङ्गमानां नूतनपूजापरिकल्पनम्]

ये भावनीया गौरीशादभेदेन महत्तराः ।
गुरूणां श्रीजङ्गमानां पूजनार्थं मनोहरम् ॥ १० ॥

पादपूजाह्वयं धर्मं नूतनं पर्यकल्पयत् ।
चरशङ्कररूपाणां परितोषार्थमादरात् ॥ ११ ॥

[1]दासोऽहनामकं धर्मं महान्तं पर्यकल्पयत् ।
अवन्नेवं बहोः कालादवनीं स्वाग्रजन्मनः ॥ १२ ॥

[वेङ्कटप्पनायकेन भद्रप्पनायकस्य राज्यपट्टाभिषेकः,
तस्मिन्नखिलराज्यभारस्थापनं च]

कुमारमग्रजन्मानं नाम्ना भद्रप्पनायकम् ।
अभिषिक्तं पदे स्वस्य कारयामास दक्षिणम् ॥ १३ ॥

उपादिशदयं तस्मै व्यवहारक्रमानपि ।
राज्यभारं बहोः कालाद्वहन् शान्त इवाधिकम् ॥ १४ ॥

मतिमा[2]न्विदधौ तस्मिन् सर्वधूर्वहनक्षमे ।

---

[1] दासोऽहं नामकं–मु. [2] न्निदधे–मु.

[शिवभूपतेः शिवयोगपरत्वम्]

ततः स्वयम्भूर्नित्यं शिवयोगैकतत्परः ॥ १५ ॥

[भद्रप्पनायकस्य राज्यपरिपालनम्]

ततो महामहीपति[1]प्रतिमानो भुजे वहन् ।
भद्रप्पनायको नित्यं भूमण्डलमपालयत् ॥ १६ ॥

[वेङ्कटभूपतिना भद्रभूपाय दर्शिता व्यवहारक्रमाः]

वेङ्कटक्षोणिपालेन भद्रभूपाय दर्शितान् ।
व्यवहारक्रमान् ब्रूमः शृणु पुत्र! [2]कृतादरः ॥ १७ ॥

[राज्ञो व्यवहारदर्शनम्]

व्यवहारान्नृपः पश्येद्विद्वद्भिः ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १८ ॥

[सभ्याः, तेषां लक्षणं च]

श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ १९ ॥

[राज्ञो व्यवहारदर्शनेऽनुकल्पः]

अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ २० ॥

[स्मृत्याचारविरुद्धकारिणां सभ्यानां प्रत्येकं दण्डः, तत्परिमाणं च]

रागाल्लोभाद्भयाद्वापि स्मृत्यपे[3]तादिकारिणः ।
सभ्याः पृथक् पृथक् दण्ड्या विवादाद्द्विगुणं दमम् ॥ २१ ॥

---

[1] प्रतिमाने—मु. [2] स्वमादराव्—मु. [3] ताधिका—मु.

*[व्यवहारविषयः]

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ २२ ॥

[अर्थिलेख्यलेखनविधानम्]

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।
[1]समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ २३ ॥

[प्रत्यर्थिन उत्तरलेखनम्]

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।

[अर्थिनः स्वसाध्यसाधकप्रमाणलेखनं, तत्सिद्ध्यन्वयव्यतिरेकाभ्यां जयापजयौ च]

[2]तन्मूर्ध्नि लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ २४ ॥
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ।

[व्यवहारस्वरूपोपसंहारः]

[3]चतुष्पाद्व्यवहारोऽयं विवादेषूप[4]दर्शितः ॥ २५ ॥

[व्यवहारविशेषे विशेषोक्तिः]

अभियोग[5]मनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन [6]नोक्तं [7]विप्रकृतिं नयेत् ॥ २६ ॥

[कलहादौ अभियोगमित्याद्युक्तस्यापवादः]

कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।

---

* प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारः तस्य विषयः इत्यर्थः ।

[1] समामान—मु. [2] ततोऽर्थी—या. स्मृ. [3] चतुर्थो—मु. पा. [4] वर्णितः—मु. [5] भभिस्तीर्य—मु. [6] मोक्तं—ख., ग. [7] विप्रकर्ति—मु. पाठान्तरम् ।

[व्यवहारे प्रतिभूकरणम्]

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ २७ ॥

[साक्ष्यधीननिर्णयकार्यम्]

निह्नवे भावितो दद्याद्धनं [1]राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ २८ ॥

[कालाप्रतीक्षणेनोत्तरदानयोग्यव्यवहारपदानि]

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ २९ ॥

[अभियोगसाक्ष्ययोरयोग्या व्यवहाराः]

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ ३० ॥

परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक् चक्षुः पूजयति नो [2]तथोष्ठौ निर्भुजत्यपि ॥ ३१ ॥

स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
[3]अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः ॥ ३२ ॥

[अर्थहानिदण्डनयोर्योग्याः]

सन्दिग्धार्थं स्वत[4]न्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किञ्चिद्धीनो दण्डयश्च [5]स स्मृतः ॥ ३३ ॥

---

[1] राज्ञश्च–ख.  [2] तथोष्ठं–ख., मु.  [3] अभियोगो–ग.  [4] न्त्रोऽयं–मु.
[5] संस्मृतः–ख., मु.

[युगपत्प्राप्तयोर्विवदमानयोर्विषये कर्तव्यम्]

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ ३४ ॥

सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।
दण्डं च सपणं चैव धनिने धनमेव च ॥ ३५ ॥

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ ३६ ॥

[भूतानुपन्यासे व्यवहारहानावुदाहरणम्]

[1] निह्नवे लिखितेऽनेकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ ३७ ॥

[स्मृत्योर्विरोधे वृद्धव्यवहारसिद्धन्यायस्य प्राबल्यम्]

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।

[अर्थधर्मशास्त्रयोर्विरोधे धर्मशास्त्रप्राबल्यम्]

अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ ३८ ॥

[प्रतिज्ञातार्थसाधकप्रमाणानि]

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति [2] कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ ३९ ॥

[पूर्वोत्तरकार्ययोरुत्तरस्य बलवत्त्वम्]

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।

[आधिप्रतिग्रहक्रयेषु पूर्वकार्यस्य प्राबल्यम्]

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ ४० ॥

---

[1] निह्नुते लिखिते—या. स्मृ. [2] निश्चितम्—मु.

[भुक्तिविशेषे कार्यान्तरम्]

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ ४१ ॥

[1]अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ ४२ ॥

[पूर्वोक्तभुक्तिविशेषकार्यान्तरापवादस्थानानि]

आधिसीमोपनिक्षेपजडबालधनैर्विना ।
तथोपनिधिराज[2]स्त्रीश्रोत्रियाणां धनैरपि ॥ ४३ ॥

[आध्यादिषु दण्डविशेषः]

आध्यादीनां विहर्तारं धनिने दापयेद्धनम् ।
दण्डं च तत्समे राज्ञे [3]शक्त्यपेक्षमथापि वा ॥ ४४ ॥

[आगमसमनियतभोगस्य प्रामाण्यम्]

आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।
आगमोऽपि बलं नैव भुक्तिस्तोकापि यत्र नो ॥ ४५ ॥

[भूमिधनयोर्विंशतिवर्षदशवर्षोपर्यभियोगे व्यवस्था]

आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ ४६ ॥

[आगमज्ञाननिरपेक्षभोगप्रामाण्यापवादः]

योऽभियुक्तः परेतः स्यात्तस्य [4]रिक्थी तमुद्धरेत् ।

---

[1] याज्ञवल्क्यस्मृतावत्र अयं श्लोको नोपलभ्यते । [2] श्री–मु.
[3] शक्त्युपेक्ष–ख., मु. [4] रीक्थिन–मु., तीर्थे स–मु. पा.

न तत्र कारणं भुक्तिरागमेन विना कृता ॥ ४७ ॥

[व्यवहारविशेषे व्यवस्थायै व्यवहारदर्शिनां बलाबलोक्तिः]

नृपेणाधिकृताः पूगाः श्रेणयोऽथ [1]कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ४८ ॥

[प्रबलदृष्टव्यवहाराणामपि केषाञ्चन निवर्तनम् ]

बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।
स्त्री[2]नक्तमन्तरागारबहिश्शत्रु[3]कृतांस्तथा ॥ ४९ ॥

[असिद्धव्यवहाराः]

मत्तोन्मत्तार्तव्यसनिबलभीतादियोजितः ।
[4]असम्बन्धकृतश्चैव व्यवहारो न सिध्यति ॥ ५० ॥

[द्रव्ये परावर्तनम् ]

प्रणष्टाधिगतं देयं नृपेण धनिने धनम् ।
विभावयेन्न चेल्लिङ्गैः तत्समं दण्डमर्हति ॥ ५१ ॥

[निधिलाभे व्यवस्था]

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादत्ते स सर्वस्य प्रभुर्यतः ॥ ५२ ॥

इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञातो [5]दाप्यस्तं दण्डमेव च ॥ ५३ ॥

---

[1] बलानि–मु. [2] सक्त–मु., ख. [3] श्रुता–ख. [4] असम्बद्ध–या. स्मृ.
[5] दाप्यस्तद्दण्डमेव–मु., ख.

[चोरापहृतद्रव्यस्य स्वामिने प्रदापनम्]

देयं [1]चोरहृतं द्रव्यं राज्ञा जानपदाय [2]तु।
अददद्धि समाप्नोति किल्बिषं [3]तस्य यस्य तत् ॥ ५४ ॥

[ऋणदाने वृद्धिव्यवस्था]

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ ५५ ॥

[ऋणग्रहीतृविशेषे वृध्याधिक्यम्]

कान्तारगास्तु दशकं सामुद्रा विंशतिं शतम्।

[ब्राह्मणादिषु प्रतिमासं स्वकारितवृद्धिप्रदानम्]

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ५६ ॥

[रक्षणासमर्थेन स्त्रीपशुप्रयोगे वृद्धिव्यवस्था]

[4] सन्ततिस्तु पशुस्त्रीणां

[वृद्धिग्रहणमन्तरा चिरावस्थितद्रव्यविशेषे परवृद्धिव्यवस्था]

रसस्याष्टगुणा परा।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ ५७ ॥

[प्रयुक्तधनग्रहणधर्माः]

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्।
साध्यमानो नृपं गच्छन् [5]दण्ड्यो दाप्यश्च तद्धनम् ॥ ५८ ॥

[बहूनामुत्तमर्णानां युगपत्प्राप्तावेकस्याधमर्णस्य धनदानप्रकारः]

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः।
दत्त्वा तु ब्राह्मणायैव नृपतिस्तदनन्तरम् ॥ ५९ ॥

---

[1] चौर–या. स्मृ. [2] च–मु., तत्–ख. [3] यस्य तस्–या. स्मृ.
[4] सप्तति–मु. [5] दण्डो–मु.

[उत्तमर्णे दुर्बले राज्ञा धनसाधनेऽधमर्णोत्तमर्णयोः कार्यव्यवस्था]

राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं च शतं [1] दाप्यं प्राप्तार्थो ह्युत्तमर्णिकः ॥ ६० ॥

[अधमर्णस्य निर्धनत्वे कार्यव्यवस्था]

हीनजातिं परिक्षीणमृणार्थे कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ६१ ॥

[अधमर्णेनोत्तमर्णाय प्रत्यर्पितधनस्य तेनाग्रहणे मध्यस्थस्थापितस्य तस्य वृध्द्यभावः]

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।
मध्यस्थ[2]स्थापितं [3]तत्स्याद्वर्धते न ततः परम् ॥ ६२ ॥

[कुटुम्बिनाविभक्तकुटुम्बार्थे गृहीतर्णस्य तस्मिन्मृते प्रोषिते वा दानव्यवस्था]

अविभक्तैः कुटुम्बार्थे यद्दणं [4]तु कृतं भवेत् ।
दद्यु[5]स्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ६३ ॥

[कुटुम्बार्थादृते योषिदादिभिः कृतर्णस्य पत्यादिभिरदेयता]

न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ६४ ॥

[परस्ताद्वक्ष्यमाणस्य पुत्रपौत्रदेयपितृऋणस्यापवादः]

सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ६५ ॥

---

[1] दाप्यः—मु. [2] स्थापिते—मु., ख. [3] चेद स्या—या. स्मृ. [4] हि—मु.
[5] स्तद्धणिनः—मु., म.

[योषित्कृतर्णस्य पत्यदेयत्वापवादः]

गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया॥ ६६॥

[पतिकृतर्णस्य पत्न्यदेयत्वापवादः]

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्।
स्वयंकृतं वा यदृणं नान्यत् स्त्री दातुमर्हति॥ ६७॥

[पितुः प्रोषितत्वादौ पुत्रपौत्रयोस्तदृणापाकरणक्रमः]

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्॥ ६८॥

[तत्र कर्त्रन्तरसमवाये ऋणापाकरणक्रमः]

[1]रिक्थग्राही ऋणं दाप्यो योषिद्ग्राह[2]स्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥ ६९॥

[पुरुषविशेषे ऋणग्रहणप्रतिषेधः, प्रासङ्गिकनिषेधान्तरं च]

भ्रातृणा[3]मथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रतिभाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतम्॥ ७०॥

[प्रातिभाव्यनिरूपणं, तत्स्पष्टीकरणं च]

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि॥ ७१॥

दर्शनप्रतिभूर्यत्र मृतः [4]प्रात्ययिकोऽपि वा।
न तत्पुत्रा ऋणं दद्युः दद्युर्दानाय यः स्थितः॥ ७२॥

[प्रतिभूबाहुल्ये, तदैक्ये च ऋणदापनक्रमः]

बहवः स्युर्यदि स्वांशैः दद्युः प्रतिभुवो धनम्।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि॥ ७३॥

---

[1] रिक्थग्राह—या. स्मृ. [2] स्तदैव—मु. [3] मथर्रं पत्योः—मु. [4] प्रत्ययि—मु.

[प्रतिभूदत्तस्य प्रतिक्रियाविधिः]

प्रतिभूर्दापितो [1]यत्र प्रकाशं [2]धनिनां धनम् ।
द्विगुणं प्रतिदातव्यं ऋणिकैस्तस्य तद्भवेत् ॥ ७४ ॥

[प्रतिभूदत्तस्य सर्वत्र द्वैगुण्यप्राप्तौ तदपवादः]

सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ ७५ ॥

['आधिः प्रणश्येत्' इति पूर्वोक्ताधिप्रणाशापवादः]

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।
[3]काले कालकृतो नश्येत्फल[4]भाग्यो न नश्यति ॥ ७६ ॥

गोप्याधि[5]भोगे नो वृद्धिः सोपकारेऽथ [6]हापिते ।
नष्टो देयो विनष्टश्च [7]राजदैवकृतादृते ॥ ७७ ॥

आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ७८ ॥

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
[8]सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ७९ ॥

उपस्थितस्य [9]मोक्तव्य आ[10]धिः स्तेनोऽन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात् ॥ ८० ॥

[प्रयोक्त्रायसंन्निधावधमर्णस्याधिविक्रयेण धनदित्सायां कर्तव्यम्]

तत्कालकृतमूल्ये वा तत्र तिष्ठेदवृद्धिकः ।

[अधमर्णासन्निधौ धनिनो ऋणकालोत्तरीत्या द्विगुणीभूतधनेच्छायां आधिविक्रयक्रमः]

विना धारणिकाद्वापि विक्रीणीत ससाक्षिकम् ॥ ८१ ॥

---

[1] यत्तु—या. स्मृ., यस्तु—मु. [2] धनिनो ध—या. स्मृ. [3] कालोऽकाल—मु. [4] भोग्यो—या. स्मृ. [5] योगे—मु. [6] पोषिते—मु. पा. [7] दैवराज—या. स्मृ., राजदेव—मु. [8] सत्यंकार—मु. [9] भोक्त—ग. [10] धिस्तेनान्य—मु.

[प्रयुक्तधनद्विगुणीभावे भोग्याधौ विशेषः]

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ८२ ॥

[पूर्वोक्तविशेषस्यापवादः]

यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी ।
ऋणी न लभते बद्धं परस्परमतं विना ॥ ८३ ॥

[उपनिधिः, तत्प्रत्यर्पणं च]

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ ८४ ॥

[उपनिधिप्रदानस्यापवादः, तद्रूपे राजकर्तव्यं च]

नादाप्योपहृतं [1] तत्तु राजदैविकतस्करैः ।
[2] भ्रेषश्चेन्मार्गिते[3]ऽदत्ते दाप्यो दण्डं च तत्समम् ॥ ८५ ॥

[स्वाम्यननुज्ञया उपनिधिभोक्तरि कर्तव्यम्]

[4] आजीवं स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।

[उपनिधिधर्माणां याचितादिष्वतिदेशः]

याचितान्वाहितन्याससनिक्षेपादिष्वयं विधिः ॥ ८६ ॥

[साक्षिस्वरूपं, तत्सङ्ख्या च]

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ ८७ ॥

त्र्यवरास्साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ८८ ॥

---

[1] तं तु-या. स्मृ. [2] भ्रष्टश्चे-मु. [3] दत्ते-मु. [4] आजीवन्स्वे-या. स्मृ

[साक्ष्येऽनर्हाः]

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥ ८९ ॥

पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ९० ॥

[वादिप्रतिवादिसम्मतस्यैकस्यापि धर्मविदः साक्ष्येऽभ्युपगमः]

उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

[सङ्ग्रहणादिषु तपआदिरहितानामपि साक्ष्याभ्यनुज्ञा]

सर्वः साक्षी सङ्ग्रहणे चौर्यपारुष्यसाहसे ॥ ९१ ॥

[वादिप्रतिवादिसन्निधौ साक्ष्यश्रावणं, अनृतसाक्ष्ये फलं च]

साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।
[1] ये च [2] पातकिनां लोका महापातकिनां तथा ॥ ९२ ॥

अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।
स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ९३ ॥

सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे [3] मृषा ॥ ९४ ॥

[साक्ष्यमङ्गीकृत्य साक्ष्यानुक्तौ कर्तव्यम्]

अब्रुवन् हि नरः साक्ष्यमृणं * सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात्षट्चत्वारिंशकेऽहनि ॥ ९५ ॥

---

* दशमांशसहितमित्यर्थः ।

[1] ये पातकीकृता लो–मु. [2] पातककृतां लोकाः–या. स्मृ. [3] वृथा–या. स्मृ. पा.

[विशेषतो विप्रतिपन्नार्थज्ञेन साक्ष्यानङ्गीकारे कर्तव्यम्]

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैः तुल्यो दण्डेन चैव हि ॥ ९६ ॥

[साक्षिविप्रतिपत्तौ कार्यनिर्णयप्रकारः]

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ९७ ॥

[साक्ष्युक्तसत्यमिथ्यावादाभ्यां वादिप्रतिवादिनोर्जयपराजयौ]

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ९८ ॥

[प्रतिज्ञातार्थविपरीतवादिषु पूर्वसाक्षिषु गुणाधिकैस्तेषां कूटसाक्षीकरणम्]

उक्तेऽपि साक्षिभिस्साक्ष्ये [1]यद्यन्ये गुणवत्तमाः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः [2]पूर्वसाक्षिणः ॥ ९९ ॥

[कूटसाक्षिणां दण्डाः]

पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मण[3]स्तथा ॥ १०० ॥

[जानता साक्ष्यानङ्गीकारे दण्डाः]

यस्साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ १०१ ॥

[साक्ष्यावचनासत्यवचनप्रतिषेधयोरपवादः, तत्र प्रत्यवायनिराकरणोपायश्च]

वर्णिनां हि वधो यत्र [4]तत्र साक्ष्यनृतं वदेत् ।
[5]तत्पावनाय [6]निर्वाप्यः चरुः सारस्वतो द्विजैः ॥ १०२ ॥

---

[1] यदन्ये–मु. [2] सर्वसा–मु. [3] स्स्मृतः–या. स्मृ. [4] साक्ष्यं तत्रानृतं–या. स्मृ. पा. [5] तप्पावनाय–मु., ग. [6] निर्याप्यः–मु.

[लेख्याऽन्यकृतलेख्यविधिः]

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन् धनिकपूर्वकम् ॥ १०३ ॥

समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ १०४ ॥

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ १०५ ॥

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकस्साक्षी लिखेयुरिति ते समाः ॥ १०६ ॥

उभयाभ्यर्थिते[1]नैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥ १०७ ॥

[स्वकृतलेख्यविधानम्]

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥ १०८ ॥

[लेख्यप्रसङ्गेन तदारूढर्णदातृनियमः]

ऋणं लेख्यकृतं देयं पुरुषैः त्रिभिरेव तु ।

[तस्यापवादः]

आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥ १०९ ॥

[पत्रस्य देशान्तरस्थितत्वे व्यवहाराक्षमत्वादौ वा पत्रान्तरकरणम्]

देशान्तरस्थे [2]दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धेऽथ वा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ ११० ॥

---

[1] ऽप्येतन्म–मु. [2] दुर्लेख्ये–मु.

[लेख्यसन्देहे निर्णायकानि]

सन्दिग्धे लेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥ १११ ॥

[पत्रशोधनानन्तरमृणदाने कृत्स्नर्णदानाशक्तौ कर्तव्यम्]

लेख्यस्य पृष्ठेऽभिलिखेद्दत्वा [1]दत्वार्णिको धनम् ।
धनी [2]चोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥ ११२ ॥

[कृत्स्नर्णदानानन्तरं लेख्यस्येतिकर्तव्यता]

दत्वार्णं पाटयेल्लेख्यं शुद्धयै [3]चान्यत्तु कारयेत् ।

[ससाक्षिककृत्स्नर्णदाने कर्तव्यप्रकारः]

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥ ११३ ॥

[दिव्यप्रमाणानि, तेषां महाभियोगविषयता, तदपवादश्च]

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ ११४ ॥

['ततोऽर्थी' इत्याद्युक्तभावप्रतिज्ञावादिव्यवस्थापवादः]

रुच्या वान्यतरः [4]कुर्यादितरो वा *वर्तयेच्छिरः ।

[तुलादिषु अवष्टम्भाभियोगेष्वेवेत्यस्यापवादः]

विनापि शीर्षकात्कुर्यान्नृपद्रोहेऽथ पातके ॥ ११५ ॥

[दिव्ये साधारणनियमाः]

सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ११६ ॥

---

* शरीरमर्थदण्डं वा अङ्गीकुर्यादित्यर्थः ।

[1] तत्पार्णिको—मु. पा. [2] चोपगतं—या. स्मृ. [3] वान्यत्तु—या. स्मृ.
[4] कार्यो वर्तनेदितरः शिरः—मु.

[तुलादिष्वधिकारिव्यवस्था]

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मण[1]रोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ११७ ॥

[अभियोगमहत्त्वावधिः]

नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।

[नृपद्रोहादौ सदा तुलादिपरिग्रहः]

नृपार्थेष्वभिशापे च वहेयुश्शुच[2]यस्तथा ॥ ११८ ॥

[तुलादिव्यप्रयोगः]

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥ ११९ ॥

त्वं तुले ! सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि ! संशयान्मां [3]विमोचय ॥ १२० ॥

यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ १२१ ॥

[तुलायां शुध्यशुद्धिपरिचयक्रमः]

(*तुलितो यदि वर्धेत स शुद्धः स्यान्नात्र संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥ १२२ ॥

[4]कक्ष्याछेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
[5]रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥ १२३ ॥)

---

* धनुरन्तर्गतौ श्लोकौ याज्ञवल्क्यस्मृतौ न दृश्येते ।

[1] रोगिणीम्–मु. [2] यस्सदा–या. स्मृ. [3] विशोधय–या. स्मृ. पा.
[4] कक्ष्याच्छेदे–मु. [5] रज्जुवेधे–ख.

[अग्निदिव्यपरीक्षाक्रमः]

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत्।
सप्ताश्वत्थस्य पर्णानि तावत्सूत्रेण वेष्टयेत् ॥ १२४ ॥

त्वमग्ने! सर्वभूतानामन्तश्चरसि पावक!।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे! मम ॥ १२५ ॥

तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम्।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ १२६ ॥

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्।

[मण्डलमण्डलान्तरयोः प्रमाणम्]

षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ १२७ ॥

[अग्निदिव्ये शुद्धिपरिचयः, सन्देहे पुनरनुष्ठानं च]

मुक्ताग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्।
अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ॥ १२८ ॥

[उदकपरीक्षाविधिः, ततः शुद्धिपरिचयश्च]

सत्येन माभि[1]रक्षस्व वरुणे[2]त्यभिशाप्य कम्।
नाभिदघ्नोदकस्थस्य [3] गृहीत्वोरूदकं विशेत् ॥ १२९ ॥

समकालमिषुं मुक्तमानीयान्यो जवी नरः।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ १३० ॥

[विषपरीक्षाविधिः]

त्वं विष! ब्रह्मणः पुत्र! [4]सत्ये धर्मे व्यवस्थितः।

---

[1] रक्ष त्वं—या. स्मृ. [2] अभिशप्य—या. स्मृ. पा. [3] गृहीत्वोरु जलं—या. स्मृ. [4] सत्यधर्मे—मु., ख.

त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥ १३१ ॥

एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥ १३२ ॥

[कोशपरीक्षाविधिः, ततः शुद्धिपरिचयश्च]

देवानुग्रान् समभ्यर्च्य तत्स्नानोदक[1]माहरेत् ।
संश्राव्य पाययेत्तस्मा[2]ज्जलात्तु प्रसृतित्रयम् ॥ १३३ ॥

अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ १३४ ॥

[पितुः दायविभागक्रमः]

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा [3]स्युस्समांशकाः ॥ १३५ ॥

[तत्र पत्नीनां स्त्रीधनादाने विशेषः]

यदि कुर्यात्समानंशान् पत्न्यः कार्याः [4]समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ १३६ ॥

[श्रेष्ठभागसमांशयोरपवादः]

शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक्क्रिया ।
न्यूनाधिकविभक्तानां [5]धर्म्यः पितृकृतः स्मृतः ॥ १३७ ॥

[मातापित्रोरनन्तरं सुतानां रिक्थर्णविभागक्रमः]

विभजेरन् सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ।

---

[1] माचरेत्-मु. [2] ज्जलं तु-या. स्मृ. [3] समभागिनः-मु.
[4] समांशकाः-मु. [5] धर्मः-मु.

[मातुरनन्तरं तद्धनस्य दुहितृगामित्वं, तदभावे तस्य पुत्रग्राह्यता च]

मातुर्दुहितरश्शेषमृणात्ताभ्य ऋतेऽन्वयः ॥ १३८ ॥

[अविभाज्यद्रव्यम्]

पितृद्रव्याविरोधेन यदन्यत् स्वयमार्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ १३९ ॥

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ १४० ॥

[तदपवादः]

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।

[पौत्राणां पैतामहद्रव्यविभागे विशेषः]

अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १४१ ॥

[तत्रैव विशेषान्तरम्]

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥ १४२ ॥

[विभागानन्तरजातस्य धनभागः]

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

[पितुरूर्ध्वं पुत्रेषु विभक्तदायेषु पश्चादुत्पन्नस्य दायभागः]

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १४३ ॥

[विभागात् पूर्वं परतो वा प्रीत्या मातापितृदत्तस्याविभाज्यता]

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।

[पितुरूर्ध्वं विभागे पत्नीनां पुत्रसमभागिता]

पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ॥ १४४ ॥

[पितुरूर्ध्वमसंस्कृतभ्रातॄणां संस्कृतभ्रातृभिः समुदायद्रव्यतः संस्कारः]

असंस्कृतास्तु संस्कार्याः भ्रातृभिः पूर्वसंस्कृतैः।

[तत्र भगिनीषु विशेषः]

भगिन्यश्च निजादंशाद्दत्त्वांशं तु [1]तुरीयकम् ॥ १४५ ॥

[विजातीयेषु विभागक्रमः]

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ १४६ ॥

[विभागकालाविदितस्यान्योन्यापहृतद्रव्यस्य पुनः विभागक्रमः]

अन्योन्यापहृतं द्रव्यं विभक्ते [2]यत्र दृश्यते
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः *॥ १४७ ॥

[मुख्यामुख्यपुत्रस्वरूपम्]

औरसो धर्मपत्नीज[3]स्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १४८ ॥

गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १४९ ॥

अक्षतायां क्षतायां वा जातः पौनर्भ[4]वः स्मृतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १५० ॥

क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नस्सहोढजः ॥ १५१ ॥

---

*इतः परं याज्ञवल्क्यस्मृतौ—
"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥" इत्यधिकः पाठो वर्तते।

[1] तृतीयकम्–मु., ख. [2] यत्तु–या. स्मृ. [3] स्तत्सुतः–मु.
[4] वो भवेत्–मु., वः सुतः–या. स्मृ.

उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः।

[सजातीयानां तेषां दायग्रहणे क्रमः]

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ १५२ ॥

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः*।

[मुख्यगौणसुताभावे दायादानां क्रमः]

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ॥ १५३ ॥

तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः।

एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ॥ १५४ ॥

स्वर्यात[1]स्याप्यपुत्रस्य सर्ववर्णेष्वयं विधिः।

[वानप्रस्थादिधनादानेऽधिकारिणः]

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ॥ १५५ ॥

क्रमेणाचार्य[2]सच्छिष्यधर्मभ्रात्रेकतीर्थिनः।

[संसृष्ट्यादिधनविभागक्रमः]

संसृष्टिनस्तु [3]संसृष्टी सोदरस्य तु सोदरः ॥ १५६ ॥

दद्यादपहरेच्चांशं जातस्य च मृतस्य च।

[संसृष्टिदायग्रहणे विशेषः]

अन्योदर्यस्तु संसृष्टी [4]नान्योदर्यो धनं हरेत् ॥ १५७ ॥

असंसृष्ट्यपि चाऽदद्यात्संसृष्टो [5]नान्यमातृजः।

---

* इतः परं याज्ञवल्क्यस्मृतौ—

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ॥ १३३ ॥

मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्।

अभ्रातृको हरेत्सर्वं दुहितृणां सुताद्‌ृते ॥ १३४ ॥

—इत्यधिकः पाठो वर्तते।

[1] स्य ह्यपुत्रस्य—या. स्मृ.
[2] तच्छिष्य—मु.
[3] संसृष्टः—मु.
[4] नान्योदर्यधनं—मु., ख.
[5] ऽनन्यमातृजः—मु.

[पुत्रपत्न्यादिदायग्रहणापवादः]

क्लीबोऽथ [1] पतितस्तज्जः पङ्गुरुन्मत्तको जडः ॥ १५८ ॥
अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः ।

[क्लीबादीनामनंशित्वेऽपि तदौरसादीनां निर्दोषत्वमंशिता च]

औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ॥ १५९ ॥

[क्लीबादीनां सुतासु विशेषः]

सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ।

[क्लीबादिपत्नीषु विशेषः]

अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ॥ १६० ॥
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ।

[स्त्रीधनस्वरूपम्]

पितृमातृपतिभ्रातृदत्त[2]मध्यग्न्युपागतम् ॥ १६१ ॥
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ।
बन्धुदत्तं [3]तथा शुल्कमन्वाधेयकमेव च ॥ १६२ ॥

[स्त्रीधनविभागः]

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः ।

[विवाहभेदेन स्त्रीधनाधिकारिभेदाः]

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ॥ १६३ ॥
दुहितॄणां [4]प्रसूता चेच्छेषेषु पितृगामि तत् ।

[स्त्रीधनप्रसङ्गेन वाग्दत्तविषयकं किञ्चित्]

दत्त्वा कन्यां हरन् दण्ड्यो व्ययं [5]दाप्यश्च सोदयम् ॥ १६४ ॥

---

[1] पतितस्त्याज्यः—मु. [2] मध्यमुपा—मु. [3] यथा—मु. [4] प्रजाता—मु.
[5] दण्डाच्च—या. स्मृ.

[वाग्दत्तायाः संस्कारात्प्राङ्मरणे कर्तव्यम्]

मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ।

[जीवन्त्याः सप्रजायाः स्त्रियो धनग्रहणे भर्तुरभ्यनुज्ञा]

दुर्भिक्षे धर्मकार्ये च व्याधौ [1]सम्प्रतिरोधके ॥ १६५ ॥

गृहीतं स्त्रीधनं [2]भर्ता न स्त्रियै दातुमर्हति ।

[आधिवेदनिकस्त्रीधने कर्तव्यम्]

अधिविन्नस्त्रियै दद्या[3]दाधिवेदनिकं समम् ॥ १६६ ॥

न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ।

[विभागसन्देहे निर्णयहेतवः]

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभि[4]लेखितैः ॥ १६७ ॥

विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ।

[सीमाविवादनिर्णयक्रमः]

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ॥ १६८ ॥

गोपाः सीमा[5]कृषाणा ये सर्वे च वनगोचराः ।
नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः ॥ १६९ ॥

सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुप[6]लक्षिताः ।

[चिह्नासत्त्वे, सत्त्वे वा सन्दिह्यमाने सीमानिर्णयोपायः]

सामन्ता वा [7]समग्रामाश्चत्वारोऽष्टौ दशापि वा ॥ १७० ॥

रक्तस्रग्व[8]सनाः सीमां नयेयुः क्षितिधारिणः ।

---

[1] सप्रति–मु. [2] भर्त्रा–ख. [3] दाधिवैतनिकं–मु., ख. [4] लेखनैः–मु., ख
[5] कृषाणाश्च–या. स्मृ. पा. [6] लक्षितम्–या. स्मृ. [7] चतुर्ग्रामा–मु.
[8] सनां–मु.

[सीमाविषये मृषासाक्ष्यवादिनां दण्डनीयता]

अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥ १७१ ॥

[सीमाज्ञापकचिह्नानामभावे सीमानिर्णयप्रकारः]

अभावे ज्ञातृचिह्नानां [1] राज्ञा सीमा प्रवर्तिता ।

[आरामादिषु सीमानिर्णयन्यायातिदेशः]

आरामायतनग्रामनिपानोद्यानवेश्मसु ॥ १७२ ॥

एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ।

[मर्यादाप्रभेदादौ दण्डप्रकारः]

मर्यादायाः प्रभेदे [2] तु सीमातिक्रमणे तथा ॥ १७३ ॥

क्षेत्रस्य हरणे दण्ड्या अधमोत्तममध्यमाः ।

[स्वक्षेत्रे परस्मै कूपाद्यर्थेऽनुज्ञां दत्वा निषेधतः स्वामिनो दण्डः]

न [3] निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ॥ १७४ ॥

परभूमिं हरन् कूपः स्वल्पक्षेत्रे बहूदकः ।

[ परक्षेत्रे स्वामिनमनिवेद्य सेतुकरणे फलभाक् ]

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ॥ १७५ ॥

उत्पन्ने स्वामिनो भागस्तदभावे महीपतेः ।

[ स्वामिना सेत्वप्रतिषेधप्रसङ्गानुप्रसङ्गात् क्वचिद्विध्यन्तरम् ]

फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् ॥ १७६ ॥

(* स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् † ।)

---

* धनुरन्तर्गतमर्धं ख पुस्तके नास्ति । † इतः परं याज्ञवल्क्यव्यवहारे स्वामिपालविवादादीन्यष्टौ प्रकरणानि अधिकानि सन्ति ।

[1] राजा सीम्नः प्रवर्तिता—या. स्मृ. [2] च—या. स्मृ. [3] निषेधो—मु.

[वाक्पारुष्ये, निष्ठुराक्रोशे सवर्णेषु दण्डक्रमः]

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ॥ १७७ ॥
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् ।

[अश्लीलाक्षेपे समानगुणेषु दण्डः]

अभिगन्तास्मि भगिनीं मातरं वा तवेति [1] हि ॥ १७८ ॥
[2] शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ।

[तत्रैव विषमगुणेषु अश्लीलाक्षेपे दण्डः]

[3] अर्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च ॥ १७९ ॥

[ब्राह्मणादीनां परस्पराक्षेपे दण्डविधिः]

दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ।

[प्रतिलोमानुलोमाक्षेपे दण्डविधिः]

प्रातिलोम्यापवादेषु [4] द्विगुणत्रिगुणा दमाः ॥ १८० ॥
वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ।

[बाह्वादिविनाशे, पादादिविनाशे, निष्ठुराक्षेपे च दण्डविधिः]

बहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ॥ १८१ ॥
[5] शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ।
अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश ॥ १८२ ॥
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ।

---

[1] ह—या. स्मृ. [2] शपं तं—ख., ग. [3] अर्थो दमेषु—मु., ख. [4] द्विगुण-त्रिगुणो दमः—मु. [5] शक्यस्तदर्धकः—मु.

[तीव्राक्रोशे दण्डविधानम्]

पतनीयकृते क्षेपे दण्डो मध्यमसाहसः* ॥ १८३ ॥

त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ १८४ ॥

[दण्डपारुष्यस्वरूपम्]

†[1] परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥ १८५ ॥

[दण्डपारुष्यस्वरूपसन्देहे तन्निर्णायका हेतवः]

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्न[2]कृतो भयात् ॥ १८६ ॥

[साधनविशेषनिर्णयानुरोधेन दण्डविशेषविधिः]

भस्मपङ्करजःस्पर्शे दण्डो [3]दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः ॥ १८७ ॥

समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥ १८८ ॥

[प्रातिलोम्यापराधे दण्डविधिः]

विप्रपीडाकरं [4]छेद्यमङ्गमब्राह्मणस्य तु ।
[5]उद्गीर्णे प्रथमो दण्डः संस्पर्शे तु [6]तदर्धिकः ॥ १८९ ॥

---

* इतः परं याज्ञवल्क्यस्मृतौ—"उपपातकयुक्ते तु दाप्यः प्रथमसाहसः" इत्यधिकमर्धं वर्तते । † अयं श्लोको मिताक्षरायां नारदोक्ततया वर्तते ।

[1] परगोत्रे—ख. [2] कृताङ्क—ग. [3] दशगुणः—ख. [4] मेध—मु. [5] उद्धूर्णे—ख.
[6] तदर्धकः—मु.

[सजातीयेष्वेव हस्तपादादौ ताडनोद्योगे दण्डप्रकारः]

[1]उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥ १९० ॥

पादकेशांशुककराकर्षणेषु पणान् दश ।
पीडाकर्षांशुकावेष्ट[2]पादाध्यासे शतं दमः ॥ १९१ ॥

शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान् दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥ १९२ ॥

करपाद[3]दतां भङ्गे छेदने कर्णनासयोः ।
मध्यदण्डो व्रणोद्भेदे मृतकल्पे हते तथा ॥ १९३ ॥

चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कन्धराबाहु[4]सक्थ्नां च भङ्गे मध्यमसाहसः ॥ १९४ ॥

एकं घ्नतां बहूनां च यथोक्ताद्द्विगु[5]णो दमः ।
कलहापहृतं देयं दण्डश्च द्विगुण[6]स्तथा ॥ १९५ ॥

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।
दाप्यो [7]दण्डं च यो यस्मिन् कलहे समुदाहृतः ॥ १९६ ॥

[बहिरङ्गार्थनाशे दण्डविधिः]

अभिघाते तथा [8]छेदे भेदे कुड्यावपातने ।
पणान् दाप्यः पञ्चदश विंशतिं तद्व्ययं तथा ॥ १९७ ॥

[9]दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा ।
षोडशाद्यः पणान् दाप्यो द्वितीयो मध्यमं दमम् ॥ १९८ ॥

---

[1] उद्गीर्णे–मु.  [2] पदा–मु.  [3] वतां–मु. पा.  [4] सक्थ्यङ्घ्रि–मु.
[5] णा दमाः–मु.  [6] स्ततः–या. स्मृ., मु.  [7] दण्डबाश्च–मु.  [8] भेदे छेदे–मु.
[9] दुःखोत्पादे–मु.

[पशुभिद्रोहे दण्डप्रकारः]

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
[1]दण्डः क्षुद्रपशूनां च [2]द्विपण[3]प्रभृतिः क्रमात् ॥ १९९ ॥

लिङ्गस्य छेदने मृत्यौ मध्यमो मौल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥ २०० ॥

[स्थावराभिद्रोहे दण्डविधिः]

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां च [4]विंशतेर्द्विगुणो दमः ॥ २०१ ॥

[चैत्यादिवृक्षाभिद्रोहे दण्डविशेषः]

चैत्यश्मशानसीमासु पुण्यस्थाने [5]सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥ २०२ ॥

[गुल्मादिकर्तने दण्डविधिः]

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ॥ २०३ ॥

[साहसलक्षणम्]

सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम् ।

[परद्रव्यापहरणसाहसे दण्डविधिः]

तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ॥ २०४ ॥

---

[1] दण्डे—मु. [2] द्विगुण—मु. [3] प्रकृतिः—ख. [4] विंशति—मु.
[5] शिवालये—मु.

[साहसप्रयोजयितुर्दण्डः]

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम् ॥ २०५ ॥

[साहसिकविशेषाः, तेषां दण्डाश्च]

[1]अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्या[2]प्रहारदः ।
सन्दिष्ट[3]स्याप्रदाता च समुद्रगृहभेदकृत् ॥ २०६ ॥

सामन्तकुलिकादीनामपकारस्य कारकः ।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २०७ ॥

स्वच्छन्दं विधवागामी विक्रुष्टे नाभि[4]धावितः ।
[5]अकारणे च विक्रोष्टा चण्डालश्चो[6]त्तमां स्पृशन् ॥ २०८ ॥

[7]शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ २०९ ॥

वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ २१० ॥

पितृपुत्रस्वसृभ्रातृदम्पत्याचार्य[8]ऋत्विजः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २११ ॥

[साहससदृशापराधेषु निर्णेजकादीनां दण्डविधिः]

वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ २१२ ॥

---

[1] अर्घ्याक्षेपाति–या. स्मृ. [2] प्रहारकः–या. स्मृ. [3] श्राप्र–सु. [4] धावकः–या. स्मृ. [5] अकारणेन–सु., ख. [6] त्वमान् स्पृशेत्–या. स्मृ. [7] शूद्रः प्रव्र–या. स्मृ. [8] शिष्यकाः–या. स्मृ., ऋत्विजाम्–सु.

पितापुत्र[1]विवादेषु साक्षिणस्त्रिगुणो दमः ।
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः ॥ २१३ ॥

तुलाशासनमानानां कूटकृ[2]न्नाणकस्य च ।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥ २१४ ॥

[कूटनाणकपरीक्षिणो दण्डः]

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स [3]नाणकपरी[4]क्षी तु दाप्य उत्तमसाहसम् ॥ २१५ ॥

[मिथ्याचारस्य भिषजो दण्डविधिः]

भिषङ्मिथ्याचर[5]न्दाप्यस्तिर्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं [6]राजमानुषे चोत्तमं दमम् ॥ २१६ ॥

[मिथ्याचारिणामितरेषां दण्डक्रमः]

अबध्यं यश्च बध्नाति [7]बद्धं यश्च विमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥ २१७ ॥

मानेन तुलया वापि योऽंशमष्ट[8]ममाहरेत् ।
दण्डं स [9]द्विशतं दाप्यो वृद्धौ हानौ च कल्पितम् ॥ २१८ ॥

भेषजस्नेहलवणगन्धधान्यगुडादिषु ।
पण्येषु प्रक्षिपन् हीनं पणान् [10]दाप्यश्च षोडश ॥ २१९ ॥

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥ २२० ॥

---

[1] विरोधे तु–या. स्मृ. [2] न्नाटक–मु. [3] नाटक–मु. [4] क्ष्ये–मु. [5] न्दण्ड्यस्त–या. स्मृ. [6] राजपुरुषेषु–या. स्मृ. [7] बध्यं–ख., मु. [8] मकं हरेत्–या. स्मृ. [9] दाप्यो द्विशतं–या. स्मृ. [10] दाप्यस्तु–या. स्मृ.

समुद्गपरिवर्तं च सारभाण्डं च कृत्रिमम् ।
[1]आधानं विक्रयं [2]आपि [3]नयतो दण्डकल्पना ॥ २२१ ॥

भिन्ने पणे [4]तु पञ्चाशत् पणे तु शतमुच्यते ।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥ २२२ ॥

[मिथ्याचारिणां वणिजां दण्डविधिः]

सम्भूय कुर्वतां[5]अर्घं सबाधं कारुशिल्पिनाम् ।
[6]अर्घस्य ह्रासं वृद्धिं वा [7]जानतां दण्ड उत्तमः ॥ २२३ ॥

सम्भूय वणिजां पण्यमनर्घेणोपरुन्धताम् ।
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः ॥ २२४ ॥

[वणिजां पणितव्यार्घविधिः]

[8]राजनि स्थाप्यते [9]योऽर्घः प्रत्यहं तेन विक्रयः ।
क्रयो वा निःस्रवस्तस्माद्वणिजां लाभ[10]कृत्स्मृतः ॥ २२५ ॥

स्वदेशपण्ये तु [11]शतं वणिग्गृह्णीत पञ्चकम् ।
दशकं [12]पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥ २२६ ॥

[पारदेशिकपण्येषु अर्घकल्पनविधानम्]

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।
[13]अर्घोऽनुग्रहवत्कार्यः क्रेतुर्विक्रेतुरेव च ॥ २२७ ॥

[स्तेयस्वरूपम्]

उपायैर्विविधैरेषां छलयित्वापकर्षणम्
सुप्तमत्तप्रमत्तेभ्यस्स्तेयमाहुर्मनीषिणः ॥ २२८ ॥

---

[1] आदानं—मु. [2] नापि—गा. [3] नयते—गा. [4] च—या. स्मृ. [5] -मर्घं—ख.
[6] अर्घस्य—ख., मु. [7] जानतो—या.स्मृ. [8] राज्ञा तु स्थापितो—मु. [9] योऽर्घः—ख.
[10] कृन्मतः—मु. [11] शते—मु. [12] परदेशीये—मु. [13] अर्घोऽनु—ख.

[चोरग्रहणतच्चिह्नानि च]

ग्राहकैर्गृह्यते [1]चोरो लोप्त्रे[2]णाद्य[3]पदेन वा ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥ २२९ ॥

[4]अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २३० ॥

परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निरायव्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २३१ ॥

[चोरदण्डः, ब्राह्मणे विशेषश्च]

गृहीतश्शङ्कया चौर्ये नात्मानं चेद्विशोधयेत् ।
दापयित्वा हृतं द्रव्यं चोरदण्डेन दण्डयेत् ॥ २३२ ॥

[5]चोरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥ २३३ ॥

[घातादिषु शिक्षाविशेषाः]

[6]घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते ।
निवीतभर्तु[7]स्तु पथि चोरोद्धर्तुरवीतके ॥ २३४ ॥

स्वसीम्नि दद्या[8]द्ग्राम्यस्तु [9]पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः [10]क्रोशात् दशग्राम्यथ वा पुनः ॥ २३५ ॥

बन्दिग्रहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव [11] शूलमारोपयेन्नरान् ॥ २३६ ॥

---

[1] चौरो—ग [2] णायप—या. स्मृ. [3] पणेन—मु. [4] अन्ये च—मु.
[5] चौरं—मु., ख. [6] पूरितेऽपहृते—मु. पा., घातितेऽपवृतो—मु. [7] अ—ख.
[8] द्ग्रामस्तु—मु. [9] भग्नं वा—मु., ख. [10] काशात्—ग. [11] शुभ्माना—मु.,
शूलानारो—या. स्मृ.

[द्वितीयापराधीयशिक्षा]

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।
कार्यौ द्वितीयापराधे करपादैकहीनकौ ॥ २३७ ॥

[क्षुद्रादिद्रव्यानुसारेण दण्डनं, तत्र देशकालादिपरिशीलनं च ]

क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।
[1]देशकालवयश्शक्ति सञ्चिन्त्यं दण्डकर्मणि ॥ २३८ ॥

[अधिकतया सुवर्णाद्यपहरणे दण्डविशेषः]

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।
रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥ २३९ ॥

[तत्रैव हस्तच्छेदशिक्षावसरः]

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।

[वधशिक्षोपाधिः]

पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥ २४० ॥

रत्नानां चैव सर्वेषां हरणे वधमर्हति ।

[रात्रितस्कराणां, चोरसहायकानां च शिक्षाक्रमः]

सन्धिं [2]भित्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ॥ २४१ ॥

तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ।
भक्तावकाशाग्न्युदकमन्त्रोपकरण[3]व्ययम् ॥ २४२ ॥

दत्वा चोरस्य हन्तुर्वा जानतो दम उत्तमः ।

[परगात्रेषु शस्त्रपातनगर्भपातनादौ दण्डः]

शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ॥ २४३ ॥

---

[1] देशं कालं वयः शक्तिः–मु. [2] छित्वा–ग. [3] व्ययात्–मु., व्ययान्–ख.

[1]उत्तमो वाधमो वापि पुरुषस्त्रीप्रमापणे
विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ॥ २४४ ॥
सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत् ।

[विषादिप्रयोगे दण्डविधिः]

विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ॥ २४५ ॥
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ।

[कटाग्निदाहादौ]

क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ॥ २४६ ॥
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ।

[परस्त्रीसङ्ग्रहणे पुरुषस्य ग्राह्यता, तच्चिह्नानि च]

पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः ॥ २४७ ॥
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ।
नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ॥ २४८ ॥
[2]अदेशकालसम्भाषं [3]सहैकस्थानमेव च ।

[स्त्रीपुरुषयोः कामजचिह्नेष्वपि परस्परप्रतिषेधे जात्या दण्डः]

स्त्री निषेधे शतं दद्याद्द्विशतं तु दमं पुमान् ॥ २४९ ॥
प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथा ।
सजातावु[4]त्तमो दण्ड अनुलोमे तु [5]मध्यमः ॥ २५० ॥
प्रातिलोम्ये वधः [6]पुंसो नार्याः कर्णादिकर्तनम् ।

[कन्याहरणे सवर्णाद्यनुरोधेन दण्डविधिः]

अलङ्कृतां हरन् कन्यामुत्तमं [7]त्वन्यथा[8]ऽधमम् ॥ २५१ ॥

---

[1] इदमर्धं ख. पुस्तके नास्ति । [2] आदेशः कालसम्भाषे–मु., ख.
[3] सहैकासन–या. स्मृ. [4] समा दण्डा–मु. [5] मध्यमाः–मु. [6] पुंसां–मु.
[7] त्वन्य–या. स्मृ. [8] दमम्–मु.

दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ।
दूषणे तु करच्छेद [1]उत्तमाया वधस्तथा ॥ २५२ ॥

[पश्वादिगमने दण्डविशेषाः]

पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमः ।
अवरुद्धासु दासीषु भुजिष्यासु तथैव च ॥ २५३ ॥
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणकं दमम् ।

[अनुलोमप्रतिलोमाभ्यामन्त्याद्यभिगमने दण्डः]

अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् ॥ २५४ ॥
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ।

[राजन्यनिष्टाचरणे, तच्छासनोनीकरणादौ च दण्डविधिः]

*राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारकम् ॥ २५५ ॥
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत् ।
ऊनं वाप्यधिकं वापि लिखितो राजशासनम् ॥ २५६ ॥
पारदारिक[2]चोरौ वा मुञ्चतो दण्ड उत्तमः ।

[अभक्ष्येण द्विजादिदूषणे दण्डभेदाः]

अभक्ष्येण द्विजं दूष्य दण्ड्य उत्तम[3]साहसम् ॥ २५७ ॥
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्र[4]मर्धकम् ।

[कूटस्वर्णव्यवहार्यादौ दण्डभेदः]

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ॥ २५८ ॥
[5]अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तम[6]साहसम् ।
[7]चतुष्पादकृतो दोषो नापैतीह प्रजल्पतः ॥ २५९ ॥
काष्ठलोष्टेषु पाषाण[8]बाहु[9]युग्यकृतस्तथा ।
छिन्ननस्येन यानेन तथा भग्नयुगादिना ॥ २६० ॥

---

* राज्ञ इत्याद्यर्धद्वयं याज्ञवल्क्यस्मृतौ उपजीव्येति(२६१)पद्यानन्तरमस्ति ।

[1] उत्तमायां–या. स्मृ. [2] चोरं–मु., ख. [3] साहसः–मु. [4] मार्धकम्–मु. [5] यज्ञ· या.स्मृ. [6] साहसः–मु. [7] चतुष्पादे कृ–ख. [8] बाहुयुग्य–या.स्मृ. [9] युग्म–मु.

पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक् ।
शक्तोऽप्यमोक्षयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा ॥ २६१ ॥

प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ।
जारं चोरेत्यभिवदन् दाप्यः पञ्चशतं दमम् ॥ २६२ ॥

उपजीव्य धनं मुञ्चन् तदेवाष्टगुणीकृतम् ।
मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ॥ २६३ ॥

राजयानासनारोढुर्दण्ड उत्तमसाहसः ।
द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ॥ २६४ ।

विप्रत्वेन च शूद्रस्य जीवतोऽ[1]ष्टशतो दमः ।
[2]दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ॥ २६५ ॥

सभ्याः[3]स्सजयिनो दण्ड्याः विवादाद्द्विगुणं दमम् ।

[न्यायेन पराजितस्य पुनरात्मजयाभिमाने दण्डः]

यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ॥ २६६ ॥
तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ।

[अन्यायगृहीतदण्डगतिः]

राज्ञाऽन्यायेन यो दण्डो गृहीतो [4]वरुणाय तम् ॥ २६७ ॥
[5]निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ।

[व्यवहारपदोपसंहारः, तद्रीत्या भद्रभूपस्य भूमिशासनं च]

व्यवहारपदान्येवं सम्प्रोक्तानि यथास्मृति ॥ २६८ ॥
*( एवं शास्त्रविनिर्दिष्टान् व्यवहारान् प्रवर्तयन् ।
अतिष्ठद्भद्रभूपालो नयन्नाज्ञावशं भुवम् ॥ २६९ ॥)

इति शिवतत्त्वरत्नाकरेऽष्टमकल्लोले व्यवहारपदनिरूपणं नाम प्रथमस्तरङ्गः

---

* धनुरन्तर्गतपद्यं ख. पुस्तके नास्ति ।

[1] ऽष्टादशो–मु. [2] उद्दृष्टांस्तु–ख., अदृष्टांस्तु–मु. [3] स्सदायिनो–ख.
[4] तरुणीयुतम्–मु., वरुणायुतम्–ग. [5] विवेद्य–मु.

# अष्टमकल्लोले द्वितीयस्तरङ्गः

## धनुश्चक्रकुन्तगदालक्षणतत्साधनक्रमनिरूपणम्

[कुमारलोमशेखरस्य भद्रमहीपालचरितप्रश्नः, महीपालस्य तदुत्तर-कथनप्रतिज्ञा च]

गुरो! यः सम्प्रति प्रोक्तो व्यवहारपदक्रमः ।
स श्रुतो मामके चित्ते नियतं परिवर्तते ॥ १ ॥

अन्यद्भद्रमहीपालचरित्रं श्रोतुमीहितम् ।
तद्ब्रूहि विदिताशेषविशेषकरुणानिधे! ॥ २ ॥

पुत्र! ते सम्प्रवक्ष्यामि चरित्रं तस्य [1] तच्छृणु ।

[भद्रभूपेन प्राच्यामाक्रमणकारिणः सामन्तस्य विजयः]

एवमस्मिन् बहोः कालादवति क्षितिमण्डलम् ॥ ३ ॥

पूर्वस्यां दिशि सामन्ते राज्याक्रमणकाङ्क्षिणि ।
सीमोपान्तस्थितान्दुर्गप्राकारान् प्रतिरुन्धति ॥ ४ ॥

सेनाप्रधानमुख[2]तस्तं जित्वा यो न्यवर्तयत् ।
द्विजवन्नैव संतुष्येत्स्वतः प्राप्तेन भूपतिः ॥ ५ ॥

इति नीत्या शात्रवीयराज्याक्रमणकाङ्क्षया ।
निर्गत्य षड्विधैस्साकं बलैराक्रम्य चाभितः ॥ ६ ॥

भस्मशून्यमुखानेष प्राकारान् सहसाग्रहीत् ।
ततः शौर्यस्थितांश्चापि शौर्यतः परिकल्पयन् ॥ ७ ॥

[भद्रभूपेनोत्तरदिग्भागे सामन्तजयः, कीर्त्यै शरणागताय तस्मै तद्राज्यप्रत्यर्पणं च]

ततश्चोत्तरसामन्ते कण्टकत्वमुपेयुषि ।
स्थानमाक्रम्य शरणागतायास्मै यथापुरम् ॥ ८ ॥

---

[1] संशृणु—पु.  [2] तस्तां—क.

भद्रराज्याय तत्स्थानमदिशत्कीर्तिवृद्धये ।

[विजयपुरस्थितम्लेच्छनायकस्य भद्रभूपेन साकं सन्धिः]

स्वस्थानक्रमणक्लेशप्रतीकारचिकीर्षया ॥ ९ ॥

विजयाख्यपुरस्थायी म्लेच्छानामधिनायकः ।
आनीतः सहसा तेन साहाय्यकविधौ युधि ॥ १० ॥

भद्रभूपो न चास्माभिर्विजेतुं शक्यते बली ।
इत्यालोच्यामुना सन्धिं विधाय स्वपुरं ययौ ॥ ११ ॥

[तीर्थराजपुरे भद्रभूपेन हिरण्यगर्भदानम्]

अनन्तरं भद्रभूपस्तीर्थराजपुरस्थले ।
दानं हिरण्यगर्भाख्यमकरोदीशतुष्टये ॥ १२ ॥

[भद्रभूपेन शरावतीतीरे रामचन्द्रपुरे सौवर्णतुलापुरुषदानम्]

ततः शरावतीतीरे रामचन्द्रपुरस्थले ।
तुलापुरुषदानं स सौवर्णं [1] पर्यकल्पयत् ॥ १३ ॥

[भद्रभूपतिना स्वपितृनाम्ना शिवराजपुरनिर्माणम्]

पितृनाम्नाग्रहारं च '[2]शिवराज'[3]पुराह्वयम् ।
भुवं विसृज्य विपुलां विशेषेण [4] व्यवर्धयत् ॥ १४ ॥

[स्वपितृव्यस्वनामभ्यां भद्रभूपेन वेङ्कटापुरभद्रराजपुरयोर्निर्माणम्]

पितृव्यनाम्नाप्यकरोत् वेङ्कटापुरनामकम् ।
स्वनाम्नाप्यकरोद्रम्यं भद्रराजपुराह्वयम् ॥ १५ ॥

[भद्रभूपेन उडुपादिक्षेत्रेषु कृष्णादिदेवानां पूजाभिवर्धनम्]

उडुपक्षेत्रकृष्णस्य सुब्रह्मण्ये गुहस्य च ।
कोटीश्वरेशितुः श्रीशङ्करनारायणस्य च ॥ १६ ॥

---

[1] समकल्पयत्–मु. [2] शिवराम–मु. [3] पुराभिधम्–मु. [4] व्यवर्तयत–ख., ग.

इष्टदैवतमूकाख्या[1] नाम्नथाः शकथा महेशितुः ।
देवानामेतदादीनामभिवर्ध्य च पूजनम् ॥ १७ ॥

[भद्रभूपेन भूरुद्राणां मठादिकरणं, धर्मेण राज्यपालनं च]

भूरुद्राणां मठान् कृत्वा तेभ्यः क्षेत्राणि चादिशत् ।
एवं धर्मेण वसुधां बह्वोः कालात्प्रपालयन् ॥ १८ ॥

[भद्रभूपेन स्वानुजसोमशेखरे धनुर्विद्योपदेशपूर्वकं राज्यस्थापनम्]

स्वानुजं प्रौढवयसं राज्यधूर्वहणक्षमम् ।
सोमशेखरनामानं मनसा सम्प्रधारयन् ॥ १९ ॥

सविशेषं धनुर्विद्यामुपदिश्य सविस्तरम् ।
तस्मिन् राज्यं निचिक्षेप दक्षे भद्रमहीपतिः * ॥ २० ॥

[भद्रभूपस्य परमगुरुसन्निधिगमनम्]

विद्यामाख्याय विदितामुपदेष्टुं विशिष्य ताम् ।
जिज्ञासुरिव सान्निध्यं परमस्य गुरोरगात् ॥ २१ ॥

[धनुर्विद्यावर्णनम्]

योपदिष्टा धनुर्विद्या तां तुभ्यं [2] वर्णयाम्यहम् ।

[नगरे एकस्यापि विदग्धधनुर्धरस्यावश्यकता]

एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्धरः ॥ २२ ॥
ततो यान्त्यरयो दूरं मृगाः सिंहगृहादिव ।

[धनुर्दानपात्रापात्रे]

आचार्येण धनुर्देयं ब्राह्मणे सुपरीक्षिते ॥ २३ ॥
लुब्धे धूर्ते कृतघ्ने च मन्दबुद्धौ न [3]दीयते ।

---

* ख. पुस्तके एतत्तरङ्गारम्भत एतावदन्तः पाठो नास्ति ।

[1] नम्राः—ग. [2] वर्णयामहे—ग. [3] दापयेत्—घ. सं

[धनुराद्यायुधदाने योग्यपात्राणि]

ब्राह्मणाय धनुर्देयं खड्गं वै क्षत्रियाय च ॥ २४ ॥
वैश्याय दापयेत्कुन्तं गदां शूद्राय दापयेत् ।

[धनुराद्यायुधसाध्यानि सप्तविधयुद्धानि]

धनुश्चक्रं च कुन्तं च खड्गं च [1] च्छुरिका गदा ॥ २५ ॥
सप्तमं बाहुयुद्धं [2] स्यादेवं युद्धानि सप्तधा ।

[आचार्यादीनां लक्षणानि]

आचार्यः सप्तयुद्धः स्याच्चतुर्युद्धस्तु भार्गवः ॥ २६ ॥
द्वाभ्यां चैव भवेद्योद्धा [3] एकेन गुणको भवेत् ।

[शस्त्रविद्यारम्भे प्रशस्तानि नक्षत्राणि तिथयश्च]

सर्पः पुनर्वसुः पुष्यं रोहिणी चोत्तरात्रयम् ॥ २७ ॥
अनूराधाश्विनी चैव रेवती दशमी तथा ।
तृतीया पञ्चमी चैव सप्तमी दशमी तथा ॥ २८ ॥
त्रयोदशी द्वादशी च तिथयः [4] स्युः समाह्निताः ।

[शस्त्रविद्यारम्भे शस्ता वाराः]

[5] सूर्यवारश्शुक्रवारः गुरुवारस्तथैव च ॥ २९ ॥
एतद्वारत्रयं [6] धन्यं प्रारम्भे शस्त्रकर्मणाम् ।
एभिर्दिनैस्तु शिष्याय गुरुश्शस्त्राणि दापयेत् ॥ ३० ॥

---

[1] क्षुरिका—ध. सं. [2] चेत्येवं—मु. [3] नैकेन—मु. [4] तु शुभा मताः—ध. सं.
[5] रवि—ध. सं. [6] शस्तं—मु.

[शस्त्रविद्यारम्भे कर्तव्यानि]

सन्तर्प्य होमदानाभ्यां सुरान् वेदविधानतः ।
ब्राह्मणान् भोजयेत्तत्र कुमारीश्चाप्यनेकधा ॥ ३१ ॥
तापसानर्चयेद्भक्त्या ये चान्ये शिवयोगिनः ।
गन्धमाल्यै[1]र्भूषणाद्यैर्गुरुं तत्रैव पूजयेत् ॥ ३२ ॥

[धनुर्ग्रहणे शिष्यनियमः, गुरोर्धनुर्याचनादिकं च]

कृतोपवासशिष्यस्तु धौतवस्त्रपरिग्रहः ।
बद्धाञ्जलिपुटस्तत्र याचयेद्गुरुतो धनुः * ॥ ३३ ॥
शिष्याय [2]दद्याच्चापं स धनुर्मन्त्राभिमन्त्रितम् † ।

[अस्त्रप्रयोगारम्भे पुष्पादिवेधनक्रमः, तत्प्रयोजनं च]

प्रथमं पुष्पवेधं च फलहीनेन पत्रिणा ॥ ३४ ॥

---

* इतः परं **धनुर्वेदसंहितायाम्**—
अङ्गन्यासं ततः कार्यं शिवोक्तं सिद्धिमिच्छता ।
आचार्येण च शिष्यस्य पापघ्नं विघ्ननाशनम् ॥ १९ ॥
शिखास्थाने न्यसेदीशं बाहुयुग्मे च केशवम् ।
ब्रह्माणं नाभिमध्ये तु जङ्घयोश्च गणाधिपम् ॥ २० ॥
ओं ह्रौं शिखास्थाने शङ्कराय नमः ।
ओं ह्रौं बाह्वोः केशवाय नमः ।
ओं ह्रौं नाभिमध्ये ब्रह्मणे नमः ।
ओं ह्रौं जङ्घयोर्गणपतये नमः ॥ २१ ॥
ईदृशं कारयेन्न्यासं येन श्रेयो भविष्यति ।
अन्येऽपि दुष्टमन्त्रेण न हिंसन्ति कदाचन ॥ २२ ॥
—इत्यधिकः पाठो दृश्यते ।

† इतः परं **धनुर्वेदसंहितायाम्**—
काण्डात्काण्डाभिमन्त्रेण दद्याद्वेदविधानतः ॥ २३ ॥
—इत्यप्यधिको भागो दृश्यते ।

[1] विचित्रैश्च गु—**घ. सं.** [2] मानुषं चापं—**घ. सं.**

ततः फलयुतेनैव [1]मत्स्यवेधं च कारयेत् ।
मांसवेधं ततः कुर्यादेवं वेधो भवेत्त्रिधा ॥ ३५ ॥

एभिर्वेधैः कृतैः पुंसां शराः स्युस्सर्वसाधकाः ।

[वेधने शरपाते प्राच्यादिदिग्भेदेन फलभेदः]

वेधने चैव [2]मांसादेः शरपातो यदा भवेत् ॥ ३६ ॥

पूर्वदिग्भागमाश्रित्य तदा स्याद्विजयी सुखी ।
दक्षिणे कलहो घोरो विदेशगमनं पुनः ॥ ३७ ॥

पश्चिमे धनधान्यं च सर्वं चैवोत्तरे शुभम् ।
ऐशान्यां पतनं दुष्टं विदिशोऽन्याश्च शोभनाः* ॥ ३८ ॥

एवं वेधत्रयं कुर्वन् शङ्खदुन्दुभिनिस्वनैः ।

[पुष्पादिवेधनानन्तरं धनुरादीनां गुरवे निवेदनं, धन्विनः प्राणाधिक्यं च]

ततः प्रणम्य गुरवे धनुर्बाणान्निवेदयेत् † ॥ ३९ ॥

वरः प्राणाधिको धन्वी न तु प्राणाधिकं धनुः ।

[धन्विबलान्न्यूनचापस्य शुभकारकत्वम्]

धनुषा पीड्यमानस्तु धन्वी लक्ष्यं न पश्यति ॥ ४० ॥

[3]अतो [4]निजबलान्न्यूनं चापं [5]स्याच्छुभकारकम् ।

---

* इतः परं धनुर्वेदसंहितायाम्—
हर्षपुष्टिकराश्चैव सिद्धिदाः सर्वकर्मणि ॥ २८ ॥ इत्यप्यधिकं वर्तते ॥

† इतः परम्—
प्रथमं यौगिकं चापं युद्धचापं द्वितीयकम् ।
निजबाहुबलोन्मानात्किञ्चिदूनं शुभं धनुः ॥ २०७ ॥
—इति धनुर्संहितायामधिकः पाठः ।

[1] मत्स्यवे–मु. पा. [2] मांसस्य–ध. सं. [3] ततो–मु. [4] निजबलोन्मानं–ध. सं. [5] स्याच्छुभदं नृणाम्–मु.

[देवचापस्योत्तमत्वम्, मनुष्यचापस्य तदपेक्षया न्यूनता च]

देवानामुत्तमं चापं ततो न्यूनं च [1]मानुषम् ॥ ४१ ॥

[श्रेष्ठचापपरिमाणम्, तस्य दिव्यता, शङ्करादिधृतत्वं च]

सार्धपञ्चकहस्तं तु श्रेष्ठं चापं प्रकीर्तितम् ।
तद्विज्ञेयं धनुर्दिव्यं शङ्करेण धृतं पुरा ॥ ४२ ॥

तस्मात्परशुरामेण ततो द्रोणेन धारितम् ।
द्रोणाद्गृहीतं पार्थेन ततः सात्यकिना धृतम् ॥ ४३ ॥

[मनुष्यचापलक्षणम्]

चतुर्विंशाङ्गुलो हस्तः चतुर्हस्तं धनुः स्मृतम् ।
तदङ्केन्मानवं चापं सर्वलक्षणसंयुतम् ॥ ४४ ॥

[शुभचापलक्षणम्]

त्रिपर्वं पञ्चपर्वाथ सप्तपर्व[2]समन्वितम् ।
नवपर्वं [3]च कोदण्डं सर्वदा शुभकारकम् ॥ ४५ ॥

[वर्जनीयाः चापाः]

चतुःपर्वं च षट्पर्वं साष्टपर्वं [4]च वर्जयेत्* ।
[5]अपक्वमतिजीर्णं च जातिघृष्टं तथैव च ॥ ४६ ॥

दग्धं छिद्रं न कर्तव्यं बाह्याभ्यन्तरहस्तकम् ।
गुणहीनं [6]घुणाक्रान्तं काण्डदोषसमन्वितम् ॥ ४७ ॥

गलग्रन्थि न कर्तव्यं [7]तलग्रन्थि तथैव च ।

---

* इतः परं धनुर्वेदसंहितायाम्—केषाञ्चिच्च भवेच्चापं वितस्तिनवसंयुतम् । इत्यधिकः पाठो वर्तते ।

[1] मानवम्—ध. सं. [2] तथा पुनः—ध. सं. [3] तु—मु. [4] विवर्जयेत्—ध. सं.
[5] अतिजीर्णमपक्वं च—ध. सं. [6] गुणा—ग. [7] तलमध्ये—ध. सं., तदग्रन्थि—मु. पा.

[अपक्वादिचापग्रहणे दोषाः, निर्दुष्टचापस्य कार्यकरत्वं च]

अपक्वं भङ्गमायाति [1]बहुजीर्णं तु कर्कशम् ॥ ४८ ॥

जातिघृष्टं च सोद्वेगं कलहो बान्धवैस्सह ।
दग्धेन दह्यते वेश्म [2]छिद्राद्युद्धविनाशनम् ॥ ४९ ॥

[3]बा[ह्ये ल]ह्यैर्लक्ष्यं न लभ्येत तथैवाभ्यन्तरे[4] तथा ।
[5]ही[ने]नं तु संहिते बाणे सङ्ग्रामे भङ्गकारकम् ॥ ५० ॥

आक्रान्ते तु पुनः क्वापि [6]न लक्ष्यं प्राप्यते दृढम् ।
गलग्रन्थि दलग्रन्थि धनङ्ग निकरं धनुः ॥ ५१ ॥

एभिर्दोषैर्विनिर्मुक्तं सर्वकार्यकरं स्मृतम् ।

[वैष्णवशार्ङ्गपरिमाणं, तस्य विश्वकर्मनिर्मितता च]

शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परममायुधम् ॥ ५२ ॥

वितस्तिसप्तकोन्मानं निर्मितं विश्वकर्मणा ।

[पौरुषशार्ङ्गपरिमाणं, तस्य सर्वकार्यसाधकता च]

पौरुषेयं तु तच्छार्ङ्गं बहुवत्सरशोषितम् ॥ ५३ ॥

वितस्तिभिस्सार्धषड्भिमितं सर्वार्थसाधनम् ।

[शार्ङ्गधनुषः प्रायेण गजारोहादिग्रहणयोग्यता]

प्रायो योग्यं धनुश्शार्ङ्गं गजारोहाश्वसादिनाम् ॥ ५४ ॥

[7]रथिकानां पदातीनां वांशश्चापः प्रकीर्तितः ।

---

[1] अतिजीर्ण—ग. [2] छिद्रं यु—ग. [3] बाह्ये लक्ष्यं—घ. सं. [4] रेऽपि च—घ. सं.
[5] हीने—घ. सं. [6] लक्ष्यं न—घ. सं. [7] रथिनां च—घ. सं.

[गुणप्रभेदाः, तल्लक्षणानि, तन्निर्माणक्रमश्च]

गुणानां लक्षणं वक्ष्ये यादृशं कारयेद्गुणम् ॥ ५५ ॥

[1]पट्टसूत्रैर्गुणः कार्यः कनिष्ठामान[2]संयुतः ।
धनुःप्रमाणो निस्सन्धिः शुद्धैस्त्रिगुणतन्तुभिः ॥ ५६॥

वर्तितः स्याद्गुणः श्लक्ष्णः सर्वकर्मसहो युधि ।
अभावे पट्टसूत्रस्य हरिणीस्नायु[3]रुच्यते ॥ ५७ ॥

गुणार्थमथवा ग्राह्याः स्नायवो [4]महिषीगवाम्* ।
पक्वंवंशत्वचः कार्यो [5]गुणस्त्वव्रणको दृढः ॥ ५८ ॥

पट्टसूत्रेण सन्नद्धः सर्वकर्मसहो युधि ।
प्राप्ते भाद्रपदे मासि त्वगर्कस्य प्रशस्यते ॥ ५९ ॥

तस्या[6]स्तत्र गुणः कार्यः [7]पवित्रः प्रवरो दृढः ।
†[8](वृतार्कसूत्रतन्तूनां हस्तास्त्वष्टादश स्मृताः ॥ ६० ॥

तद्वृतं त्रिगुणं कार्यं प्रमाणोऽयं गुणे स्मृतः ।)

[शरलक्षणोक्तिप्रतिज्ञा]

अतः परं प्रवक्ष्यामि शराणां लक्षणं शुभम् ॥ ६१ ॥

[वर्जनीयाः शराः]

[9]न स्थूलं नातिसूक्ष्मं च नापकं न कुभूमिजम् ।
हीनग्रन्थि विदीर्णं च वर्जयेदीदृशं शरम् ॥ ६२ ॥

---

* इतः परं धनुर्वेदसंहितायाम्—

तत्कालहतच्छागस्य तन्तुना वा गुणाः शुभाः ।
निर्लोमतन्तुसूत्रेण कुर्याद्वा गुणमुत्तमम् ॥ ५३ ॥ इत्यधिकः पाठो वर्तते ।

† अस्य धनुरङ्कितभागस्याकरो द्रष्टव्यः ।

[1] पट्टसूत्रो गु—ध. सं. [2] संमितः—ध. सं. [3] रिष्यते—ध. सं. [4] महिषी-भवाः—ध. सं. [5] गुणस्तु स्थावरो—ध. सं. [6] स्तदा गु—मु. [7] नवित्रस्थावरो—ध. सं. [8] धूतार्क—मु. पा. [9] स्थूलं न चातिसूक्ष्मं च—ध. सं.

[ग्राह्याः शराः]

पूर्वग्रन्थि सुपक्वं च पाण्डुरं समयाहृतम् ।*
कठिनं वर्तुलं काण्डं गृह्णीयात्सुप्रदेशजम् ॥ ६३ ॥

[शरपरिमाणम्]

द्वौ हस्तौ मुष्टिहीनौ च दैर्घ्ये स्थौल्ये कनिष्ठिका ।
विधेया शरमानेषु यन्त्रेष्वाकर्षयेत्ततः ॥ ६४ ॥

[शोभनाः शरपक्षाः, तत्परिमाणादिकं च]

कङ्कहंसबकादीनां मत्स्यादक्रौञ्चकेकिनाम् ।
गृध्राणां कुरराणां च पक्षा एते [1]सुशोभनाः ॥ ६५ ॥

†एकैकस्य शरस्यापि चतुःपक्षाणि योजयेत् ।
षडङ्गुलप्रमाणेन पक्षच्छेदं [2]तु कारयेत् ॥ ६६ ॥

दशाङ्गुलसिताः पक्षाश्शार्ङ्गचापस्य मार्गणे ।
योज्या दृढाश्चतुस्संख्यास्सन्नद्धाः स्नायुतन्तुभिः ॥ ६७ ॥

[शराणां स्त्रीपुन्नपुंसकभेदेन त्रैविध्यं, तत्स्वरूपं च]

शराश्च त्रिविधा ज्ञेयाः स्त्री पुमांश्च नपुंसकः ।
अग्रे स्थूलो भवेन्नारी पश्चात्स्थूलो भवेत्पुमान् ॥ ६८ ॥

[3]समो नपुंसको ज्ञेयस्तल्लक्ष्यार्थे प्रशस्यते ।

[स्त्रीपुंशरसाध्यम्]

[4]दूरापातं युवत्या च पुरुषो भेदयेद्दृढम् ॥ ६९ ॥

---

* इतः परं धनुस्संहितायाम्—शरवंशा ग्रहीतव्याः शरत्काले च गाधिज । इत्यधिकः पाठो वर्तते । † अत्रेदमर्धं धनुर्वेदसंहितायां नास्ति ।

[1] मनोहराः—मु. [2] च—ध. सं. [3] समं नपुंसकं ज्ञेयं त—मु., ख. [4] दूरापातो—ध. सं.

[शरे वज्रलेपेन शुद्धलोहफलसंयोजनम्]

*(फलं तु शुद्धलोहस्य सुधारं तीक्ष्णमक्षतम् ।
योजयेद्वज्रलेपेन शरे पक्षानुमानतः ॥ ७० ॥)

[आरामुखादिलोहफलानि]

आरामुखं क्षुरप्रं च गोपुच्छं चार्धचन्द्रकम् ।
सूचीमुखं च भल्लं च वत्सदन्तं द्वि[1]भल्लकम् ॥ ७१ ॥

कर्णिकं काकतुण्डं च तथान्यान्यप्यनेकशः ।
फलानि [2]देशदेशेषु भवन्ति बहुरूपतः ॥ ७२ ॥

[आरामुखादीनां वेध्यानि]

आरामुखेन वै चर्म क्षुरप्रेण च कार्मुकम् ।
सूचीमुखेन कवचमर्धचन्द्रेण मस्तकम् ॥ ७३ ॥

भल्लेन हृदयं वेध्यं द्विभल्लेन गुणः शरः ।
लोहं च काकतुण्डेन लक्ष्यं गोपुच्छकेन च † ॥ ७४ ॥

[लोहफलस्य दुर्भेद्यभेदनोपयोग्यौषधलेपनतः पायनम्]

फलस्य पायनं वक्ष्ये दिव्यौषधिविलेपनैः ।
येन दुर्भेद्यवर्माणि भेदयेत्तरुपर्णवत् ॥ ७५ ॥

पिप्पलीं सैन्धवं कुष्ठं [3]गोमूत्रेण तु पेषयेत् ।
*(ततो निर्वापितं तैले लोहं तत्र प्रशस्यते ॥ ७६ ॥

पञ्चभिर्लवणैः पिष्टैः मधुसिक्थैस्ससर्षपैः ।)
[4]एभिः प्रलेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ॥ ७७ ॥

---

* अयं धनुरङ्कितो भागो धनुर्वेदसंहितायां नास्ति । † इतः परं धनुर्वेद-संहितायाम्—" अन्यद्गोपुच्छकं " इत्यादिना गोपुच्छबाणस्वरूपादिकमुक्तम् ।

[1] वल्लकम्–मु.  [2] देशभेदेन–ध. सं.  [3] गोमूत्रे तु सुपेषयेत्–ध. सं.

[4] अनेन लेपयेच्छलं–ध.सं.

शिखिग्रीवानुवर्णाभं तत्तपीतं तदौषधम् ।
ततस्तु विमलं तोयं पाययेच्छस्त्रमुत्तमम् ॥ ७८ ॥

[नाराचबाणः, तत्स्वरूपं च]

सर्वलोहास्तु ये बाणा नाराचास्ते प्रकीर्तिताः ।
पञ्चभिः पृथुलैः पक्षैः युक्तास्सिध्यन्ति कस्यचित् ॥ ७९ ॥

[दुर्गयुद्धादिषूपयोज्या नालीकबाणाः]

नालीका लघवो बाणा नलयन्त्रेण चोदिताः ।
अत्युच्चदूरपातेषु दुर्गयुद्धेषु ते मताः* ॥ ८० ॥

[धनुस्सन्धाने स्थानमुष्टिव्यायानामुद्देशः, तेषां संख्या च]

स्थानान्यष्टौ विधेयानि योजने भिन्नकर्मणाम् ।
मुष्टयः पञ्च समाख्याता व्यायाः पञ्च प्रकीर्तिताः ॥ ८१ ॥

[स्थानानां लक्षणानि, तद्विनियोगाश्च]

अग्रतो वामपादं च दक्षिणं जानुकुञ्चितम् ।
[1]आलीढं तु प्रकर्तव्यं हस्तद्वयसविस्तरम् ॥ ८२ ॥

[2]प्रत्यालीढे तु कर्तव्यं सव्यं [3]वै जानुकुञ्चितम् ।
दक्षिणं च पुरस्ताद्वा दूरपाते विशिष्यते ॥ ८३ ॥

पादौ सविस्तरौ कार्यौ समौ हस्तप्रमाणतः ।
विशाखस्थानकं ज्ञेयं कूटलक्ष्यस्य वेधने ॥ ८४ ॥

[4]समपादे समौ पादौ निष्कम्पौ च समं गतौ ।
असमे च पुरो [5]वामो हस्तमात्रेण तद्वपुः ॥ ८५ ॥

---

* इतः परं धनुर्वेदसंहितायाम्—
सिंहासनस्य रक्षार्थं शतघ्नीः स्थापयेद्दृढे ।
रञ्जकं बहुलं तत्र स्थाप्यं च बहुधीमता ॥ इत्यधिकः पाठो वर्तते ।

[1] प्रत्यालीढं प्रक—ध. सं. [2] आलीढे तु प्रक—ध. सं. [3] चैवानुकुञ्चितम्—ध. सं. [4] समपादैः स—ध. सं. [5] वामे—ध. सं.

[1] आकुञ्चितौ भुजौ यत्र जानुभ्यां धरणी गतौ ।
दर्दुरक्रममित्याहुः स्थानकं दृढभेदने ॥ ८६ ॥

सव्यं जानु गतं भूमौ दक्षिणं च सकुञ्चितम् ।
अग्रतो यत्र दातव्यं तं विद्याद्गरुडक्रमम् ॥ ८७ ॥

पद्मासनं [2] प्रसिद्धं तु ह्युपविश्य यथाक्रमम् ।
धन्विना तत्तु विज्ञेयं स्थानकं शुभलक्षणम् ॥ ८८ ॥

[धनुस्सन्धाने पताकादिमुष्टयः, तासां लक्षणानि, तत्तल्लक्ष्यभेदाश्च]

पताकावज्रमुष्टिश्च सिंहकर्णी तथैव च ।
[3] मत्सरी काकतुण्डी च योजनीया यथाक्रमम् ॥ ८९ ॥

[पताकामुष्टिः]

दीर्घा तु तर्जनी यत्र चाश्रिताङ्गुष्ठमूलकम् ।
पताका सा [4] तु विज्ञेया नालिका दूर[5]मोक्षणी ॥ ९० ॥

[वज्रमुष्टिः]

तर्जनीमध्यमामध्यमङ्गुष्ठो विशते यदि ।
वज्रमुष्टिस्तु सा ज्ञेया [6] स्थूलनाराचमोक्षणे ॥ ९१ ॥

[सिंहकर्णिकामुष्टिः]

* अङ्गुष्ठपीडितं कुर्यात्तर्जनी नखरं तले ।
अङ्गुलीत्रितयं स्थाप्य मुष्टिः स्यात्सिंहकर्णिका ॥ ९२ ॥

---

* धनुर्वेदसंहितायां सिंहकर्णिकामुष्टिरेवं दर्शिता—

अङ्गुष्ठमध्यदेशस्तु तर्जन्यग्रसमं स्थितम् ।
सिंहकर्णः स विज्ञेयो दृढलक्ष्यस्य वेधने ॥ ८७ ॥ इति ।

[1] आकुञ्चितोरू द्वौ यत्र—ध. सं. [2] सुप्रसिद्धं—मु. [3] मुत्सरी—मु.
[4] च—ध. सं. [5] मोक्षणे—ख. [6] स्थले नारा—ध. सं.

[मत्सरीमुष्टिः]

अङ्गुष्ठनखमूले तु तर्जन्यग्रं [1] सुसंस्थितम् ।
मत्सरी सा [2] तु विज्ञेया चित्रलक्ष्यस्य वेधने ॥ ९३ ॥

[काकतुण्डीमुष्टिः]

अङ्गुष्ठाग्रे तु तर्जन्या मुखं यत्र निवेशितम् ।
काकतुण्डी तु सा ज्ञेया सूक्ष्म[3]लक्ष्येषु योजिता ॥ ९४ ॥

[त्रीणि धनुस्सन्धानानि, यथाक्रमं तद्विनियोगश्च]

सन्धानं त्रिविधं प्रोक्तमध ऊर्ध्वं समं तथा ।
योजयेत्त्रिप्रकारं च कार्येष्वपि यथाक्रमम् ॥ ९५ ॥

अधः सुदूरपातित्वे समे लक्ष्ये सुनिश्चलम् ।
दृढास्फोटं प्रकुर्वीत चोर्ध्वसन्धानयोगतः ॥ ९६ ॥

[धनुस्सन्धाने पञ्च व्यायाः, तेषां स्थानानि च

कैशिकः केशमूले [4] च शिरःशृङ्गे च सात्विकः ।
श्रवणे वत्सकर्णश्च ग्रीवायां भरतो भवेत् ॥ ९७ ॥
[5]अंसके स्कन्धनामा च व्यायाः पञ्च प्रकीर्तिताः ।

[कैशिकादीनां लक्ष्याणि]

कैशिकश्चित्रयुद्धेषु अधोलक्ष्येषु सात्विकः ॥ ९८ ॥
[6]वत्सकर्णश्च भरतो विज्ञेयो दृढभेदने ।
दृढभेदे च दूरे च [7] स्कन्धनामा प्रकीर्तितः * ॥ ९९ ॥

---

* इतः परं धनुर्वेदसंहितायां—

लक्ष्यं चतुर्विधं ज्ञेयं स्थिरं चैव चलं तथा ।
चलाचलं द्वयचलं वेधनीयं क्रमेण तु ॥ ९४ ॥

—इति लक्ष्यनिर्देशपरो ग्रन्थोऽधिको वर्तते । सोऽप्यत्रावश्यकः ।

[1] च संस्थितम्—ध. सं. [2] च—ध. सं. [3] लक्ष्ये प्रयो—ध. सं.
[4] वै शरम्—ध. सं. [5] अंशके—मु. [6] वत्सकर्णः सदा ज्ञेयो भरतो—ध. सं.
[7] स्कन्धनामानमुद्दिशेत्—ध. सं.

[स्थिरलक्ष्यवेधनक्रमः]

आत्मानं सुस्थिरं कृत्वा लक्ष्यं चैव स्थिरं बुधः ।
वेधयेदवधानेन स्थिरवे[धी]धः स उच्यते ॥ १०० ॥

[चललक्ष्यवेधनं, तत्स्वरूपं च]

चलं तु वेधयेद्यस्तु [1]चात्मना स्थिरसंस्थितः ।
चललक्ष्यं तु तत्प्रोक्तमाचार्येण [2]सुधीमता ॥ १०१ ॥

[चलाचललक्ष्यस्वरूपम्]

धन्वी तु चलते यत्र स्थिरलक्ष्ये समाहितः ।
चलाचलं भवेत्तच्च ह्यप्रमेय[3]मनिन्दितम् ॥ १०२ ॥

[द्विचललक्ष्यस्वरूपं, तस्य श्रमसाध्यता च]

उभावेव चलौ यत्र लक्ष्यं चापि धनुर्धरः ।
[4]एतच्च द्विचलं ज्ञेयं श्रमेणैव हि साध्यते ॥ १०३ ॥

[श्रमाकर्षणप्रयोजनम्]

श्रमेणास्खलितं लक्ष्यं दूरं च बहुभेदनम् ।
[5]श्रमेण कठिनाकृष्टिः शीघ्रसन्धानमाप्यते ॥ १०४ ॥

श्रमेण चित्रयोधित्वं श्रमेण प्राप्यते जयः ।
तस्माद्गुरुसमक्षं हि श्रमः कार्यो विजानता ॥ १०५ ॥

[धनुष्क्रियारम्भे वामहस्तप्राथम्यम्]

प्रथमं वामहस्तेन यः श्रमं कुरुते नरः ।
तस्य चा[पक्रि]पि क्रियासिद्धिरचिरादेव जायते ॥ १०६ ॥

---

[1] चात्मस्थानेषु सं–ध. सं. [2] शिवेन वै-ध. सं. [3] मचिन्तितम्–ध. सं.
[4] तद्विज्ञेयं ह्यचलं श्रमेण बहु साध्यते–ध. सं [5] श्रमेणास्खलिताकृष्टिः–ध. सं.

[दक्षिणहस्तस्य वामहस्तसिध्यनन्तरोपयोगः]

वामहस्ते [1]तु संसि[द्धे]द्धः पश्चाद्दक्षिणमारभेत् ।
उभाभ्यां च श्रमं कुर्यान्नाराचैश्च शरैस्तथा ॥ १०७ ॥

[ उभयहस्तसिद्धावपि वामहस्तप्राधान्यम् ]

वामेनैव श्रमं कुर्यात्सुसिद्धे दक्षिणे करे ।
[2]विशिखे चासने चैव [3]तथा व्यायेच कैशिके ॥ १०८ ॥

[उदयादिकालप्राच्यादिदिग्भेदेन लक्ष्यनिर्देशः]

उदिते भास्करे लक्ष्यं पश्चिमायां निवेशयेत् ।
अपराह्णे [4]तु कर्तव्यं लक्ष्यं पूर्वदिगाश्रितम् ॥ १०९ ॥

उत्तरेण सदा [5]कार्यं प्रशस्यमविरोधकम् ।
संग्रामेण विना कार्यं न लक्ष्यं दक्षिणामुखम् ॥ ११० ॥

[ज्येष्ठमध्यमकनिष्ठलक्ष्यान्तराणि]

षष्ट्यन्वन्तरे लक्ष्यं [6]ज्येष्ठलक्ष्यं प्रकीर्तितम् ।
चत्वारिंशन्मध्यमं च विंशतिश्च कनिष्ठकम् *॥ १११ ॥

लक्ष्यं च पुरुषोन्मानं कुर्याच्चन्द्रकसंयुतम् ।

---

* एतदनन्तरं धनुर्वेदसंहितायां—

चत्वारिंशच्च त्रिंशच्च षोडशैव भवेत्ततः ।
चतुश्शतंश्च काण्डानां यो हि लक्ष्यं विसर्जयेत् ।
सूर्योदये चास्तमने स ज्येष्ठो धन्विनां भवेत् ।
त्रिशतैर्मध्यमश्चैव द्विशताभ्यां कनिष्ठकः ॥

—इत्यधिकः पाठो वर्तते ।

[1] सुसंसिद्धः—ध. सं. [2] विशाखे नासमेनैव—ध. सं. [3] रथी—ध. सं.
[4] च—ध सं. [5] कार्यमवश्यमवरोधिकम्—ध. सं. [6] श्रेष्ठ—मु.

[ज्येष्ठादयो लक्ष्यवेधिनः]

ऊर्ध्ववेधी भवेज्ज्येष्ठो नाभिवेधी च मध्यमः ॥ ११२ ॥
[1]यः पादवेधी लक्ष्यस्य स कनिष्ठो मतो [2]मम* ।

[धनुर्विद्यायां श्रमक्रियाकलापः]

क्रियाकलापान् वक्ष्यामि श्रमसाध्यान् धनुष्मताम् ॥ ११३ ॥
येषां विज्ञानमात्रेण सिद्धिर्भवति नान्यथा ।
प्रथमं चापमारोप्य चूलिकां बन्धयेत्ततः ॥ ११४ ॥

स्थानकं तु ततः कृत्वा बाणोपरि करं न्यसेत् ।
तोलनं धनुषश्चैव कर्तव्यं वामपाणिना ॥ ११५ ॥

आदानं च ततः कृत्वा सन्धानं च ततः परम् ।
सकृदाकृष्टचापेन भूमिवेधं [3]च कारयेत् ॥ ११६ ॥

---

* इतः परं धनुर्वेदसंहितायां अनध्यायप्रतिपादकः—
"अष्टमी च अमावास्या वर्जनीया चतुर्दशी ।
पूर्णिमार्धदिनं यावन्निषिद्धं सर्वकर्मसु ॥
अकाले गर्जिते देवे दुर्दिनं चाथवा भवेत् ।
पूर्वकाण्डहतं लक्ष्यमनध्याये प्रचक्षते ॥
अनूराधर्क्षमारभ्य षोडशर्क्षे दिवाकरः ।
यावच्चरति तं कालमकालं हि प्रचक्षते ॥
अरुणोदयवेलायां वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायस्तमकालं प्रचक्षते ॥
श्रमं च कुर्वतस्तत्र भुजङ्गो दृश्यते यदि ।
अथवा भज्यते चापं यदैव श्रमकर्मणि ॥
त्रुट्यते वा गुणो यत्र प्रथमे बाणमोक्षणे ।
श्रमं तत्र न कुर्वीत शस्त्रे मतिमतां वरः ॥"—इति ग्रन्थोऽधिको वर्तते ।

[1] पादभेदी तु—ध. सं. [2] मुनेो—ध. सं. [3] न का—ध. सं.

नमस्कुर्या[1]च्छिवं विघ्नराजं गुरुधनुश्शरान् ।
याचितव्या गुरोराज्ञा बाणस्याकर्षणं प्रति ॥ ११७ ॥

प्राणवायुं प्रयत्नेन बाणेन सह पूरयेत् ।
कु[म्भ]न्तकेन स्थिरं कृत्वा हुङ्कारेण विसर्जयेत् ॥ ११८ ॥

इत्यभ्यासक्रिया कार्या धन्विना सिद्धिमिच्छता ।
षण्मासा[2]त्सिध्यते मुष्टिश्शराः संवत्सरेण तु ॥ ११९ ॥

नाराचास्तस्य सिध्यन्ति यस्य तुष्टो महेश्वरः
पुष्पवद्धारयेद्बाणं सर्पवत्पीडयेद्धनुः ॥ १२० ॥

[3]धनुषश्चिन्तयेल्लक्ष्यं यदीच्छेत्सिद्धिमात्मनः ।

[आचार्यादीनां क्रियादिषु मतभेदः]

क्रियामिच्छन्ति आचार्या दूरमिच्छन्ति भार्गवाः ॥ १२१ ॥

राजानो दृढमिच्छन्ति लक्ष्यमिच्छन्ति [4]चेतरे ।

[लक्ष्यभेदनस्य प्राशस्त्यम्]

जनानां रञ्जनं येन लक्ष्य[5]भूतात्प्रजायते ॥ १२२ ॥

हीनेनापीषुणा तस्मात्प्रशस्तं लक्ष्यवेधनम् ।

[लक्ष्यभेदने स्थानाद्यस्खलनादिव्यवस्था]

[6]विशाखस्थानके स्थित्वा समसन्धानमाचरेत् ॥ १२३ ॥

गोपुच्छमुखबाणेन [7]सिंहकर्णाख्यमुष्टिना ।
आकर्षेत्कैशिकन्याये न शिखां चालयेत्ततः ॥ १२४ ॥

---

[1] च मां वि–घ. सं. अत्र मामित्यस्यार्थानुवादः शिवमिति । [2] द्ध्यते–मु. [3] धनवश्चिन्तयेल्लक्ष्यं–घ.सं. [4] चेतराः–ख. [5] पातात्प्र–घ.सं. [6] विशाखस्थानकं हित्वा–घ. सं. [7] सिंहकर्णेन मुष्टिमा–घ. सं.

पूर्वापरौ समौ कार्यौ समांसौ निश्चलौ करौ ।
चक्षुषी स्पन्दयेच्चैव [1]दृष्टी लक्ष्ये नियोजयेत् ॥ १२५ ॥

[2]मुष्टिना छदितं लक्ष्यं शरस्याग्रे नियोजयेत् ।
मनो दृष्टिगतं कृत्वा ततः काण्डं विसर्जयेत् ॥ १२६ ॥

स्खलत्येवं कदाचिन्न लक्ष्ये [3]यो योजितश्रमः ।

[शीघ्रसन्धानम्]

आदानं चैव तूणीरात्सन्धानं कर्षणं तथा ॥ १२७ ॥

क्षेपणं च त्वरायुक्तो बाणस्य कुरुते [4]तु यः ।
नित्याभ्यासवशात्तस्य शीघ्रसन्धानता भवेत् * ॥ १२८ ॥

[प्रत्यालीढे दृढभेदनम्]

स्कन्धव्यायेन वज्रस्य मुष्ट्या [5]पुंसा गुणेन च ।
अत्यन्तसौष्ठवाद्बाणोः जायते दृढभेदिता ॥ १२९ ॥

प्रत्यालीढे कृते स्थाने ह्यधःसन्धानमाचरेत् ।

[क्षीबाणस्य दूरपातित्वम्]

मुष्ट्या पताकया बाणं क्षीचिह्नं दूरपातनम् ॥ १३० ॥

[प्रशस्तास्तिस्रो बाणगतयः]

सूचीमुखा मीनपुच्छा भ्रमरी च तृतीयका ।
शराणां गतयस्तिस्रः प्रशस्ताः कथिता बुधैः ॥ १३१ ॥

[सूचीमुखगतिः]

सूचीमुखा गतिस्तस्य सायकस्य प्रजायते ।
पत्रं विलोकितं यस्य [6]हीनपत्रमथापि वा ॥ १३२ ॥

---

* एतदुपरि धनुस्संहितायां 'मुष्ट्या पताकये'त्यादिपाठो दृश्यते। सोऽत्रो परिष्टाद्व्यत्ययेन वर्तते ।

[1] दृष्टि–ध. सं., मु. [2] मुष्टिनाऽऽच्छा–ध. सं. [3] योऽधोजितश्रमः–ध. सं.
[4] च–मु. [5] पुंमार्गेणेन–ध. सं. [6] ह्यथवा हीनपत्रकम्–ख., ध. सं.

[मीनपुच्छगतिः]

[1]कर्कशेन तु चापेन यः कृष्टो हीनमुष्टिना।
मत्स्यपुच्छा गतिस्तस्य सायकस्य प्रकीर्तिता ॥ १३३ ॥

[भ्रमरीगतिः]

भ्रमरी कथिता ह्येषा [2]सद्भिस्तु श्रमकर्मणि।
[3]गुरुत्वेन विना याति क्षिप्यमाणस्तु सायकः ॥ १३४ ॥

[बाणानां चतस्रो लक्ष्यस्खलनगतयः]

वामगा दक्षगाश्चैव[4]मधोगाश्चोर्ध्वगास्तथा।
चतस्रो गतयः प्रोक्ता बाणास्खलनहेतवः ॥ १३५ ॥

[मुष्टिभेदेन गतिभेदः]

कम्पते गुणमुष्टिश्च मार्गणस्य हि पृष्ठतः।
संमुखी स्याद्धनुर्मुष्टि[5]स्तस्य वामे गतिर्भवेत् ॥ १३६ ॥

ग्रहणं शिथिलं यस्य ऋजुत्वेन विवर्जितम्।
पार्श्वे तु दक्षिणं याति सायकस्य न संशयः ॥ १३७ ॥

ऊर्ध्वे भवेच्चापमुष्टिर्गुणमुष्टिरधो भवेत्।
सम्मुक्तो मार्गणो लक्ष्यादूर्ध्वं याति न संशयः ॥ १३८ ॥

मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत्।
गुणमुष्टिर्भवेदूर्ध्वं तदाधोगामिनी गतिः ॥ १३९ ॥

[शुद्धगतिः]

लक्ष्यबाणाग्रदृष्टीनां सङ्गतिस्तु यदा भवेत्।

---

[1] कर्करीतं–ध. सं. [2] शितेन–ध. सं. [3] ऋजुत्वेन–ध. सं.
[4] मूर्ध्वगाधोगमास्तथा–ग. [5] स्तदा वा–ध. सं.

तदानीमुज्झितो बाणो [1]लक्ष्यं न स्खलति ध्रुवम् *॥ १४० ॥

स्वाकृष्ट[2]स्तेजितो यस्तु [3]स शुद्धो गाढमुज्झितः ।
नरनागाश्वकायेषु न स तिष्ठति मार्गणः ॥ १४१ ॥

[धन्विवरलक्षणम्]

बाणास्तृणसमा यस्य यस्येन्धनसमं धनुः ।
यस्य प्राणसमा मौर्वी स धन्वी धन्विनां वरः ॥ १४२ ॥

[दृढचतुष्टयम्, तद्भेदनेन बाणस्य वज्रातिशायितादिकं च]

अयश्चर्म घटश्चैव मृत्पिण्डं च चतुष्टयम् ।
[4]यो भिनत्ति न तस्येषुर्वज्रेणापि विदार्यते ॥ १४३ ॥

अर्धाङ्गुलप्रमाणेन लोहपत्राणि कारयेत् ।
तानि भित्वैकबाणेन दृढघाती भवेन्नरः ॥ १४४ ॥

चतुर्विंशतिचर्माणि यो भिनत्तीषुणा नरः ।
तस्य बाणो गजेन्द्रस्य कायं निर्भिद्य गच्छति ॥ १४५ ॥

भ्राम्यन् जलघटो वेध्यश्चक्रे मृत्पिण्डकं तथा ।
भ्रमन्तं वेधयेद्यो हि [5]दृढवेधी स उच्यते ॥ १४६ ॥

[अयआदिवेधने बाणभेदाः]

अयस्तु काकतुण्डेन चर्म चारामुखेन तु ।

---

* एतदनन्तरं धनुर्वेदसंहितायाम्—
निर्दोषः शब्दहीनश्च सममुष्टिर्दृढयोगतिः ।
भिनत्ति दृढवेध्यानि सायको नास्ति संशयः ॥
—इति पाठो वर्तते ।

[1]लक्ष्यान्न स्ख—ध.सं. [2]स्तूज्झितो—मु. [3]सुशुद्धो—ध. सं. [4]योऽभिरक्षितस्येषुर्वज्रेणापि न धार्यते—मु. [5]दृढभेदी—ध. सं.

मृत्पिण्डं च घटं चैव विध्येत्सूचीमुखेन [1]हि ॥ १४७ ॥

[लक्ष्यवेधने चित्रविधिः]

बाणभङ्गं करावर्तं [2]काष्ठछेदनमेव च ।
बिन्दुकं गोलकयुगं यो वेत्ति स जयी भवेत् ॥ १४८ ॥

लक्ष्यस्थाने धृतं काण्डं सम्मुखं [3]भेदयेत्ततः ।
[4]तिर्यङ्मुष्टिं विधाय स्वां [5]तिर्यग्विवलितेषुणा ॥ १४९ ॥

संमुखं [6]वा समायान्तं [7]तिर्यग्वा यान्तमम्बरे ।
[8]शरान् शरेण यश्छिन्द्या[9]द्बाणछेदी स [10]जायते ॥ १५० ॥

[11]काष्ठे स्वकेशं संयम्य तत्र बद्ध्वा वराटिकाम् ।
हस्तेन भ्राम्यमाणां च यो हन्ति स धनुर्धरः ॥ १५१ ॥

लक्ष्यस्थाने न्यसेत्काष्ठं सान्द्रं गोपुच्छसन्निभम् ।
यश्छिन्द्यात्तत्क्षुरप्रेण काष्ठछेदी स जायते ॥ १५२ ॥

[12]लक्ष्यदेशे न्यसेच्छुभ्रबिन्दुं बन्धूकपुष्पवत् ।
हन्ति तं बिन्दुकं यस्तु [13]चित्रवेधी स जायते ॥ १५३ ॥

काष्ठगोलयुगं क्षिप्तं दूरमूर्ध्वं [14]पुरः स्थितैः ।
असंप्राप्तं [15]धरापृष्ठे तद्गोपुच्छमुखेन हि ॥ १५४ ॥

यो हन्ति शरयुग्मेन शीघ्रसन्धानयोगतः ।

---

[1] वै–घ. सं. [2] काष्ठवेधन–मु. [3] छेदयेत्ततः–घ. सं. [4] किञ्चिन्मुष्टिं–घ. सं. [5] तिर्यग्बद्धफलकेषुणा–घ. सं. [6] बाणमायान्तं–घ. सं. [7] तिर्यग्बाणं न सञ्चरेत्–घ. सं. [8] प्राप्तं–घ. सं. [9] द्बाणभेदी–मु. [10] उच्यते [11] काष्ठेऽश्वकेशं–घ. सं. [12] लक्ष्ये बिन्दुं न्यसेच्छुभ्रं शुभ्रबन्धूक–घ. सं. [13] चित्रयोधा स उच्यते–घ. सं. [14] पुरा–घ. सं. [15] शरं पृष्ठे–घ. सं.

स स्याद्धनुर्भृतां श्रेष्ठः पूजितः सर्वपार्थिवैः*॥ १५५ ॥

[तत्र शब्दवेधनं, तस्य भाग्यायत्तता च]

लक्ष्यस्थाने न्यसेत्कांस्यपात्रं हस्तद्वयान्तरे ।
ताडयेच्छर्कराभिस्तच्छब्दस्सञ्जायते यदा ॥ १५६ ॥

यत्रैवोत्पद्यते शब्दस्तं सम्यक् तत्र चिन्तयेत् ।
कर्णेन्द्रियमनोयोगाल्लक्ष्यं [1] निर्धारणं नयेत् ॥ १५७ ॥

पुनश्शर्करया तच्च ताडयेच्छब्दहेतवे ।
ततः किञ्चित्कृतं दूरे नित्यं नित्यं विधानतः ॥ १५८ ॥

लक्ष्यं समभ्यसेद्ध्वान्ते शब्दवेधनहेतवे ।
ततो बाणेन हन्यात्तदवधानेन तीक्ष्णधीः ॥ १५९ ॥

एतच्च दुष्करं कर्म भाग्यैः कस्यापि सिध्यति † ।

[स्थूलादिलक्ष्याणि]

षोडशाङ्गुललक्ष्यं तु स्थूललक्ष्यमुदाहृतम् ॥ १६० ॥

अङ्गुलद्वितयं सूक्ष्मं परं गुञ्जाशिरोरुहम् ।

---

* एतदनन्तरं धावल्लक्ष्यमुक्तं धनुर्वेदसंहितायाम्—रथस्थेन गजस्थेन हयस्थेन च पत्तिना । धावता वै श्रमः कार्यो लक्ष्यं हन्तुं सुनिश्चितम् ॥ इति । एतदुपरि च "वामादायाति यल्लक्ष्यं दक्षिणं हि प्रधावति । तच्छिन्द्याच्चापमाकृष्य सव्येनैव च पाणिना ॥ तथैव दक्षिणायां तु विध्येद्बाणाद्धनुर्धरः । आलीढक्रममारोप्य त्वरा हन्याच्च तं नरः ॥ वायोरपि बलं दृष्ट्वा वामदक्षिणवाहतः । लक्ष्यं स साधयेदेवं गाधिपुत्र ! नृपात्मज ! ॥ वायुपृष्ठे दक्षिणे च वहन् सूचयते बलम् । सम्मुखीनश्च वामश्च भटानां भङ्गसूचकः ॥ " इति विधिग्रन्थभागोऽधिको वर्तते । † एतदनन्तरं खगबाण-प्रत्यागमनादिकमुक्तं धनुर्वेदसंहितायां खगमित्यादिना ।

[1] निश्चयतां—ध. सं.

[यमलार्जुनसंज्ञकचित्रवेधनम्]

स्तम्भस्योपरिविन्यस्तचक्रयन्त्रेषु कीलितम् ॥ १६१ ॥

वायुप्रेरितचक्रैस्तु भ्राम्यमाणं दृढं झषम् ।
पात्रमध्यस्थिते तोये वीक्ष्य विध्येच्छरेण तम् ॥ १६२ ॥

एकसन्धानयुक्ताभ्यां बाणाभ्यां लक्ष्ययुग्मकम् ।
आविध्य दर्शयेच्चित्रं यमलार्जुनसंज्ञकम् ॥ १६३ ॥

[अन्ये चित्रवेधनविषयः]

सन्धितस्सायकस्त्वेको द्वितीयः संमुखस्थितः ।
द्वाविमावेकमोक्षेण पुरः पश्चाच्च गच्छतः ॥ १६४ ॥

पूर्वापरस्थितं लक्ष्यं शराभ्यां वेधयेत्ततः ।
एवमादीनि चित्राणि धनुर्विद्यागतानि च ॥ १६५ ॥

अभ्यसेद्बुद्धिमान् यस्तु स सर्वत्र जयी भवेत् ।
ततोऽष्टारं समादाय चक्रं षडरमेव वा ॥ १६६ ॥

मुष्टिभिस्सिंहकर्णाद्यैः लक्ष्यवेधं समभ्यसेत् ।
ईषत्कुञ्चिततर्जन्या भ्रामयेद्वामदक्षिणम् ॥ १६७ ॥

उत्क्षिप्योत्क्षिप्य वेगेन पञ्च सप्त प्रचारयेत् ।
पर्यायेण तथैकैकं चित्रमेवं समभ्यसेत् ॥ १६८ ॥

सप्तारत्निर्भवेद्भूमौ षडरत्निस्तु वाजिनि ।
वारणे तु नवारत्निः कुन्तदण्डास्त्रयः स्मृताः ॥ १६९ ॥

फलमग्रे भवेदेकविंशत्यङ्गुलमानतः ।
अशनिर्मूलदेशे तदायतिर्मुकुलाकृतिः ॥ १७० ॥

भूमिकुन्तं समादाय दक्षिणेन च पाणिना ।
अशनेरग्रतो हस्तमात्रेऽनुत्तानमुष्टिना ॥ १७१ ॥

सङ्गृह्य कुन्तं नासेन स्थानकेन चरेल्लघु ।

चालयन् मणिबन्धेन कङ्कणावर्तमाचरेत् ॥ १७२ ॥

स्कन्धे चावर्तयेत्कुन्तं कण्ठावर्तं समभ्यसेत् ।
पृष्ठे च भ्रामयेत्कुन्तं पृष्ठावर्तं समभ्यसेत् ॥ १७३ ॥

तत्र तत्र [1]प्रदर्शे तु तत्तदावर्तमभ्यसेत् ।
फलेन दर्शयेदासां परवेधात्मिकां ततः ॥ १७४ ॥

छलनाशामथान्यां च दर्शयेत्कुन्तकोविदः ।
गदां लोहमयीं कुर्याद्दारुसारमयीं तथा ॥ १७५ ॥

घनेन निर्मितां वापि रत्नकाञ्चनभूषिताम् ।
यवोदरीं च शूलाग्रां समदण्डां परां शुभाम् ॥ १७६ ॥

भ्रामयेत्करयुग्मेन करेणैकेन वा पुनः ।
विचरेन्मण्डलैश्चित्रैः सव्यैश्चैवापसव्यकैः ॥ १७७ ॥

धनुर्विद्यादिकेष्वे[2]वमभ्यासक्रम ईरितः ।

[सोमशेखरनायकस्यैकधन्विपदप्राप्तिः, मल्लविनोदहर्षश्च]

इत्यभ्यस्यन्नसामान्यं धनुराद्यस्त्रकौशलम् ॥ १७८ ॥

एकधन्विपदं प्राप्तः सोमशेखरनायकः ।
विविधेषु विनोदेषु कौतुकी खुरलीश्रमम् ॥ १७९ ॥

वितन्वन्मल्लकलितैः विनोदैरास हर्षितः ।

इति शिवतत्त्वरत्नाकरेऽष्टमकल्लोले धनुश्चक्रकुन्तगदालक्षणतत्साधनक्रमनिरूपणं
नाम द्वितीयस्तरङ्गः

---

[1] अत्र प्रदेशे इति स्यात् । [2] वं क्रमोऽभ्यासस्य चोदितः—मु.

# अष्टमकल्लोले तृतीयस्तरङ्गः

## मल्लविनोदनिरूपणम्

[कुमारस्य मल्ललीलाप्रश्नः, सूपतेस्तदुत्तरकथनप्रतिज्ञा च]

(* गुरो! कौतुकसन्धातृमल्ललीलापरम्परा।
या सम्प्रतीरिता सा तु निरूप्या प्रेमवैभवात् ॥ १ ॥

विनोदमथ मल्लानां ब्रवीमि शृणु नन्दन!।

[उत्तमादिभेदेन मल्लत्रैविध्यम्]

मल्लाश्च त्रिविधा ज्ञेया [1] उत्तमाधममध्यमाः ॥ २ ॥)

उत्तमो ज्यैष्ठिको [2] नाम मध्यमोऽन्तरज्यैष्ठिकः।
कनिष्ठो गोबलो ज्ञेयः कायप्राणगुणान्तरात् ॥ ३ ॥

[मल्लानां भविष्णुत्वादेः कालावधिः]

[3] आविंशतेर्वत्सरेभ्यो भविष्णुर्मल्ल उच्यते।
तत ऊर्ध्वं त्रिंशदब्दात्प्ररूढः परिकीर्तितः ॥ ४ ॥

ततः परं हीयमानो नियुद्धे [4] न क्षमो भवेत् †।

[तेषां ज्यैष्ठिकत्वादेरुपाधयः]

ज्यैष्ठिकः कथ्यते मल्लो विद्याकायबलाधिकः ॥ ५ ॥

अर्धेन [5] ज्येष्ठमल्लस्य कायप्राणगुणैस्तु यः।
हीयमानो भवेन्मल्लो नाम्ना सोऽन्तरज्यैष्ठिकः ॥ ६ ॥

---

* एतदन्तर्गतोग्रन्थः ख. पुस्तके नास्ति। † इतः परं मानसोल्लासे—
महाकायो महाप्राणो मल्लविद्याविशारदः।—इत्यधिकः पाठो वर्तते।

[1] उत्तमो मध्यमोऽधमः—मान. [2] नामान्तरज्येष्ठस्तु मध्यमः—मु., ख.

[3] आत्रिंश—ख. [4] स्वक्षमो—मान. [5] ज्यैष्ठिम—ग.

ततोऽपि हीयमानश्चेदेतैरेव [1]गुणैस्तु यः।
गोवलो नाम मल्लोऽसौ नियुद्धे वेगवान् वरः * ॥ ७ ॥

पोषार्थं द्रविणं तेभ्यो दत्वा पश्चाद्विसर्जयेत्।
भविष्णवः प्रवृद्धाश्च [2]पुष्टा बृंहणभोजनैः ॥ ८ ॥

माषैर्मांसैस्तथा दध्ना पिष्टैः क्षीरविमिश्रितैः।
घृतेन सितया चैव विदार्या वाजिगन्धया ॥ ९ ॥

घृतेन भृष्टैः कूष्माण्डैश्चूर्णितैस्सितयान्वितैः।

[मल्लानां स्त्रीभ्यो रक्षणं, भविष्णूनां तत्रातिशयश्च]

योषितां दर्शनस्पर्शसंलापात्सङ्गमादपि ॥ १० ॥

संरक्ष्या यत्नतो मल्ला विशेषेण भविष्णवः।

[स्वस्वगेहस्थितैर्गोवलैः सह मल्लयुद्धावृत्तिः]

एकान्तरे दिने [3]कुर्यादविस्मरणहेतवे ॥ ११ ॥

पृथक् पृथक् स्वगेहेषु निजैर्गोवलकैस्सह। †
स्थानकानि च चत्वारि कल्पयेत्सुदृढानि च ॥ १२ ॥

विज्ञानानि च सर्वाणि [4]तैश्च साकमशेषतः।

---

* इतः परं **मानसोल्लासे**—
"वेगलः सरलो दीर्घो भविष्णुः शैशवे भवेत्।
जङ्घाकाण्डे कोष्ठके च हनुदेशेऽस्थिसारवान्॥
द्वात्रिंशतां वत्सराणां पाल्यंशो (शे) देशविश्रु (स्तु) ताः।
पूर्णासु तासु पालीषु वर्तयिष्ये नियोधनम्॥
एवं समादिशन् मल्लान् सर्वान् क्षोणीपतिः स्वयम्"। एवं पाठ उपलभ्यते।

† एतदनन्तरं **मानसोल्लासे**—"गोवलैः सह कुर्वीत नियुद्धं प्राणवर्धनम्" इति पाठो वर्तते।

[1] गुणैस्तथा–**मान.** [2] पोष्या बृंहणभोजनैः–**मान.** [3] कुर्युः श्रममश्रमहेतवे–**मान.** [4] तेभ्यसेयुर्विशेषतः–**मान.**

[ स्थानकविज्ञानलक्षणकथनप्रतिज्ञा ]

वक्ष्यामि स्थानकानां च विज्ञानानां च लक्षणम् ॥ १३ ॥

[ चञ्चलस्थानकम् ]

[1]कच्छे पूर्वापरे धृत्वा प्रोत्तानपतितस्य हि ।
[2]तत्कपोलं स्वपार्श्वेन सम्पीड्यार्धाङ्गकं [3]भजेत् ॥ १४ ॥

पुरः [4]कच्छान् समादाय [5]पूर्ववत्पतितस्य हि ।
[6]मूर्ध्ना कूर्मासनं बद्ध्वा [7]भजेद्वाप्यैकपादकम् ॥ १५ ॥

उत्तानप्रतिमल्लस्य निवार्य चरणद्वयम् ।
उदरस्योपरि स्थानं [8]स्थानकं चञ्चलं स्मृतम् ॥ १६ ॥

[ जठरस्थानकम् ]

स्वयमुत्तानपतितो जठरागमनो[9]द्धतम् ।
पादाभ्यां [10]पीडयेन्मध्ये जठरस्थानकं भवेत् ॥ १७ ॥

[ पृष्ठस्थानकम् ]

पराङ्मुखस्य मल्लस्य स्थितस्य पतितस्य [11]च ।
[12]कच्छामाक्रम्य [13]पाश्चात्यां पृष्ठस्थानकमाचरेत् ॥ १८ ॥

[स्थानकोपसंहारः, विज्ञानोपक्रमश्च]

उक्तानि स्थानकान्येवं विज्ञानानि प्रचक्ष्महे ।
स्वरूपेण तथा नाम्ना विस्तरेण यथागमम् ॥ १९ ॥

---

[1] कक्षे—मान. [2] तत्कोमलं—ग. [3] भवेत्—मान. [4] कक्षं—मान. [5] पूर्ववत्पातितः स हि—मान. [6] मूर्ध्नि—मान. [7] भजेद्वा—मान. [8] स्थानं करवलं स्मृतम्—मान. [9] द्धतम्—मान. [10] पीडयन्—मान. [11] वा—मान. [12] कक्षामा—मान. [13] पार्श्वाभ्यां—मान.

[ मुखपीडनविज्ञानम् ]

अर्धाङ्गस्थान[1]कस्थेन मल्लेन स्थूलवर्ष्मणा ।
पीडनान्मुखदेशस्य विज्ञानं स्यात्तदेव[2] तत् ॥ २० ॥

[ बहिःपणविज्ञानम् ]

[3] स्थिरादर्धाङ्कके स्थाने पादस्याकर्षणं बहिः ।
बहिःपणमिति ज्ञेयं विज्ञानं पादमोटनम्* ॥ २१ ॥

[ जागुसीविज्ञानम् ]

तस्यैव [4]परिवृत्तस्य मोटने [5]जागुसी भवेत् ।

[ गुडालविज्ञानम् ]

जङ्घाभ्यां च भुजाक्रान्तौ ताभ्यां शिरसि पीडिते ॥ २२ ॥
[6] पुरःकच्छा समाकृष्टा [7] गुडालं [8] प्राणघातनम् ।

[उत्तरडोक्करविज्ञानम्]

[9] ग्रीवायाश्च भुजायाश्च पादेनाक्रमणे सति ॥ २३ ॥
अन्यजान्ववबन्धेन कुर्यादुत्तर[10]डोक्करम् ।

[ पट्टसविज्ञानम् ]

शिरःस्थितेन मल्लेन विक्षेपायोद्यतं पदम् ॥ २४ ॥

---

* इतः परं मानसोल्लासे —
" शिरःस्थानकमास्थाय गृहीत्वैकेन मूर्धकम् ।
अन्येन तस्करस्याधः क्षिपन स्वकरे धृते ।
बहिर्भागे च वलिते विज्ञानं बाहुमोटनम् ॥ " इति बाहुमोटनमुक्तम् ।

[1] कच्छेन–मान. [2] तु–मान., हि–मु. [3] स्थित्वैवार्धाङ्कके–मान.
[4] परिदत्तस्य–मान. [5] वाहुसी–मान. [6] पुरः कक्षां समाकृष्य–मान.
[7] गुणाकं–मान. [8] प्राणघातकः–मान. [9] ग्रीवायाश्चैव भुजयोः–मु. [10] ढोङ्करम्–मान.

गृहीत्वा सक्थियुग्मेन [1]कक्षं निष्पीड्य पार्ष्णिकम् ।
उत्तानजानुदेशस्य कटियन्त्रेण [2]पीडितम् ॥ २५ ॥
[3]पट्टसं नाम विज्ञानं जानुसन्धिप्रभञ्जनम् ।

[छुडकीविज्ञानम्]

अनेनैव प्रकारेण बाहुसन्धिप्रपीडनम् ॥ २६ ॥
[4]छुडकी नाम विज्ञानं [5]शास्त्रविद्भिः प्रकीर्तितम् ।

[अन्तश्छुडकीविज्ञानम्]

[6]आदौ विधाय तद्बाह्वोः पूर्ववत्पीडनं यदि ॥ २७ ॥
विज्ञान[7]मन्तश्छुडकी बाहुसन्धिप्रभञ्जनी ।

[हस्तडोकरकविज्ञानम्]

मन्यां कक्षे विनिक्षिप्य भुजेनैकेन संयुता ॥ २८ ॥
गलं प्रकोष्ठेनापीड्य तत्करेण करान्तरम् ।
सन्धौ प्रगृह्य जठरं सक्थिभ्यां परिपीडयेत् ॥ २९ ॥
[8]हस्तडोकरकं नाम विज्ञानं जीवघातनम् ।

[धनुर्यष्टिविज्ञानम्]

अर्धाङ्गस्थानके स्थित्वा बाहुभ्यां मध्यमुन्नयेत् ॥ ३० ॥
[9]पार्श्वेन पीडयेत्कण्ठं [10]कर्षन्नूरू स्वजङ्घया ।
[11]धनुर्यष्टीति विज्ञेयं विज्ञानं मध्यभञ्जनम् ॥ ३१ ॥

---

[1] कक्षे निक्षिप्य–**मान.** [2] पीडनम्–**मान.** [3] पट्टिशं–**मान.** [4] छुडकी–**मान.** [5] प्राह सोमेशभूपतिः–**मान.** [6] अधो–**मान.** [7] मर्ध–**मु.** [8] ततस्तद्ढोक्करं–**मान.** [9] पार्श्वेन पीडयन्–**मान.** [10] कक्षामूरुं–**मान.** [11] तुर्यष्टिरिति–**मान.**

[शरीरस्थानविज्ञानसंख्या]

[1]शरीरस्थानविज्ञानान्यमून्येकादशैव तु ।

[उद्दवडविज्ञानम्]

स्थाने करवले स्थित्वा वक्त्रे क्षिप्त्वा निजोदरम् ॥ ३२ ॥

[2]प्रोक्तमुद्दवटं नाम्ना विज्ञानं श्वासरोधकम् ।

[मुखपट्टकविज्ञानम्]

उरसा पीडनं तद्वद्विज्ञानं मुखपट्टकम् ॥ ३३ ॥

[मुस्तिकविज्ञानम्]

हस्तद्वयेन वक्त्रस्य पिधानं मुस्तिकाह्वयम् ।

[मुद्राकविज्ञानम्]

स्थित्वा करवले स्थाने मणिबन्धस्य मोटनम् ॥ ३४ ॥

क्रियते यत्तु तत्प्रोक्तं मुद्राकं करभञ्जकम् ।

[चरणपट्टसविज्ञानम्]

बाहुभ्यां मध्यमाक्रम्य जङ्घामाक्रम्य जङ्घया ॥ ३५ ॥

[3]बाहुसन्धिविभङ्गार्थं भजेच्चरण[4]पट्टसम् ।

[लोलपादकविज्ञानम्]

परस्य जानुसन्धौ च करं निक्षिप्य कञ्चन ॥ ३६ ॥

जङ्घाभ्यामूरुमाक्रम्य विदध्याल्लोलपादकम् ।

[सन्दंशविज्ञानम्]

जठरस्थानके स्थित्वा बाह्वोर्यत्र [5]च पीडनम् ॥ ३७ ॥

सन्दंशाकृतिबाहुभ्यां सन्दंशं नाम यद्भवेत् ।

---

[1] शिरस्थानक–मान. [2] पादमुद्दवडं–मान. [3] जानुसन्धि–मान.

[4] पट्टिशम्–मान. [5] निपीडनम्–मान.

[डोक्करविज्ञानम्]

जङ्घां विधाय मन्यायां जानुसन्धिनिपीडिताम् ॥ ३८ ॥
चूडां वा पूर्वकच्छां वा कर्षन् डोक्करमाचरेत् ।

[अवलशङ्ककविज्ञानम्]

ऊरुभ्यां [1]पादमाक्रम्य पादौ निक्षिप्य कक्षयोः ॥ ३९ ॥
आविध्य बाहुना जङ्घे कुर्याज्जवलशङ्ककम् ।

[कक्षवटविज्ञानम्]

[2]सारो जवलशङ्कस्य पादस्यैकस्य पीडनात् ॥ ४० ॥
[3]उक्तं कक्षवटं नाम विज्ञानं पादभञ्जनम् ।

[सुमुखीविज्ञानम्]

सर्वाङ्गं पीडयेद्यत्र मध्यमाक्रम्य [4]पृष्ठतः ॥ ४१ ॥
[5]सुमुखी नाम विज्ञानं संकोचादङ्गसाधनम् ।

[गूढाङ्गुलिविज्ञानम्]

ऊरुभ्यां मध्यमाक्रम्य मन्यां कक्षान्तरे क्षिपेत् ॥ ४२ ॥
ज्ञेयं [6]गूढाङ्गुलिर्नाम विज्ञानं कण्ठमोटनम् ।

[गरुडपक्षकविज्ञानम्]

पृष्ठस्थानकमास्थाय बाहू कक्षान्तनिर्गतौ ॥ ४३ ॥
मन्यायां सङ्गतौ कृत्वा करशाखानिबन्धनौ ।

---

[1] मध्यमा–मान. [2] साम्याज्जवलश–मान. [3] एवं वक्षःपट्टनाम–मु. [4] तिष्ठतः–मान. [5] सुमरिर्नाम–मु., सुवति–मु. पा. [6] गुण्ढगुली–मु., गूढं [ढाङ्] गुलि–मान.

ताभ्यां सम्पीडयेन्मन्यां कुर्वंश्चाधोमुखं शिरः ॥ ४४ ॥

ऊरुभ्यां मध्य[1]माक्रम्य युञ्ज्याद्गरुडपक्षकम् ।

[ वेष्टनविज्ञानम् ]

पृष्ठस्थः प्रतिमल्लस्य पृष्ठपृष्ठे भुजं बलात् ॥ ४५ ॥

आकृष्य वर्तयन् कुर्याद्विज्ञानं [2] वेष्टनं बुधः ।

[ अङ्गचलनविज्ञानम् ]

जानुसन्धौ क्षिपन् जङ्घां [3] पतितस्याप्यवाङ्मुखम् ॥ ४६ ॥

उरसा पीडयेत्पादं तदङ्गचलनं भवेत् ।

[ मकुटबन्धनविज्ञानम् ]

मन्यां [4] वक्षोऽन्तरे [5] कुर्वन् बाहुं गरुडपक्षवत् ॥ ४७ ॥

मध्यपीडनयोगेन [6] भवेन्मकुटबन्धनम् ।

[ चतुरङ्गुलविज्ञानम् ]

एकद्वित्र्य[7]ङ्गुलं मुक्त्वा करशाखाचतुष्टयम् ॥ ४८ ॥

भज्यतेऽङ्गुष्ठवर्जं तत् विज्ञानं चतुरङ्गुलम् ।

[ मणिबन्धविज्ञानम् ]

बाहुना बाहुमाविध्य [8] धृतं वान्येन [9] मुद्रकम् ॥ ४९ ॥

मोट्यते [10] मणिबन्धो यत्तद्विज्ञानं [11] तथाभिधम् ।

---

[1] मापीड्य–मान. [2] वेपर्णि–मु., वेसणाद्बुधः–मान. [3] पतितः स्याद–मान. [4] कक्षान्तरे–मान. [5] कुर्यात्–मान. [6] भवेत्सद्रुपवेदनम्–मान. [7] ङ्गुली–मानः [8] धृत्वा चान्येन–मान. [9] मुद्रकम्–मान. [10] तु शिरस्तिर्यक्–मान. [11] तद्वथाभिधम्–मान.

[ डोक्करविज्ञानभेदः ]

हस्तौ पादौ च शीर्षं च पङ्क्त्यामावेष्ट्य पीडनात् ॥ ५० ॥
विज्ञानं तत्समाख्यातं डोक्करं [1]कुकुटुम्बकम् ।

[विज्ञानोपसंहारः]

विज्ञानान्येवमुक्तानि बन्ध[2]मोचनकारणम् ॥ ५१ ॥

[प्रतिमल्लवञ्चनोपायाः, तत्रोपपादनियुद्धश्रमः]

वक्ष्यामि वञ्चनोपायान् [3]विविधान् वज्रमुष्टिभिः ।
[4]स्थलक्ष्यां तु प्रयुक्तायां [5]भूमिपातं निषेधयेत्* ॥ ५२ ॥

स्थिरस्थानगतं [6]मल्लं बाहुभ्यामुत्क्षिपेद्बलात् ।
पादाभ्यामुपकर्षेद्वा देहं वा वर्तये[7]ज्जवात् ॥ ५३ ॥

स्थितं [8]करवले स्थाने जयेच्छुं प्रतिमल्लकम् ।
पश्चा[9]त्पूर्वान्तरे न्यस्तं पादाङ्गुष्ठेन कर्षयेत् ॥ ५४ ॥

अशक्यं चेत्तथा कष्टुमूरुभ्यां तस्य सक्थिकम् ।
निपीड्य धारयेन्मल्लं यथा[10]न्योन्यं क्षमो भवेत् ॥ ५५ ॥

[11]जयेदुत्तानसंलग्नां पुरःकच्छां [12]विधाय च ।
कूर्पराभ्यां निपी[13]ड्याध [14]अपसृत्य विमोचयेत् ॥ ५६ ॥

---

* इत उपरि मानसोल्लासे—“मुखस्योपरि जङ्घां वा निक्षिप्य विनिवारयेत्। पट्टिशेन गृहीताङ्घ्रिस्त्रिवृत्त्यापनयेन्नतम्। बाहुमोटनविज्ञानं हस्तौ संयोज्य वारयेत्” इति ग्रन्थः अधिको वर्तते ।

[1] सकुड–मान. [2] मोटन–मान. [3] विविवच्छास्त्रहष्टितः–मान. [4] छुडुक्यां–मान. [5] भ्रमित्वा तां–मान. [6] मध्यं–मु. [7] दवाक्–मान. [8] करवरे–मु. [9] त्कक्षान्तरन्यस्तपा–मान. [10] नान्यक्षमो भवेत्–मान. [11] जठरस्थानसंलग्नां–मान. [12] विधार्य–मान. [13] ड्योरू–मान. [14] अवसृत्य–मान.

तथा मोचयमानस्य जङ्घे धृत्वा निजाङ्घ्रिणा ।
नाभिदेशे निरुध्याधः पातयेद्धरणीतले ॥ ५७ ॥

पात्यमान[1]स्ततो मल्लः पादं पश्चात्प्रसार्य च ।
तिष्ठेत् [2]स्थैर्यं समालम्ब्य [3]यथा न पतति क्षितौ ॥ ५८ ॥

[4]उपपादनियुद्धाख्यः श्रम एवं प्रदर्शितः ।
स च प्रभाते कर्तव्यो [5]विस्थानोपाय[6]सिद्धिदः ॥ ५९ ॥

[भारश्रमः, तत्प्रयोजनं च]

[7]उत्थाय दिवसे प्रातः वालुकाभृतकोणिकाम् ।
बाहुभ्यामुत्क्षिपेच्छक्त्या पादाभ्यां च मुहुर्मुहुः ॥ ६० ॥

भारं सोढुं स कर्तव्यो ज्येष्ठमल्लैर्विशेषतः ।
भारश्रमोऽयमाख्यातो गात्रप्राणविवर्धनः ॥ ६१ ॥

[भ्रमणश्रमः]

भ्रमणार्थं ततो गच्छेत्क्रोश[8]मात्रं बहिः पुरात् ।
निवर्तेत तथा तूर्णं श्रमोऽयं भ्रमणाभिधः ॥ ६२ ॥

[जलश्रमः]

पुष्करिण्यां तडाके वा [9]कूपे वा प्रविशेज्जलम् ।
कण्ठदघ्नं ततस्तोयं बाहु[10]भ्यां परिलोडयेत् *॥ ६३ ॥

---

* एतदुपरि मानसोल्लासे—

"जङ्घाबलावहः पूर्वः कथितो भ्रमणश्रमः ।
बाहुप्राणकरो ज्ञेयो द्वितीयः सलिलश्रमः ॥
स्थितौ तुदेतामन्योन्यं कराभ्यां बाहुयुग्मकम् ।
सायंकाले विधातव्यो बाहूपेल्लणकश्रमः ।" इति ग्रन्थः वर्तते ।

[1] सथा–मान. [2] स्थैर्यमथालम्ब्य–मान. [3] यथानपगतः क्षितौ–मु., ख. [4] पालीदिने नि–मान. [5] विशायोपाय–मान. [6] सिद्धितः–मान. [7] उ(स)पाली-दिवसे–मान. [8] मेकं–मान. [9] नद्यां–मान [10] भ्यामबलो–मान.

[स्तम्भश्रमः]

आश्लेषयोग्यं सुश्लक्ष्णमूर्ध्वबाहुतलोत्थितम् ।
दृढं निखातितं स्तम्भं चर्चितं चन्दनादिना ॥ ६४ ॥

उत्प्लुत्याक्रम्य सक्थिभ्यां बाहुभ्यां चैव वक्षसा ।
दृढं [1]सम्पीडितं स्तम्भं पङ्क्त्यामूर्ध्वं समाश्रयेत् ॥ ६५ ॥

बाहुभ्यां च [2]ततो मल्ला आवर्तपरिवर्तने ।
अधश्चोर्ध्वं च [3]संश्लिष्य स्तम्भे विश्रममारभेत् ॥ ६६ ॥

[राजसविधे मल्लनिवेदनम्]

एवं [4]जितश्रमा मल्ला हृष्टाः पुष्टाः समागताः ।
[5]विज्ञापयेयुर्भूपालं बलाध्यक्षपुरस्सरम् ॥ ६७ ॥

[6]बाल्यात्पुष्टा नृप! स्वाङ्के पोषितास्तनुजा इव ।
जितश्रमा वयं जाता [7]नियोजय महीपते! ॥ ६८ ॥

[राज्ञा गुणविचारतो मल्लानां युद्धनियोजनम्]

इति विज्ञाप्यमानस्तु गुणांस्तेषां विचारयेत् ।
भेदैर्द्वादशभिर्युक्ता मिथ[8]स्ते स्युर्नियोधने ॥ ६९ ॥

[भारी मल्लः]

महाकायस्तु यो मल्लो भारी स परिकीर्तितः ।

[बलाढ्यो मल्लः]

बलाढ्यः कथ्यते प्राणी [9]चोत्थानी चास्त्रशिक्षितः ॥ ७० ॥

[स्वस्थाननिरतो मल्लः]

स्वस्थाननिरतो ज्ञेयो यः स्थाने सुस्थिरासनः ।

---

[1] सम्पीड्य तं—मान. [2] ततोऽभ्यामावर्तनविवर्तनैः—मान. [3] संश्लेष्य स्तम्भेन श्रमम् आचरेत्—मान. [4] कृतश्रमा—मान. [5] विज्ञाप्येयुर्महीपालं मल्लाध्यक्ष-पुरस्सराः—मान. [6] पाल्य(ल्यः)पूर्णा इहास्माकं पोषिता च निजा तनुः—मान. [7] नियोधय—मान. [8] स्तेषां नि—मान. [9] कुर्वलश्च सुशिक्षितः—मान.

[बहुयोधी लघुश्च मल्लौ]

श्रमं न याति यो युद्धे बहुयोधी स कथ्यते ॥ ७१ ॥

[1]विज्ञानेनागृहीतोऽपि यो [2]मुह्यति न भाषते ।
[3]नाऽऽस्फालयति हस्तेन [4]स लघुः परितो भवेत् ॥ ७२ ॥

[दलनसहो मल्लः]

[5]दलनं सहते यस्तु स भवे[6]द्दलनेसहः ।

[रक्षणको मल्लः]

यो रक्षति हि विज्ञानं मल्लो रक्षणको मतः ॥ ७३ ॥

[टङ्कणमल्लः]

आशु प्रयुङ्क्ते विज्ञानं तदपाये [7]चरेद्द्रुतम् ।
स [8]मल्लष्टङ्कणः ख्यातः शीघ्रविज्ञानकारकः ॥ ७४ ॥

[दर्शको मल्लः]

परप्रयुक्तविज्ञानं पररन्ध्रं च पश्यति ।
[9]दर्शनाख्यक्रियायोगान्मल्लो दर्शक उच्यते ॥ ७५ ॥

[लगनो मल्लः]

उत्प्लुत्य यो लगेत्कण्ठे [10]स मल्लो लगनो भवेत् ।

[नियतो मल्लः]

मर्यादापालको युद्धे नियतः परिकीर्तितः ॥ ७६ ॥

---

[1] विज्ञानेन गृ–मान. [2] मुह्यति–मान. [3] आस्फा–मु. [4] तस्मात्
पतितो भवः–मान. [5] वलनं–मान. [6] दलने–मान. [7] परं द्रुतम्–मान.
[8] मल्लो ढक्कणो धन्यः–मान. [9] ईशनाख्य–ग. [10] स सद्योगमनो–मु.

[राज्ञा मल्लानां युद्धे नियोजनम्]

[1]एवं गुणयुतान् मल्लान् [2]समकायवतो बलान् ।
नियुद्धे योजयेद्राजा करास्फालनपूर्वकम् ॥ ७७ ॥*

[मल्लयोर्द्वयोर्युद्धम्]

चल्लणं [3]परिधायाथ दृढां कच्छां विवेष्ट्य च ।†
नियुध्येतामुभौ मल्लौ योधनप्रतियोधनौ ॥ ७८ ॥

प्रकोष्ठधारणैश्चैव मणिबन्धविमोचनैः ।‡
बाहुसंघट्टनैश्चैव तथा पादोरुघट्टनैः ॥ ७९ ॥

आश्लेषैः पीडनैश्चैव विश्लेषैरपसर्पणैः ।
उत्प्लुत्य [4]लङ्घनैः कण्ठे जठरे पृष्ठतः स्थितः ॥ ८० ॥

भ्रमणैर्भ्रामणैश्चैव [5]चलनैर्वर्तनैस्तथा ।
संनिपातावधूतैश्च तोल[6]नास्फालनैस्तथा ॥ ८१ ॥

नानाविधैश्च विज्ञानैः विविधैर्बन्धमोचनैः ।
श्रान्ताश्चोत्तानपतिताः स्वेदार्द्रीकृतविग्रहाः ॥ ८२ ॥

कर्दमालिप्तसर्वाङ्गाः [7]कुड्मलीकृतलोचनाः ।
मुञ्चन्तः श्वासफूत्कारं दृश्यन्ते [8]ते समाकुलाः ॥ ८३ ॥

द्वावप्येवंविधौ दृष्ट्वा समीकु[9]र्याद्विचक्षणः ।
[10]अश्रमस्य जयं दद्यान्मोटनाच्च विशेषतः ॥ ८४ ॥

---

* एतदुपरि **मानसोल्लासे**—"प्रतिज्ञां ते च जल्पन्ति" इत्यादिः "योधयेत्पृथिवीपतिः" इत्यन्तो ग्रन्थः अधिको वर्तते । † एतदुपरि **मानसोल्लासे**—"जूटकं बन्धयित्वा तु भुजावास्फाल्य सन्मुखौ" इत्यर्धं पद्यमाधिकमस्ति । ‡ एतदुपरि "**मानसोल्लासे**—"कच्छं धारणमोक्षाभ्यां पातनैरवपातनैः" इति पद्यार्धमाधिकं वर्तते ।

[1] एवंविधगुणान्—**मान.** [2] समकायवयोबलान्—**मान.** [3] परिधास्यं च—**मान.** [4] लङ्घनैः—**मान.** [5] वलनै—**मान.** [6] नैः स्फा—**मान.** [7] मुकुलीकृत—**मान.** [8] ये—**मु.** [9] र्यान्नृपेश्वरः—**मान.** [10] आ(अ)श्रमस्य—**मान.**

[1] एवं नियोजितान् मल्लान् सजया[2]न्भूरिकाञ्चनैः ।
वस्त्रै[3]राभरणैर्ग्रामैर्वाहैश्च परितोषयेत् ॥ ८५ ॥

[मल्लविनोदोपसंहारः, पश्वादिविनोदप्रसङ्गश्च]

एवं मल्लविनोदस्तु साम्प्रतं परिकीर्तितः ।
एवमन्येऽपि दृश्यन्ते विनोदाः पशुपक्षिणाम् ॥ ८६ ॥

इति शिवतत्त्वरत्नाकरेऽष्टमकल्लोले मल्लविनोदनिरूपणं नाम तृतीयस्तरङ्गः

---

## अष्टमकल्लोले चतुर्थस्तरङ्गः

### कुक्कुटलावयुद्धशुकच्छागशुनकलक्षणानुवर्णनम्

[कुमारस्येतरविनोदप्रश्नः, भूपतेस्तदुत्तरकथनप्रतिज्ञा च]

* (सन्त्यन्येऽपि विनोदा इत्युक्त्या [4]कौतुकि मे मनः ।
तेषामिह विनोदानां श्रवणं सम्प्रतीहते ॥ १ ॥

तन्मह्यमधुनाख्याहि गुरो ! मे पूरयेप्सितम् ।
पुत्र ! ते सम्प्रवक्ष्यामि यच्छ्रोतुं समभीप्सितम् ॥ २ ॥)

[ताम्रचूडविनोदः]

ताम्रचूडविनोदस्तु तत्रादौ परिकीर्त्यते ।

[कुक्कुटाहवे ज्ञातव्यास्तज्जात्यादयः]

[5]कुक्कुटाहवमिच्छद्भिः ज्ञातव्या जातयः पुरा † ॥ ३ ॥

---

* धनुरङ्कितो ग्रन्थः ख पुस्तके नास्ति । † एतदुपरि मानसोल्लासे—
"आकारः पोषणं चैव शुभं रूपं च शाकुनम्" इत्यधिकमर्धं वर्तते ।

[1] एवं नियोज्य तान् सर्वान्—मान. [2] न्भूतिका—मु. [3] राभरणैर्यानैर्वा—मान.
[4] कौतुकितं मनः—मु. [5] कुक्कुटानां च सङ्गिस्तु—मान.

आयोधनप्रकारश्च व्यवस्थाश्च जयाजयौ ।
कुक्कुटानामिदं ज्ञात्वा पश्चात्कुर्यात्तदाहवम् ॥ ४ ॥

[शङ्खजातीयकुक्कुटलक्षणानि]

पादौ सितौ [1]सिताग्रौ च नखराः पाण्डुराः शुभाः ।
लोचने च तथा शुक्ले [2]शुभा घोणा विशेषतः ॥ ५ ॥

शङ्खध्वनिनिभो नादस्तीक्ष्णाग्रा पिच्छसन्ततिः ।
कम्बुग्रन्थिनिभं शीर्षं यस्यासौ शङ्खजातिकः ॥ ६ ॥

[अगुरुजातीयकुक्कुटाः]

चरणौ पाण्डुरच्छायौ दीर्घाश्चाङ्गुलयः कृशाः ।
दीर्घो देहस्तथा कार्श्यं [3]चञ्चुर्दीर्घा च नासिका ॥ ७ ॥

मृदुप्रहारसंयुक्तं मन्दयुद्धं [4]भवेच्चिरम् ।
यस्यासौ स भवेज्ज्ञात्वा [5]कुक्कुटोऽगुरुसंज्ञकः ॥ ८ ॥

[पङ्गुजातीयकुक्कुटचिह्नानि]

उन्नतस्थिलतवृत्ताङ्घ्रिः पृथुवक्षस्स्थलो महान् ।
[6]अकामो युध्यते शूरः [7]पङ्गुजातिः प्रकीर्तितः ॥ ९ ॥

[नारजातीयकुक्कुटलक्षणानि]

[8]सूक्ष्मोरुः शोणपादश्च सितशुक्तिसमन्वितः ।
शुक्लाक्षो [9]दीर्घवालोऽयं ज्ञात्वा नारः प्रकीर्तितः ॥ १० ॥

[गृध्रजातीयकुक्कुटचिह्नानि]

हारिद्रौ चरणौ वापि सितौ वा कृष्णबिन्दुकौ ।
[10]कांस्यवर्णौ भवेतां वा प्रियङ्गुकणबिन्दुकौ ॥ ११ ॥

---

[1] सिते चारे–मान. [2] शुक्लघोणो वि–मान. [3] वक्रा दी–मान. [4] भवेत्स्थिरम्–मान. [5] कुक्कुटोऽगरुसन्निभः–मु. [6] आक्रम्य यु–मान. [7] अंशुजातिः–मान. [8] सक्ष्मारः–मान. [9] दीर्घशब्दश्च–मान. [10] कांस्यवर्णो भवेद्देहः–मु.

कृष्णाश्च नखरा यस्य [1]सिता वा चित्रिताश्च हि।
रक्ते दृशौ [2]स्खलच्छन्दो गृध्रजातिः स कुक्कुटः ॥ १२ ॥

[तेगुजातीयकुक्कुटचिह्नानि]

श्यामलाः शुक्तयो यस्य किञ्चित्पाण्डुरतां श्रितः।
[3]कृष्णाग्रयुतबालाढ्यो जात्या [4]तेगुः स कथ्यते ॥ १३ ॥

[द्रोणिजातीयकुक्कुटचिह्नानि]

कृष्णवर्णो[5]ऽतिदीर्घाङ्घ्रिः शुकतुण्डोऽरुणेक्षणः।
बृहन्नादो महाकायो जात्या [6]द्रोणिः प्रकीर्तितः ॥ १४ ॥

[सर्पजातीयकुक्कुटलक्षणानि]

[7]कृष्णवर्णो रक्तनेत्रः कृष्णपक्ष्मातिदीर्घकः।
[8]वर्धयन् स शिरो युद्धे सर्पजातिः प्रकीर्तितः ॥ १५ ॥

[कूर्मजातीयकुक्कुटचिह्नानि]

चरणौ हरितच्छायौ [9]चले शुक्ले च लोचने।
आकारो वर्तुलो यस्य तं विद्यात्कूर्मजातिकम् * ॥ १६ ॥

[तत्तज्जात्युत्तमकुक्कुटपोषणम्]

[10]एवं विविधजात्युत्थान् तज्ज्ञैस्तान् [11]परिपोषयेत्।
[12]उष्णोदनैर्घृतोपेतैर्दध्ना च परिमिश्रितैः † ॥ १७ ॥

---

* इतः परं मानसोल्लासे—"कन्धरादेशसञ्जातं" इत्यादिः "पृष्ठभागोऽतिविस्तृतः" इत्यन्तो ग्रन्थः केसरादिपरिचायकः अधिको वर्तते। † इत ऊर्ध्वं मानसोल्लासे—पौर्वापर्यव्यत्ययपाठप्रभेदाभ्यामनेके श्लोकाः सन्ति।

[1] कृष्णो वा चित्रितोऽपि वा–मान. [2] स्व (त) लस्तब्धो–मान. [3] कृष्णा रेखा वचैलम्भो–मान. [4] तेगोः–मान. [5] ऽपि दीर्घाङ्गो वक्रतुण्डो रणे क्षमः–मान. [6] श्रोणिः–मान. [7] कृष्णपादो मारनेत्रः–मान. [8] वक्रयंश्च–मान. [9] धारे–मान. [10] एवं लक्षणसंयुक्तान् सुभटान् कुक्कुटान् वरान्। धारयित्वा कुर्वाये च–मान. [11] परितोषयेत्–मान. [12] रसोदनै–मान.

[तेषां युद्धे विनियोगः]

एवं संरक्षितं मुञ्चेत्कुक्कुटं [1] युद्धकर्मणि ।

[तेषां जयाजयचिह्नानि]

नानाविधाभिश्चेष्टाभिरूहनीयौ जयाजयौ ॥ १८ ॥

दक्षिणेन पदेनाङ्गं [2] स्पृशन् युद्धेऽरिघातकः ।
[3] दक्षिणोन्नतचेष्टाभिरादिशेज्जयमात्मनः ॥ १९ ॥

ग्रीवामाकुञ्च्य रसनां दर्शयन् यदि जृम्भते ।
[4] उत्क्षेपैश्च मुहुर्दर्शी [5] सङ्ख्यया विषमे जयः ॥ २० ॥

दक्षिणं पाद[6]मुद्धृत्य मुष्टिं बध्वावतिष्ठते ।
[7] उत्क्षिपन् दक्षिणोरुं च जयमाप्नोति निश्चितम् ॥ २१ ॥

प्रसार्य दक्षिणं पादं [8] सपक्षेण च कुक्कुटः ।
[9] अस्पृश्य तु समाकर्षन् जयं शंसत्यवारितः ॥ २२ ॥

[तेषां तिलकन्यासः]

[10] युद्धाय वीक्षमाणानां पक्षिणां जयवादिनाम् ।
दीपोत्थकज्जलेनैषां शिखरे तिलकं न्यसेत् ॥ २३ ॥

[तेषां पक्षत्रुटितत्प्ररोहकालौ]

[11] निदाघत्रुटिताः पक्षा आषाढे सम्भवन्ति ते ।
यावदाश्वयुजो मासस्तावत्तिष्ठन्ति [12] रोमशाः ॥ २४ ॥

---

[1] योधकर्मणि—ग. [2] संस्पृशन् परघातनः—मान. [3] दक्षिणे नत—मान.
[4] उत्क्षिपेच्च हुः शीर्षं—मान. [5] सङ्ख्या (सङ्ख्ये) वा वि—मान. [6] मुत्क्षिप्य—मान.
[7] उत्क्षिप्तं दक्षिणं रूपं—मान. [8] सह पक्षेण कु—मान. [9] अस्पृशन् रमसाकर्षन्—मान.
[10] रत्या निरीक्ष—मान. [11] निदाघे घटिताः—मान. [12] कोमलाः—मान.

[कुक्कुटानां योधनायोधनकालौ]

[1]ततः ऊर्ध्वं दृढाः पक्षाः ततो युद्धं प्रकल्पयेत् ।
योधयेत्फाल्गुनं यावत्तत ऊर्ध्वं न योधयेत् ॥ २५ ॥

[कुक्कुटानां कृष्णादिप्रभेदाः]

कृष्णः कृष्णाङ्घ्रिको ज्ञेयः श्वेतः श्वेताङ्घ्रिकस्तथा ।
पादाभ्यां मिश्रवर्णाभ्यां कुक्कुटो मिश्र उच्यते ॥ २६ ॥

[जयपराजययोग्याः कुक्कुटाः]

मिश्रपादो जयेच्छ्वेतं श्वेतो जयति मेचकम् ।
मिश्रपादो जयेत्कृष्णमेवं [2]ज्ञात्वा परैस्सह ॥ २७ ॥

योधयेत्कुक्कुटौ [3]तौ द्वौ मुक्त्वा नीराजितौ रणे ।

[कुक्कुटयुद्धम्]

विकीर्णकेसर[4]दलौ मध्ये च नतकन्धरौ ॥ २८ ॥

[5]परस्परं वीक्षमाणौ किञ्चिच्चलितमस्तकौ ।
*(उत्प्लुत्य प्रहरन्तौ तौ वञ्चयन्तौ परस्परम् ॥ २९ ॥

कियत्यपि गते काले कोपसंमिलिताबुभौ ।
परस्परं दारयन्तौ चञ्चुकोणेन मस्तकम् ॥ ३० ॥

कृकाटीकेसरं चूडां चुबुकं लम्बकूर्चकम् ।)
पृष्ठं पुच्छं तथा [6]चञ्च्वा धृत्वा पादप्रहारिणौ ॥ ३१ ॥

मुखदेशं विभिन्दन्तावाराघातैः परस्परम् ।
वमन्तौ रुधिरं वक्त्राद् स्रवच्छोणितमस्तकौ ॥ ३२ ॥

---

*एतदन्तर्गताः श्लोका मानसोल्लासे अत्र न दृश्यन्ते ।

[1] अत-मान. [2] पक्षान्तरैः सह-मान. [3] पश्चाद्वीरनीराजिताबुभौ-मान.
[4] गतौ मध्ये च नतकन्धरम्-मान. [5] मुखदेशं विभिन्दन्तावाराघातैः परस्परम्-मान.
[6] धृत्वा-मान.

मुहुर्मुहुर्वार्यमाणौ मार्गिकैः [1]पायितोदकैः ।
वाससा वीज्यमानौ [2]तु मुच्यमानौ पुनः पुनः ॥ ३३ ॥

धावन्तावनुगच्छन्तौ [3]भ्रमन्तावपि चक्रवत् ।
[4]सरोषौ पुनरायान्तौ [5]प्रगायन्तौ चलच्छिखौ ॥ ३४ ॥

पक्षान्तस्थितवक्त्रौ च मिथस्संश्लिष्टकन्धरौ ।
घटिताविव तिष्ठन्तौ चेष्टाहीनौ च कुक्कुटौ ॥ ३५ ॥

[पराजितकुक्कुटरक्षणक्रमः]

[6]पोषणीयौ तथाभूतौ मार्गिकैस्तद्विचारकैः ।
आच्छाद्य वाससा वक्त्रं [7]कुक्कुटस्य च मार्गिकः ॥ ३६ ॥

[8]स्वेदयेत्सुखशीतोष्णैः निश्वासैस्तु मुखोद्गतैः ।
उद्धरेत्पतितं शीघ्रं वक्त्रं च ऋजुतां नयेत् ॥ ३७ ॥

[9]श्रमार्तं पाययेद्वारि मार्गिकानामयं विधिः ।

[कुक्कुटयुद्धोपसंहारः]

योधयेत्कुक्कु[10]टानेवं यथावधि महीपतिः *॥ ३८ ॥

[लावकविनोदः—तत्र लावकजातयः, तत्संख्या च]

इदानीं कथ्यते [11]रम्यो विनोदो लावकाश्रयः ।
कच्छेलः [12]खारडीकश्च [13]गेरञ्जो वीगरस्तथा ॥ ३९ ॥

पांसुलो वेरसश्चेति [14]षड्विख्यातास्तु जातयः ।

---

* एतदुपरि "अवधि" इत्यादिः "कुक्कुटाहवे" इत्यन्तो ग्रन्थो मानसोल्लासे वर्तते ।

[1] पाय(द)तोदकैः–मान. [2] वौ–मान. [3] भ्रमन्तौ तावपि क्वचित्–मान. [4] सम्मुखौ–मान. [5] प्रकूजन्तौ परस्परम्–मु. [6] न स्प्रष्टव्यौ तथा भूमौ मार्जकैर्धर्मवर्तिभिः–मान. [7] कुक्कुटस्याधिमार्जकः–मान. [8] स्वेदयेच्च (च्छु) सितैरुष्णैर्वारं वारं मुखोद्गतैः–मान. [9] तोयं मार्जकानाम–मान. [10] टान् श्रेष्ठान्–मान. [11] क्रोडपि–मान. [12] खापटीकश्च–मान. [13] गोरञ्जो वी–मु. [14] षट् स्युर्लावकजातयः–मान.

[कच्छेलादिलावकानामुत्पत्तिस्थानानि]

कच्छमण्डलसंजातः कच्छेलः परिकीर्तितः ॥ ४० ॥

तद्वंशास्तु गृहोत्पन्नाः खारडीका भवन्ति ते ।
विन्ध्ये सह्ये च सम्भूता लावकाः शोणमस्तकाः ॥ ४१ ॥

गोरखा इति विख्याता युद्धकर्मणि मध्यमाः ।
खारडीकेन संयोगाद्गोरखायां जायते तु यः ॥ ४२ ॥

[1]धीगरः स समाख्यातो [2]मिश्रजातिसमुद्भवः ।
कच्छदेशं समुत्सृज्य येऽन्यदेशसमुद्भवाः ॥ ४३ ॥

अशोणमस्तकास्सर्वे लावकाः पांसुला मताः ।
खारडे पांसुलायोगाल्लावस्समुपजायते ॥ ४४ ॥

वेरलो नाम स ज्ञेयः पांसुलानामयं बली* ।

[लावकोत्पत्तिकालः, तत्र जातानां नामानि, तत्तदुत्पत्तौ यत्नश्च]

आश्विनात्फाल्गुनं यावत्प्रसूयन्ते तु लावकाः ॥ ४५ ॥

[3]तिलपुष्पागमे जाता अग्रजाः परिकीर्तिताः ।
[4]मधूकपाते सञ्जाताः पाश्चात्या इति विश्रुताः ॥ ४६ ॥

तस्मादाश्वयुजे तेषां यत्नं कुर्वीत सन्ततेः ।

[लावकपोषणम्]

तत्पञ्जरेषु निक्षिप्य पोषयेच्च प्रयत्नतः ॥ ४७ ॥

गोधूम[5]पिष्टं सुश्लक्ष्णं [6]मत्स्यमांससमन्वितम् ।
[7]कवोष्णं स्वेदितं तैले मृदितं करपल्लवे ॥ ४८ ॥

---

* एतदुपरि मानसोल्लासे "सर्वेषामुत्तमः" इत्यादिः "कावरः परिकीर्तितः" इत्यन्तो ग्रन्थः वर्तते ।

[1] धीरगस्स–मु. [2] मिश्रजातिरसन्ततिः–मान. [3] तिलपुष्पोद्गमे–मान.
[4] मधूकपुष्पपाते तु–मान. [5] पिष्टसंयुक्तं–मान. [6] मत्स्यमांसं कचूर्णितम्–मान.
[7] कवोष्णस्वेदितं तैलमृदितं करपल्लवैः–मान.

अङ्गुष्ठतर्जनीयोगात्सेवाः कुर्या[1]द्ध्वाकृतीः ।
ताभिस्तान्पोषयेद्यत्नात् याव[2]नालैश्च कोद्रवैः ॥ ४९ ॥

प्रियङ्गुतण्डुलैस्तद्वन्मुद्गानां [3]द्विदलैरपि ।
*त्रिकालं भोजयेदेताः पानीयं पाययेदपि ॥ ५० ॥

[लावकविहारविधिः]

करीषसान्द्रचूर्णेन मृत्तिकामिश्रितेन च ।
प्रियङ्गुधान्यमिश्रेण तद्विहारं प्रकल्पयेत् † ॥ ५१ ॥

[लावकविश्रान्तिकालः]

पृथक् पृथक् ते कर्तव्याः पञ्जरेषु विचक्षणैः ।
ततस्संवत्सरादूर्ध्वं युद्धयोग्या भवन्ति ते ॥ ५२ ॥

अन्योन्यं न सहन्ते ते [4]घर्षं क्रोधसमन्विताः ।

[लावकानां युद्धपरिश्रमविधिः]

ततः श्रमं कारयेत लावकान् यद्धसिद्धये ॥ ५३ ॥

लावीं पञ्जरके [5]कृत्वा दर्शयेल्लावकस्य ताम् ।
आकृष्य [6]पञ्जरे लावं निक्षिपेच्च[7]मधस्तले ॥ ५४ ॥

[8]शलाकाकुड्मलाकारनिर्मिते कलशान्विते ।
[9]अधस्थले तथाचान्यं [10]निक्षिपेल्लावकं बुधः ॥ ५५ ॥

दर्शयेत्तस्य कोपार्थं लावकं दर्पकूजितम् ।
अधस्तरे तथोद्धृष्य चञ्चवेर्णीं तदन्तरे ॥ ५६ ॥

---

* इदमर्धं मुद्रितपुस्तके नास्ति । † इतः परमत्र मानसोल्लासे "पूर्वोक्ते" इत्यादिः "ते परस्परम्" इत्यन्तो ग्रन्थः अधिको वर्तते ।

[1] यथाविधि–मान. [2] नालार्द्रबीजकैः–मान. [3] विद–मान. [4] दर्पं क्रोध–मान. [5] लावं निक्षिपेत्तमधःस्थले–मु. [6] पञ्जराल्लावं–मान. [7] मधान्तरे–मान. [8] वंशीभिर्मुकुलाकारैर्निर्मिते–मान. [9] अधस्तात्–मान. [10] लावकं रक्षयेद्बुधः–मान.

* पिधाय योधयेत्तं तु वस्त्रवेण्यां तु लावकम् ।
[1]अधस्तरे तथाचान्यं वस्त्रेणाच्छाद्य [2]शिक्षितम् ॥ ५७ ॥

[3]लाविकां धरणीरज्ज्वा लगितां दर्शयेत्पुरः ।
धावेच्छनैश्शनैस्तज्ज्ञो लावकं [4]चाथ धारयन् ॥ ५८ ॥

उत्क्षिपेच्च तथा चोर्ध्वं पक्षयोर्दार्ढ्यसिद्धये † ।
पुष्टं [5]च तं समं शूरं योधयेत्प्रतियोधिना ॥ ५९ ॥

धात्रीफलसमाकारमस्तकं स्थूलकन्धरम् ।
आपाण्डुरभ्रुवं ह्रस्वलोचनं कुब्जचञ्चुकम् ॥ ६० ॥

[6]खराभपिङ्गसंयुक्तं स्थूलोरुं वृत्तजङ्घकम् ।
विशालाङ्घ्रि[7]युतं दीर्घचरणाङ्गुलि[8]संयुतम् ।
पृथुत्रिकं महाकायं युद्धकर्मविशारदम् ‡ ॥ ६१ ॥

एकां च योधयेन्नाडीमेकां विश्रामयेत्तथा § ।
एवं च योधयेत्सप्त नव [9]वारान् यथाक्रमम् ॥ ६२ ॥

हीनं मध्यं तथा ज्येष्ठं लावकं धरणीपतिः ‖ ।

[युद्धयोग्यौ लावकौ]

[10]खारटं खारडीकेन [11]वीगरं वीगरेण च ॥ ६३ ॥

---

*इदमर्धं मानसोल्लासे दर्पकूजितमित्यतः परमस्ति । †एतदुपरि मानसोल्लासे—"पोषयेच्च तथा लावं पोषितौ पितरौ यथा" इत्यादिकं पठ्यते । ‡एतदुपरि मानसोल्लासे—ज्यैष्ठिकमित्यादिः कथिता बुधैरित्यन्तो ग्रन्थोऽधिको वर्तते । §एतदुपरि "विश्रामनाडीः सन्त्यज्य योधयेत्पञ्च नाडिकाः" इति मानसोल्लासे पाठः । ‖एतदुपरि मानसोल्लासे—वितस्त्युत्सेधसंयुक्तमित्यादिः तत्र तु योधयेदित्यन्तो ग्रन्थः पठ्यते ।

[1] अधस्तरे स्थितं लावं—मान. [2] शिक्षकः—मान. [3] लावकीं धारणीं र—मान. [4] चानुधावयेत्—मान. [5] जितश्रमं शूरं—मान. [6] (ख) खरादपि—मान. [7] तकं—मान. [8] सन्ततिम्—मान. [9] चैव—मान. [10] खारटीं—मान. [11] विमरं विमरेण—मान.

वेसरं वेसरेणैव करुछलं करुछलेन च * ।

[लावकानां युद्धे विजयकालः]

नवनाडीकृतां सङ्ख्यां पूरयेद्यदि लावकः ॥ ६४ ॥

तस्यैव विजयो ज्ञेयो [1]लावमेवं नियोधयेत् ।

[महिषादिविनोदे नृपौचित्यम्]

एवं महिषसारङ्गप्रमुखान् परिपोषितान् ॥ ६५ ॥

योधयेत्तद्विधानज्ञो विनोदोऽयं नृपोचितः ।

[शुकादिपोषणस्य विनोदमात्रार्थता]

एवं पोष्या विनोदाय न युद्धाय शुकादयः ॥ ६६ ॥

[शुके वर्णतो विप्रादिभेदाः]

सितो रक्तस्तथा पीतस्तथा गारुत्मतप्रभः ।
विप्रादिकं तथा ज्ञेयं शुके जातिचतुष्टयम् ॥ ६७ ॥

[नृपालये वर्जनीयाः शुकाः]

कृशाङ्गो विस्वरो दीनो विवर्णो दारुखण्डनः ।
एतद्गुणयुताः कीरा वर्जनीया नृपालये ॥ ६८ ॥

[विप्रादिशुकानां लक्षणानि]

श्वेताङ्गः श्वेतनेत्रश्च दूर्वाश्यामलचञ्चुकः ।
उदयास्ते भाषमाणश्शुको विप्रः प्रकीर्तितः ॥ ६९ ॥

रक्ताङ्गः श्वेतचञ्चुश्च पीताङ्गः कृष्णचञ्चुकः ।
गारुत्मताङ्गो रक्तास्यः क्षत्रो वैश्यस्तुरीयजः ॥ ७० ॥

---

* एतदुपरि मानसोल्लासे—भागेनेत्यादिः अचल इत्यन्तो ग्रन्थः अधिको वर्तते

[1] येनाक्षस्वर इच्छितः—खान.

[मिश्रजातिशुकाः]

सर्वपञ्चकसंयुक्तो मिश्रजातिः प्रकीर्तितः ।

[राजशुकः]

पुन्नागः शुद्धवर्णश्च मन्द्रस्वरसमन्वितः ॥ ७१ ॥
एतद्गुणयुतः कीरो राजकीरः प्रकीर्तितः ।

[राज्ञा स्वयोग्यपक्षिसिद्धसम्पादनम्]

एवमादीन् विचित्राङ्गान्राजयोग्यान् पतत्रिणः ॥ ७२ ॥
परिपाल्य तदालापक्रीडाभिर्हर्षमावहेत् ।

[शुकादीनां स्वरमाधुर्याय छागीदुग्धपानम्]

छागीदुग्धं पायितास्ते पुष्टास्युर्मधुरस्वराः ॥ ७३ ॥

[शुभच्छागलक्षणानि]

छागशुभाशुभलक्षणमभिधास्ये नवदशाष्टदन्तास्ते ।
धन्याः स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्ता ये * ॥ ७४ ॥

[1]स्तन इव गले लम्बते यश्छागानां मणिः स विज्ञेयः ।
एकमणिश्शुभफलकृ[2]द्धीनफला द्वित्रमणयो ये ॥ ७५ ॥

[3]पुण्ड्रास्सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च ।
अर्धासिताः सितार्धा धन्याः कपिलार्धकृष्णाश्च ॥ ७६ ॥

विचरति यूथस्याग्रे प्रथमं चाम्भोऽवगाहते योऽजः ।
स शुभः सितमूर्धा वा मूर्धनि वा [4]कालिमा यस्य ॥ ७७ ॥

---

* एतदुपरि बृहत्संहितायां—“दक्षिणपार्श्वे” इत्यादिः “श्वेतमतिशुभदम्” इत्यन्तः शुभातिशुभलक्षणपरः श्लोको वर्तते। सोऽत्रोपरि “श्रियं च” (श्लो. ८२) इत्यनन्तरमस्ति ।

[1] स्तनवद्वलम्बते यः कण्ठेऽजानां मणिः—बृ. सं. [2] अन्यतमा द्वि—बृ. सं.
[3] मुण्डाश्च—बृ. सं. [4] कृत्तिकाः—बृ. सं. अत्र कृत्तिकाः—तिलका इति भट्टोत्पलविवरणम्।

सपृषतकण्ठशिरा वा [1]तिलपुष्पनिभश्च ताम्रदृक् शस्तः।
कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः॥ ७८॥

यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन।
यो वा चरति सशब्दं मन्दं च स शोभनश्छागः॥ ७९॥

[2]कृष्णशिरोरुहपादो यो वा प्राक्[3]पाण्डुरोऽपरे नीलः।
स भवति शुभकृच्छागः [4]सोऽपि शुभो वामनो यश्च॥ ८०॥

[अशुभच्छागलक्षणानि]

* अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासिततालुजिह्वाः॥ ८१॥

[प्रशस्तच्छागलक्षणान्तरम्]

कर्णैः प्रशस्तैर्मणिभिश्च युक्ता
मुण्डाश्च ये ताम्रविलोचनाश्च।
ते पूजिता वेश्मसु मानवानां
सौख्यानि कुर्वन्ति यशः श्रियं च॥ ८२॥

† दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भवति।
[5]ऋक्षनिभकृष्णलोहितवर्णानां श्वेतमतिशुभदम्॥ ८३॥

---

* इतः पूर्वं बृहत्संहितायां —"कुट्टकः" इत्यादिः "वसन्ति ते" इत्यन्तः श्लोको वर्तते। † पद्यमिदं बृहत्संहितायां छागेत्यादि(७४)पद्यानन्तरमस्ति।

[1] तिलपिष्टनि—बृ. सं. [2] ऋष्य—बृ.सं. ऋश्य इत्यर्थः। [3] पाण्डुरपरितो—ख., ग. [4] श्लोकश्चाप्यत्र गर्गोक्तः—बृ. सं. [5] ऋष्यनिभ—बृ. सं.

[कुक्कुरलक्षणम्]

*पादाः पञ्चनखास्त्रयोऽग्रचरणः षड्भिर्नखैर्दक्षिणः
ताम्रोष्ठाग्रनसो मृगेश्वरगतिः जिघ्रन् भुवं याति [1]यः।
लाङ्गूलं ससटं दृगृक्षसदृशी कर्णौ च लम्बौ मृदू
यस्य स्यात्स करोति पोष्टुरचिरात्पुष्टां श्रियं श्वा गृहे ॥८४॥

[कुक्कुरीलक्षणम्]

पादे पादे पञ्च पञ्चाग्रपादे
वामे यस्याः षण्णखा मल्लिकाक्ष्याः॥
वक्रं पुच्छं पिङ्गला लम्बकर्णा
[2]श्रेष्ठोरस्का कुक्कुरी पाति पुष्टा ॥ ८५ ॥

[सोमशेखरनायकस्य विहारोपयोगिपक्षिभिः क्रीडया सकुतुकवर्तनम्]

एवं युद्धोपयुक्तानां विहारेषूपयोगिनाम्।
नृपः क्रीडाभिरेतेषां कौतुकी समवर्तत ॥ ८६ ॥

इति शिवतत्त्वरत्नाकरेऽष्टमकल्लोले कुक्कुटलावयुद्धशुकच्छागशुनकलक्षणानुवर्णनं नाम चतुर्थस्तरङ्गः

———

* एतदादिश्लोकार्था बृहत्संहिताभट्टोत्पलविवृतौ त्रयः पादाः इत्याद्यतुष्टुप्छ्लोकैः सङ्गृहीताः।

[1] च—बृ. सं. [2] या सा राष्ट्रं कु—बृ. सं.

# शिवतत्त्वरत्नाकरद्वितीयसंपुटस्याकारादिक्रमतः सविवरण-विशेषपदानुक्रमणिका

## अ

## ऊ

## ख

ग

## ड



## त

## ध

## न

## प

## य

## र

ल

व

## ह

# सविवरणविशेषपदानुक्रमणिकापरिशिष्टम्

## ध



## न



## प

## य



## र

